॥ श्री ॥

# पंचमहाभूतत्रिदोषचर्चापरिषद्

[ काश्यां संजाता १९३५ ]

# तदितिवृत्तम्.

[ पूर्वपीठिकापरिशिष्टाऽप्यव्ययपत्रकसहितम् ]

---

नि. भा. व. १९ विंशवैद्यकसंमेलनस्वागतसमित्यनुज्ञया

**वैद्यभूषण वामनशास्त्री दातार**
**मंत्री** १९ वैद्यसंमेलन ( नासिक. )
**सहमंत्री**—पं. त्रि. परिषद् इत्यनेन ग्रथितम्

---

प्रकाशकः—वैद्यभूषण वामनशास्त्री दातार, जनस्थानम् ( नासिक )

---

मुद्रकः—जयराम लक्ष्मण करमरकर
श्री समर्थमुद्रणालय, ५९ मेनरोड, नासिक.

सन १९४०.

# विषयाऽनुक्रमणिः ।



विषयः पृष्ठम्

| विषयः | | | पृष्ठम् |
|---|---|---|---|

विषयः | पृष्ठम्

**विषयः** **पंचमहाभूतपरिषद्.** **पृष्ठम्**



**त्रिदोषचर्चापरिषद्.**



**इतिवृत्तम् परिशिष्टं [ अ ]**



**इतिवृत्तं परिशिष्टं [ आ ] मतपत्रिका.**

पंचभूतचर्चापरिषदि विचारार्हा विषयाः

विषयः पृष्ठम्



## छायाचित्राणां सूचिः

॥ श्री ॥

# निवेदनम्

श्रीमन्तो माननीया महाभागाः सविनयं प्रार्थ्यते-यत् वाराणस्यां संजातयोः पंचमहाभूतत्रिदोषपरिषदोः समारंभो इतः पंचवर्षात्पूर्वमेव संवृत्त इति विदितमेव श्रीमताम् । तयोः परिषदोस्साग्रमिति वृत्तं सत्वरमेव मुद्राप्य श्रीमतां सेवायै देयमिति आसीत् सर्वेषामाकांक्षा, ममापि च मनीषा । तथापि अनेकैः कारणैः [ यानि कानि चित्--इतिवृत्तलेखनसामुग्रीप्रदातृणां कालातिपातात्मकानि, कानिचित् राष्ट्रीयांऽदोलनकार्यव्यापृतत्वात्मकानि, कानि च शरीरप्रकृतेरस्वास्थ्यरूपाणि, एतादृशान्येवेतराणि ] एतावान् महान् पंचवर्षात्मकः कालातिपातः संजातो येन परिषत्, तथा परिषत्कार्यं च केषांचन विस्मृतपथमेव गतं भवेत् । अथापि सुमहत्प्रयासेन, यावत् शक्यमऽद्येदमिति वृत्तं श्रीमन्निकटे चक्षुर्वर्तीकरणाय समर्थोऽहमभवम् । केवलं परिषदितिवृत्तं तु एतस्मात्कालात्पूर्वमेव सुसज्जं कृत्वा उपायनीकरणायऽलं भविष्यत् । तथापि त्रिदोषविषयकांदोलनस्य प्रारंभकालादारभ्य अद्यायावत् पर्यंतम् साद्यन्तोऽदन्तो यदि भवदवलोकनार्थं प्रदातुं समर्थोऽहं स्याम् , तदा सफलमनोरथोऽहं भवेय इति समागतोऽभून्मे मनसि विचारः । तदर्थं प्रयतमानेन मया नानाविधानि पुस्तकानि, निबन्धान् , भाषणानि, इतिवृत्तानि, लेखान् , संग्राह्य, संकलय्य, गीर्वाणवाण्या परिणाम्य, यावत् शक्यं संपूर्णः त्रिदोषविषयकान्दोलनप्रदर्शकः, त्रिदोषविषयस्य विचाराणां क्रमेणोत्क्रान्तिनिदर्शको इतिहास एव पंचमहाभूतत्रिदोषपरिषदितिवृत्तरूपेण संग्रथ्य श्रीमत्सेवायै समर्प्यते ।

जनस्थाने संजातस्यैकोनविंशतितमस्य नि. भा. व. आ. वैद्यसंमेलनस्य स्वागतसमित्या [ सन १९२९ ] महाराष्ट्रीयाणां सहाय्येन संकल्पितस्यांगीकृतस्य त्रिदोषविषयककार्यस्य एतावत् कालपर्यन्तम् [ १९४० ] अनेकरूपेण परिणतिरभवत् । १ पंचशतरुप्यकपारितोषकदानपूर्वकं त्रिदोषसर्वस्वनामकप्रबन्धानां द्विवारं याचनम्, २ समागतप्रबन्धानां द्विवारं परीक्षणम्, उत्तेजनार्थं किंचित् पारितोषकदानं च [ १५० रुप्यकमितम् ]। ३ श्रीमतां गंगाधर विष्णु पुराणिक महोदयानां धनव्ययादिसंपूर्णसहाय्येन पनवेलग्रामे महाराष्ट्रवैद्यविदुषां त्रिदोषचर्चापरिषत्करणम्, ४ तेषामेव महाभागानां धनव्ययेन तस्याः परिषद इतिवृत्तस्य प्रसिद्धीकरणम्, ५ त्रिदोषविषयकग्रंथनिर्माणार्थं ग्रंथनिर्माणसमित्याः स्थापनम्, ६ तस्याः समितेर्ग्रंथग्रथनार्थं विविधानां विचाराणां चर्चाकरणाय १ पुण्यपत्तने, २ जनस्थाने, १ अहमदनगरे, १ पनवेलग्रामे इति समित्याः पंचषडाधिवेशनानि । ७ त्रिधातुत्रिदोषनामकग्रंथस्य-महाराष्ट्रभाषया निर्माणं ( यस्य गीर्वाणवाण्या-त्रिदोषविषयकसंपूर्णवाङमयावलोडनसहितं रूपांतरं भूत्वा प्रकाशनं भविष्यति) ८ वाराणसीयं पंचमहाभूतत्रिदोषपरिषत्कार्यं, ९ इदं चेतिवृत्तप्रकाशनम् इति सर्वमपिकार्यजातम् स्वागतसमित्याः सकाशादेवाभवत् । अस्मिन्निितिवृत्ते मया नामूलं किमपि केवलं मनोगतं वा लिखितं, न वा केषांचन मतविपर्यासः कृतः । तथापि संस्कृतवाणिवेषभूषादानावसरे ममाऽज्ञानाद्वा, अपाटवाद्वा, अनवधानाद्वा, लेखनकौशल्याऽभावाद्वा, यानिकानि चित्स्खलनानि संपन्नानि वा दोषास्समुत्पन्नास्तदर्थः क्षंतव्योऽयं मम मंतुः, तस्योत्तरदायित्वं ममैव न तेषां महाभागानाम् ।

अस्येतिवृत्तस्य संकलने, मुद्रणे, ग्रथने, प्रेषणे च सार्धसहस्ररुप्यकादप्यधिको भवेद्व्ययः, अतः सर्वेभ्य एव विनामूल्यं प्रेषितुमिदं नैव शक्यम् । सर्वैरपि आभारतीयैः पंडितैर्वैद्यवरैः, वैद्यकवृत्तपत्रमासिकपत्रसंपादकैः, तत्तस्थानस्थापितायुर्वेदविद्यालयमहाविद्यालयादिसंस्थाचालकैः, अनेकविधायुर्वेदसंस्थाचालकैः प्रान्तीयग्रामीयवैद्यमंडलैः, सार्वजनिनवाचनालयसंचालकैः, आयुर्वेदविषये प्रेमादरदृष्ट्याऽवलोकयितृभिरुदारैर्धनिकैः अस्येतिवृत्तस्य मूल्यदानेन,

सहाय्यदानेनैव स्वीकारः कर्तव्यः, यस्य विक्रयप्राप्तद्रव्येण मुद्रणादिनिमित्तोत्पन्नं ऋणं विगतं भवेत्। तथा त्रिधातुत्रिदोषमीमांसाग्रंथस्याऽपि मुद्रणादिकरणे सामर्थ्यं लभेत ।

अस्मिन्नितिवृत्ते यावज्ज्ञातानि त्रिदोषविषयकाणि वैद्यविदुषां दक्षतराणामथचान्येषामपि पंडितानां मतानि परिषत्पूर्वकालावच्छिन्नानि संगृहीतानि । परिषत्कालानंतरं समागतानि मतानि न संगृहीतानि । केवलं मुद्रितपुस्तकानां निबन्धानां नामावलिस्तु अग्रे प्रदत्ता । अस्मिविषये पंडितानां सांप्रतं प्रतिदिनं आलक्ष्यते चेतः। अनेकैर्ग्रंथरूपेण संपाद्यते ग्रंथसंपत्तिः। सातारानगरवास्तव्या डॉ. मो. ना. आगाशे महोदयाः, वैद्य पंचानन गुणेशास्त्रिणः, पंडितप्रवरा डेग्वेकरमहाभागाः स्वर्लोकं गता मालवणस्था श्रीराम महादेव पुराणिकाः अस्मिन्विषये प्रबन्धलेखका इति तु सुविज्ञातमेव । नैते प्रबन्धाऽद्यापि प्रकाशनरूपावधारिणस्तथापि पूर्णावस्थां गता इति । आरोग्यदर्शननामक एको लघुः प्रबन्धः संमेलनपत्रिकायां प्रकाशित एव । निवेदनस्य तात्पर्यमिदमेव यत् अयं विषयः सांप्रतं एकोनविंशवैद्यसंमेलनसमयादूर्ध्वं पंडितप्रवराणां विचारकक्षागतः संवृत्त इति तु स्पष्टमेव । अस्मात्कालात्परमेव त्रिदोषविषयमेवाधिकृत्य १ पैठणग्रामे त्रिदोषचर्चापरिषद् २ रट्टीहळ्ळी [ कर्नाटक ] त्रिदोषचर्चापरिषद् ३ विजयनगरे त्रिदोषचर्चापरिषद् इति बभूवुरन्या अपि चर्चापरिषदः । तथा स्थले स्थले वैद्यमंडलेषु आयुर्वेदविद्यालयेषु अस्यैव चर्चा प्रभूततरा प्रचलिताऽवलोक्यते ।

अथचाऽयं विषयो शास्त्रीयनिर्णयस्यान्तिमामवस्थां सांप्रतं धारयति । त्रिदोषाः केवलं ऋषीणा कल्पनैव न किमपि वस्तुतत्वमित्यारभ्य विचाराणामुत्क्रमणं त्रिदोषा नैव केवलमशास्त्रीया कल्पना किंतु अनिर्णीतस्वरूपं शास्त्रीयसंशोधननिकषे निकषणयोग्यं विद्यते किमपि द्रव्यमिति पाश्चात्यविद्याविभूषितानां तज्ज्ञानां मतानि प्रकटीभवंति । वाराणस्यां संजातयोः परिषदोस्तु महत्कार्यमिदमेव संपन्नम्-यत्-पंचमहाभूततत्वप्रणालिस्तथा तन्मूलाधिष्ठितात्रिदोषतत्वप्रणालिर्यद्यपि पाश्चात्यतत्तत्तत्वप्रणाल्याः सकाशादत्यन्तं भिन्नकोटीमधिरुढाऽधुना दृश्यते, तथापि कालवशात्, संशोधनसहाय्येन, चर्चापरिषत्सु संधायसंभाषापद्धत्या च द्वे अपि प्रणाल्यौ एकरूपं गमिष्यत एव,

इति पडितानां संशोधकानां समुत्पन्ना श्रद्धा मनसि । न चेऽयं प्रणालिः परिहासस्य विषयः ।(त्रिदोषास्तु नैव कल्पना, नैवाऽचिन्त्यानुमेयशक्तिरूपा, वा नैव सर्वथा अदृश्याः किंतु त्रिदोषास्तु नित्योत्पत्तिमंति, वृद्धिक्षयशीलानि, अवस्थाविशेषात् स्थूलसूक्ष्मसूक्ष्मतररूपाणि, जीवप्रकृत्यनुबद्धानि, शरीरभाग-रूपाणि, संशोधनप्रणाल्या संशोधनार्हाणि द्रव्याणि इति विश्वासस्समुत्पन्नो विद्यते। तर्क्यते च शीघ्रमेव रसायनशास्त्रप्रयोगालये संशोधनकक्षायां समेत्य संशोधन-कर्मणा प्रत्यक्षतः स्थूलरूपेण, काचनलिकासु, सूक्ष्मदर्शकयंत्रे च इमे त्रिदोषास्स्वीयं रूपं प्रकटीकरिष्यन्तीति । समागतोऽयं कालो नातिदूरतरः किंतु निकटवर्तिरेव वर्तते ।)भवतु ।

अनयोः परिषदोः सर्वथा साफल्याय यैर्यैः कायेन, वाचा, मनसा, अर्थेन, बुध्या, विद्यया, परिश्रमेण च सुमहत्साहाय्यं प्रदत्तम्, येन च परिषदोः कार्यं सुचारु संपन्नं तेषां सर्वेषां अभिनन्दनं करोमि । विशेषतस्तु प्रातः-स्मरणीया महामना पंडित मदनमोहनमालवीयाः, महामहोपाध्याय प्रमथनाथ तर्कभूषणाः महामहोपाध्याय गणनाथसेन सरस्वतयः, पंडितप्रकाण्डराजेश्वर शास्त्रिद्राविडाः, विद्वद्रत्न देवनायकाचार्याः, महामहोपाध्याय गिरिधरशर्मा चतुर्वेदिनः, कविराज उपेन्द्रनाथदासाः, कविराज प्रतापसिंहरसायनाचार्याः प्रो. दत्तात्रेय अनंत कुळकर्णीमहाभागाः, डॉ. घाणेकरमहाशयाः, आयुर्वेदा-चार्या दुर्गादत्तशास्त्रिणस्तथा, आयुर्वेदाचार्या जगन्नाथप्रसाद वाजपेयिनः, पंडितप्रवरा हरिनाथशास्त्रिणस्तथा प्रामुख्येण आयुर्वेदमार्तण्डा जादवजी आचार्या इमे परमं संमानार्हास्तथा अभिनन्दनार्हा एव, यैः सर्वथा परिषत्साफ-ल्याय अवर्णनीयागणनीयश्रमपूर्वकं प्रयतितम् । तथा च परिषदर्थे विद्या-वाचस्पतयो मधुसूदनसरस्वतयो, आयुर्वेदमार्तण्ड लक्ष्मीरामस्वामिनो श्रीशंकर तर्करत्नाः श्रीफणिभूषणतर्करत्नाः वैद्यश्रेष्ठाः सत्यनारायणशास्त्रिणो प्रो. एस्. एस्. जोशी महाभागाः कॅ. जी. श्रीनिवासमूर्तयः डॉ. पाठक महाभागाः यैः परिषदोर्निरीक्षककार्यं स्वीकृत्य सर्वोत्कृष्टत्वेन पारितम् । अथ च ये दूराद्दूरतरम् प्रवासं कृत्वा परिषदर्थे समागताः पंडितश्रेष्ठा दक्षतरा दार्शनिका वैद्यवराश्च सभास्तारस्तथा सर्वेश्रेष्ठाः कार्यकर्तारो द्रव्यसाहाय्यकास्तथा स्वयंसेवकास्तान्

सर्वान् सविनयमभिनन्दामि येषां सर्वेषामेव साहाय्येनेदं कार्यं सफलमभवत् । अन्ततो दीर्घकालेनऽपीदं इतिवृत्तं मुद्राप्य सर्वेषां सज्जनानां सेवायै समर्प्यते तत् सदयहृदयैः स्वीकृत्य कृपाकटाक्षीक्रीयतामयं जनइति विज्ञाप्यते, तथा च इतिवृत्तरचनायां येषां येषां प्रबन्धाः, पुस्तकानि, व्याख्यानानि, भाषणानि, साहाय्यभूतानि जातानि, तान् सर्वान् सादरं संभावयामि । विश्वसिमि मदीयः त्रिदोषविमर्शनामको अपूर्णः प्रबन्धस्तथा ग्रंथनिर्माणसमित्यास्त्रिधातुत्रिदोष-मीमांसा इति द्वावपि प्रबन्धौ संपूर्णौ विद्वद्वराणां दृष्टिगोचरौ नातिचिरात् समागच्छेतामिति ।

श्रीमतां वशंवदः

**वामनशास्त्री दातारः**

सहाय्यमंत्री, वाराणसी-पंचभूतत्रिदोषचर्चा-परिषद्.

तथा

मंत्री, एकोनविंशवैद्यसंमेलनस्वागतसमितिः, जनस्थानम्.

ता. १।८।४०.

डावीकडून—पं. जगन्नाथप्रसाद वाजपेयी, पं. वामनशास्त्री दातार, पं. कृष्णशास्त्री कवडे, पं. जादवजी आचार्य, कॅ. जी. श्रीनिवासमूर्ति, पं. मदन मोहन मालवीयजी, म. म. कविराज गणनाथ सेन, पं. ब्रजबिहारी चतुर्वेदी, पं. लक्ष्मीराम स्वामी, कविराज प्रतापसिंह, पं. त्र्यंबकशास्त्री आपटे.

॥ श्री ॥

# काशी पंचमहाभूतत्रिदोषचर्चापरिषद्

# तदितिवृत्तम् ।

## पूर्वपीठिका

अयि भारतीया प्राच्यविद्याविज्ञानबद्धादरा महाभागाः सुविदितमेव तत्र भवतां भवतां यदतीते कार्तिके मासि आंग्ल शाके १९३५ तमे वत्सरे नोव्हेंबरमासे द्वितीयतारिकामारभ्याष्टमतारिकापर्यंतम् वाराणस्यां श्री हिंदूविश्व-विद्यालये सप्ताहमेकमियं परिषन्महता समारंहेण संवृत्ता । यस्यां भारतीयसर्व-दार्शनिकानुमतपंचमहाभूतविषये तथाच भारतीयायुर्वेदीयत्रिदोषविषये संबभूव विचारः । अस्यां परिषदि एतयो द्वयोर्विषययोः प्राचीनशास्त्रसंगृहीतयोर्गत-शताद्बपर्यंतम् निरपवादयोः कोनाम चर्चावकाश इति सविस्मयांतःकरणानां विदुषामवबोधाय दीयतेऽत्राल्पीयसी गतसप्ततिमितस्य कालस्य एतद्विषयिकी पूर्वपीठिका । यया सर्वेऽपि श्रेष्ठा अधिगतार्था भवेयुः ।

वेदकालादारभ्य सनातनस्वरूपं प्राप्तानां भिन्नभिन्नतत्वैकनिष्ठानां, भिन्न-भिन्नमतावलंबिनां स्वमंतव्यसिध्यै तर्ककर्कशबुध्या सदाग्रहेण विवदतां सर्वासां विद्यानां अस्या सर्वस्याः जडाऽजडसृष्ट्याः सर्जने उपादानकारणं पंचमहाभूता एवेति अभिन्नो विषयः तएव पंचभूताः त्रिदोषत्वेन परिणताः संतो सजीव-सृष्टिसर्जने उपादानत्वं जग्मुरिति च । एतादृशे निरपवादे प्रचलति सिद्धांते क्रियमाणे च तन्मूले व्यवहारे आयुर्वेदीयचिकित्साव्यापारे च पाश्चात्यानां राज-कीयसत्ताक्रमणेन साकं प्रादुर्बभूवाऽक्रमणं तदीयानां विद्यानां भारतीये प्रदेशे । राजशासकानां च स्वकीयविद्याधर्मादीनां भारतीयासु प्रजासु संक्रामणे बभूवा-विरतः प्रयत्नः । स्थाने स्थाने आंग्लविद्याप्रदानार्थं निष्कासिता विद्यालयाः ।

यथैव सर्वप्रकाराणां विद्यानां वितरणे बद्धादरास्तथैव पाश्चात्यवैद्यकविद्याप्रदानेऽपि उत्साहभरितास्ते कुर्वंति स्म गभीरं प्रयत्नभरम् । इयं हि खलु पाश्चात्यशासकानां विशेषतो आंग्लानां शासनपद्धतौ तथा सर्वस्मिन्नपि व्यवहारे सविशेषा सरणिर्विद्यते यया शासिताः नैकेनापि प्रकारेण स्वावलंबिनो भवितुमर्हंति सर्वथा परावलंबिन एव स्वजीवनव्यवहारे भूत्वा स्वजीवनं नयेयुः । अथ च मदं मदं इमे हि शासिता निश्चयेन स्वकीयविद्यासु, धर्मे, संस्कृत्यां च अधीतान्यविद्यासंस्कारेण नष्टादरा स्वीयेनैव प्रयत्नेन स्वकीयसारसर्वस्वनाशे प्रोद्यताः संतो, "बुध्याहतास्तु नितरां सुहता भवंती "त्येतस्या उक्त्या सार्थकतां प्रत्याययंति । अयमेव परिणामः अस्मिन्भारते वर्षेऽपि दृष्टिपथमनुभवपथं च समायातः । नव्यविद्याशिक्षिताः प्रायः सर्वेऽपि भारतीयविद्याकलाकौशलशास्त्रधर्मव्यवहारादीन् उपहसंतो सर्वथा तान् अज्ञानपूरतं जल्पितमिति वदंतो परशोर्दंड इव स्वीयसर्वस्वच्छेदने प्रोद्युक्ता दृश्यंते । आयुर्वेदशास्त्रविषयेऽपि इदमेवालर्कं सर्वतः प्रसक्तमभूत् । अस्मन्महाराष्ट्रदेशीयाः प्रथिता दक्षतराः डॉ. गणेश कृष्ण गर्दे महाशयाः अष्टांगहृदयमाधवनिदानयोर्महाराष्ट्रभाषानुवादं चक्रुः । तैस्तदा तद्ग्रंथयोर्भूमिकालेखनं कृतम् । तयोर्भूमिकायाः आयुर्वेदीयसिद्धांतमूलभूताः त्रिदोषाः न वस्तुगम्यानि द्रव्याणि शरीरे वर्तमानानि किंतु ऋषिभिः केवलं कल्पिता एव इति अधिक्षेपः कृतः । ( ऐशवीये १८९० तथा १९०४ अब्दे ) " अष्टांगहृदयभूमिकायां आर्यवैद्यकस्य मूलतत्वानि " इत्यस्मिन् प्रकरणे, " मनुष्यस्य शरीरे रोगावस्थायां वा निरुग्णावस्थायां सर्वेऽपि व्यापाराः घटनात्मका वा विघटनात्मका वातपित्तकफनामकेभ्य एव सिध्यंति इति यन्मतं वा कल्पना आर्यवैद्यकस्य तस्यैव त्रिदोषवाद इति अस्माभिः पूर्वं संज्ञा प्रदत्ता " । " व्रणप्रश्नाध्याये सौश्रुतीये यद्वर्णनं दृश्यते तेन तथा चरकस्य वातकलाकलीयाध्याये च यद्वर्णनं वर्तते तेन आद्यायाः सृष्टेर्घटनायास्तथा विघटनायाश्च यानि वायुः सूर्यः चंद्रश्च कारणानि इति यथा तैरवलोकितं तथैव शरीरेऽपि साक्षात् वायुः सूर्यः चंद्रमाच रूपांतरिता वर्तंते इति ऋषिभिः कल्पना कृता " । " वातपित्तकफानां अयमपि व्यापकोऽर्थः सुदीर्घात्कालाद-

नंतरमेव व्यवहारे आगत इति भाति। प्रथमतस्तु वायुर्नाम उदरानाहशूलादीनां कारणं, पित्तं तु वमने यदम्लं हारितं पतति तदेव, कफस्तु मुखान्निसृत-श्वेतवर्णोस्रावः इत्येव अर्थः प्रचलितो भाव्य इति"। "मानवसमाजस्य बाल्यावस्थायां रोगास्तावत् ज्वरकासातिसारवांतिशूलकामलाशोफा एते एव। इमे विकारास्तेषां लक्षणैः कारणैः वातादिना भवंतीति कथितं चेत् तेषां निदानं जातमिति तदानीं विश्वास आसीत्। प्रकृष्टवातयुक्ते देशे वा काले पर्यटतः शिरःशूलोत्पतिर्जाता चेज्जाता शरीरे वायुवृद्धिः। आतपे आहिंडमानस्य शिरःशूले संजाते कुपितं पित्तं। शीतयुक्ते स्थले गच्छतः प्रतिश्यायोत्पत्तौ वृद्धः कफः। एतेषु केषुचिद्विकारेषु पततौ पित्तकफौ प्रत्यक्षतया दृश्येते एव। अतस्तयोरेव वृद्धिर्रोगकारणमिति कथिते न काऽपि हानिः। एतयोरन्यतरकारणेषु दृष्टिक्षेपस्य वा जिज्ञासायाः किं कारणम्?"। "अन्यदपि शरीरे दोषत्रयाणामेवा-स्तित्वकल्पनायां कारणं, यत्तदा धर्मविचारे वा तत्त्वविचारे 'त्रि' इति संख्याया महत्वमतिशयितमभूत्। यथा लोकत्रयं, अग्नित्रयं, वेदत्रयं, गुणत्रयं, देवत्रयं, देहत्रयं इत्यादि। तेन आत्रेयादीनामपि शरीरे शुभाशुभप्रवर्तकस्य दोषत्रयस्य कल्पनायामपि मनः प्रवृत्तं भवेदिति संगच्छते"। "चरकस्य सूत्रस्थानस्य तिस्रैषणीयाध्याये पर्यालोचिते इदमनुमानं युक्ततरं प्रतिभाति। अस्मिन्नध्याये प्राणैषणा, धनैषणा, परलोकैषणा इति तिस्रैषणायाः वर्णनानंतरं सप्ताष्टान्य-त्रिपुटिवर्णनं कृतं इति दृश्यते"। "एवं शारीरेंद्रियविज्ञानशास्त्राणां रुधिराभिसरणाद्यर्वाचीनज्ञानाभावात् शारीराणां व्यापाराणां जिज्ञासोपशमनार्थं एतेषां व्यापकानां अतएव काल्पनिकानां वातपित्तकफानां प्राचीनैः ऋषिभिः संयोजना कृता। पाश्चिमात्यवैद्यकशास्त्रस्य तथा रसायनपदार्थविज्ञानशास्त्रयो-स्तथा इंद्रियविज्ञानशास्त्रस्य ज्ञानं यथावद्यस्य भवेत् तस्मै इयं ऋषीणां कल्पना सर्वथा मिथ्या तुच्छा इति प्रतिभासिता स्यात् तथा स आयुर्वेदे आस्तिक्य-बुद्धिं पूज्यबुद्धिं च जह्यादिति नात्र संदेहः इति"।

तथाच महाराष्ट्रभाषानुवादितमाधवनिदानस्योपोद्घाते त एव महाभागाः—

" यत्र प्रत्यक्षप्रामाणमकिंचित्करं तत्रानुमानप्रमाणस्याऽवकाशः । अदृश्यानां घटनानां कल्पना दृश्यैरेव भवितुमर्हति । अतः रोगोत्पत्तौ शरीरे बाह्यतः परिदृश्यमानाः याः प्रतिक्षणं भिन्ना घटनाः समवलोक्य प्राचीनैः त्रयाणामेव प्रकाराणामनुभवः कृतः । १ शरीरे उष्णतायाः वर्धनं, २ शैत्यस्यापि वर्धनं, ३ तथा शरीराद्बहिः केषामपि पदार्थानां गमनमिति । सर्वेष्वपि रोगेषु प्रधानतयाऽस्मिन्देशे हिमज्वरस्यैव तैः प्रथमतः पर्यालोचनं कृतं भवेदिति गम्यते । तस्मिन् शीतज्वरे प्रथमं शैत्यस्य प्रादुर्भावः । तदनु शरीरतापाधिक्यं । द्वयोरपि शीतोष्णकालयोः पित्ताद्वमनं, तृष्णावृद्धिः, शिरःशूलं इत्यादयो विकाराः प्रादुर्भवंति । तदनंतरं स्वेदोद्गमो भूत्वा ज्वरः प्रशांतिमधिगच्छति । एतेषु लक्षणेषु परस्परलक्षणानां वैभिन्यं समवलोक्य तेषां कारणस्याऽपि वैभिन्य-मावश्यकमिति तेषां कल्पनाप्रादुर्भावो युक्त एव। तानि तु कारणानि उष्णता शैत्यमिति तैः कल्पितानि । उरसो विदाहः, पित्तोद्वमनं, तृष्णा, हस्त-पादनेत्रादीनां ज्वलनं, घर्मः इत्यादीनि लक्षणानि ज्वरसजातीयानीति निश्चित्य ऊष्णवर्गे, तथा मुखस्रावः कफोद्वमनं इत्यादीनां हिमसजातीयत्वात् शीतवर्गे, तैः समावेशः कृतः । तथैव हिमज्वरे शीघ्रोच्छ्वसितत्वं, जृंभाधिक्यं, प्रलपनं, अंगविक्षेपणं, अंगमर्दः इत्यादीनि अवश्यं भावीनि लक्षणानि तापहिमयोर्वि-भिन्नजातीयत्वात् एतेषां अन्यदेव कारणं स्यात् इति वितर्क्य श्वासादिभ्यः प्रत्यक्षोपलभ्य वायुरेव कारणमिति च मत्वा वातवर्गे तेषां प्रक्षेपणं कृतम् । अंततः बाह्यसृष्टौ शैत्यं औष्ण्यं वायुरिति त्रयं शक्तिमत् कार्यकरं यथा दृश्यते तैरेव शारीरोऽपि व्यापारः संपत्स्यति इति तैः कल्पना कृता । याच हिमज्वर-विषयिका कल्पना तस्या एवान्येष्वपि रोगेषु लक्षणवर्गीकरणं कृत्वा विस्तारः कृतः। बाह्यसृष्टौ समुपलभ्यमानाः शैत्योष्णवाताः चंद्रसूर्यवायुरूपेण यथा दृश्यंते तथा शरीरे वातपित्तकफरूपेण शैत्योष्णवाताः प्रतिवसंति । यथा [ ब्रह्मांडे ] बाह्यसृष्टौ चंद्रः शीतस्य खनिः, सूर्य उष्णस्य खनिः, वायुः सर्वगतेः कारणं, तथैव पिंडे ( शरीरे ) कफः शीतवीर्यस्य खनिः, पित्तं ऊष्णवीर्यस्य खनिः, वायुः सर्वशरीरगतेः कारणमिति प्राचीनानां कल्पनासिद्धांतः । ऊर्ध्वं कृतेन

विवेचनेन वाचकानां बुद्धौ इदमागतमेवस्याद्यत् रोगोत्पत्तिमीमांसायां पाश्चात्य-वैद्यकगतसिद्धांतैः संशोधनैश्च आयुर्वेदीयोऽयं त्रिदोषवादः सर्वथा मिथ्यैव " । तथैव इमे गर्देमहाशया एव पुण्यपत्तनीयवसंतव्याख्यानमालायां स्वव्याख्याने " आयुर्वेदीयं रसशास्त्रं सर्वथा नैव रसायनशास्त्रसंज्ञां प्राप्नोति । अस्मत्प्राचीन-ऋषीणां ज्ञानं सर्वथा अबलाज्ञानवत् तुच्छं । इंद्रियविज्ञानशास्त्रे तु ऋषीणां नैव प्रवेशोऽपि विद्यते । मूत्रोत्पत्तिविषये चरकाचार्यास्सर्वथा अज्ञा एव । त्रिशतषष्ठिदिनात्मकं संवत्सरं, यज्ञीयकुंडनिर्माणे त्रिशतषष्ठ्यात्मकानां इष्टिकानां आवश्यकता, अतः शरीरे त्रिशतषष्ठिमितानामस्थ्नामावश्यकतेति तैः प्रतिपादितं । मस्तुलुंगे ज्ञानास्तित्वस्य ज्ञानं नैव तेषां तदा आसीत् । पारदस्य वर्णनं सर्वथा जुगुप्सावहं तैः कृतम् । महाराष्ट्रभाषायां संगजिरा इत्युपाव्हं द्रव्यं संगेजिराइत इति युनानशद्वापभ्रंश इति सत्वे तैः शंखजीरकमिति तस्मै नाम दत्तमिति । ऋषीणां सर्वथा मौर्ख्यम् इ. इ. " [ वसंतव्याख्यानमालाव्याख्यानं डॉ. गर्दे-महाशयानामध्यक्षीयं भाषणं ता. २४।५।१९१२ ] इति तैस्तत्सदृशैः अन्यैश्चानेकैः समुत्पादिते विवादे, आयुर्वेदे च अशास्त्रतां नीयमाने सर्वस्मिन् भारते वर्षे महान् संभ्रमस्समुत्पन्नः । आयुर्वेदीयग्रंथेषु तत्पारिपाठ्यां अनेकेषाम-श्रद्धा चोत्पन्ना । शासका अपि भारतीयानामेव दक्षतराणामेतादृशान् आक्षेपान् पुरस्कृत्य आयुर्वेदोन्नत्यै किमपि कार्यं कर्तुं नैवाऽनुमताऽद्यापि संपन्नाः । अथ च तेऽपि वारंवारं उद्घोषयंति आयुर्वेदस्य अशास्त्रीयत्वं, उत्तेजनानर्हत्वं, अज्ञानप्रचुरत्वं, सर्वथा विज्ञजनाश्रयाऽयोग्यत्वं । साधयंति चास्मिन्देशे स्वकीयवैद्यकज्ञानप्रसरणं, तद्वारा स्वकीयचिकित्सापद्धत्याः पोषणं, तदर्थं पाश्चात्य-सिद्धौषधीनां विक्रयं । नयंति च कोटिशो रूप्यकाणि स्वदेशे क्रीतौषधिमूल्यद्वारा । प्रतिदिनं च ऱ्हासमायाति आयुर्वेदीया चिकित्सा । भिषजश्च स्वोदरपूरणेऽप्य-समर्थास्सहाय्यहीनाः सहस्रशः संजाताः । लुप्तप्रायमस्मदीयं आयुर्वेदीयशा-स्त्रज्ञानं सर्वथा नाशमुखे समापतितं । एवं विधायामवस्थायामुत्पन्नायां, क्रियायाः प्रतिक्रियोत्पत्तिर्भवत्येवेति नियमात्, डॉ. गर्देमहाशयानां प्रजल्पितं समाकर्ण्य मोहनिद्रां त्यक्त्वा जागृताः केचन आयुर्वेदपारीणास्तथा आयुर्वेदाभिमानिनो-

दक्षतराश्च केचित् आयुर्वेदोपरि गृहीतानां आक्षेपाणामसत्यस्वरूपं दिदर्शयिषवो आक्षेपखंडनाय संनद्धा बभूवुः। अथ च एषामाक्षेपनिरासकाणामपि प्रकार-द्वैविध्यं वर्तते। एकश्च आयुर्वेदीयशास्त्रपारदृश्वनां आयुर्वेदोक्तवचनैरेवाक्षेपखंडन-प्रकारकः। अपरश्च आयुर्वेदीयत्रिदोषाणां पाश्चात्यपद्धत्यां दर्शितस्य कस्यचि-दपि क्रियास्वरूपस्य साम्यप्रदर्शनपरश्च। एतस्मिन्नपि प्रकारद्वैविध्ये प्रयतमा-नानां भिषजां दक्षतराणामपि अस्मिन्विषये प्रत्येकशो मतान्यत्वं प्रदर्शितम-भूत्, भवति चैतावत्कालपर्यंतमपि। अस्य भिन्नभिन्नाभिप्रायप्रपूरितस्य प्रकार-द्वैविध्यस्य क्रियते सारसंग्रहः। येनैतावत्समयं का स्थितिर्विद्यतेऽस्य त्रिदोषवाद-स्येति तथा एतेनैव त्रिदोषपरिषदोद्गमोऽपि सम्यक् ज्ञातो भविष्यति। अयं सारसंग्रहस्तावत् यथा प्रयत्नं समधिगतमतानां दर्शनपर एव। अस्मिन् सुविस्तृते भारतदेशे तत्तत्प्रांतीयपंडितैः कदा, कस्मिन् काले अस्मिन् विषये किं मतं कुत्र प्रकाशितमिति नैव साकल्येन विज्ञातुं शक्यम्। अथाप्यस्मिन्मतसारोद्धारे आभारतीयपंडितानां का का विचारपद्धतिरिति ओदनसिक्थन्यायेन परिज्ञातं भवेत्।

महाराष्ट्रे वादस्यास्योत्पन्नत्वात् महान् किल वादप्रतिवादः प्रारब्धो-भूत्साद्यापि समाप्तिं गतः इति लक्ष्यते। ऐशवीये १८९० मिते वत्सरे आयुर्वेद-महोपाध्यायेति बिरुदं धारयद्भिः सुविख्यातनामधेयैः शंकर दाजीशास्त्री पदे महाशयैः आर्यभिषक् संज्ञकं मासिकं पत्रं आयुर्वेदविषयोहापोहाय निष्का-सितम्। तस्य पत्रस्य ऐशवीय १९०१ वत्सरस्य प्रथमांके त्रिदोषवादमधिकृत्य "त्रिदोषकमिशन" शीर्षके निम्नगतो लेखः प्रसिद्धिं नीतो वर्तते। "मोहमय्यां त्रिदोषविषयस्य प्रत्यक्षशारीरशास्त्रं विचार्य का सत्या वर्तते स्थितिरिती निश्चेतुं इदं त्रिदोषकमिशनं स्थापितं वर्तते अस्मिन् विद्वांसो वैद्याः दक्षतराः [ डॉक्टर्स ] हकिमाश्च नियुक्ताः संति अन्यान्यस्थानस्थविद्वद्वराणा-मपि साहाय्यं गृहीतं भविष्यति। [ कमिशनेन ] त्रिदोषविचारकमंडलेन अस्य विषयस्य निश्चितस्वरूपप्रदर्शकः प्रस्तावः पश्चात् प्रस्तोष्यते। सांप्रतं

तत्प्रस्तावसाहाय्यभूतान् प्रश्नान् निर्माय भारतीयेषु सुप्रसिद्धवैद्यडॉक्टर-हकिमेषु प्रहीयते । तेषां समागतानि उत्तराणि पर्यालोच्य पश्चान्निर्णयो भविष्यति इति " । मंडलेन निष्कासितानां प्रश्नानां यैर्यैर्यानि यानि दत्तान्युत्तराणि तान्यधस्तात्संगृह्यन्ते ।

## श्रीमतां अवधूत वासुदेव वैद्यानां अभिप्रायः

( एरंडोल पूर्वखानदेश, ऐशवीयाब्द २२।१।१९०१ )

**" देहोऽयं वाताधिष्ठानः " :—**

( अ ) वायोः ( हवा ) भारविषये ( प्रेशर ) पदार्थविज्ञानशास्त्रगत-विचारेणैतत्सिद्धं भवति यद्देहोऽयं वाताधिष्ठान इति ।

( आ ) जलेऽप्यंतर्लीनो वायुर्वर्तते। अतः शरीरगतेषु रक्तादिद्रव-द्रव्येषु वर्तते वातस्य व्याप्तिरिति । यतः शोणितस्य सहस्रमिते अंशे ७९५ अंशमितं जलं २०५ अंशमिता अन्ये देहघटकद्रव्यकणा वर्तंते । अतः कियता-प्यल्पांशेन विद्यते शोणिते वायुरिति ।

( इ ) सृष्टिशास्त्रे २६९ पृष्ठे ( १४१ ) नियमे द्रवद्रव्यमिव केचित्सच्छिद्रपदार्था (वस्तूनि) अपि कुर्वंति वायोः शोषणम्। इदं शरीरं अंततः सच्छिद्रं वर्तते । अतः तस्मिन् वायोश्चलनक्रियायाः प्रतिबंधो नैव कदापि भविता। अतः सर्वेषु स्रोतस्सु वातव्याप्तिर्वर्तते । तथैव घनरूपास्थिसहितशेष-द्रव्येष्वपि वातव्याप्तिर्वर्तते एव । रक्ते विद्यते वातस्य व्याप्तिः । तत्तु यस्मिन् यस्मिन् शरीरभागे संचरति तस्मिन् तस्मिन् शारीरभागे अस्थिषु मज्जासु अपि वातव्याप्तिस्सिद्धैव। अत्र साक्षिणो ज्ञानतंतव एव। ज्ञानतंतवस्तु रंभास्तंबत्वगिव जालगृहयुता वर्तंते । अतस्तेषां सच्छिद्रेषु भागेषु वायोरेव स्थितिः । तथैव तेषां तंतूनां घटनाकारणमपि विद्यते शोणितम् । तथैव ' नर्व्हज् ' इत्येतेषां वातवाहिनीति संज्ञाकरणमपि कृतं कैश्चिद्दक्षतरैः ।

( उ ) एतेषु ज्ञानतंतुषु वर्तेते द्वौ भेदौ । बोधकश्चालक इति। शरीरे बोधकत्वचालकत्वकृत्यानि वाताधिष्ठितमज्जैव संभवंतीति पाश्चिमात्य शास्त्रेणापि सिध्यति ।

पूर्णतया विचारिते, इमानि चालकबोधककर्माण्यपि वायुत एव भवंतीति दृश्यते । तत्कर्मसाहाय्यं तु ज्ञानतंतुभिर्मज्जातंतुभिर्भवति । यथा सर्वं प्रकाशज्वलनादिकं कर्म विद्युता भवति । विद्युद्वहनार्थं ताम्रमयीनां नलिकानां ( ताराणां ) साहाय्यमावश्यं वर्तते । तद्वत् तासु नलिकासु कार्यकर्तृत्वं विद्यत एव । तथैव मज्जातंतुषु कार्यकर्तृत्वं वायोः । इदमेव वायोः कर्म चरके वातकलाकलीये सूपवार्णितम् । बुद्धेश्च स्नायूनां रोगास्सर्वेपि वातविकृत्यैव भवंति । यथा स च विकृतो वायुः ( भिन्ना भिन्नाः 'ग्यास' संज्ञकाः ) स्वीयेन मार्गेण ( मज्जातंतुरूपेण ) गच्छन्, स्वप्रमाणबाहुल्यात् इतरेष्वपि धातुषु प्रविष्टो भवति । अथवा भिन्नभिन्नेभ्यो ज्ञानतंतुभ्यो भिन्नभिन्नशारीरस्थलेषु गच्छन् तानि च विकृतिं नयन् स्वकर्मपराङ्मुखानि कुर्यादिति । एवं वातस्तु एको दोषः स सर्वस्मिन् शरीरे संचरन् स्थाने स्थाने दुष्टिकरणसमर्थो विद्यते । सर्वस्मिन्नपि शरीरे ज्ञानतंतूनां व्याप्तिर्वर्तत एव । न हि कश्चिदल्पियानप्यंशो शरीरस्य यस्मिन् ज्ञानतंतोर्नैव विद्यतेऽस्तित्वमिति । अतः वातस्यापि व्याप्तिर्यस्मिन्नास्तीति नैव विद्यते शरीरस्याल्पोप्यंशः । एवं च रक्तादिसप्तधातवो वाताधिष्ठिता एव । प्रकृतौ विकृतौ स सर्वथा समर्थ एव । इदं सामर्थ्यं विद्युदादिशक्त्या वा प्राणतत्वस्य न्यूनाधिकत्वेन तस्मिन् समागच्छेदिति । मानवशरीरगतं शोणितं यदि "वाताकर्षकयंत्राधः स्थापितं चेत् तस्मिन्वायोर्बुद्बुदा उद्गमंति । तथैव अर्धप्रस्थात्मके शोणिते कुडवप्रमाणको वायुर्निर्गच्छतीति पाश्चात्यानामनुभवः । शुद्धशोणितसिरासु तद्गतशोणितादर्धप्रमाणो वायुरशुद्धशोणितसिरास्ववतिष्ठते । शोणिते तदर्धप्रमाणकस्य वायोर्व्याप्तिर्विद्यते । सामान्ये मानवशरीरे षट् प्रस्थात्मकं शोणितं विद्यते । अतः त्रिप्रस्थात्मकस्य वायोस्तास्मिन्नवस्थितिर्विद्यतेति सिद्धं भवति । मानवशरीरस्थकोष्ठे ( स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुंदुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ) ये च भिन्नाः

भिन्ना अवयवाश्च वर्तंते, तेषु तेषु अन्यान्यानि द्रव्याणि तिष्ठंति। तत्तद्रव्यानुषंगित्वेन पृथक् पृथक् भिन्ना वायवोऽपि विद्यंते (ग्यासेस्)। तथैव स्वीयस्वीयघटनायाः स्थानावकाशेन तेषां कार्यकर्तृत्वमपि भिन्नं भिन्नं विद्यते। अत एव वायोः पंचभेदाः संति। अतः प्राणवायोर्व्याप्तिः उरोदरमध्यपटलस्योर्ध्वं वर्तते। तथा मुखमन्योर्ध्वभागे शिरोस्थिनिम्नतो नासापर्यंतं गतस्य कंठविवरस्य च्छिद्रेऽपि वर्तते। तथा श्वासनलिकाद्वारे (ट्रॅकिया) तथा फुफ्फुसयोस्तथा हृदये च शोणितेऽपि अस्य वायोर्विद्यते व्याप्तिः। स च वायुः प्राणतत्वघटितो विद्यते। अत एवास्य प्राणवायुरिति संज्ञा। स च नासास्थितया मस्तिष्के संलग्नया नासोर्ध्वभागवर्तमानया सच्छिद्रया नाड्या मूर्धगोऽपि भवति।

**समानः** :—अन्ननलिका अमाशयः पक्वाशयश्चेति त्रितयं पोषणनलेति संज्ञां लभते। अस्मिन्नले द्वे अंत्रे विद्येते। ययोरेकस्मिन् उंदुकस्संलग्नः (अस्मिनुंदुके 'कोलन्' मलधारकमलोत्सर्जक इति चापि संज्ञा विद्यते)? इदमुंदुकं यत्र लघ्वंत्रे संयुक्तं तास्मिन्स्थले एकं विद्यते द्वारस् [इलिओसिकव्हाल्व्ह] येन उंदुकस्थं द्रव्यं पुनरपि पक्वाशये न प्रत्येति। अनेनैव द्वारेण पक्वाशयस्थोंदकस्थयोर्वायुरूपद्रव्याणि भिन्नानि भवंति। अयमेव पक्वाशयस्थितो वायुरस्माकं समानः।

**अस्य व्याप्तिः** :—आमाशयस्य कश्चिद्भागमारभ्य पक्वाशयपर्यंतं विद्यते इति। [कार्डियाक आरिफासा आरम्य इलियोसिकव्हाल्व्हपर्यंतं]

**अपानः** :—उंदुकस्य पृष्ठतो दक्षिणतो वामभागे गुदपर्यंतं यश्चभागः यस्मिन् जलसंचयो विद्यते तत् 'सीकम्' इत्याख्ये तथाच 'पेल्व्हिस्' इत्याख्ये तथा गुदकांडे च वर्तते। रेक्टम् डिसेंडिंग कोलनस्य अधोभाग एव अपानस्य मुख्यस्थानं। अन्यान्यानपि वृक्कौ, [किडनी] मूत्राशयः, [ब्लॅडर] मूत्रनलिका, मूत्रद्वारं, शुक्राशयः, गर्भाशयः, गर्भपुष्पप्रदेशः, अंडकोशाः, अंतःफलानि अंडवहनालिकाश्च इत्यादीन् अवयवान् व्याप्यापानस्तिष्ठति। तथैव पृष्ठवंशरज्जुः, त्रिकतंतवः, गुदास्थितंतवः अस्मिन् प्रदेशे स्वीयाभिर्विपुलाभि शाखाभिर्विद्यंते।

तासु कटितंतवो पादांगुष्ठपर्यंतमपि प्रसृता वर्तंते । अत एतेषु सर्वेषु वाातव्याप्तिस्तु अपानजातीयैव भवेत् । अत एव पातंजले " अपनयनादपान आपादतलवृत्तिः " वा " नाभिदेशात् पादांगुष्ठपर्यंतमपनयनादपान " इति लिखितमस्ति ।

**उदानः** :—मानुषकंठे गिलनद्वारमारभ्याऽमाशयपर्यंतं या वायोर्विद्यते व्याप्तिः । तथैवाऽयमन्ननलिकामार्गः पृष्ठवंशे सलग्नो विद्यते । अस्मिन्नेव पृष्ठवंश-विभागे उरोस्थीनि सलग्नानि नलिकागतवायुना पृष्ठवंशकशेरुका उपरि उच्चलिता भवंति । तथैव उरोस्थीन्यपि उर्ध्वं चलितानि भवंति, सोयं व्यापारो उदानस्य ।

**व्यानः** :—त्वगिंद्रिये, मस्तिष्के, ज्ञानतंतुमूले, सर्व शरीरेऽपि ( मोटर नर्व्हज् ) ज्ञानतंतुद्वाराऽस्य व्याप्तिर्विद्यते । अतः शरीरे भिन्नभिन्नस्थलेषु भिन्नभिन्नवायूनां अस्तित्वं विद्यतेति सिद्धं भवति । इमे हि वायवो पृथक् पृथक् भिन्नधर्माणो [ गॅसेस् ] वायुत्व सामान्येपि विद्यंतेति ज्ञेयम् ।

**पित्तम्** :—देहे पित्तस्य व्याप्तिर्विद्यते ।

अन्नरसे जठराधोमुखात् स्नेहपाचिनींगते सति रंजकपित्तं पित्ताशयात् पित्तसंचययुतया पित्तवहनाड्या निर्याति । तच्च अग्रे तया नाड्या स्थूलांत्रे समायाति । एवं गच्छत्पित्तामिश्रितान्नरससारो रक्तजनकसमर्थो रसवाहिनीभिः शोषितो भवति । स च मुख्यायां शोणितवहायां नाड्यां समाविष्टो भवति । तस्मिन् शिराभिरानीतं रक्तं संयुक्तं भवति । तच्च हृदयात् फुफ्फुसमधिगच्छति । हृदयात् शिराभिः सर्वस्मिन्शरीरे प्रसृतं भवति । एवं रक्तं पित्ताधारभूतं भवति वा पित्तघटितं भवति । एवमिदं पित्तं भिन्ने भिन्ने शरीरावयवे स्वेन स्वेन स्वरूपेण वा रूपांतरेण तिष्ठतीति प्रतीयते । एवं पित्तस्य मार्गौ रक्तवाहिन्यस्स्वेदवाहिन्यः । उत्पत्तिस्थानं यकृत् । रक्तद्वारा सर्वशरीरव्यापी भूत्वा तस्मिन् तस्मिन्स्थाने भिन्नं भिन्नं कार्यं करोति, त्वचि भ्राजिष्णु च भवति ।

**कफः** :—सर्वस्मिन् देहे अन्ततः श्लेष्मण उपलेपो विद्यते । आधुनिक-वैद्यकमतेन त्वचस्तिस्रो भेदा विद्यंते। तासु या अंतस्त्वग् (म्युकस् मेंब्रेन) विद्यते सा मसृणा रक्ता वर्तते । तस्यां श्लेष्मोत्पादकपिंडेभ्यः कफोत्पत्तिर्भवति । अस्यास्त्वचोऽधिष्ठानं नास्तीति नैतादृशं शरीरे स्थलं । नासानयनादिषु फुफ्फुस-कोष्ठांत्रादिषु यथा अस्या व्याप्तिर्विद्यते तथा शरीरस्थं प्रत्येकमस्थ्यपि अनया व्याप्तं वर्तते ।

## भाऊ गोविंदाचार्य कुंभारेशास्त्री

( माहुली क्षेत्र, ता. ८।२।१९०१ )

**त्रिदोषकमिशनस्य प्रश्नौः—**

**प्रश्नः प्रथमः** :—त्रिदोषाः प्रत्यक्षा वा अप्रत्यक्षाः ? प्रत्यक्षाश्चेत्प्रयोगैर-नुभवैश्च साधयितुं शक्याः ? अप्रत्यक्षाश्चेन्निदानव्यवस्था कीदृशी भवेत् ? शारीर-विकृतिषु त्रिदोषाणां संबंधः परिणामश्च प्रत्यक्षतया कथं सिद्धो भवेत् ?

**उत्तरम्**:—प्रत्यक्षा दोषा इत्यस्य अर्थो दृश्या इति चेत् ते दोषा दृश्या अदृश्याश्चेत्युभयविधा वर्तंते । शक्तिरूपेण अदृश्याः कार्यरूपेण परिणामरूपेण ? च दृश्यास्संति । निदानव्यवस्था च तदनुरोधत एव कृतेत्यनुभवसिद्धं वर्तते ।

**प्रश्नो द्वितीयः** :—नाडीपरीक्षया रोगनिदानं शक्यं न वा ? यदि त्रिदोषा नाडयां स्पष्टतया ज्ञायमाना भवेयुस्तदा सूक्ष्मरोगाणां ज्ञानं कति प्रमाणतः शक्यम ?

**उत्तरम्**:—नाडीपरीक्षया दोषज्ञानं भवति । रोगपरीक्षासाधनै रोगाणां ज्ञानं भवति ।

**मथुरावैद्यसंमेलनाध्यक्षाः कॅप्टन् कान्होबा रणछोडदास कीर्तिकरा**

स्वीये सभापतिपदीये भाषणे वदंति ।

पाश्चात्यवैद्यके प्रकृतिमानं चतुर्विधं प्रमाणीकृतम्— **१ सॅंगबाईन,**

२ नर्व्हस्, ३ बिलीयस्, ४ लिंपॅरिक इति। तच्च वातपित्तकफसमानं विद्यते।

## मोहमय्यां सुप्रथितनामधेयाः सर भालचंद्र कृष्ण भाटवडेकरोपाव्हा दक्षतराः ( डॉक्टर )

स्वीये ' आर्यांग्लवैद्यकतुलना ' इत्याख्ये व्याख्याने प्राहुः।

" ऋषिभिर्योगशास्त्रं, स्वरशास्त्रं, वैद्यशास्त्रं च पंचमहाभूतसंबद्धमिति गृहीतम्। वातादिदोषाणां रसादिधातुभिस्तथा रोगलक्षणैस्संबंधस्य परिज्ञाने तैः कतिविधः परिश्रमः कृतः। तथा तैस्स संबंधः कथं संयुक्त इति वक्तुं नैव शक्यते। आर्याणामियं पद्धती रोगविज्ञाने अतीवोपयुक्ता। वातकार्याणि नर्व्हस् सिस्टिम् इति पद्धत्या संगच्छंति। मस्तिष्कं ज्ञानतंतव इत्यादि नर्व्हस् सिस्टिम इति उच्यते। रुधिराभिसरणं, शोषणमन्नस्य तथा पोषणमपि पित्तक्रियया संयुज्यते। लोहिते यश्च द्रवांशो यम् " सीरम् " इति वदंति तस्य, तथा स्नेहरूपाणामितरद्रव्याणां कफकार्येण साम्यं वर्तते।

## पुण्यपत्तनीय प्राणाचार्य बाळशास्त्री लागवणकराणां मतम्।

[ ता. ४।६।१९१२, २१।४।१९१३ ]

शरीरविकृतौ, शरीरस्वास्थ्ये च मुख्यं कारणं कफपित्तवाताः। इमे हि अविकृताः शरीरं अविकृतं तिष्ठति, इमे हि विकृताः शरीरं विकृतं भवति। शरीरस्योत्पत्तिर्लयः विकृतिः स्वास्थ्यं केन भवति इति प्रश्ने, कफपित्तवातेभ्य इति एकमेवोत्तरम्। अस्माकं शरीरे चालकास्त्रयो [ सिस्टिम्स् ] विद्यंते। नर्व्हस् सिस्टिम्, ब्लड सिस्टिम्, लिंफॅटिक सिस्टिम् इत्येता अपि तिस्र एव। विकृतिरपि त्रिधा भवति—इरिटेशन, इन्फ्लमेशन, अल्सरेशन। नर्व्हस्, ब्लड, लिंफॅटिक इत्येतासां [ फोर्स एव ] वातपित्तकफा इति उक्ते किं भवेत्?। क्षोभः, अभिताप, अभिष्यंद इत्येतेषु त्रिषु रोगपरिणामो भवति। पाश्चात्यवैद्यके " इरेग्युलॅरिटी ऑफ दि नॅचरल् फंक्शन " इति रोगाणां व्याख्या कृता। शरीरस्य स्वाभाविकेषु प्राकृतिकेषु व्यापारेषु या विकृतिस्स एव रोग इति। शरीरस्य नैसर्गिके

व्यापारे कथं विकृतिर्भवतीति प्रश्ने तस्मिन्तस्मिन्निंद्रिये वाऽवयवे जीवशक्त्याः [ व्हायटॅलिटी ] नाश इति आमनंति । इयं हि जीवशक्तिः ( व्हायटॅलिटी ) अनुमानग्राह्यैव न प्रत्यक्षा । अस्या एव आयुर्वेदे अग्निनाम्नाग्रहणं कृतम् ' तथा स लभते शर्म सर्वपावकपाटवम् ' इत्यनेन । पाश्चिमात्यवैद्यके ' फॉरेन् मॅटर, ' या गदिता सा एव अस्मदायुर्वेदे " आम " शद्बेन संबोधिता । आमोपि त्रिविधः १ रुक्षगुणविशिष्टः २ आर्द्रगुणविशिष्टः ३ स्निग्धगुणविशिष्टश्च । एतेभ्य आमेभ्यस्त्रिभ्यः शरीरेंद्रियेषु परिणामः पृथग्विधो भवति । स च परिणामोऽपि आर्यवैद्यके पाश्चात्यवैद्यके च समान एव वर्णितः । क्षोभः [ इरिटेशन् ] अभितापः [ इन्फ्लमेशन् ] अभिष्यंदः [ अल्सरेशन् ] इत्यादिना ।

## वैद्यकपत्रिकाकाराः

[ पुण्यपत्तनीयाः ] निजे १०।१०।१९१२ मिते साप्ताहिकेंऽके ' दोषविज्ञान ' इत्यस्मिन्प्रमुखे लेखे लिखंति ।

"बाह्यस्य जगतोऽत्पत्तिस्तु पंचमहाभूतेभ्यो वर्तते । तेषु पंचसु मध्येत्रीण्येव वायुतेजाऽपः कार्यकराणि विद्यंते । वायुर्गत्या, तेज औष्ण्येन [ अग्नौ वा सूर्ये वर्तमानं ] पदार्थानां [ द्रव्याणां ] रूपांतरत्वं विदधाति, शीतेन तेषु दार्ढ्यमागच्छति । एतेभ्य एव त्रिभ्यो भूतेभ्य इदं जगत् चलति अव्याहतम् । पंचमहाभूतात्मकेऽस्मिन्नपि शरीरे इमान्येव त्रीणि भूतानि कार्यकरणसमर्थानि संतीति निश्चित्य तेषां त्रयाणां शारीरकार्येणैव वातपित्तकफेति संज्ञा प्राचीनैः प्रदत्ता ।

## वैद्यराज विठ्ठलशास्त्री गाडगीळ, कुरुंदवाडकरस्थाः

स्वीये त्रिदोषविज्ञान नामके प्रबंधे ( महाराष्ट्रभाषया लिखितः प्रबंधः ऐ. शा. १९१७ वत्सरे मुद्रितः ) लिखंति ।

" एवं जीवतत्वं, लिंगशरीरम्, स्थूलशरीरं, जीवतत्वस्य क्रियाज्ञानेच्छास्तिस्रः शक्त्य इत्यादीनां विषये सांख्योत्तरमीमांसाशास्त्रेभ्यश्चरकादिभिः स्वीकृतं मतम् । ( पृष्ठ ३० ) मनोवहस्रोतांसि, रक्तवहस्रोतांसि, रसवहस्रोतांसि

तुलनया नर्व्हस्, सर्क्युलेटरी, लिंफॅटिक, इति तिसृणां संस्थानां [ सिस्टिम्स् ] साम्यमादधंति [ पृष्ठ २१ ]। सत्वगुणप्रधानमाकाशं, तमोगुणप्रधाना पृथ्वी इति सृष्टौ वायुतेजजलानामेव सर्वे व्यापाराः प्रचलंति। शरीरेपि एतेभ्य एव त्रिभ्यो वातपित्तकफा इति संज्ञा पूर्वाचार्यैः प्रदत्ता ( पृष्ठ ३० )। यथा इंद्रियाणि अप्रत्यक्षाणि, तथैव वातपित्तकफा अप्रत्यक्षास्तथापि इंद्रियाणां व्यवहारा इव वातादीनां व्यवहारास्तथा तेषां न्यूनाधिक्यं प्रत्यक्षम्। वातपित्तकफा अप्रत्यक्षा अपि शरीरे नैव संति इति न। किमपि वस्तु अदृश्यमप्रत्यक्षमित्येतेन तस्यास्तित्वं नैव भवतीति वक्तुमयुक्तम्। यस्य वस्तुन उपपत्तिर्नान्यतस्सिद्धा भवति अत एव तस्याऽस्तित्वं सिध्यति। अत अदृश्याणां वातादीनां कार्याणां प्रत्यक्षमनुभूयमानानामुपपत्तिर्नान्यथा सिद्धा भवति अत एव वातादीनां सिद्धत्यास्तित्वम्। इमास्तिस्रः शक्तयो [ व्हायटल् फोर्स ] सर्वजीवनव्यापारे कारणभूता वर्तते। तेषां कार्याणि इष्टानिष्टपरिणामैर्ज्ञातव्यानि। वैद्यशास्त्रस्य देहं मर्यादिकृत्य व्याप्तिर्वर्तते। देहस्य पोषणाय, हानौ वा इमान्येव वायुतेजजलानि ( अदृश्यशक्तयः ) कारणानि। ( पृष्ठ १०४ )

## वैद्यरत्न दोरास्वामी आयंगार, मद्रास

स्वीये वातपित्तकफतत्वेनाम्नि निबंधे ( कलकत्ता षष्ठवैद्यसम्मेलनप्रसंगाल्लिखिते )

'आवापोद्वापादिभिरालोच्यमाने त्रयोऽपि दोषास्सुस्पष्टमेवावधार्यमाणा तिस्रः शरीरशक्तय इति। आधुनिकैश्च आंग्लवैद्यविद्भिः प्रकृतीनां निर्धारावसरे वातपित्तकफानां स्थाने क्रमशो नर्व्हस्, बिलियस्, फ्लेग्मॅटिक इति तादृशीरेव प्रकृतीस्तिस्रश्चाभिधाय रक्तप्रकृतिरिति चतुर्थीमप्यंगीकृत्वैव 'सँग्विन' इति अन्याप्येकास्ति पठितेति प्रतिभात्यस्माकम्। शरीरस्थाः सप्तापि धातवः पृथिवीभूतस्यांशैरेव प्रायेण समुत्पादिताः। घनैर्मंदैश्च पार्थिवांशैराविर्भूतानां धातूनां प्राकृतवैकृतस्वकीयकर्माणि निर्वर्तयितुं व्यापद्भ्यस्संरक्षितुं च तदीयानां कर्मणां निर्वाहणाय च आप्यैस्तेजसैर्वायव्यैश्च पार्थक्येन त्रिभिरंशैः क्रमशः कफः पित्तं वातं इति दोषनाम्न्यस्तिस्रः संति शक्तयः समुत्पादिताः।

" अतो वातपित्तकफा इति एते त्रयोऽपि दोषाः वाय्वग्निजलाख्यानां भूतानां अंशैराविर्भवन्तीति विषयेऽस्मिन् न हि कोऽपि विद्यते विषयावकाशः " । नाडीमंडलद्वारा [ नर्व्हस् सिस्टिम् ] अखिलानि ज्ञातानि अज्ञातानि निर्वर्त्यंते कार्याणि । तानि सर्वाण्यपि कयाचन वायुनाम्न्या शक्त्यैव संभावयामः ' ।

अभ्यवऱ्हीयमाणान्नस्य पाचनार्थमंतरात्रमाविर्भवति जाठराग्निर्नाम कश्चिदूष्मा । शोणितद्वारा सर्वाण्यप्यंगानि समभिव्याप्य कोप्यस्ति उष्णः शारीरः (ॲनिमल् हीट )। अनयोर्द्वयोरुष्मणोर्व्यवहारः पित्तमिति । अंतः शरीरमनेकेषु स्रोतस्सु प्रवहत् वर्णरहितं अथवा पांडुरं लसीकानाम्ना व्यवऱ्हीयमाणंयत् किल विद्यते द्रवद्रव्यं तदेव तस्यैव शक्तिर्भवति कफ इति कारणैर्बहुभिर्निश्चिनुमः ।

## वामनशास्त्री दातार, नासिक

तस्मिन्नेव संमेलने मयाऽपि त्रिदोषतत्वेति निबंधो व्यलेखी । तस्मिन् " तत्र दोषा वातपित्तकफाः कृत्स्नदेहचरा देहाधिष्ठानाः संति । तस्माद्देहसंभूतिरेवादौ विचार्या । सर्वदर्शनकारैः पंचानां पृथ्व्यप्तेजोवाय्वाकाशानां शरीराभिनिर्वृत्तौ जगत्संभूत्यां कारणत्वं सर्वैरस्वीकृतम् । आयुर्वेदेऽपि इयमेवोपपत्तिरंगकृता । जीवशरीरस्थितानि इमानि पंचमहाभूतानि बाह्यबलापेक्षीणि आहारादिरूपेण । तस्मादाहारायत्तमिदं जीवितम् । स च आहारः पंचमहाभूतोत्पन्नायाः सृष्टेः सकाशादाप्तव्यः । अत्र आहार इत्यनेन यस्य यस्य द्रव्यस्य शरीरयंत्रे न्यूनता तस्य तस्य आहरणं, तेन न्यूनतायाः पूरणमिति विज्ञेयम् । स आहारो द्रव्यायत्तत्वात् द्रव्यमेव श्रेष्ठम् । तत्र द्रव्यं पृथ्व्यधिष्ठानं, जलयोनि, अवांतरभूतोपसृष्टं षड्रससंयुक्तं भवति । भक्षिते आहारे किं भवति ? येन तद्देहोपयौगिकं स्यात् । तस्य भक्षणानंतरं द्रवावस्था भवति मधुरो रसश्च । तदेव द्रवद्रव्यं, मधुरो रसो वा कफसंज्ञया सामान्योक्तम् । तद्द्रवावस्थाप्राप्तमेव मधुररससंयुक्तं द्रव्यं अग्निनाऽम्लतां ऊष्मतां च नीतं अम्लोष्णसंयुक्तं पित्तमिति कथ्यते । अस्मिन् पित्ते द्रवतोष्णता च दृश्यते । तथापि अग्निगुणत्वात्सोग्निरेव । ततः सोन्नरसः कटुरसात्मकः, शुष्कः, पिंडितो वातकार्येण

वातमेव करोति । अयमेव कफः, इदमेव पित्तं, चायमेव वातः सर्व शरीरस्थितवातपित्तकफानां सामर्थ्यं ददाति " ।

## डॉ. नरहर शिवराम परांजपे (बाबासाहेब परांजपे)

इत्येतैरैशवीये १९१८ वत्सरे 'अकोला वैद्यमंडले' एको निबंधः पठितः ।

तस्मिन्, " शरीरघटकानां सूक्ष्मपिंडानां पोषणार्थं यश्च शारीरव्यापारः प्रचलति, शरीरे स पाश्चात्यशास्त्रे प्रोसेस् ऑफ अॅनॅबोलिझम् इति निगद्यते " । एतेषामेव पिंडानां स्वभावानुरूपाः शारीरव्यापाराः ' टिशू फंक्शन् ' इत्युच्यंते । एतेषां पिंडानां शरीरे व्यापारं कुर्वतां यश्च संभवति मलः तस्य शरीराद्बहिप्रक्षेपणार्थं या च संचलति क्रिया सा " प्रोसेस् ऑफ कॅटॅबोलिझम् " इति संज्ञिता । एवं पाश्चात्यवैद्यके यथा सूक्ष्मप्रकृतिशरीरविषयो वर्णितस्तथैवायुर्वेदेपि त्रिमूलं दोषधातुमलानां वर्णनं कृतम् । त्रिदोषाः ( अॅनबोली प्रॉडक्ट्स् )। पाश्चात्यैः शरीरघटकसूक्ष्मपिंडानां त्रयो वर्गाः कृताः । १ श्रेष्ठाः ( हायली डेव्हलप्ड टिशू ) धमन्यो, मांसपेशीपिंडवर्गाः, २ मध्यमाः ग्रंथिपिंडवर्गाः [ टिशू ऑफ मिड्ल् डेव्हलप्मेंट ], ३ सामान्यपिंडवर्गाः ( टिशू ऑफ लो डेव्हलप्मेंट)। श्रेष्टैः शरीरे गत्यादि कार्यं भवति । मध्यमाः शोणितोत्थ द्रव्येभ्यः पृथक् पृथक् गुणयुक्तान् रासायनिकान् पदार्थानुत्पादयंति । कनिष्ठाः शरीरे साधारणकर्माणि धारकपूरकपराणि कार्याणि कुर्वंति । एतादृगेव वर्णनं वातपित्तकफानां कार्यरूपेणायुर्वेदे कृतम् । वातपित्तकफास्तु उपरिनिर्दिष्टश्रेष्ठमध्यमकनिष्ठपिंडानां पोषकाः अतएव ते त्रिधातव इति भण्यंते । त्रिधातव एव त्रिदोषाः । शरीरपिंडास्सप्तधातवः । पोषकास्त्रिधातवः ( प्रॉडक्टस् ऑफ अॅनबोली ) । पोष्यास्सप्तधातवः [ टिशूज् ] । पाश्चात्यैः शरीरकार्याणां संग्रहः सप्तधातुवर्णने कृतः पौरस्त्यैः पोषका ये त्रिधातवस्तेषां वर्णने कृत इत्येव भिन्नत्वमुभयास्मिन् । यस्मात् त्रिधातवः [ इलेक्ट्रान्स्, फरमेंट्स्, कोलाइड्स् ] सप्तधातुपोषकास्तस्मात्पौरस्त्यैः स्वस्थवृत्तविषये अन्नपानव्यवहारस्य पथ्यापथ्ये सूक्ष्मत्वेन समावेशः कृतः । पाश्चात्या धातुकार्येषु

[ टिशूज् ] बाह्यद्रव्यगुणसहाय्येन युध्यंति। पौरस्त्या धातुपोषकदोषेषु द्रव्यगुणपोषकपथ्यापथ्यविचारणया युध्यंति । पाश्चात्यास्तु धातुचिकित्सकाः पौरस्त्यास्तु धातुपोषकदोष–( प्रॉडक्टस् ऑफ अॅनबोली )–चिकित्सकाः, दोषास्तु स्वयं दुष्टा भवंति धातून् मलांश्च दूषयंति । अत एव चिकित्सायाः प्रारंभो दोषानारभ्यायुर्वेदेऽगीकृतः" । तथाच तैरेव डॉ. परांजपे महाभागैः 'दोषविज्ञान' नामके प्रबंधे आयुर्वेदीयवचनानि दत्वा दोषाणां १ देहमूलत्वं, २ देहमूलनित्यत्वं, ३ परिमेयत्वं, ४ स्वास्थ्यावश्यकसाम्यत्वं, ५ शरीरावयवत्वं, ६ औष्ण्यम्, ७ षड्रसपोष्यत्वं, ८ सामत्वं, ९ पच्यमानत्वं, १० निरामत्वं, ११ गुणकर्ममूलकसाम्यक्षयवृद्धिशीलत्वं धातुमलैस्सममेव स्पष्टतया प्रतिभातीति लिखित्वा "शरीरं चेदं पांचभौतिकं षड्रसात्मकं, सेंद्रियम् सजीवमिति सुप्रथितम्, तस्मिंश्च संग्रहात्मको, वर्धनात्मको, विशरणात्मकश्च व्यवहारः कायतनुशरीरशद्बप्रयोगेणावगम्यते । तस्मादवयविनो देहस्य संग्रहवर्द्धनविशरणात्मकव्यापारस्य चालका ये आवयवा दोषधातुमलास्तेऽपि पांचभौतिकाः सेंद्रियाः सजीवा इति वक्तुं न कोऽपि संशयोऽवतिष्ठते" । इति उपसंहारः कृतः ।

## प्रोफेसर धुंडिराज लक्ष्मण दीक्षित ( फर्ग्यूसन कॉलेज )

इमे हि वैद्यवंशीयाः पठितायुर्वेदाः प्राण्युद्भिदशास्त्रनिष्णाताः लिखंति।

"त्रिदोषा नाम के इति वक्तुं निश्चयेन अशक्यमपि तेषामस्तित्वं नैवेति वक्तुमपि दुःशकम् । प्रथमं वातपित्तकफानां कल्पनं कृत्वा पश्चाद्रोगेषु दृष्टानि लक्षणानि तेषु प्राचीनैर्विभज्य निविष्टानि तदा आयुर्वेदमंदिरं काल्पनिकत्रिदोषोऽपरिनिर्मितमिति मंतुं शक्यम् । परं प्रयोगसिद्धशास्त्रस्येव आयुर्वेदस्यापि उत्पत्तिर्जातेति दृश्यते । किमपि प्रयोगसिद्धं शास्त्रं पुरतो गृह्यतां-तस्मिन् आदौ भिन्नानां कार्याणां, कृतीनां गुणानां च निरीक्षणं क्रियते । अनंतरं निरीक्षणजज्ञानेन तेषु कार्यकारणभावस्य शोधनं कृत्वा विषयस्य उपपत्तिस्स्थाप्यते । तदनंतरं तदेव शास्त्रमित्युच्यते । आयुर्वेदेपि एषैव विहितक्रमा-

पद्धतिः स्वीकृता । गर्भोपचयवेलायां तस्मिन् त्रयोभागा दृष्टिपथमायांति । तान् बीजावरणानीति भण्यते (ग्रेमिनल लेअर्स) । बाह्यावरणं 'उपरिकललं' ( एपिब्लास्ट ), तदधोवरणं 'मध्यकललं' ( मीसोब्लास्ट ), अंतस्थमावरणं तृतीयं ( हैपोब्लास्ट ), 'अधःकलल'मिती विज्ञातं भवति । एतेषु त्रिष्वावरणेषु क्रमशो भिन्नत्वं भूत्वा संभवति शरीरम् । उपरिकललजन्यो यः शारीरभागस्स वातस्थानम् । मध्यकललजन्यो यः शारीरभागस्स पित्तस्थानम् । अधःकललजन्यो यः शारीरभागस्स कफस्थानम् । उपरिकललेन मस्तिष्कं,सुषुम्नाकांडं, वातवाहिन्यो, बाह्या त्वक्, नासामुखत्वक्स्थितग्रंथीनामवतानिका, घर्मपिंडाः प्रादुर्भूताः । मध्यमकललात् रक्तं, मांसं, अस्थीनि, हृदयं, रक्तवहाः शिरा, जननेंद्रियं, वृक्कौ, गवीन्यौ इत्यादि निष्पन्नम् । अधःकललं महास्रोतस्थितांतत्वक्यकृत्प्लीहावक्रगंडानाम्–( पँक्रियाज् )–अंतस्त्वक् फुप्फुसांतत्वक् इत्येतेषामुत्पादकम् । "

## वैद्यरत्न वासुदेवशास्त्री कडेगांवकर, ( सातारा )

'स्वीयार्यांग्लशारीरविज्ञानं तथा आर्यांग्लस्वस्थवृत्तं'

इत्यनयोर्ग्रंथयोर्लिखंति ।

" आर्यवैद्यके तथाच आंग्लवैद्यके वर्णितानां अत्यंत श्रेष्ठकार्यकरणां, सूक्ष्मदर्शकयंत्रेणैव दृश्यानां आर्यवैद्यके त्रिदोषगुणैरुपवर्णितानां पदार्थानां वर्तते त्रिदोष इति संज्ञा । तेन शरीरे मस्तिष्कं, सुषुम्नाकांडं, पृष्ठवंशरज्जुः, इडापिंगले नाड्यौ– सहकारिमज्जातंतुत्वेनोपवर्णिते इत्येतानि शरीरे कार्यसमर्थानि शक्तिस्थानानि वर्तंते तेष्वेव वयं वातदोष इति वदामः । सर्वं शारीरं बलं अग्नौ उपतिष्ठति । अग्निरेव पित्तं अतएव पित्तमित्येको दोषोऽथवा शक्तिरिति अभिमतः । अग्नौ विकृते पचनाक्रियायां विकृतिर्जायते तेन सर्वमपि शरीरं विकृतं भवति । आर्यवैद्यके आंग्लवैद्यके च अन्नपाचनकरा ये भिन्नभिन्ना रसास्तेषामुत्पादका ये सूक्ष्मपिंडास्तान् पित्तदोष इति वक्तुं शक्येत । असंख्यानि स्रोतांसि, तेभ्यो ये द्रवपदार्था वहंति तेन स्रोतस्सु मसृणचिक्कणो-

द्रवःप्रादुर्भवति । जलवाहककेदारेषु यथा मसृणचिक्कणं शैवालमभिजायते तद्वत् स्रोतस्सु पदार्थः प्रादुर्भवति । तस्य तावदनेके प्रकारास्स्रोतसां विविधत्वाज्जायंते तथापि जातिरेकैव । एतेषां कार्याणि अनेकानि । एतान् पदार्थानेव वयं कफदोष इति वदामः । इमे वर्णितास्त्रिदोषाः सूक्ष्मदर्शक-यंत्रादिसाधनैर्दृश्याः । "

## वैद्यभूषण पुरुषोत्तमशास्त्री हेलेंकर, ( अमरावती )

महाभागैः १९२५ वत्सरे महाराष्ट्रभाषया 'त्रिदोष' अथवा 'आयुर्वेद-मूलतत्वानि' इति ग्रंथो व्यलेखि ।

तस्मिन् " शरीरस्य सर्वप्रकारकाणां क्रियाणां प्रवर्तकाः सामर्थ्य-संपन्नाः सर्वशरीरव्यापकास्सूक्ष्मा अणवस्त्रिदोषाः । त्रिदोषाः सूक्ष्मघटकां-तर्गतास्सूक्ष्मा इति उक्ते ते दृश्या इति वक्तुं नैव पार्यते । ते त्रिदोषाः अदृश्यास्तर्कानुमेया वर्तंते । शरीरं पांचभौतिकघटकसमुदायभूतम् वर्तते । इमे घटका नित्यं क्षीयमाणास्तथाच नित्यमुत्पद्यमानास्संति । एतेषां घटकानां सर्वांशेनोत्पत्तिक्षयौ नित्यं नैव भवतः । अत एतादृश एकोभाग आवश्यमेव कल्पनीयो य एतेषु घटकेषु नित्योद्भूतजननमरणपरिणामं नोपगच्छति, तिष्ठति च शतसंवत्सरपर्यंतम् । अतः प्रतिघटके एकः सूक्ष्मो अवयवः कर्तृत्वसंपन्नो विद्यतेति तर्कस्सुप्रतिष्ठः । एतादृशस्सूक्ष्मो अव-यवः स्थूलदृष्ट्या यदि नैव दृश्यते तथापि तार्किकदृष्ट्या तत्स्वरूपं आवश्यमेव दृश्यं, अतएव त्रिदोषा अदृश्या अपि तेषामस्तित्वं सर्वथा मंतव्यमेव । त्रिदोषाः पदार्थाः । त्रिविधाया जीवनशक्त्या आधारभूता ये अणवस्ते शरीरस्थाः त्रिदोषाः । शरीरघटकेषु कार्यकर्तारस्सूक्ष्मा अणवस्त्रिदोषा इति विज्ञेयम् । इमे अणवः शरीरघटकानां अविनाशिनः स्थिरा भागास्तेषां स्वतंत्रमस्तित्वं नास्ति । सर्वस्मिन् शरीरे वातपित्तकफा दोषा मुख्याश्चालकशक्तयः । यस्या अभावे शरीरे शरीरत्व-मेव नैव यास्यति एतादृशा श्लेषकशक्तिस्स्वीयश्लेषकधर्मेण परमाणूनां परस्परं श्लेषिका, संयोजका, इदमेकं मुख्य तत्वं विद्यते । आर्द्रतामूला इयं श्लेषक-

शक्तिः शरीरस्योत्पत्तौ वृद्धौ आरोग्ये च कारणमिति आयुर्वेदे गणिता। श्लेष्मा शब्देन तस्या निर्देश आयुर्वेदे कृतः, सएव आयुर्वेदीयः श्लेष्मा वा कफ इति विज्ञेयम्। उपरिवर्णितः श्लेष्मा कफो वा श्लेषकशक्तिर्वा तस्या आयुर्वेदे "स्निग्धः शीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः कफः" इति गुणानिर्देशः। शरीरे एतेषां गुणानां कफ इति संज्ञा वर्तते। गुणो वा धर्मो कस्यचन पदार्थस्य आश्रयं कृत्वैव प्रतीयते। अतो वर्णनावसरे गुणयुक्तपदार्थानामेव वर्णनं क्रियते।

शरीरे पाचनकार्यं कुर्वाणा या एका शक्तिस्तदेव पित्तम्। का चन शक्तिरथवा गुणः पदार्थं विहाय नापैति प्रत्ययम्। अतः शास्त्रीयव्यवहार-सौकर्याय केवलस्य गुणस्यैव केवलायाः शक्त्यास्तात्विकं वर्णनं अकृत्वा यस्मिन्पदार्थे तस्याः शक्त्या वा गुणस्य वा बाहुल्येन प्रमाणं वर्तते, तथा च शक्त्या उपयोगो येन पदार्थेन भवति, एतादृशस्य पदार्थस्य वर्णनं क्रियते। आयुर्वेदीयं पित्तवर्णनमपि एतादृशमेव। पाचककार्यं कुर्वाणायाः शक्त्या येन पदार्थेनायाति प्रत्ययस्तस्य पदार्थस्य वर्णनमेव पित्तवर्णनम्। आयुर्वेदमूल-तत्वेभ्यः प्रधानतमं तत्वं वायुः। अस्य वायुशब्दस्य गतिमान् पदार्थ इति अर्थो वर्तते। गतिरिति तत्वं गत्याश्रयीभूतपदार्थस्येदं स्वरूपं विषदयितुं आयुर्वेदवातवर्णनं 'तत्र रुक्षो लघुः शीतः खरः सूक्ष्मश्चलोनिलः' इति कृतम्। गत्यास्तु नेदं वर्णनं परं गतिमत्पदार्थस्य। गतिरिति धर्मो वा गुणः। गुणेषु गुणारोपो नैव भवति। गुणास्तु नैव गुणयुक्ताः किंतु पदार्था गुणवंतो विद्यंते। पित्तकफाविव वायुः सूक्ष्मस्सन्नपि पदार्थ एव विद्यते"।

## एकोनविंशति वैद्यसंमेलनाध्यक्षाः कॅ. जी. श्रीनिवासमूर्ति महाभागाः

स्वीये प्रबंधे लिखंति।

१ वातपित्तकफाः केवलं बाह्यो वायुः, वमननिर्गतं पित्तं, ष्ठीवने पतन् कफ इति न। २ ते तु पांचभौतिकद्रव्याण्येव (मॅटर)। ३ ते तु

सर्वशरीरस्य वा शारीरभागस्य मूलघटकास्संति, अतएव ते धातवो धारणाकार्य-कर्तार इति निगद्यंते । यत्र ते न संति नास्ति तच्छरीरम् । ४ तेषां साम्यमेव आरोग्यम् । वैषम्यमेवानारोग्यं । ५ धातव एव दोषा निगद्यंते तेभ्य एव शरीरे दोषप्रादुर्भावः तस्माद्रोगोत्पत्तिर्भवति । ६ धातूनां प्रसादावस्था = आरोग्यम् । ७ धातूनां मलावस्था = रोगाः । ८ धातवो दोषा मलाश्च इति यद्यप्येकान्येव द्रव्याणि तथापि तेषां इमानि नामानि भिन्नावस्थया पतितानि । धातुरूपदोषरूपमलरूपवातादीनां कदा केनार्थेन ग्रहणं कार्यमिति ज्ञातुं आयुर्वेदग्रंथपरिचयस्य, संस्कृततत्वज्ञानस्यात्यंतमावश्यकता, तयोर्निगूढाभ्यासस्य चात्यंतमावश्यकता वर्तते । १ त्रिदोषा द्रव्याणि २ तेषु स्थूलसूक्ष्म इति भेदो वर्तते । ३ सूक्ष्मत्वेन अतींद्रियत्वं ग्राह्यं, तेषां परिणामैरेव ज्ञानं भवति । ४ धातूनां कार्याणि कायिकमानसिकानि विद्यंते । पाश्चात्यमतेन कायिकमानसिककार्याणि तेषां शास्त्राणि च परस्परं भिन्नानि । परं अधुना प्रादुर्भूतमेतस्मिन् मतांतरम् । पाश्चात्यानां मतेन मन इति न किंचित् द्रव्यम् । तथाप्येतस्मिन् विषयेऽपि संदेहः प्रादुरासीदधुना । पौरस्त्यानां मतं 'मन'स्तु सूक्ष्मं द्रव्यमेव । अतो मानसिकशारीरकार्याणि विशिष्टद्रव्याणामेव परिणामः । ५ पाश्चात्यसिद्धांतेन 'सेल' एव शारीरो मूलघटकावयवः, अनेन यो ह्यूमर्स—वुइंड्, बाइल्, फ्लेग्म इत्याख्या एव शरीरमूलमिति ग्रीकसिद्धांतः पराभूतः । परं च आयुर्वेदीयास्त्रिधातवः परेपारे वर्तंते । यत्र पाश्चात्यवैद्यकस्य विश्रामः 'सेलद्रव्ये,' तत एव आयुर्वेदसिद्धांतस्य प्रारंभः । ६ केचन शारीरद्रवास्तथा काश्चन मनोभावनाः परस्परं संबध्नंति इति वदंति (कॅनन्)। यथा—क्रोधप्रादुर्भावे एड्रिन्यालिन् नामक ग्रंथौ स्रावो वर्द्धते । तथा केनाप्युपायेन उत्तेजिते तस्मिन् ग्रंथौ क्रोधनो भवति नरः । इत्येतत्सत्यं चेद्वातादिधातूनां मनोभावनात्मका ये विशेषा उक्तास्तेषु किमसत्यम् ?। ७ पाश्चात्यसिद्धांता ये केवलं पदार्थविज्ञानात्मकास्तथा रसायनशास्त्रात्मकास्तेषु आयुर्वेदस्साम्येन न संगच्छते इति भाति । तथापि पाश्चात्यसिद्धांतैस्स्वीयामिमां संकुचितां दृष्टिमुल्लंघ्य जीवनपदार्थविज्ञानजीवनरसायनशास्त्रयोः पदक्षेपः कर्तुं उद्योग प्रारब्धः

एतस्मिन्नुद्योगे भवेदायुर्वेदसाम्यमिति दृश्यते । ८ पाश्चात्यानामिंद्रियविज्ञानं शास्त्रमद्यापि वर्तते बाल्यावस्थायां, अतस्तेन आयुर्वेदीयास्सिद्धांतास्सिद्धा असिद्धा वा न भवेयुः । ९ वातपित्तकफा इतीयं परिभाषा सेंद्रियद्रव्याण्यधिकृत्योपयुक्ता, जडद्रव्याणां कृते पांचभौतिकी परिभाषा व्यवहृता, यथा सजीवशरीरघटकास्तु वातपित्तकफाः, निर्जीवशरीरस्य तु पंचमहाभूतानि । सारांशस्तु आयुर्वेदीय-मिंद्रियविज्ञानशास्त्रमित्येतैः शास्त्रैस्संबद्धम् । केवलं जडयोः पदार्थरसायन-शास्त्रयोर्नैव संबद्धमिति ।

## १ वातघटकाः ।

१ **घटकौ**—वायुः, आकाशः ।
२ **स्वभावः** —राजसः ।
३ **कार्यम्**--उत्साहः एकाग्रचित्तत्वमित्यादि ।
४ **पाश्चात्यसिद्धांतैः** — सेरेब्रोस्पायनल् तथा सिंपथॅटिक् सिस्टिम् ।

## २ पित्तघटकाः ।

१ **घटकं**—तेजः ।
२ **स्वभावः** —सात्विकं ।
३ **कार्यम्**—बुद्धिकार्यम्, पचनं, सात्मीकरणं, ऊष्णतोत्पादनं ।
४ अंतःस्रावीग्रंथिप्रणाली, अन्नपचनप्रणाली, ऊष्णतोत्पादनं, पोषणम् ।

## ३ कफघटकाः ।

१ **घटकौ**—पृथ्वी, आपः ।
२ **स्वभावः** —तामसः ।
३ **कार्यम्**—धैर्यं, शक्तिः, घटकानां रचना, संधिकर्म ।
४ **पाश्चात्यानां**—स्केलेटल् सिस्टिम् ।

१० पाश्चात्यरसायनशास्त्रज्ञो — ल्व्हायसीयर —" शरीरोष्णता, ३७० सेंटिग्रेड मिता वर्तमानाऽपि तया रासायनिकक्रिया ( ऑक्सडायझेशन )

शीघ्रं कथं भवतीति आश्चर्यावहमेव । यतः तावन्मितयैवोष्णतया शरीराद्बहिः सा क्रिया नैव भवति शीघ्रं किंतु मंदमेव इति वदंति "। आयुर्वेदे इदं कार्यं पित्तेन भवतीति कथितम् ।

तथैव तैः स्वीये अध्यक्षस्थानीये भाषणे उक्तम् "त्रिधातूनां त्रिदोषाणां सत्यार्थस्यापरिज्ञानेन पाश्चात्यवैद्यकाध्येतॄणां इमे आयुर्वेदीया भागा हास्यस्थानीयास्संवृत्ताः । विश्वस्यायं मूलतो विस्तारः प्रादुर्भावश्च पंचभूतेभ्योऽजनीति समामनंति भारतीया हिंदवः । अद्ययावत् पाश्चात्य-तत्वज्ञा विश्वरचनां द्विनवतितत्त्वैर्विश्वमूलस्थितैः (एलिमेंट्स्) रासायनिकैः परमाणुवादेनाविष्कुर्वंति । परमाणवस्ते चाविभाज्या इति च मन्यंते स्म । अधुनैव परमाणवो विभाज्या इति तैर्ज्ञातम् । इयंच परमाणूनां संख्या द्विनवतितो द्वितयपर्यंतमानिता (इलेक्ट्रॉन् प्रोटान्) । परमाणुवादस्तु भारतीयाभिमत एव, परं परमाणवोऽविभाज्या इति नैव तेषामभिमतम् । परमाणुषु अन्येषामपि तत्वानां संकरो वर्तत इति तैर्वर्णितम् । पंचमहाभूतेभ्यो विश्वघटना घटितेति तेषां सिद्धांतः । तथापि पृथ्व्यप्तेजसां यश्चमूलार्थस्तेषामभिमतस्सोऽधुना विपर्यस्त एव । अधुना जलं, मृत्तिका, वायुः, प्रकाश इति विपरीतोऽर्थस्तस्य प्रचारं समुपगतः । प्रत्येकस्य महाभूतस्य प्रातिमिकः परमाणुरिती पंचप्रकारकाः परमाणवो विद्यंते । एते एव तन्मात्रा इति व्यपदिष्टाः । तन्मात्राभिः इलेक्ट्रान्-संज्ञकपरमाणुनामतिशयेन साम्यं वर्तते । इलेक्ट्रान्-संज्ञकाः परमाणवो न मानार्हाः । भूतपरमाणवस्तु पाश्चात्यानां रासायनिकपरमाणवो ज्ञेयाः । अनया पद्धत्या तुलना दृष्ट्या च आधुनिकाधिभौतिकशास्त्राभिमतत्वैस्सह भारतीयतत्वसिद्धांतास्समन्वयं प्रायो गच्छंतीति लक्ष्यते । पंचमहाभूतानां सत्यार्थं व्याप्तिं चावगत्य त्रिधातुत्रिदोषाणां ज्ञाने सौकर्यं समागच्छति । त्रिदोषत्रिधातुज्ञाने रोगविज्ञानमिंद्रियविज्ञानं च समाविष्टं वर्तते । कफपित्तवातानां त्रिधातुरूपाणां विकाररूपेण प्रत्ययं समागच्छतां कफपित्तवातानां नान्योन्यसंबंधः । कफपित्तवातत्रिधातूनां आधारभूतानि पंचमहाभूतानि। पंचमहाभूतेभ्यःशरीरोत्पत्तिर्भवतीति सत्यं। परं शरीरधारणार्थं पंचमहाभूतान्येव त्रिधातुरूपेण शरीरे वसंति । त्रिधातव एव

शरीरस्य सजीवता । त्रिधातूनामभाव एव शरीरनाशः । एवमनयोरन्योन्याव-लंबित्वं वर्तते । यावत्कालमेषां त्रयाणां धातूनां निसर्गतस्साम्यं शरीरे विद्यते तावत्कालं शरीरस्य नैरोग्यम् । एतेषां त्रयाणां प्रमाणबद्धताभंगः संपन्नस्तदा रोगाणां प्रादुर्भावः । इमे एव त्रिधातवो आयुर्वेदे त्रिदोषसंज्ञया संज्ञिता इति" ।

## म. म. पा. कविराज गणनाथसेनाः [ कलकत्ता ]

स्वीये "सिद्धांतनिदाने" लिलिखुः

" अथादौ द्विविधा एते प्रसादमलभेदतः ।
सारभूताः प्रसादाः स्युः किट्टभूता मलाः स्मृताः ॥ ६ ॥
उत्साहोच्छ्वासनिश्वासचेष्टा धातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्माऽविकारजम् ॥ ७ ॥
दर्शनं पक्तिरूष्मा च क्षुद् तृष्णा देहमार्दवं ।
प्रभा प्रसादो मेधा च पित्तकर्माऽविकारजं ॥ ८ ॥
स्नेहो बंधः स्थिरत्वं च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्माऽविकारजम् ॥ ९ ॥
एवं विभिन्नकर्माणः प्रत्येकं पंचाधारिस्थताः ।
प्रसादभूता वाताद्यास्तैः शरीरं प्रधार्यते ॥ १० ॥
ते च प्रसादा द्विविधा स्थूलसूक्ष्मविभेदतः ।
तत्र वायुरसदा सूक्ष्म इतरौ तु द्वयात्मकौ ॥ ११ ॥
मलभूतौ तु नियतं स्थूलौ पित्तकफौ स्मृतौ ।
ते प्राकृताः प्रसादास्तुर्वैकृता मलसंज्ञकाः" ॥ १२ ॥

"एवंविधश्चवायुरचिंत्यातींद्रियशक्तिस्वरूप एव । एवंविधं च पित्त धातुभूतं मूर्तामूर्तस्वरूपं स्यात् । सचायं सौम्यश्लेष्मा धातुभूतो मूर्तामूर्तस्वरूपः स्यात् । ननु एते वातादयो मूर्ता अमूर्ता वा इत्याशंकां निरस्यति । ते च पूर्वोक्तकर्माणः प्रसादाः प्रसादरूपा वाताद्या द्विविधाः सूक्ष्मस्थूलवि-भेदतः सूक्ष्मरूपेण स्थूलरूपेण विशिष्टभेददर्शनात् । सूक्ष्मत्वं नामेह

अतींद्रियत्वं । स्थूलत्वं तु इंद्रियगोचरत्वं दृश्यत्वं वा । तत्र वायुः सदा-सर्वास्ववस्थासु सूक्ष्मो अप्रत्यक्षोविद्युच्छक्तिवत् अचिंत्यातींद्रियशक्तिरूपः क्रियामात्रानुमेयः । इतरौ तु पित्तश्लेष्माणौ ह्यात्मकौ स्थूलरूपतः सूक्ष्मरूपतश्च वर्तते शरीरे । तत्र वायोः सूक्ष्मत्वं चरके वातकलाकलीये अध्याये प्रतिपादितमेव । सुश्रुतेप्युक्तं " स्वयंभुरेष भगवान् " । " अव्यक्तोव्यक्त-कर्माचेत्यादि " ॥ पित्तस्यापि सर्वत्रातींद्रियत्वमन्यत्र पाचकपित्तात् । पाचक-पित्तं ह्यामाशये अम्लरूपमग्रतश्च पच्यमानाशयात्प्रभृतिकटुरसमुपलभ्यते । दृश्यं च तत् स्वाभाविकं सद्यो विपाटितोदरस्य शरीरे, विकृतं च मुखादि-निर्गतं प्रच्छर्दतः पुरुषस्य । तदेतत्स्थूलरूपं पित्तस्य । सूक्ष्मा तु—रसरक्तादि धातुपरिणामिनी क्रिया, संतापशोषणाऽदानादिक्रिया च सूक्ष्मरूपस्यैव पित्तस्य । तदपि पाचकपित्तस्यैव सूक्ष्मरूपेण चरतश्चरकमते धात्वग्निसंज्ञस्य कर्मेति आचार्याः । सुश्रुते तत्रस्थमेवात्मशक्त्या शेषाणां पित्तस्थानानां शरीर-स्यचाग्निकर्मणा अनुग्रहं करोति । " जाठरो भगवानग्निरीश्वरोन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते " ॥ अथ श्लेष्मा पुनः स्थूल प्रायोऽदकगुणभूयिष्ठः । किंतु तर्पकाख्यश्लेष्मा सूक्ष्मप्रायः । यश्च आमा-शये क्लेदकाख्यः श्लेष्मा स्थूलस्तस्याऽपि सूक्ष्मो भागः सर्वशरीरचरः सर्व धातुष्वाप्यभागप्रयोजकः । वस्तुतस्तु अवलंबकरसकश्लेषकाख्याः श्लेष्मभेदाः स्थूला एव सर्वजनदृश्याः । तत्रावलंबकश्वासपथादेरभ्यंतरतः स्वाभाविका-र्द्रताप्रदः । रसको जिव्हादेरार्द्रतासंपादकः स्वाभाविकलालारूपः स्वादग्र-हणसहायः । श्लेषकः संध्यस्थंतस्नेहवत् पिच्छिलपदार्थमयः । तर्पकोऽपि श्लेष्मा नासाचक्षुरादीनामार्द्रताप्रदः स्थूलभूयिष्ठ एवेत्येके । अन्ये तु सोयं इंद्रियाणां आत्मवीर्येण अनुग्रहं करोतीति कृत्वा शिरसि सौम्यगुणाधानकरः सूक्ष्म एवेत्यामनंति । वस्तुगत्या तु तस्याऽपि द्वैरूप्यमेवेति तत्वम् । किंच स्थिरत्वगौरववृषताबलक्षमादिकर्माणि पूर्वोक्तानि प्राकृतस्य सूक्ष्मस्यैव सर्व-शरीरचरस्य श्लेष्मणः कार्याणि स्युः । नहि तत्तत्स्थानमात्रव्यापकैरवलंब-कादिस्थूलसूक्ष्मभेदैः सुकराणि तानि कार्याणि कयाऽपि कल्पनया ॥

( तत्वदर्शनी टीका पृष्ठ ६।११ )

?

## ' अष्टांगशारीरस्य ' कर्तारो श्री. टी. एस्. वारीयर ( कोट्टकल )

स्वीये ग्रंथे अस्मिन्विषये चाहुः ।

पंचभूतैः सजीवैर्यत् शरीरं जायते नृणाम् ।
अतः षट्धातुकं प्रोक्तं तद्भूयो भिद्यते त्रिधा ॥
ततस्त्रिधातुकं तत्स्यात् आयुर्वेदे विशेषतः ।
१ वायुर्मायुर्बलासश्च प्राकृतास्ते त्रिधातवः ॥
त एव देहधातारः सूक्ष्मबीजात्मना स्थिताः ।
रजः सत्वाधिको वायुर्मायुस्सत्वरजोधिकः ॥
बलासस्तु तमःसत्वाधिको गुणविवेचने ।
सूक्ष्मस्य गर्भबीजस्य बलासो मूर्तिरुच्यते ॥
पाचकांशस्तु मायुः स्याच्चालको वायुरत्र च ।
संकीर्णत्वात्पृथक्कर्तुं शक्यते नैवतान् क्वचित् ॥
शरीरे वर्धमाने तु तेषामंशाश्च भूरिशः ।
वृद्धाः प्रत्यक्षतां यांति दोषधात्वादिरूपतः ॥
( अष्टांगशारीरं अंगविभागाध्यायः ४८ पृष्ठम् )

## मोहमयीस्थाः परमविद्वांसः पंडित हरिप्रपन्न महाभागाः

रसयोगसागरस्योपोद्धाते सुविस्तृते ( ऐ. १९२७ अब्दे प्रकाशित )
आंग्लसंस्कृतद्विविधरूपे संस्कृतविभागे ' त्रिदोषविवरणमिति '
पृष्ठ ४८–७२ पर्यंतम् विषये स्वमतं ऊहापोहपुरस्सरं ददुः ।

" अत्र सत्वरजस्तमांसि विश्वरूपेण समग्रब्रह्मांडस्वरूपेण अवस्थितं दृश्याऽदृश्यरूपेण स्थितं समग्रमपि विकारजातं मृदोघटादिवत् स्वस्वरूपाऽभिन्न सत्वरजस्तमांसि समस्तसृष्टेः कारणभूतानि न व्यतिरिच्यंते, स्वस्वरूपतस्तानि पृथग्भूत्वा न दृश्यंते। स्वस्वरूपस्यैव आकारविशेषेण विकारजातस्य परिणतत्वात् मृद्घटस्य मृदभिन्नत्वेनैव जायमानत्वात् इयत्परिणाममृद्भागेन घटउत्पन्नस्तत्वतो-

भागस्य पृथग्वर्तमानत्वं घटं विहाय न दृश्यते, दृश्यते तु तस्मिन् घटे एव। मृत्पिंडस्य घटरूपेण परिणतत्वादाकारमात्रस्यैव विशेषत्वम्। वस्तुतस्तु येऽयंमृत् पिंडरूपें आसीत् सैव घटेऽप्यास्ति। उपादानकारणस्य कार्यात्पृथग्दर्शनं न भवत्येवेति सार्वजनीनः सिद्धांतः। एवमनेनैव प्रकारेण इदं पुरतो दृश्यमानं विश्वरूपेण शरीराऽरंभकसूक्ष्मातिसूक्ष्मावयवानारभ्य स्थूलशरीररूपमवस्थितं नाना-प्रकारेण वर्तमानं व्यतिरिच्य पृथक् स्थापयित्वा वातपित्तश्लेष्माणो न वर्तंते। अयमत्राभिसंधिः--यथा विश्वरूपं जगत् सत्वरजस्तमसां परिणाममस्ति तथेदं शरीरं वातपित्तश्लेष्मणां परिणामरूपं। शरीरस्योपादानकारणान्येते। न च वाच्यमन्योऽन्याश्रयोदोष इति। मातापित्रोः शुक्रशोणितयोरेव तद्रूपत्वात् सृष्टि-प्रपंचे सत्वरजस्तमोभिर्यथा विश्वोत्पत्तिर्वर्णितास्ति तथा चिकित्साशास्त्रे पंच-महाभूतेभ्यः शरीरवर्णनं कृतमस्ति तावन्मात्रे चिकित्साशास्त्रस्याऽधिकारत्वात् ( पृष्ठ ४९ )। शोणितस्य रसरूपत्वात् पुरुषस्य च रसजातत्वाद्रसस्य पुनरुद्भवः पंचभूतेभ्यः [ उपादानकारणत्वात् ]। सर्वस्य च कार्यजातस्य सत्वरजस्तमांस्युपादानानि, पंचभूतेष्वपि सत्वरजस्तमसां स्थितिः सत्वबहुलेत्या-दिना सुश्रुते प्रतिपादितैव। मूलकारणानां त्रिविधत्वात् पंचभूतानि आयुर्वेदे त्रिभागविभक्तानि कृतानि संति। आप्पृथ्व्योस्तमोबहुलत्वेनैककक्षां स्वीकृत्य श्लिष्यते=श्लिष्टो भवति श्लेषयति वा सः=श्लेष्मा। वायोरजोबहुलत्वात्स स्वतंत्र-मेव कक्षां समासादयति। अग्नेः सत्वरजोबहुलत्वात्समस्तपाककारणत्वं। अय-मेवाग्निः पित्ततेजःशब्दवाच्यः। तस्मिन् श्लैष्मिके परिणामे शरीरे जलपृथिवी-परिणामौ प्रत्यक्षसिद्धौ वाय्वाग्नेयौ त्वनुमानगम्यौ। "तत्र शरीरं नाम चेतना-धिष्ठानभूतं पंचमहाभूतविकारसमदायात्मकं समयोगवाहि" इत्यनेन पंचमहा-भूतानामेव शरीरोपादानकारणत्वं प्रत्यपादि। पंचमहाभूतविकारेषु च प्रसादत्वं मलत्वं चेति संक्षेपेण द्वैविध्यं स्वीकृतम्। तच्च द्वैविध्यं धातुत्वेनैवगृह्यते, शरीरे धात्वतिरिक्तपदार्थाऽभावात्। धातुषु यदा शरीरपोषकता तदा प्रसादत्वं यदा च तद्बाधकरत्वं तदा मलत्वमित्येतत्तदध्यायस्यैव पंचदशसूत्रेण स्पष्टतया प्रतिपा-दितम् [ च. शा. १।१५ ]। पंचभूतेष्वेव कक्षात्रयं वातपित्तकफा इति

स्वीकृतमिति प्रविभाति । अत्र मलकोट्यां वातपित्तश्लेष्मणां परिगणनम् " किट्टमन्नस्य विमूत्रं रसस्य तु कफोसृजः " इत्यादिना कृतम् । अत्र निर्दिष्टाः कफपित्तवायवः स्थूलस्वरूपा एव संति । अनेन रसाद्यस्सर्वानुगतः श्वेतपिच्छिलगुरुत्वादिगुणविशिष्टः पदार्थो निर्वर्तते स 'कफत्वे'नाभिप्रेतः । रक्ताद्यत्यक्ततात्पृथक्कृत्य क्लोम्नि विसृज्यते तस्य रक्तात्पृथग्भावात् रक्तमलत्वेन कथनाच्च तदेव पित्तत्वेनाऽभिप्रेतम् । भुक्तादिपरिपाकावसाने योऽयं वायुरुत्पद्य वायुद्वारा बहिर्निस्सरति स एवाऽभिप्रेतः । एते त्रयोऽपि मलत्वे एव पर्यवस्यंति । परं त्वनेन एतद्वाचका एव वातपित्तकफा इति नाध्यवसितुं शक्यम् । तस्मात्स्थूलसूक्ष्मभेदैस्सम्यगाकलय्य यथागतस्थलं निर्णयः कर्तव्यः । रजोगुणात्मनि वायो वात इति, सत्वगुणात्मनि पित्तमिति, तमोगुणात्मनि श्लेष्मेत्यायुर्वेदसिद्धांते व्यवहारोऽस्ति । तत्रापि शारीरवातयोर्वात इति समानो व्यवहारः । शरीरांतः प्रविष्टानामाग्नेयपदार्थानामंतराग्निसंयोगाद्योयमग्न्याधारपरिणामस्तत्र पित्तमिति, जलपृथिव्यात्मनां पदार्थानां शारीराग्निना परिणतानां श्लेष्मेति व्यवहारः । ते च पदार्थास्सूक्ष्मा वा स्युस्स्थूला वा स्युस्तस्था क्रिया गुणा वास्युः सर्वेषामपि ग्रहणं तास्थ्यात्तच्छब्दमिति न्यायात् शरीरांतर्वर्ति लिंगशरीरात्मव्यातिरिक्तं यत्किंचिदपि वस्तुजातमस्ति तत्सर्वं वातपित्तकफात्मकमेवास्ति ॥ पृ. ७१ ॥

## पुण्यपत्तनीया डॉ. मल्हार विनायक आपटे नामका प्रसिद्धवैज्ञानिकदक्षतराः

स्वकीयायां ' आयुर्वेदीयसंहितासु शारीरसूत्राणि इति ' लेखमालायामिमं विषयमुद्दिश्य लिखंति ।

वातपित्तकफाः शारीरव्यापाराणां मूलाधारा इति आयुर्वेदस्य मूलसूत्रम् । अस्मिन् सूत्रे आर्यसंस्कृत्या विशेषोऽभिव्यक्तिमेति । स च एकेन निदर्शनेन स्पष्टो भविष्यति—एकैकेन इंद्रियेण बाह्यजगतः प्रत्यक्षानुभवः

पौरस्त्यपाश्चात्ययोस्समान एव । तथापि यां कामपि घटनां कृतिमिति मत्वा तस्याः कोऽपि कर्ता विद्यतेति मंतुं प्रवृत्तिः प्रेम वा मनोवृत्तिर्वा आर्यसंस्कृत्या अभ्यासेन दृढीकृतास्ति । वयं ईश्वरेण जगन्निर्मितमिति मन्यामहे । एतादृशा मनोवृत्तिरेषां नास्ति ते इदं जगदेतादृशं वर्तते एत्येव वदंति समादधति च । जगतः कर्त्ता ईश्वरो विद्यते स च मूर्तो जडश्च नास्ति केवलं मनश्चक्षुषा दृश्य इत्येतत् यावदुभयेपि जानंति न तावदुभययोरपि कलहकारणम् । यदा वयं स चेश्वरो मूर्त इति वदाम अन्ये स च मनसोप्यगोचर इति वदंति तदा वादप्रतिवादस्य प्रादुर्भवति विषयः । एवं अस्मिन्नपि विषये एतादृश्येव द्विविधा वर्णनपद्धतिर्विद्यते । तस्या वर्ण्यविषयस्तु एक एव । एवं गृहीत्वा प्रथमायाः पद्धत्याः परोक्षपद्धतिरिति च संज्ञां दत्वा कफवातपित्तानां व्चिाराभिव्यक्तिं कुर्मः —

## नूतनमपरोक्षवर्णनम् ।

१ वायुना क्रिया भवंति ( चलनस्पंदनादिरूपाः )
२ अग्निना विक्रिया भवंति ( द्रव्यांतराणि )
३ क्रियाश्च विक्रियाश्च वस्तूनामाश्रयेण भवंति ।

## द्वितीयं परोक्षवर्णनम् ।

१ वायुः क्रियां घटयति ( कारयति )
२ पित्तं विक्रियां घटयति ( कारयति )
३ कफस्तु क्रियाविक्रिययोरधिष्ठानमस्ति ।

इदं वर्णनं आयुर्वेदीयवर्णनस्य पूर्णांशेन समानमिति न । तथापि एकस्य द्वयोर्वा तत्वयोर्यथार्थं वर्तते । यथा नरः १ बाह्यस्य जगतोऽनुभवं प्रथमं अधिगच्छति २ अभ्यस्तविषयस्य उपमायां साहाय्यं प्रतिक्षणं गृण्हाति । मनुजस्य अनया पद्धत्या बाह्यसृष्टिविषयकशास्त्रस्य भाषया शारीरसृष्टिवर्णने प्रवृत्तिस्संजाता, उपरितनेन परोक्षापरोक्षवर्णनेन इदं दृक्पथमुपेयाद्यत् प्रथमं वर्णनं

बाह्ये जगति नित्यं प्रवर्तमानानां घटनाविघटनानामास्ति । द्वितीयं वर्णनं शरीर-मुद्दिश्य कृतमिति । द्वितीयोऽपि विशेषोऽयं अस्मिन् वर्णने विद्यते यदुभयोरनुभ-वयोरस्मिन्वर्णने तुलना कृतास्ति । याः क्रिया बाह्ये प्रवृत्ता वयं पश्यामस्तत्स-माना एव शरीरेऽपि क्रियाः प्रवर्तंते, इत्येवोपरितनवर्णने वर्णितमस्ति न तस्मिन् शरीरव्यापाराणां विचिकित्सा कृता । न च तस्मिन् शारीरावयवानामुल्लेखः, अथवा एतादृशस्य सूक्ष्मविचारव्याकरणोद्योगस्य प्रारंभात्प्रागेव बाह्याभ्यंतर-व्यापाराणां साम्यं लक्षयित्वा कृतमिदं वर्णनमिति लक्ष्यते । चरके वातकला-कलीयाध्याये एतादृशं वर्णनं विद्यते । चरकसंहितागतं वर्णनं विलोक्य आधुनिकवाचका एवं ब्रुयुरिदं वायुवर्णनं पाश्चात्यवैद्यकगतनर्व्हस्सिस्टिमवर्ण-नेन संगतमिति । एवं भाषमाणस्य वक्तुरयमभिप्रायश्च यदि स्याद्यदेतानि वायोः कर्माणि वर्णितानि, तानि प्रायो नर्व्हस्सिस्टिम् इति संज्ञितायाः संस्थाया वर्णयंतीति चेत् तत्तु प्रायः सुसंगतम् । परं नर्व्हस्सिस्टिम् इति योऽवयव-संघो विद्यते तं ज्ञात्वैव तस्यैवेतानि कार्याणि चरके वर्णितानि इति वक्तुरभि-प्रायश्चेत् तस्य स्वीकारस्तु सर्वथा अनुचित एव । येन नैवावलोकिता नर्व्हस्-सिस्टिम् सोऽपि वर्णयेदेतादृशीं वर्णनपद्धतिं । वायुःकर्तेति वर्णितः परं शरीरावयवेषु कस्मिन् तस्य संबंध इति अनुभवाद्विना न ज्ञातुं शक्यम् । शरीरे शरीराद्बहिश्च एतादृशा व्यापारा भवंति अयमनुभवः प्रत्यक्षः । एत-योर्द्वयोरनुभवयोस्साम्यं वा संगतिः प्रत्यक्षानुमानोपमितिभिरेव शक्यते । वयं प्रत्यक्षानुमानोपमितिभिरेव वदामेति चरकस्य तस्मिन्नेवाध्याये वायोर्विदेन ऋषिणा कथितमेव । इयमेव विचारपद्धतिः पित्तकफयोः संगच्छते । सुश्रुतेनापि चरकाचार्याणामिव वातपित्तकफा जीविताधारा इति मत्वाऽपि रक्तमपि जीविताधारं वर्ततेति अधिकं प्रतिपादितम् । "नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् । शोणितादपि वा नित्यं देह एतैस्तु धार्यते " । अनेन श्लोकेण वातादीनां समानं शोणितमुक्तम् । वातपित्तकफा अमूर्ता रक्तं तु मूर्तमिति भेदे परिज्ञाते तस्मिन् मूर्ते शोणिते वातादयो मिलिता इति यदुक्तं तत्तु सर्वथा उचितमेवेति ।

" डबलडी इति संकेतं देत्वा त्रिदोषसर्वस्वविषये परीक्षणार्थं यश्च प्रबंधो आगतस्तस्मादुधृतम् "

## कफनिरूपणं ।

अथ पाश्चात्यविज्ञानविन्निरूपितानां पदार्थानां सादृश्यमूलकं वातपित्त-कफपरीक्षणं क्रियते । इदं शरीरं जीवकोषसमुदाय-( सेल् ) रूपम् । जीवकोषेषु अनतिद्रवजीवपंको विद्यते ( प्रोटोप्लाझम् ) तत्र च कोषकेंद्र ( न्यूक्लीयस् ) अवतिष्ठते । जीवितजीवपंकश्च किमुपादानकस्तन्निर्णेतुं न शक्यते । यत यस्मिन्नेव क्षणे अस्य परीक्षार्थं कश्चिद्यतेत तस्मिन्नेव क्षणे अयं जीवशून्यो भवेत् । मृतेभ्यो जीवपंकेभ्यः प्रतीद ( प्रोटीड ) नाम द्रव्यं लभ्यते । ' कोलाईड ' सदृशं चास्य स्वरूपं । ' कोलाईड ' न सर्वथा द्रवतां याति । इदं हि शुक्लं, मधुरं, पिच्छिलं, स्निग्धं, गुरु, स्थिरं, शीतं, मंदं च । आयुर्वेदोऽपि श्लेष्मस्वरूपं आह ' गुरुशीतमृदुस्निग्धमधुरास्थिरपिच्छिलः ' ( चरक सू० अ० १ ) एवं सति प्रतीदश्लेष्मणो अभिन्नरूपतया पाश्चात्या-भिमतं प्रतीदं नामकं द्रव्यं आयुर्वेदनिर्दिष्टश्लेष्मणोऽभिन्नमेव ।

## अत एतन्निगमनम् ।

( १ ) श्लेष्मा सांद्रद्रव्यविशेषः ( निर्यासवत् )

( २ ) जीवनकोषस्थः प्रतीदांश एव श्लेष्मा इति ।

## पित्तनिरूपणं ।

प्रायशः प्रतिजीवकोषं निष्यंदोत्सेको [ एन्झाइम ] जायते । अनेन उत्सेकेन जीवकोषाणां परिपाकानंतरम् अवस्थांतरप्राप्तिर्भवति । एवं च शरी-रस्यापि परिपुष्टिरनेनैव संपद्यते । अम्लद्रावकगंधकद्रावकसदृशोऽस्य स्वभावः । आयुर्वेदस्वीकृतं पित्तमपि अम्लद्रावकस्य, गंधद्रावकस्य वा समानगुणम् । तथा हि " सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु " । ( च. सू. अ. १ ) अतः पित्तयुक्तद्रावकद्रव्यमिव द्रवम् [ लिक्विड ] अनतिस्नेहयुक्तं [ आइली ] च पित्तं तीक्ष्णं शीघ्रकारि मंदविपरीतं सूचीव भिनत्ति अतो द्रावकमिवाहारादि-द्रव्याणां इतरद्रव्याणां च परमाणुविभागसंयोगादिक्रियायां [ केमिकल् अॅक्शन ]

उपयुज्यते । द्रावकमिव कटुम्लं च पित्तम् । तथा विस्रं [ आमगंधान्वितं ] शरीरजातस्य निष्यंदोत्सेकस्यापि आमगंधित्वमस्ति ।

## अत एतन्निगमनम् ।

[ १ ] पित्तं द्रावकद्रवमिव द्रवद्रव्यम् ।

[ २ ] जीवकोषस्थं निष्यंदोत्सेक एव पित्तम् ॥

## अथ वातनिरूपणम् ।

" रौक्ष्यं लाघवं वैशद्यं शैत्यं गतिरमूर्तित्वं चेति वायोरात्मरूपाणि भवंतीति " [ चरक सू० अ० २० ]

रौक्ष्यादयो हि वायोः स्वभावगुणाः । अमूर्तत्वमत्र अदृश्यत्वम् । नीललोहितादिरूपाभावात् । बहिर्वायुः शारीरवायुर्वा न दर्शनेंद्रिययोग्यः । अमूर्तत्वशैत्येतररौक्ष्यादयो गुणाश्च सर्वेष्वेव वायवीयद्रव्येषु वर्तंते । पाश्चात्य-वैज्ञानिकपरिगृहीतेषु 'गॅस' नामक द्रव्येषु अपि उक्तगुणा विराजंते । वायुर्हि मूर्तेभ्यो द्रव्येभ्यश्च द्रवेभ्यः समधिको लघुः । वायुः सूक्ष्मगुणः । तेन निबिडावयवानामपि द्रव्याणामंतः प्रविशति । वायुरसंघातवान् अनवस्थितश्च । पित्तश्लेष्मवदवयवसंघातरहितत्वं, अनवस्थितत्वं, च चलनस्वभाववत्वम् वायौ विद्यते । तथा हि कफो आधारस्य यदवच्छेदेन स्थाप्यते स्थिरत्वात् तदवच्छेदेनैव तत्र स्थिरो भूत्वा तिष्ठति । पित्तं खलु आधारस्य यत्र प्रदेशे स्थाप्यते, सरत्वात् [ व्याप्तिशीलत्वात् ] प्रदेशांतरं प्रसरदपि तस्मिन्नेवाधारे वर्तते, न च तत्पात्रान्निस्सृत्य बहिर्गच्छति । वातश्च कस्मिन्नपि काचकूप्यां स्थाप्यते तर्हि अयं झटिति काचकूप्याः सर्वावकाशं अवलंब्यावतिष्ठते । अपसारिते च मुखावरणे सदागतिमत्वात्, वायुर्बहिर्निस्सृत्य बाह्यवायुना सह संगच्छते । वायूरुक्षो 'गॅस'नामकः पदार्थोऽपि तथा । वायुः खरो विशदश्च । वैशद्यंतु पैच्छिल्याभावः । द्रवस्य सांद्रस्य वा द्रव्यस्य कफपित्तयोरिव पिच्छिलता संभवति । वायवीयं तु द्रव्यं ( गॅस ) न कदापि पिच्छिलं भवति ।

## अतो निगमनम् ।

आयुर्वेदोक्तवातस्य पाश्चात्यवैज्ञानिकानुमतगॅसनामकद्रव्यस्य च समानधर्मशालित्वादुभयोरभेद एवेति । जीवकोषे हि विविधानां क्रियाजातानां भूमिः ।

एकस्यैव कोषस्य परीक्षया कोषसमुदायात्मकशरीरस्य विशेषेषु व्यापारेषु प्रकृष्टज्ञानं भवितुमर्हति । कोषकेंद्रेणैते व्यापारा मुख्यतो नियम्यंते । केनाऽप्युपायेन चेदयं जीवकोषः तथा विभाज्यते यथा एकोंऽशः कोषकेंद्रसमन्वितो अपरश्च तद्रहितः स्यात् तर्हि एषः केंद्ररहितोंऽशः सत्वरमेव निर्जीवो भवेत् । केंद्रोपेतस्तु भागः पुनरुपचीयमानो जीवकोषस्याशेषकार्यकारणाय प्रभवति । अतोऽस्माभिरुपलक्ष्यते अस्मिन्कोषकेंद्रे किमपि द्रव्यं वर्तते । अस्य व्यापारस्तु आयुर्वेदोक्तवातस्यैव । तथा हि “ वायुस्तंत्रयंत्रधरः । उच्चावचानां चेष्टानां प्रवर्तकः, शरीरधातुव्यूहकरः, शरीरावयवसंयोजनकरः, गर्भाकृतीनां कर्ता, च । कोषकेंद्रस्थितमिदमेव द्रव्यं जीवकोषं विभज्य क्रमशः सर्वेषां शरीरधातूनां ( टिशूज ) व्यूहं रचयति । इदमेव द्रव्यं जीवपंकस्य गतिहेतुः, स्नायुकोषाणां [ नर्व्हसेल्स ] कार्यनियंतृ च । अत एतदवधार्यते [ १ ] अभिन्नकार्यकारित्वात् कोषकेंद्रस्थितं पूर्वोक्तं द्रव्यमायुर्वेदपरिगृहीतत्वात् वातादभिन्नमेवेति । “ डबलडी ” रचितम् ॥

## पंडित सुरेंद्रमोहन, बी. ए. [लाहोर]

दयानंद आयुर्वेद कॉलेज इत्यस्य विद्यालयस्य ‘ आयुर्वेद संदेश ’ इति प्रतिमासं मासिकपत्रं मुद्रितं भवति । तस्य विद्यालयस्य प्रधानाध्यापकैः, पंडितैः, आयुर्वेदाचार्यैः, सुरेंद्रमोहन बी. ए. मुख्य संपादकैः स्वीये मासिके पत्रे ‘ वातांकः, पितांकः, श्लेष्मांकः, त्रिदोषांक ’ इति विशेषांकानामंकनं कृतम् । तेषु वैद्यविदुषां लेखास्समायाताः । प्रथममेव श्रीमद्भिः, आयुर्वेदाचार्यैः, सुरेंद्रमोहनपंडितैः वातविषये स्वीयं मतं प्रदत्तम्—

' **कोऽयं वायुः ? इत्यस्योत्तरम्**—शरीरे याच संचालका शक्तिः [ मोटर पॉवर ] याच वा ज्ञानशक्तिः [ सेन्सरी पॉवर ] विद्यते सा वायोर्गुणः। आधुनिका इमां शक्तिं नर्व्हफोर्स इति वदंति। इयं शक्तिरदृश्याऽतींद्रिया च। पाश्चात्या दर्शनशास्त्रमजानंतो शक्तिं द्रव्यमिति आमनंति। परं शक्तिः कस्याऽपि द्रव्यस्य गुणो वा धर्मो विद्यते न तु द्रव्यम्। ऋषिभिरस्यातींद्रियस्य द्रव्यस्य वात इति प्रदत्तं नाम। कश्चापि पृच्छेत् वायोरांग्लभाषायां कोऽनुवादः ?। अस्योत्तरं तु कठिनमेव। इमे अस्य गुणाः ' नर्व्हफोर्स ' इति तु मानयंति, परं गुणिनोर्नाम तेषां भाषायां नैव लभ्यते। अयं हि वायुः शरीरे पंचसु केंद्रस्थानेषु वसन् करोति पृथक् कर्माणि। एतेषां वर्णनं सुश्रुते निदानस्थाने वर्तते। वायुस्तु केवलं ' नर्व्हफोर्स ' एवास्तीति न। प्रत्युत, अधिकोप्यस्ति। अस्मात् बाह्यो वायुरेवाऽयं ( एअर ) शारीरो वायुरिति तु सर्वथा मौर्ख्यमेव। चरकाचार्यैरेतयोर्वाय्वोस्तु ( बाह्याऽभ्यंतरयोः ) तुलना कृता, परं तौ अभिन्नौ इति तु नैव प्रतिपादितम्।

### श्लेष्मा च तथा अस्मदीयं शरीरम्—

त्रयो दोषाः शरीरयंत्रचालने आवश्यकाः। वायुः गत्यात्मकक्रियाया अधिष्ठाता, पित्तं लौकिकाग्निवत् ऊष्मणः प्रदातृ। तथैव कफोपि शरीरनिर्माणे आवश्यक एव। " स्नेहो [ ल्यूब्रिकेटिंग ऑईल ] बंधः [ संधिसंयोजकत्वं ] स्थिरत्वं ( शरीरस्थैर्यं ) गौरवं ( बॉडी वेट् ) वृषता ( व्हायटॅलिटी ) बलं ( फिजिकलस्ट्रेंग्थ ) क्षमा धृतिरलोभश्च कफकर्माविकारजम्। " इमानि अविकृतकफस्य कर्माणि। यदि शरीरमिदं राज्यमिति कल्पितं चेत्, तस्य राज्यस्य कोषविभागः [ फिनॅन्स डिपार्ट्मेंट ) कफ इति विज्ञातुं योग्यम्। कफस्य ये पंचभेदास्ते सर्वे तरला वा अर्धतरला विद्यंते। [ सेमिलिक्विड ] पाश्चात्यमतानुसारेण शरीरे विद्यमाना नानाप्रकारका ये ग्रंथयो विद्यंते तेषां रसाः [ सीक्रिशन, ऑर एक्स्क्रिशन ] प्रायस्तरला एव।

## पंडित कृष्णप्रसाद त्रिवेदी बी. ए. आयुर्वेदाचार्य (हिंगणघाट)

आर्यवैद्यके त्रिदोषा एव शरीरस्य सर्वा क्रियाकारका शक्तिरस्तीति गृहीतम् । अस्या अभावाच्छरीरस्यावस्थितिरपि नैव भवति । इदं शरीरं अत्यंतं सूक्ष्मातिसूक्ष्माणुवीक्षणयंत्रेणैव वीक्षितुं शक्यैरसंख्यैः परमाणुसमूहैर्निष्पन्नम् । 'शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवंति' चरकः। इमे परमाणवस्स्वजातीयैः परमाणुभिर्निष्पद्यंते । तथा च स्वनियुक्तं कार्यं कर्तुं कियत्कालपर्यंतं जीवंति । पश्चात् परिपक्वाः संतो भिन्नैर्भिन्नैर्मलायनैरागच्छंति शरीराद्बहिः । तदा एते मलसंज्ञिता भवंति ।

सर्व शरीरस्य पोषणं रसेनैव भवति । रक्तमपि रसरूपमेव । अत एव एतेषां परमाणूनां [ सेल् ] जीवनमपि रक्तरूपो रस एव। एतेषां भरणं पोषणं शरीरे सर्वदा प्रचलत्येव । नित्यं नवीनारसंख्येयाः परमाणुसमूहा निष्पद्यंते । तथैवासंख्येयास्तु मलरूपतां याता निर्गच्छंति बहिः । एतेषु परमाणुषु नित्याः प्रचलंति त्रिप्रकारकाः क्रियाः । १ जीर्णशीर्णपरमाणूनां उत्सर्जनम् । २ नूतन परमाणूनामाविर्भावः परस्परसंघट्टश्च । ३ नूतनपरमाणूनां तथा जीर्णपरमाणूनां परस्परतो पृथक्करणम् । इमास्तिस्रा अपि क्रियाः क्रमशो वातपित्तकफानामेवकारणाद्भवंति । शरीरे हृदयादिकानि यावंति मर्मस्थानानि तानि सर्वाणि—ज्ञानतंतुभिर्व्याप्तानि [ मज्जातंतुभिः ] । एतेषामंतस्तलेषु श्लेष्मलत्वचाया आवरणं विद्यते । तथा कोष्ठांतर्गतपाचकरसः [ पित्तं ] अन्नरसेन सह सर्वं शरीरं पोषयति उद्दीपयति च ।

### अथवा अपरया दृष्टयापि इत्थमवधार्यते—

शरीरपोषणार्थं रक्तस्यावश्यकता तु अतीव वर्तते । इदं शोणितं तु अशिताहाररसादेव निष्पन्नं भवति । परं चेदं शोणितं न हि अन्नभक्षणक्षणे एव प्रादुर्भवति, किंतु भक्षितं अन्नं प्रथमं द्रवी भवति । पश्चात् अस्माद्रक्तोत्पत्तिकरभागस्य, त्याज्यमलरूपभागस्य पृथक्करणं भवति। अनंतरं आहारसत्वां-

शस्य रूपांतरं शोणिते परिवर्तितं भवति । तदिदं शोणितं समस्ते शरीरे संततं भ्रमति । इमाः क्रियाः कुर्वाणा काचिद्विद्यते शक्तिरदृश्या । यस्यास्त्रिदोषा इति नाम । अन्नस्य द्रवरूपतासंपादिका शक्तिः कफः । रक्ते रूपांतरं कुर्वाणा शक्तिः पित्तम् । अनयोः शक्त्योः सहायेन संपन्नस्य शोणितस्य शरीरे भ्रमिं कुर्वाणा शक्तिर्वात इति ।

" तप संतापे इत्यस्माद्धातो रिचिप्रत्ययेचेत्वे कृते वर्णविपर्यये कृते च पित्तमिति रूपम् " ।

शरीरे सप्तधातुरूपद्रव्याणि संति । एतेषामेव स्वरूपयुक्ता अनेके पदार्थास्सृष्टौ विद्यंते । एतेभ्यः पदार्थेभ्यः शरीरोपयोगिनां पदार्थानां ग्रहणं कृत्वा, शेषाणां उत्सर्जनकरी वर्तते एका शक्तिः शरीरे व्याप्ता । आवश्यकानां समानानां पदार्थानां ग्रहणं, अनवश्यकानामसमानानामुत्सर्जनं यया क्रियया वा येन व्यापारेण भवति तस्य द्योतकः ' पित्त ' इति शब्दो वर्तते । शरीरे पाचनकारिणी शक्तिः पित्तमिति कथ्यते । कोऽपि गुणो वा शक्तिः कस्याऽपि पदार्थस्याश्रयेणैव तिष्ठति । पदार्थकल्पनमकृत्वैव केवलं गुणस्य वा शक्तेर्वा अनुभवो नैवागच्छति । अतस्सम्यग्ज्ञानार्थं केवलायाः शक्तेर्वर्णनसमये यस्मिन्पदार्थे सा शक्तिराधिक्येनाधिष्ठता विद्यते, तस्यैव पदार्थस्य वर्णनं क्रियते । आयुर्वेदे अनेनैव सिद्धांतेन शरीराश्रितस्यातींद्रियस्य वस्तुनः पित्तरूपेण वर्णनं कृतमास्ति । यस्मिन् पाचनकार्यकरायाः शक्तेर्विशेषोऽस्ति । सृष्टेः प्रारंभसमयादर्वागेव शरीरे अग्निगुणसंपन्नं, सर्वव्यापि, पित्तं सत्तारूपेण सूक्ष्मदर्शिभी ऋषिभिः स्वीकृतम् । यस्य आंग्लभाषायां " बाईल् " इति संज्ञा । तत्तु भक्तरूपं वा किट्टरूपं वा पित्तं वर्तते । तस्य धातुरूपपित्तेन सह नैवार्थः संगच्छते ।

**श्लेष्माचायं श्लेषक तत्वं विद्यते**—इदं तत्वं सर्वस्मिन् शरीरे प्रतिभासते । अनेनैव तत्वेन वा शक्त्या वा शरीरोत्पत्तिस्तथा वृद्धिर्भवति ।

बाह्यसृष्ट्याः पोषकपदार्थस्य परमाणवो यदा शरीरांतर्गतपिंडेषु संलग्ना वा एकरूपा भवंति तदैव शरीरस्याभिवृद्धिर्वा पोषणं वा भवति । अत एवोच्यते इयं श्लेषकशक्तिर्यथा शरीरोत्पत्तौ तथा शरीरपोषणेपि कारणभूतेति । अस्याः श्लेषणशक्त्याः श्लेषणं कार्यं पार्थिवपरिमाणुजलतेजसां सहाय्येन भवति । जलपृथ्वीयोगेन विशेषतः कफोत्पन्नः । केन जलेन फलति यद्वा के–शिरसि–फणाति फक्कति इति कफः । सोऽयं कफो पित्तसमानधातुभूतो अतींद्रिय एव ।

" गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यांति विपरीतगुणैर्गुणाः ॥
कफः स्निग्धो गुरुः श्वेतः पिच्छिलः शीतलस्तथा ।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ॥

पिच्छिलः ( मृद्यमानः स्वांगुलिग्राहि ) " प्रकृतिस्थोऽविदग्धश्चाप्रदुष्टो मधुरः कफः । विदग्धो विकृतस्थस्स्यात् प्रदुष्टो लवणस्तथा " । यद्वा विदग्धाम्लपाकाल्लवणः । सोयं कफो नासामुखाभ्यां बहिर्निर्गच्छन् यो दृश्यते स नैव भवति । स तु किट्टभूतो मलभूतो वा वर्तते । किंतु धातुभूतः कफो पित्तवाताविव अतींद्रिय एव । पाश्चात्यांग्लवैद्यकसिद्धांतेन समं अस्यैकवाक्यतायाः प्रयत्नेन इदं दृग्गोचरमायाति—शरीरांतर्वतिस्रोतसामंतर्भागे वर्तमाना या त्वक् विद्यते तस्यां कफसदृशरसस्योत्पत्तिर्भवति सोऽयमेवाविकृतस्थूलरूपमयः श्लेष्मा इति । एतेषु असंख्येयेषु स्रोतःसमूहेषु सर्वशरीरव्यापीनि त्रिदोषाणामपि स्रोतांसि विद्यंते । एतेषां आभ्यंतरतलेषु स्वभावसिद्धः श्लेष्मगुणयुक्त एकः पदार्थ उत्पद्यते । सोऽयं शरीरस्य जीवितावस्थायामेवोत्पन्नो भवति । शस्त्रविच्छेदनसमये एव तत्कालं विलीनो भवति । मृतावस्थायां तु नैव तिष्ठति । अतोऽयं अतींद्रियोऽप्रत्यक्ष इति कथ्यते । श्लेष्मणो उक्तं यद्रसस्वरूपं तदेव श्लेषिकी शक्तिः । यया शरीरस्य पार्थिवाः परमाणवो एकत्र संलग्ना भवंति ।

कफो यदि अन्नरसोत्पन्नो निःसत्वो ( बेकार ) मल एव उच्येत तर्हि एनं शरीरसंचालकशक्तिभूतमिति कथं वक्तुं शक्यते ? अत इदं ज्ञातव्यं

यत् कफ पित्तविषये ' मल ' इति संज्ञा या ऋषिभिः प्रदत्ता सा हेयरूपमलत्वेन न प्रयुक्ता, अपि तु इयं संज्ञा सापेक्षिकी । कस्यापि पदार्थस्य पचनसमये तस्मादेको भागः, द्रव्यं, पदार्थो वा, ( प्रसादः ) द्वितीयश्च अल्पस्वच्छः, त्रितीयस्तु किट्टरूपो मलो निष्पद्यते । एवमेवाऽयं श्लेष्मा वा पित्तं वा प्रसादरूपाभ्यां रसरक्ताभ्यां अल्पशुद्धमलरूपेण पचनसमये संभवति । अस्य कफनामकपदार्थस्य कार्यकारिणी शक्तिरस्य स्निग्धता, शीतता इत्यादिगुणेष्वेव वर्तते । अतोऽस्य उक्तगुणसमुच्चयेऽव धातुरिति तथा अस्य विकृतावस्थायां दोष इति संज्ञा प्रदत्ता ।

## प्रोफेसर हरदयाळ वैद्यवाचस्पतयः

स्वीये ' आयुर्वेदीयो वातस्तस्यचास्तित्वम् ' इत्यस्मिन्लेखे लिखंति ।

प्राणादिवायूनां लक्षणानि तुलनया लिख्यते । प्राणवायोः कार्यं "वायुर्यो वक्त्रसंचारीति" वर्तते । इदं कार्यं पाश्चात्यमतेन फेरिंक्स्, न्यूमोगॅस्टिक, पल्मनरी, तथाच कॉर्डियल प्लेक्सस् प्रभृतीनां मज्जातंतुजालकानां कार्यमेव ।

**उदानवायुः** — ' उरस्थानमुदानस्य नासानाभिगलान्चरेत् ' इत्यादि कार्यम् । तत् ' लॉरिंजियल् ' ज्ञानतंतुकार्येण प्रतिपादितम् ।

**व्यानो वायुः** —' व्यानो हृदिस्थितः कृत्स्न देहचारीत्यादि ' कार्यम् । तत् ' मोटर ' गतिवाहकज्ञानतंतुकार्येण समानम् ।

**समानवायुः** —समानोऽग्निसमीपस्थ इत्यादि कार्यम् — ' सोलर ' ज्ञानतंतुना समानम् ।

**अपानवायुः** – 'अपानोऽपानगः श्रोणि बस्तिनाभि इत्यादि' कार्यम्— इदं "पेलव्हिक् प्लेक्सस्" संज्ञकस्य कार्येण समानम् इति ।

**पित्तम्**— शरीरसंबंधिज्ञानं हस्तामलकवत् धारकै ऋषिभिर्यस्य

शक्तिपुंजस्य नाम पित्तमिति संबोधितं तदिदं — ' पित्तं पक्त्यूष्मदर्शनैः । क्षुत्तृट्रुचिप्रभामेधाधीशौर्य तनुमार्दवैः ' । " रागपक्त्योजस्तेजो मेधोष्मकृत् पित्तं पंचधा प्रविभक्तं अग्निकर्मणा अनुग्रहं करोति " । इयं अविकृता शक्तिः ईश्वरस्य सत्ता शरीरस्यांतःपरिपाकक्रियया कार्यसाधनं करोति । यस्यै आधुनिका 'डायजेस्टिक् गॅस्टिक्जूस्, पँक्रियाटिकजूस्, इंटेस्टनल् सीक्रिशन्स्, कॉइल' इति चोच्यंते ।

**कफस्य स्थानानि**—" उरः कंठशिरःक्लोमपर्वाण्यामाशयोरसः । मेदोघ्राणं च जिव्हा च कफस्य सुतरामुरः ।

**क्लेदकः**—स तत्रस्थ एव स्वशक्त्या शेषाणां स्थानानां शरीरस्य चोदककर्मणानुग्रहं करोति ।

आमाशये वर्तमानः क्लेदकः कफो स्वशक्त्या ( केदारीकुल्या ) न्यायेन शरीरास्थितान्यकफस्थानानां सर्वशरीरस्य च सिंचनेन उपकारको भवति । कफस्य प्रधानं स्थानं अमाशयः । आमाशयिकेन रसेन भक्ष्यादिचतुर्विधान्नं द्रवरूपं तथा भिन्नसंघतं च भूत्वा सुखेन पच्यते । पाश्चात्यविद्वानानां मतेन आमाशयिकरसः —एलेमेंटरीकॅनॉल—म्यूकस, सीरस, ग्लॅंडसिक्रिशन्स, पेरिटोनियल्फ्लुइड्, इत्यादि उदरस्थितजलस्य बोधको वर्तते । अंत्राशयस्थांतर्बाह्यभागस्यार्द्रतारक्षणमेवास्य प्रधानतमं कार्यम् ।

**२ अवलंबकः कफः**—' उरुस्थः त्रिकसंधारणमात्मवीर्येणान्नरससहितेन हृदयालंबनम्' तत्कार्यम् । पाश्चात्यविद्वानानां मतेन 'फ्ल्यूरल्' 'पेरिकार्डियल् फ्लुइड ' इत्येवाऽयं बोद्धव्यः ।

**३ रसनको अथवा बोधकः कफः**—' जिव्हामूलकंठस्थो जिव्हेंद्रियस्य सौम्यत्वात्सम्यग्रसज्ञाने वर्तते ' । पाश्चात्यपंडिताः ' सलायव्हा ' इति वदंति ।

**४ स्नेहकः कफः**—शिरस्थः स्नेहसंतर्पणाऽधिकृतत्वादिंद्रियाणामात्मवी-

र्येणानुग्रहं करोति । आंग्लभाषायां ' सेरिब्रोस्पायनल् फ्लुइड् ' इति कथ्यते ।

५ **श्लेषकः कफः** —संधिस्थस्तु श्लेष्मा सर्वसंधिसंश्लेषणात्सर्वसंध्यनुग्रहं करोति । पाश्चात्याः सायनोव्हियल फ्लुइड इति वदंति ।

## कविराज उपेंद्रनाथदास आयुर्वेदाचार्य ( दिल्ली )

यथा गत्यर्थेन ' वा ' धातुना वायुशब्दो निष्पन्नोऽभवत् । 'तप' संतापे इत्यनेन पित्तशब्दोत्पत्तिरभूत् । तथा ' श्लिष् ' आलिंगने इत्यनेन धातुना श्लेष्मशब्दोत्पत्तिर्जाता । एकं पदार्थं अपरेण पदार्थेन यः संयोजयति स श्लेष्मेति कथ्यते । सचाऽयं संयोगः केवलं द्वयोरस्थ्नोर्वा मांसास्थ्नोर्वा भवतीति न मंतव्यं । अपितु स्थूलात्स्थूलो वा सूक्ष्मात्सूक्ष्मो वा पदार्थौ, येन संयुक्तो भवति स श्लेष्मा । अस्थ्नोऽणुतरः कणोऽपरेण अस्थिकणेन श्लेष्मणा एव संलग्नो वर्तते । मांसस्यापि एकः कोषः ( सेल् ) अपरेण मांसकोशेन सह श्लेष्मणैव संगच्छते । अतः शरीरे नैतादृशः सूक्ष्मात्सूक्ष्मतरोऽवयवो विद्यते यस्य श्लेष्मणः संबंधो नास्ति । अत एव शास्त्रकारैर्वातादिदोषाणां ' ते व्यापिनोऽपि ' इति 'वर्णनं कृतम् । किंतु अणुवीक्षणयंत्रे एव विश्वस्तास्सर्वस्मिन् शरीरे अणुवीक्षणयंत्रेण श्लक्ष्णचिक्कणं कफं नैव पश्यंतो, शास्त्रकारान् भ्रांतान् मन्यमानाः केचन विद्यंते । अन्ये च केचन दोषान् शक्तिरूपान् वा केचन सूक्ष्मरूपान् कथ्यंते । परंतु शास्त्रकारैर्दत्तया संज्ञया एवाऽस्माभिरिदं ज्ञातव्यं यत् एकस्यापरेण संयोगकरः पदार्थः श्लेष्मा इति । यत्र स्थूलेन स्थूलस्य संयोगकरणं तत्र श्लेष्मण आधिक्यं अतः स दृष्टिगम्योपि तत्र भवेत् । परं यत्र तु सूक्ष्मेण सूक्ष्मस्य संयोगकरणं तत्र कफोप्यत्यंतं सूक्ष्मो वर्तेत यस्य यत्र प्रत्यक्षत्वमपि नैव स्यात् । वातादयस्त्रयो दोषा द्रव्यपदार्था एव । एतेषु वर्तमानानां गुणक्रियाणां वर्णनं शास्त्रकारैरनेकशः कृतम् । अतोपि एते शक्तिरूपा इति कथनं कथं सत्यं भवेदिति सुधीभिर्विचारणीयम् ।

श्लेष्मा सौम्यः पृथिवीजलभागाधिक्यात् शैत्यगुणः, पृथिवीजलतत्वाधिक्यात् श्लेष्माणि मानुषशारीरप्राकृतिकतापान्न्यूनतापत्वं वर्तते, अत एव

शैत्यगुणः । कफे तापस्य सर्वथाऽस्तित्वं नैवेति न ज्ञेयं । हिमे [ बर्फ ] तापस्य सत्वात् वर्तते कफेऽपि तापः, परं स मानुषतापान्न्यून अत एव शीतः ।

१ **क्लेदकः श्लेष्मा**—अयं श्लेष्मा अमाशये स्थित्वा अन्नद्रव्यं क्लेदयति भिन्नसंघातं सुखजरं च करोति । भिन्नसंघातं छिन्नं भिन्नं भूत्वा अणुरूपताप्राप्तिस्तथा रासायनिकविश्लेषणत्व–( डीकांपोझिशन् ) प्राप्तिरपि । लालारसोऽपि ( सलायव्हा ) अस्यांशरूप एव विज्ञेयः । खाद्यपदार्थानां रासायनिकं विश्लेषणं कृत्वा श्वेतसारं, ( स्टार्च ) शर्करा–( शुगर ) रूपेण परिणामयति, क्लेदको आमाशयस्थः सोऽयं प्रत्यक्षयोग्य एव ।

२ **अवलंबकः श्लेष्मा**—हृदये अयं प्रतिवसति, अयं धारयति पृष्ठवंशं, अस्य वीर्यं अन्नरसेन सह हृदयावलंबनं करोति । सचायं श्लेष्मा हृद्यंत्रे फुप्फुसयोरंतर्वर्तमान एतान् कार्यक्षमान् कृत्वा स्वीयं सूक्ष्मांशै रक्तेन सह संगत्य शरीरे परिभ्रमति, सोऽयमवलंबकः श्लेष्मा सोप्ययं प्रत्यक्षयोग्य एव ।

३ **बोधकः श्लेष्मा**—सोऽयं रसानुभवे सहायतां संपादयति जिव्हेंद्रियम् सौम्यं, जिव्हामूलकण्ठयोर्वसन् श्लेष्मा रसज्ञानसाहायको भवति, सोऽपि प्रत्यक्षयोग्य एव ।

४ **तर्पकः श्लेष्मा**—यश्च शिरसि स्थित्वा चक्षुषोस्तर्पणं करोति । पंचानामपि इंद्रियाणां केंद्रभूते शिरसि ( नर्व्हसेंटर ) वर्तते । एतेषु केंद्रेषु स्नेहपूरणं कृत्वा कार्यक्षमत्वं संपाद्य इंद्रियाणां तृप्तिं विदधाति, सोयं कफः प्रत्यक्षयोग्य एव ।

५ **श्लेषकः श्लेष्मा**—संधिसमूहं श्लेषणेन अनुग्राह्य कार्यक्षममनुविदधाति सोऽयं श्लेषकः । संधिशद्बेन न केवलं अस्थ्नां संधय एव ग्राह्याः, किंतु पेशीशिरास्नाय्वादीनां असंख्याः संधयोऽत्र ग्राह्याः । अस्थिसंधिषु तु श्लेषकः कफस्तु प्रत्यक्षसिद्ध एव । परंतु, सूक्ष्मातिसूक्ष्मसंधीनामपि श्लेषणात् तत्र श्लेषककफस्यापि संनिधानमनुमानेनैव विज्ञेयम् । श्लेष्मण उत्पत्तिस्तु “ अन्नस्य भुक्तमात्रस्य

षड्रसस्य प्रपाकतः। मधुराख्यात् कफो भावात् फेनभूत उदीर्यते। " तानि द्रव्याणि आमाशयस्थश्लेष्मणा संगतानि भूत्वा मधुरत्वमायांति । तेन मधुररसेन फेनभावः कफोत्पन्नो भवति। तथा च ' किट्टमन्नस्य विण्मूत्रं रसस्य तु कफो ' इत्यनेनापि रसस्य मलः कफोत्पन्नो भवतीत्यत्र विरोधो दृश्येत, तथापि वास्तवत्वेन नात्र कश्चिदपि विरोधः। यत अस्माभिर्यदा भुज्यते तदा चर्वणेन खादितपदार्थेषु लालारसो मिश्रीभूत्य तैस्सह आमाशयं गच्छति। भुक्तपदार्थानां अंशो यावान् जलेन साकं मिश्रो भवति, तस्यैव आत्मीकरणं प्रथमं भवति ( ॲब्सॉर्प्शन् )। खाद्यद्रव्येषु यावान् शर्करामयोऽशंस्स आमाशये गच्छन् मिश्री भवति ( घूल जाता है )। तथैव गोधूमशाल्यादिषु यश्च श्वेतसारः ( स्टार्च ) सोऽपि शर्करारूपेण परिवर्तितो भवति। अस्मिन् समये भुक्तपदार्थेभ्यः श्लेष्मजनकांशयस्य ग्रहणं भवति । तेन श्लेष्मणो अवयवानां वृध्द्या श्लेष्मा वृद्धो भवति। अत एव भुक्तमात्रे एव श्लेष्मा वृद्धो भवतीत्युक्तम्। तथापि नाऽयं प्राकृतः श्लेष्मा, परंतु फेनभूतः श्लेष्मा आमश्लेष्मा भवति, अन्नरसेन मिश्रितो भवति। अनंतरम् रसस्य त्रयो अंशा भवंति। स्थूलसूक्ष्ममलनामकाः। मलांशेन कफस्योत्पत्तिर्भवति स च स्वाशयं च गच्छति। अन्यस्थानस्थितश्लेष्मणां अप्यायनं करोति। आयुर्वेदसंदेश श्लेष्मांक १९३३ जून.

**पित्तपरिचयः**––कस्यापि पदार्थस्य सम्यग्ज्ञाने तस्य उपादानकारणस्य ज्ञानस्यावश्यकता वर्तते । ' सर्वं द्रव्यं पांचभौतिकं ' च. सू. २६० इत्यनेन आयुर्वेदसिद्धांतद्वारा इदं स्पष्टं भवति यत्सर्वमपिद्रव्यं पांचभौतिकमिति । न्यायवैशेषिकदर्शनमतं तु प्रतिद्रव्यस्योपादानकारणं एकादधिकसंख्याकं नैव वर्तते। यतो विजातीयद्रव्यपरमाणुभिर्व्द्यणुकोत्पत्तिर्नैव भवति। अतः प्रतिद्रव्यस्योपादानकारणं तु एकमेव भूतम्, इतरभूतानि तु निमित्तमात्रकारणानि भवंति। परंतु आयुर्वेदसिद्धांते तु सर्वमपि द्रव्यं पांचभौतिकमिति पंचभूतोपादानकं विद्यते। स्थूलं पित्तं पांचभौतिकमपि अग्निभूतप्रधानम्। तपसंतापे इत्यस्माद्धातोः पित्तशद्बाभिनिर्वृत्तिर्भवति । अस्माकं शरीरं पांचभौतिकं तस्मिन् शरीरे ' अग्निभूतं पित्तांतर्गतमेव समाविष्टम्। पित्तं

विहाय शरीरे अग्निभूतस्य पृथक् सत्ता न विद्यते । अत एव चरके " अग्निरेव शरीरे पित्तांतर्गतः कुपिताकुपितः शुभाऽशुभानि करोति " । तथा चरके त्रयोदशविधोऽग्निरुक्तः । सप्तधात्वग्नयः पंचभूताग्नयः एको जाठराग्निः । ते च त्रयोदशाग्नयः पित्तांतर्गता एव स्वीयं कार्यं कुर्वंति । पित्ते अग्निः प्रधानः जलं अप्रधानम्, अन्यानि भूतानि तु आनुषंगिकानि । आधुनिकास्तु अग्निं द्रव्यं नैव मन्यंते । वैज्ञानिकास्तु कस्मिन्नपि द्रव्ये आणूनां स्पंदनवृद्धिः केनापि कारणेन जाता चेत्तदा तस्मिन्द्रव्ये उत्तापवृद्धिरपि भवति । तेन वृद्धेन उत्तापेन द्रव्यं दग्धं भवति । तेन तद्द्रव्यावयवा उज्वला भूत्वा इतस्ततो विक्षिप्ता भवंति। अतो नाग्निः किमपि द्रव्यम् इति वदंति। द्रव्याणूनां स्पंदनेन, आलोकः, उत्तापः, गतिः विद्युत् इति चतुःप्रकारका शक्तिरुद्भवति । एतेषु नियतपरिमाणा शक्तिः अन्यायां नियतपरिमाणायां शक्तौ रूपांतरिता भवति । यथा नियतपरिमाणाया विद्युतस्तापः, आलोकः, गतिः उत्पद्यते । तथा तापादालोकाद्गत्या अपि विद्युदुत्पत्तिर्भवति । अतः तापादयश्चत्वारो न कस्यापि द्रव्यस्य विशिष्टगुणाः। अपि तु सर्वस्मिन् द्रव्येपि शक्तिरूपेण ( एनर्जी ) निवसंत इमे कदा, केनाऽपि रूपेण प्रकटिता भवंति । अस्मिन्विषये विचारः कृतश्चेत् तापश्चालोकश्च द्रव्यस्य गुणौ एव । यौ द्रव्याश्रयं विना न तिष्ठतः । अनयोः द्रव्ये गतिरूपा क्रिया भवति। यतः 'अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः'। अयं सिद्धांतस्सर्वथा परीक्षितस्सत्यश्च वर्तते । यं सिद्धांतं आधुनिका प्राचीनाश्च मन्यंते । एकात् द्रव्यात् तापालोकौ निर्गत्याऽन्यं द्रव्यं गच्छत इति प्रत्यक्षसिद्धमेव । अतः तापालोकौ, " ईथर " द्रव्यस्य वैज्ञानिकैः कल्पितस्यात्यंतं सूक्ष्मद्रव्यस्य स्थितिस्थापकात्यंतसूक्ष्मकणेभ्यः ( तरंगमयेभ्यः ) सर्वतः परिसर्पतीति वैज्ञानिका आहुः । परं सर्वव्यापिनोऽप्रतिबंधगतेरीथरद्रव्यस्य आश्रितौ तापालोकौ सर्वतः प्रसरणे अनिरुद्धगतिशीलौ भाव्यौ । परं नैतत् दृश्यते, इमौ तापालोकौ रुद्धौ भवतः । अत ' ईथर ' द्रव्याश्रयादन्यदाश्रयस्थानं तयोः किमपि संभाव्यते । तदेव द्रव्यं तेज इति वयं ब्रूमः । तेजसि नास्ति गुरुत्वं ( वेट ) इत्यतस्तन्नास्ति द्रव्यमिति पाश्चात्यानां मतम् । तथापि

' गुरुत्व 'मपि सापेक्षकमेव। अधुना ' हैड्रोजन ' द्रव्यमपि ' एकं ' संज्ञापेक्षया ' गुरु ' जातम् । अतो वर्तमानात्तुलायंत्रादपि सूक्ष्मातिसूक्ष्मतुलायंत्रस्योद्गमे कदाचित्तेजद्रव्यमपि मानस्यापि ' एकं ' इत्यधिकारमाप्नुयात् । अतस्तेज इति द्रव्यं यत्पूर्वाचार्यैरुक्तं तदेव युक्तितरं प्रतिभाति । पित्तं, सस्नेहं, ऊष्णं, तीक्ष्णं, द्रवं, सरं, अम्लं, कटु च विद्यते । अस्माकं मते पित्ते लवणरसस्यापि अस्तित्वं वर्तते, यतोऽम्लक्षारमयाः पदार्था भुक्तद्रव्यं परिपाचयंति, अतः क्षारद्रव्येऽपि कटुलवणरसयोरस्तित्वं वर्तते। अतो ज्ञायते पित्ते अम्ललवणकटुरसानां अस्तित्वं वर्तते इति ।

**पित्तस्योत्पत्तिः**—भुक्तं द्रव्यं आमाशये गच्छत् आमाशस्थक्लेदकश्लेष्मणा संगच्छति । मधुररसात्मकं च भवति क्लेदकश्लेष्मप्रभावात् । ततो आमाशयाधोभागे गच्छति, आमाशयाधोभागस्थाम्लरससंयोगं च गच्छति, ( गॅस्टिकजूस ) अम्लं च भवति । अनेन अच्छं पित्तं उत्पद्यते । अत्र ' आमाशय ' शब्देन केवला पाकस्थली [ स्टमक ] इत्येव ग्राह्यम् । आमस्य अपक्वस्यान्नस्य स्थानं आमाशय इति व्याख्यायां इदं कफस्थानं । तथापि यावदन्नं विदाहावस्थास्थितं तावदपि किंचित्पक्वापक्वावस्थं, अतएव आमसंज्ञया व्यवहृतं चेत् आमाशयाधोभागमारभ्य पित्तकोष—[ गॉलब्लॅडर ] अग्न्याशय—[ पॅंक्रियाज् ] इत्येतैः तथा च क्षुद्रान्त्रस्य ( लघ्वंत्र ) पाचकरसोत्सर्जको भागोपि आमाशयशब्दवाच्यः । ( अत एव सुश्रुतेन पक्वामाशययोर्मध्यं पित्तस्य इत्युक्तं ) यस्मिन् पित्तपोषके आग्नेयांशरसे पित्तस्य वर्णरूपादयो न विद्यंते, अत इदं अच्छं पित्तमिति कथ्यते । यस्मिन् पित्तपोषकांशो विद्यते, एतादृशो रसस्स्वाग्निना पक्वो भवद्रक्तरूपं गृण्हाति तदा तस्मिन्शोणिते पित्तपोषकांशोऽपि संमिलितो भवति । तदेव शोणितं यदा स्वाग्निना पक्वं मांसतां याति, तदा तस्मान्मलरूपं पित्तं पृथक् भवति, यस्मिन् वर्णादयो सर्वे गुणा विद्यंते । इदं पित्तं स्वस्थानं गच्छत् संचितं भवति। अत इदं अच्छमिति न कथ्यते । यकृत्प्लीन्हो रंजकं पित्तं निवसति। अनेन रक्तपरिभ्रमणं [ ब्लड् सर्क्युलेशन ] पूर्वस्मात्कालादपि पूर्वाचार्या जानंतीति सिद्धं । ते तु रसपरिभ्रमणमिती नाम्ना निर्देशं कुर्वंति। ' व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।

युगपत् सर्वतोजस्रं देहे विक्षिप्यते सदा ' । चरक चि. अ. १५ । रसतीति रसो द्रवोधातुरुच्यते, तेन रुधुरादीनां द्रवाणामपि ग्रहणं भवतीति चक्रपाणिः ॥ ' गत्यर्थो रसधातुर्यस्ततो भवदयं रसः । सदैव सकलं देहं रसतीति रसः स्मृतः ' । भावप्रकाशः । हृदयस्थितं पित्तं साधकम् । चक्षुषो बाह्यपटलस्याधस्तात्तेजोमिश्रितजलस्यास्तित्वं वर्तते, ' तेजो जलाश्रितं बाह्यं ' सु. उ. १ ॥ तदिदमालोचकं पित्तम् । जीवच्छरीरे त्वचो आवरणं विद्यते, इयं त्वक् स्वाभाविकेन ऊष्मणा युता विद्यते । अयं चोष्मा सदैव शीतोष्णकालेऽपि स्वाभाविकीं शरीररक्षां करोति । अनेनैवोष्मणा शरीरलिप्तलेपादीनां संशोषो जायते । अनेनैव शारीरो वर्णः प्रतिभासमानो भवति । अयमेवोष्मा भ्राजकं पित्तम् ।

चरकसंहितायां पुरुषविचयशारीरेऽध्याये पृथ्वीजलतेजवाय्वाकाशब्रह्मणां षण्णां समष्टिर्जगदिति कथितं, तथैव पुरुषोप्येषां षण्णां समष्टिरेव । पुरुषशारीरे पृथ्व्या मूर्तिः, जलेन क्लेदः, तेजसा उष्मा, वायुना प्राणाः, आकाशेन छिद्रसमूहो निष्पद्यते इत्यपि कथितम् । अस्मिन्निदं विशेषेणावधार्यम्—शरीरस्थकठिनद्रव्याणि सर्वाणि पृथिवीसंभूतानि, परं येयं कठिना स्थूला पृथ्वी तं निर्मातुं न समर्था । अपि तु भोज्यपदार्थानां भक्षणात् तेभ्यः पार्थिवांशशोषणेनेदं शरीरं स्वपुष्टिं संपादयति । अतः शरीस्य कठिनांशानां धारका सामान्या पृथिवी नैव, अपि तु विशिष्टां अवस्थां प्राप्तैव पृथिवी पोषका धारका च । एवमेव वायुः शरीरस्य संजीवकः प्राण इत्युच्यमानो सामान्याद्बाह्यवायोरत्यंतं भिन्नोपि नास्ति परं विशिष्टामवस्थां समनुगतो वर्तते । जगत असाधारणवायोरेव इदं शरीरं स्वीयोपयोगिनमंशं स्वीकृत्य शरीरधारकं वायुं स्वीयं निष्पादयति, यः प्राण इति कथ्यते । वायुस्तंत्रयंत्रधरः, तंत्र्यते नियम्यते अनेनेति तंत्रम् । येन यंत्रादि नियमपूर्वकं चलति । हृदयादि अनैच्छिकं यंत्र तथा स्वरयंत्रादि ऐच्छिकं यंत्र नियमपूर्वकं संचालयंति या नाड्यस्तास्तंत्रशब्देनाभिधीयंते । " योऽनिलोवक्त्रसंचारी स प्राणो नाम देहधृक् । सोन्नं प्रवेशयत्यंतः प्राणांश्चैवावलंबते " । यो वायू रक्तसंचालको वर्तते ( ब्लड् सर्क्युलेशन् ) देहं धारयति स एव प्राणवायुरिति कथ्यते । इदं रक्तसंचरणं

प्रत्यक्षं कर्म नास्ति कोप्यत्र विवादः । परं विवादास्पदमेतत् तदेतत्कर्म रक्त-संचारणात्मकं अस्माभिः प्राणवायोरेव मन्यते । अन्यैस्तु हृदयफुफ्फुसाद्यनैच्छिकयंत्राणां मन्यते । अस्मिन्विषयेऽस्माकं वक्तव्यमित्थं यदीदं रक्तसंचरणं कर्म हृदयादीनामेव स्यात् तदा विद्यमानेपि हृदये कदाप्येदं कर्म स्थगितं-नैव भवितुं योग्यम् । अथ च यदि भवति स्थगितं सत्यपि हृदयादींद्रिये तदा नैव तेषामिदं कर्मेति । प्राणवायोः कार्यं यावत्कालं भवति तावत् रक्तसंचारोऽपि भवत्यतो रक्तसंचरणं कर्म प्राणवायोरेव मन्तुं युक्तम् । अथच हृदयादीनींद्रियाण्यपि पूर्णतया अनैच्छिकानि नैव विद्यंते । यतो इच्छाशक्तिरपि हृदयादीन्यपि नियंत्रयति । योगिजनाः प्राणायामेन प्राणादीन् संरोध्य समाधौ हृदयादीनां क्रियारोधं कुर्वंत्येव । अतो रक्तसंचरणकर्मणि प्राणवायोर्यथाऽविच्छेद्यः संबंधो विद्यते न तथा हृदयादीनां । प्राणवायोर्द्वितीयं कर्म अन्नप्रवेशनात्मकं । आधुनिकास्तु इदं कर्म पेशीवेगादेव भवतीति मन्यंते । अस्मिन्विषये सूक्ष्मतया विचारे कृते पेश्यो हि तदा कर्म स्वकीयं कुर्वंति यदा ता ज्ञानवहनाडीभिः संचालिता भवंति । वातनाड्योऽपि स्वीयं कर्म वाताध्माता एव कुर्वंति नान्यथा । अतः प्राणवायोरेव प्राधान्यं वातवहनाडी-पेशीसमूहेभ्य इति । प्राणवायुरुत्तेजयति वातनाडीः । तास्तु उत्तेजयंति पेशीः । उत्तेजितानां पेशीनां वेगादन्नगंतर्यातीति अन्नप्रवेशकृत् प्राणवायुः । नाड्यः पेश्यश्च तस्य साधनमिति ।

२ **उदानवायुः** —यश्च वायुरूर्ध्वं गच्छन् हृदयान्निर्गच्छत् शोणितं नयन् ऊर्ध्वमभिसारयति जन्त्रुभागेषु स उदानः । उदगयनादुदानः । ऊर्ध्वं गच्छत्यस्मादुदानः । आधुनिकास्तु इदमपि कर्म वातनाडीभिरुत्तेजितानां पेशीनां वेगादेव भवतीति वर्णयंति । अस्य वायोः कार्यं हसितभाषितगीतादि विद्यते ।

३ **सामानो वायुः** —आमाशयादियंत्रेषु वेगं दत्वा पाचकरसस्योत्सर्गं, अन्नस्य अंतःपीडनं, रसस्य सात्मीकरणं, तथा तस्याधोनयनं कर्म अस्य वायोरेव । इदमपि कर्म आमाशयादियंत्राणां संचालका प्रेरका वातनाड्य-एव कुर्वंतीति आधुनिकं मतम् ।

४ **व्यानवायुः** —सर्वस्मिन् शरीरे गतो रससंवहनक्रियाकरः सर्व-शरीरपोषकस्य आहाररसस्य सर्वस्मिन् शरीरे प्रेरकोऽयं वायुर्विद्यते। अत एव 'रससंवहनोद्यते'ति तस्य वर्णनं शास्त्रे कृतम्। प्राणवायोस्स्थानं स्पष्टं भवति, यत् फुफ्फुसहृदयादीन् संचाल्य महाशिराया अशुद्धं रक्तं गृहीत्वा महाधमन्यां शुद्धशोणितस्य विसर्जनम् इत्येतत् कर्म प्राणवायोरेव। परं सर्व-शरीरे रसरक्तादीनां तद्वहस्त्रोतोविशोधनं कृत्वा तैरसंचारणात्मकं कर्म तु व्यानवायोरेव।

५ **अपानो वायुः**-बृहदंत्रं, बस्तिः, वृक्कौ, शुक्राशयः, अण्डकोशौ, गर्भाशय इत्यादीनां नाभ्यधोवर्तमानानां यंत्राणां संचालको यथासमयं एते-षामुत्तेजको मलमूत्रशुक्रगर्भादीनामुत्सर्जकोऽयं वायुरिति ( सेन्सरी नर्व्ह तथा मोटर नर्व्ह इत्यादीनां वाहको वायुरेव )।

## पंडित ठाकूरदत्तशर्मा अमृतधारा लाहोर

**वायुः**– प्रस्पंदनोद्वहनपूरणाविवेकधारणो वायुः पंचधा प्रविभक्तः शरीरं धारयति। सुश्रुत सूत्र अ. १५ रूक्षलघुशीतदारुणखरविशदाः षडिमे वातगुणाः भवंति॥ चरकसूत्र अध्याय १२॥

**व्याख्या साधारणाः** — 'बादी' इत्यादि शब्दान् वातपर्यायान् केचिदुदाहरंति, परं इमे पर्याया वायोरसन्मानकारकाः, यत आयुर्वेदे सर्वेष्वपि बलवान् वायुरेव कथितः। सच चेष्टानां प्रवर्तकः–( नर्व्हस्फोर्स, पट्ठोंके काम ) केवलं नैव। परं शरीरस्यापि प्रवर्तको मनसोऽपि प्रवर्तकः। अत एव अस्य श्रैष्ठ्यं स्पष्टं भवति। प्रश्नोपनिषदि—

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पंचधा।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते॥ ( प्रश्नोपनिषद् )

अतः प्राणवायुरेव सर्वाशक्तिर्विद्यते। केवलं नर्व्हज् इत्येव न वायुः। परं मनसः प्रवर्तकोपि वायुरेवेति लिखितम्। केऽपि यूनानीवैद्यकस्थं 'सौदा'

तत्वमेव वायुरिति वदंति तदपि अयुक्तमेव । यत यूनानीवैद्यके ' सौदा ' तत्वस्य शीतलरूक्षजलाग्नितुलनया पृथ्वीरेवसमाना । अयं रक्तसहचरः । अस्य रोगा उष्णस्निग्धचिकित्सया प्रशाम्यंति । सौदा शोणितं आवश्यकतया सांद्रं करोति । सच अस्थ्नामुपास्थामाहारः । अस्य स्थानं प्लीहा । अस्याऽस्वादो अम्लः । अप्राकृतोऽयं अन्येषां ' इखिलाते ' संज्ञकानां दाहेनोद्भवति । सरक्तः सौदा किंचिन्मधुरः कषायस्वादो भवति । सफरावी ( पित्तयुक्तः ) सौदा तिक्तस्वादो भवति । बलगमी सौदा ( कफयुक्तः ) यदि कफो द्रवः स्यात् चेत् तदा स लवणकटुस्वादो भवति । यदि च सांद्रश्लेष्मयुक्तः तदा स कटुकांम्लस्वादो भवति । सौदा तु वायुरम्लः ' शिरका ' सदृशो विद्यते । असवर्णस्तु कृष्ण एव। यूनानीवैद्यके सफरा पित्तमिति बलगम् कफ इति गीयते । यद्यपि सौदातत्वं वायुश्च बहुषु गुणेषु समान एव, तथापि सौदा च वातश्च सर्वथा भिन्न एवेति ऊह्यमेव । वायुस्तु सर्वथा अत्युच्चेन अर्थेन प्रयोजितो वैद्यके वर्तते ।

## कफः को वर्तते ? ।

संधिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृत् श्लेष्मा पंचधा प्रविभक्त उदककर्मणाऽनुग्रहं करोति ( सु. सू. अ. १५ )

शरीरे चंचलो वायुः पित्तं इत्येव वर्तमानं यदि स्यात्तदा शरीरस्य का अवस्था भवेदतः स्थिरतागुणयुक्तस्य कफस्यापि अत्यंतं आवश्यकता विद्यते । क्षणे क्षणे अस्माकं शरीरं क्षीयते तथा च शारीरपरमाणवोपि प्रत्यहं क्षीयमाणा वर्तंते । अत एव क्षणे क्षणे शीर्यते इति शरीरं ऋषिभिर्व्याख्यातम् । यश्चास्माभिरद्यते आहारस्तस्य रसःश्लेष्मान्वितः शरीरे प्रविशन् क्षीणतांतथा विघटमानानां परमाणूनामपि न्यूनतां नाशयति, पूरयति शरीरम् ।

विकृतस्तु श्लेष्मा विंशति प्रकारकान् रोगानुत्पादयति । यूनानीवैद्यके दूषितस्य कफस्य चत्वारो भेदा वर्तंते ।

१ बलगमे मुखाती, २ बलगमे खाम, ३ बलगमे माई, ४ बलगमे हनिस्सी । ' बलगमे मुखाती ' इत्यस्य द्वौ प्रकारौ एकश्च द्रवो एकश्च सांद्रः । बलगमे खामस्तु आमः कफः कथ्यते । बलगमे माई स कथ्यते यः श्लेष्मा जलवत् द्रवोऽस्ति । बलगमे हनिस्सी सुधाचूर्णवत् श्वेतोस्ति । १ बलगमे मालीह २ बलगमे हामीज ३ बलगमे अफस् ४ बलगमे मसीख, इति अन्यश्चतुर्धा भेदो विद्यते । ' बलगमे मालीह ' लवणस्वादः, बलगमे हामीज, अम्लस्वादो, बलगमे अफस्, बलगमे मसीख सीसकद्राव इव भवति ।

## डॉ. आशानंद पंचरत्न एम्. बी. बी. एस्. वैद्याचार्य [लाहोर]

अहं न तावदस्मिन्विषये किंचिदपि ब्रवीमि वातो नाम पाश्चात्यवैद्यके व्याख्यातो भवितुमर्हतीति । प्राचीनार्वाचीनानामस्मिन्विषये भिन्नानि मतानि। केचन इमं शक्तिस्वरूपं, ( व्हायट्ल फोर्स ) केचन मूर्तस्वरूपं, केचनोऽभयरूपं मन्यंते । वातस्तु उभयस्वरूप एवेति युक्तम् । परं इमौ द्वौ परस्परं संबंधं धारयत इति तु निर्मूलमेव । यथा सूक्ष्मो वायुः पित्तकफौ शासयति तथा स्थूलं वातमपि प्रेरयति इत्येवान्योन्ययोस्संबंधः। स्थूलो वायुस्सूक्ष्माद्वायोस्सर्वथा भिन्न एव ।

कफो वा श्लेष्मा, स्निग्धः, शीतः, स्थिरत्वप्रदाता, गुरुः, बलप्रदो वर्तते। अस्य च प्रधानो गुणः शरीरे शैत्यरक्षणम् बलदानं च । ' स चायं ' श्लेष्मा सोमगुणप्रधानत्वात् शरीरस्थसर्वधातूनां आर्द्रताया स्थैर्यमापादयति । रक्षयति शरीरं पित्तोष्मणः सकाशात्। यश्च आमाशयात् तथा क्षुद्रांत्रान्निर्गच्छन् तीक्ष्णोष्णगुणयुक्तो रस उत्पद्यते, तथापि उत्पादकं आमाशयं क्षुद्रांत्रं च तत्स्थजीवपरमाणुषु कफस्यार्द्रशीतलस्वभावस्य विद्यमानत्वान्नैव दहति । तथैव संधिषु श्लेष्मणो विद्यमानत्वात्सदैवार्द्रता अभिरक्षिता भवति, यया सर्वदा संघट्टितेषु संधिषु उत्पन्नमानाया उष्णताया उपशमो भवति । सर्वे च संधयो सुस्निग्धा जायंते ।

मस्तिष्केऽपि प्रधानो अग्निर्वर्तते येन क्रोधादिविकारा उत्पद्यंते तेषां प्रशमो मस्तिष्कस्थश्लेष्मणोत्पन्नैर्धृतिक्षमाऽलोभादिगुणैर्जायते ।

१ **अवलंबकः** —यो वायुप्रणाल्यां फुफ्फुसयोः प्रतिवसति ।

२ **क्लेदकः** —य आमाशये अन्नप्रणाल्यां च स्थितो वर्तते ।

३ **रसकः** — यो जिव्हां मुखं च सदैवार्द्रं रक्षति येन भक्षितः पदार्थो मुखे प्रसरन् स्वादमापादयति ।

४ **तर्पकः** —यो मस्तिष्के सुषुम्नाशीर्षकस्थमध्यस्थकोष्ठे वर्तते ।

५ **श्लेषकाः** —संधिषु श्लैष्मिककलायां उत्पन्नो भवति, यश्च स्निग्ध-पिच्छिलो वर्तते । एतेभ्यो भिन्नस्सूक्ष्मरूपः श्लेष्मा ' इंद्रियाणामात्मवीर्येणानुग्रहं करोति ' तथा स्थिरत्वगौरववृषताबलक्षमादिकर्माणि करोति ।

## आयुर्वेदाचार्य कविराज नानकचंदशास्त्री लाहोर

वास्तविकं तु आयुर्वेदे रोगाणामुत्पत्तेस्तु कारणं त्रयो दोषा एवोक्ताः । ' सर्वेषामेव रोगाणां निदानं कुपिता मलाः ' । इदं सत्यमपि प्रधानतमत्वमत्र वायोरेव । वायुस्तु वा गतिगंधनयोरिति धातुः, वा गतिगंधेति गतिगंधोपादानस्य वा धातोः असृद्धरादिभ्य इति सूत्रेण त प्रत्यये वात इति रूपसिद्धिः । वातस्य स्थानं सर्वदेहव्यापित्वेऽपि श्रोणिगुदावेव । गुदशब्देन मलाशयस्य ग्रहणं कार्यम् । " तत्र रुक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः " । अत्र सूक्ष्म इत्यनेन स्रोतःप्रचारीत्युक्तम् । योगवाहित्वादनुष्णाशीतत्वेऽपि प्रकृत्या शीत एव, यत ऊष्णचिकित्सया प्रशाम्यति " ।

पाश्चात्यमतानुसारेण ' एअर ' बाह्यवायोर्नाम, यस्तु लोके संचरति अस्मिन्पंचद्रव्याणि विद्यंते येषां वर्णनं पुरत इत्थं क्रियते । १ ऑक्सिजन्, २ हाय्ड्रोजन्, ३ कार्बन् डाय् ऑक्साइड्, ४ वॉटर मॉइश्चर, ५ ओझोन इत्येवं प्रकारेण सामान्यवायौ द्रव्याणि स्वीकृतानि भवंति । ' हाय्ड्रोजन्'

शीघ्रं दहति । अत एवाऽयं जलादेवोपलभ्यते । प्रथमतृतीयौ एवाधिकतरं कार्ये उपयुक्तौ भवतः । यतः प्रथमो अशुद्धं शोणितं शोधयति, श्वासप्रश्वास सहायतां ददाति । तृतीयश्च अंतस्थितमलानां बहिरुत्सर्जने कार्यकृद्भवति । शेषाश्च त्रयो न हि विशिष्टं कार्यमावहंति । हैड्रोजनस्तथा नैट्रोजनश्च आहारेण साकं संमील्य शरीरांतर्यातः शरीरोष्णतायास्तथा उत्साहस्य चोत्पादकौ भवत । नैट्रोजनो जलेन साकं पीतवर्णो भवति ।

परिमाणम्— बाह्ये वायौ ' ऑक्सिजन् २१%, कार्बन् डाय् ऑक्साइड् ४% तथा नैट्रोजन ७८% शेषांशद्रव्याणि ६% ।

ऑक्सिजनस्य न्यूनता तथा कार्बन् डाय् ऑक्साइड् इत्यस्य अधिकता शरीरे मूर्च्छादिरोगेषु कार्यसंपादिका भवति, अथ च श्वासानां गतिं वर्धयति, तथा च मस्तिष्के ' रेस्परेटरी सेंटर ' इति स्थानं विद्यते तमुत्तेजयति ।

नैट्रोजन—मूत्रमार्गेण बहिर्याति । तथा " गाउट् " इत्याख्ये रोगे अधिकतरं कार्यं करोति । हैड्रोजनस्य प्रमाणं यदि अधिकं स्यात् तदा भवति हृद्रोगः । नैट्रोजनस्य यदि वृद्धिस्स्यात् तदा वृक्करोगप्रादुर्भावोऽश्मरिश्च जायते । ऑक्सिजनश्च शोणितेन सह मांसपेशीर्गत्वा उत्साहोष्णते समुत्पादयति । इति सामान्यतः पाश्चात्यमतद्वारा वातकार्याणि दर्शितानि ।

## कविराज रामेश्वरसिंह वैद्य लाहोर.

' वायोर्महिमा ' प्रबंधे लिखंति ।

" शरीरे तिस्रः क्रिया जायंते संचालनस्वेदनस्नेहनरूपाः । संचालनक्रिया वायोरेव । स्वेदनक्रिया पित्तस्य, स्नेहनक्रिया कफस्य वर्तते । वायु केचन स्थूलरूपं मन्यंतु, वा केचन शक्तिरूपं मन्यंतु, वा केचनोभयरूपं मन्यंतु । अस्मिन् जगति दृष्टं चेत् वायोर्विना, गतिं विना किंचिदपि कार्यं न भवति । गतेः कारणं तु वायुरेव । ' वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ' ।

'वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्तित' इति आत्रेयमहर्षिणा प्रोक्तम् । वायो रूपविषये संति मतांतराणि । केचन इमं शक्तिं समामनंति, केचन कथयंति वायोरेका अवस्था विद्यते या 'मूर्ता' वर्तते । परंतु केवलं वायो-र्मूर्तरूपत्वेनावधारणं युक्तं नैव पश्यामः । वायुस्त्वेका शक्तिरस्ति । केचन वातं प्राणिशरीरशक्तिं, ( बायोमोटरएनर्जी ) केचन प्राणशक्तिं, ( व्हायूटॅलिटी ) केचन जीवनमूलस्थां शक्तिं ( प्रोटोप्लाझ्मिक् ॲक्टिव्हिटी ) प्राहुः । अतो वायुः शक्तिरेव । इयं शीघ्रगा, सूक्ष्मा, लघ्वी, चंचला च विद्यते । सुश्रुतेन वातस्तु महाशक्तिशाली, गतिकर्ता, स्वयंभू, स्वतंत्रः, सर्वव्यापको, आशुकारी, सर्वदोषधातुसाम्यत्वापादिका शक्तिरिति वर्णितः । चरकेणाऽपि दिव्यशक्ति-र्योगवाह उक्तः ।

स्थानभेदेन वायुस्तु पंचविधो, जातिभेदेन तु द्विधा । जातिभेदेन द्वैविध्यं १ प्रसादात्मकं २ भूतात्मकं च । प्रसादात्मकश्च वायुर्यो मस्तिष्क-हृदयादिषु वर्तते, अपरश्च शेषेषु शरीरावयवेषु तिष्ठति । चरके उक्तं वायुना-आनंदहर्षयोरुत्पादो भवति, तथा च इंद्रियाणां विषयान् मनसः सान्निकर्षं सनयति । अतो यदि वायुरेतादृक्कर्मकरस्तदा इयं शक्तिरेव न केवलं श्वासानिश्वाससंबद्धो वायुरिति मन्यामहे । पाश्चात्यमतेनावलोकितं चेत् ।--

हृदयसंबद्धो ( कॉर्डियल् प्लेक्सस् ) उदानवायुः । सिंपथेटिक् सिस्टिम्, समानो वायुः । लंबरप्लेक्सस्, अपानो वायुः । व्हॅस्क्युलरी सिस्टिम्, व्यान-वायुः । वातांकः 'आयुर्वेद संदेश १९३१ जून' ।

## कविराज भुवनेश्वरदत्त शर्मा, कांगडी

आयुर्वेदसिद्धांतैरिदं मानवशरीरं पांचभौतिकं त्रिगुणात्मकं च विद्यते । सत्वरजस्तमांसि पंचमहाभूतेष्वंतर्गतानि संति । इमानि पंचभूतानि परमाणु-रूपेण परस्परं संनिविष्टानि, नैव दृष्टिगोचराणि । "अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् । स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तलक्षणमिष्यते" ।

सुश्रुत शा. अ. १ । अतः परं पंचमहाभूतानां 'गुणान्' आंतरिक्षाः शद्वः, शद्वेंद्रियमित्यादिना, वायव्याः स्पर्शः, स्पर्शेंद्रियं इत्यादिना, एवं अन्येषामपि भूतानां गुणा वर्णिताः । त्रिदोषाः—एषामेव त्रिगुणात्मकपंचमहाभूतानामाश्रयेण आयुर्वेदे वातपित्तकफा निर्दिष्टाः । एतेषां पंचमहाभूतेभ्यस्साधर्म्यं वर्तते । एतेषु पांचभौतिका गुणाः संति ।

## कविराज रघुनंदनप्रसाद वैद्यवाचस्पति ( अमरोहा )

स्वीये 'पित्ता'ख्य लघुनिबंधे ।

अस्माकं शरीरं पंचमहाभूतानां संमिश्रणेन उत्पन्नम् । अस्माकं आहारोऽपि पंचमहाभूतात्मक एव । तथा पित्तादीनां सिद्धांतोपि पंचमहाभूतानां सिद्धान्ते एव स्थिरो वर्तते । अत आहारादेव एतेषां पुष्टिस्तथोत्पत्तिर्जायते । यथा चरके सू. अ. २४ कथितं, " सर्वं द्रव्यं पांचभौतिकमस्मिन्नेवार्थे तच्चेतनावदचेतनं च । "

## कविराज श्री. खजानचंद्र बी. ए. ( लाहोर. )

अस्माकं शरीरे त्रिविधाः क्रिया भवंति । संचालनस्वेदनस्नेहनरूपाः । स्वेदनक्रियायाः कारणं अग्निः । अस्य अग्नेरेव अस्मच्छरीरांतर्वर्ति, क्रियाकृत् पित्तमिति नाम । पित्तस्य स्थानं गुदादुपरि नाभ्यधोवर्ति पक्काशयः । यकृज्जन्यं पित्तमेव पित्तमिति नास्माकं अभिप्रायः । पित्तमिति पाचको रसो अभिप्रेतः । इमं पाचकरस इत्यभिधीयते । अस्मिन्पाचकपित्ते केवलं पित्ताशयाश्रितं पित्तमिति नैव ज्ञेयम् । अपि तु क्लोमरसक्षुद्रांत्ररसादयोऽपि संमीलिता भवंति । इमे सर्वे एव रसाः संमील्य पक्काशये प्रविशंतः पाचयंति आहारम् । अतः पक्काशयः पित्तस्य स्थानम् । अस्मिन् पक्काशये संपूर्णक्षुद्रांत्रस्यापि समावेशो भवति तेन क्षुद्रांत्रोत्सर्जितरसोऽपि पित्तसंज्ञामर्हति ।

## पं. दीनानाथशर्मा शास्त्री ( लाहोर. )

शरीरनिर्मितिस्तु पृथ्व्यप्तेजोमरुद्व्योमेतिभूतपंचकसंघातेन जायते ।

उक्तमपि यथा 'पांचभौतिकमिदं शरीरम्'। यथा शरीरं पांचभौतिकमस्ति तथैव वातपित्तकफाभिधा दोषा, रसरक्तमांसमेदोऽस्थिमज्जाशुक्राभिधाना धातवो, मूत्र-पुरीषादयो मलाश्चापि पांचभौतिकाः। अत एव तु ते शरीरे पंचानां भूतानां प्रतिनिधित्वेनावतिष्ठंते। अर्वाचीनास्तु धातुमलयोः प्रत्यक्षत्वादेतौ विकृताविकृतौ रोगारोग्यादाविति मन्यंते। परंतु दोषाणामप्रत्यक्षत्वादिमे विकृताविकृता रोगारोग्यदाः संतीति न मन्यंते। तेषां मते इमे एव धारणाद्धातुषु, मलिनी-करणाच्च मलेषु विपरिणमंते तत्तदभिधानेनाभिधीयंते। ते च दोषा वातपि-त्तकफा इति त्रय एव संति। को नाम वातः, किंच नाम पित्तम्, इत्यत्रावलो-कनीयौ वातपित्तांकौ। कफस्वरूपं तु भगवान् आत्रेय इदमाह—

श्लेष्मा शीतो गुरुः स्निग्धः पिच्छिलः शीत एव च।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत्॥

इत्यनेन कफो उदकतत्वप्रधानो अत एवास्य लक्षणे प्रायेण सर्वेप्यौ-दका गुणाः संगच्छंते, कारणगुणाः कार्ये गुणमारभंते इत्यनेन। जलस्य लक्ष्म—

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र द्रवत्वं च सांसिद्धिकमुदाहृतम्॥

एतस्मात् श्वेतगुरुस्निग्धपिच्छिलशीतस्वादवो गुणा उभयात्मकत्वात्। (जलकफात्मकत्वात्) कफे स्वयोनिसकाशात्समागताः। अनेनाऽयं कफो जलभूतज इत्युच्यते। वस्तुतस्तु अत्रस्तः पृथ्वीतेजसोरप्यंशौ। यतो हि दोषा नैव केवलमेकेन महाभूतेन प्रादुर्भवंति प्रत्युत, तेष्वंशांशतोऽन्यान्यपि महाभूतानि भवंति। यथा पित्तस्य—

पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च।
उष्णं कटुरसं चैव विदग्धं चाम्लमेव च॥

इति सुश्रुतप्रतिपादिते स्वरूपे तैजसा गुणा यद्यप्याधिक्येनावलोक्यं-

तेऽतः "तैजसं खलु पित्तमिति" शास्त्रवचनाच्चापि तेजोभूतप्रधानं तैजसं वा सिध्यति, परं, तथापि तत्र द्रवत्वादयो जलगुणा अम्लकटुत्वादयश्च पृथ्वीगुणा- अत्रानुषंगेण संत्येव। तथैवात्र कफे यद्यपि श्वेतादय आप्या गुणास्संति तथापि विदग्धस्तैजसो, लवणश्च, पार्थिवो गुणोऽप्यस्त्येव। किं च कफलक्षणे "तमो-गुणाधिक" इत्युपात्तं, तेन 'तमोबहुला पृथ्वीति' वचनेन अयं गुणः कफे पार्थि-वोऽस्ति। यथोक्तमपि सुश्रुतेन यथा—"अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत्। स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते"। सर्वाण्यप्येतानि पृथिव्यादिमहाभूतानि अन्योन्यानुप्रविष्टानि संति, परंतु यत्र तेषां लक्षण-बहुलता व्यक्तता वा भवति, तत्रैव तेषां स्वीया स्वीया प्रधानता भवति। अत-एव पित्ते तेजसः, कफे च जलस्य, प्राधान्यमस्ति, परंत्वानुषंगेणात्रान्यान्यपि महाभूतान्यवतिष्ठंते एव। प्रत्यक्षानुमानोपमानशाद्बेति प्रमाणचतुष्टये यत्कि-मपि ज्ञायते तत्सर्वमपि पदार्थेऽन्तर्भवति। स च पदार्थो द्विधा भवति। भाव-रूपपदार्थो, अभावरूपपदार्थ इति। भावस्तु "द्रव्यगुणकर्मसामान्य-विशेषसमवायेति नामभिः षोढा, द्वितीयस्तु अभावपदार्थः प्राग्ध्वंसात्यंतान्यो-न्याभावभेदैश्चतुर्धा भवति। न च पदार्थभेदेषु शक्तिसादृश्यावपि पृथक् पदार्थाववगणनीयौ। तयोरभावसामान्ययोरंतर्भावसत्वात्। एवं भावभेदेषु प्रथमो भेदो द्रव्याख्यः। 'गुणानामाश्रयो द्रव्यं कारणं समवायि च'। चरके तु "यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्। तद् द्रव्यम्"। ईदृग्लक्षण-विशिष्टं द्रव्यं पृथ्वीजलतेजोमरुद्व्योमकालदिग्देहिमनांसि चेति नवधा। चरके तु 'खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः'। नवद्रव्येष्वाद्यानि, पंचद्रव्याण्येव पंचमहाभूताभिधानेनाभिधीयंते। पंचानां महाभूतानां नित्या-नित्यौ इति द्वौ भागौ भवतः। तदनु पुनरनित्योपि महाभूतपंचभागस्त्रैविध्यं भजते शरीरविषयभेदात्।

पृथिव्यब्मरुद्व्योम्नां विषयाः सामान्याः। परंतु तैजसो विषयः पुन-श्चतुर्धा विभज्यते १ भौमो (वन्ह्यादिः) २ दिव्यो ( विद्युदादिः ) ३ औदर्य ४ आकरजः (सुवर्णादिः)। एवं तेजसो विषयस्य तृतीयो (औदर्यः) भेदः-

पुनरपि जठराग्निनैकेन, धात्वग्निभिः सप्तभिः, भूताग्निभिः पंचभिश्च त्रयोदशधा भवति । एवमाहारद्रव्येषु पृथ्व्यप्तेजसो विषया भवंति ( यद्यपि तत्र मरुद्-व्योम्नोरप्यंशोस्ति परं सोऽव्यक्तोऽणीयांश्च भवत्यतः प्राधान्येनोपर्युक्तानामेव ग्रहणं कृतम् ) । यदा स आहारो भुज्यते तदा सर्वतः पूर्वं जठरे तस्य जठ-राग्निना पाको भवति । ततो जाठराग्नेः प्रभावात् पक्वस्य तस्य प्रसादकिट्टात्मकं विभागद्वयं जायते । एवमाहारस्य यः प्रथमोभागः प्रसादाख्यो ( रसाख्यः ) वर्तते, तस्य पुनरपि रसाग्निना पाके सति, स सूक्ष्मस्थूलकिट्टभेदैस्त्रैविध्यं भजते । प्रथमो भागो रसं पुष्णाति । द्वितीयः स्थूलभागो रक्ते विपरिणमते । एवं तृतीयो भेदः किट्टाख्यः कफे विपरिणमते इयमस्ति कफस्योत्पात्तिशृंखला । अत्रोत्पत्तावपि दृष्टिन्यासेन कफस्य भूतसंघातजत्वं सिध्यति । तंत्रांतरे 'कफः केन जलेन फलतीति कफः । निष्पत्त्यर्थकभौवादिकपरस्मै-पदस्य फलधातोर्डः प्रत्ययः । यद्वा ' के शिरसि फणति फक्कति वा ' अत्रापि फणफक्कयोर्डः प्रत्ययः । 'कं वारिशिरसोरिति' विश्वकोषे दर्शनात् कमिति शद्बस्य जलं शिरो वा अर्थो भवति । श्लिष्यतीति श्लेष्मा, श्लिष् आलिंगनेऽत्रमनिन् प्रत्यय इति भानुजीदीक्षिताः ॥ ' बलासस्तु बलमासमंतात् सुनोतीति ' षुञ्-अभिषवे इत्यस्माद्धातोरस्य सिद्धिः ॥ कफः श्लेष्मा बलास इति शद्बा मिथः पर्याय-वाचका वा अपर्यायवाचकाः ? इत्यत्र विचारे कृते, द्विधैव स्वीकुर्वंत्याचार्याः । परंत्वेतेषां नामपरिभाषायां दृष्टिक्षेपेणेदमवगम्यते यत् इमे पृथक् पृथक् संतीति । इदमत्राभिसंधानं यत् कफ एव स्थानभेदेन पंचधा विभक्तोऽस्ति, अतस्तेषु स्थानभेदेन भिन्नेषु कफभेदेषु विविधस्थानसत्वाद्भिन्नभिन्नपर्यायैरुक्तः स्थानकर्म-भेदैर्भिन्नः कफः संपूर्णतया शरीरे कियान् परिमितोऽस्तीति सम्यक्तया नैवावधारयितुं शक्यते । यतो हि जगति नानाप्रकाराणि खलु संति शरीराणि केषांचित् सूक्ष्माणि, केषांचित् स्थूलानि । एतस्मात्कारणांतरैश्च त्वस्योपचयापच-यसत्वाच्च नास्ति सर्वेषामपि दोषधातुमलानां परिमाणं—इदमेवाह भगवानात्रेयः—

" वैलक्षण्याच्छरीराणामस्थायित्वात्तथैवच ॥
दोषधातुमलादीनां परिमाणं न विद्यते " ॥

परंतु ये मानवाः समधातुमलदोषा भवंति तेषां शरीरे कफस्य षडंजलयो भवंति । यथोक्तं सुश्रुतेन—

रसस्य नव विज्ञेया जलस्यांजलयो दश ।
सप्तैव तु पुरीषस्य रक्तस्याष्टौप्रकीर्तिताः ॥
षट्श्लेष्मण इति ॥

अत्र सांप्रतं विचिकित्सा जायते यच्छरीरे इयान् श्लेष्मा वस्तुतो भवति नवेति । — यद्यपि पाश्चात्याः संधिषु श्लैष्मिकासु कलासु च श्लेष्मा भवतीति गण्यंते परंत्वस्य परिमाणं तैरपि नोपदिष्टं येन संगम्यास्माभिर्निर्णयः क्रियेत । परंतु 'स्थालीपुलाकन्यायेना'स्यैवं निर्णयो भवितुमर्हति । यदर्वाचीनाः स्वस्थशरीरस्य शतभागेषु पंचभागा रक्तस्य भवंतीति मन्यंते । एवं यस्य स्वस्थ-मानवस्य भारो २ऽ२० मितः स्यात् तस्य शरीरे ऽ२ परिमितं रक्तं भविष्यति । निष्कर्षस्तु ऽ२ परिमिते भारे ऽ२ परिमितं रक्तं भवतीति सिध्यति । एवमस्माकमाचार्याः स्वस्थपुरुषशरीरे तस्यैवाष्टांजलयो रक्तस्य भवंतीति मन्यंते । अतो यस्य भारः ऽ१ ऽ१ मितो भविष्यति तस्यांजलौ ऽ१ मितादधिकं रक्तं नैवागच्छति । एतस्मादष्टगुणितमेतत्परिमाणमपि ऽ२ मितमेव भवतीत्या-याति । अत इयदेव रक्तं स्वस्थशरीरे भवतीति सिद्धं । अनेन प्रकारेण रक्तविषये प्राचीनार्वाचीनमते मिथः संगच्छेते । एवं रक्तपारमाणविषयकः प्राचीनाचार्यैः कृतः सिद्धांतोऽक्षरशः सत्यः सिद्धो भवति । तथैव तैरेव कृतः कफपरि-माणसिद्धांतोऽपि स्थालीपुलाकन्यायानुसारं साधु सिध्यतीत्यत्र नास्ति विचिकि-त्सालवोऽपि । एवं शरीरे कफस्य षडंजलयो भवंतीति सिद्धांतो न व्याहन्यते ।

## पित्तविवेचनम् ।

" जगदीश्वरनिर्मितस्य सर्गस्य विभागद्वयं कर्तुं शक्यते । ययोः प्रथ-मस्याभिधानं सजीवसर्गः । द्वितीयस्य निर्जीवसर्गः । सजीवसर्गोऽपि वैज्ञानि-कैर्विभागद्वयेन विभज्यते । ययोरभिधानं प्राणिसर्गो वनस्पतिसर्गश्च । वनस्पतिषु

नास्ति संज्ञादिकमिति वक्तुं न च शक्यम्। भक्षणत्वात्समीकरणत्वात्संतत्युत्पादनसमर्थत्वाद् वर्धनत्वात् श्वसनक्रियासत्वाच्चेष्टाज्ञानसंज्ञावत्वाच्च । 'अंतःसंज्ञा भवंत्येते सुखदुःखसमन्विताः' इति स्मरणाच्चास्ति सजीवपरिचायको हेतुव्यूहः । एषु प्राणिसर्ग एव शरीरीति नाम्ना वक्तुं प्रभूयते । शरीरं च दोषधातुमलमूलं भवति । 'दोषधातुमलमूलं हि शरीरं' अत्र पश्चिमीयास्तु धातुमलौ प्रत्यक्षत्वात्स्वीकुर्वंति, परम**प्रत्यक्षत्वा**द्विचारलभ्यत्वात् ज्ञानगोचरत्वाच्च दोषान्नानुमन्यंते। परं स्थूलशरीरस्य मूलभूतानि **द्रव्याणि** दोषधातुमलाः । इमे एव दोषा धारणाद्धातुषु मलिनीकरणान्मलेषु विपरिणमंते। धातुमलाभिधानेनाभिधीयंते वा । एवं दोषेषु त्रिषु पित्तमस्त्यन्यतमो दोषः । तच्चपित्तं शरीरे सर्वत्रव्याप्तमस्ति तथापि प्राधान्येन हृन्नाभ्यंतराले संतिष्ठते ।

पित्तविषये पश्चिमीयास्त्वित्थमाचक्षते । यत् हृदयस्य दक्षिणदिशि यकृदभिधेया शरीरवर्तिनीषु सर्वास्वपि ग्रंथिषु गरीयसी ग्रंथिर्वर्तते । सा च कुर्वती कार्यं यं रसमुत्पादयति तत्पित्तं—तदेव पाचकरसः। तस्य वर्णः पीतोहरितस्तस्य प्रतिक्रिया क्षारीया स्वादुश्चकटुः स्वभावेनैव च द्रवो भवति । तस्य गुरुत्वं षड्विंशदधिकसहस्रात् ( १०२६-१०३२ ) द्वात्रिंशदधिकसहस्रं यावद्भवति । इदं पित्तं दक्षिणवामभागाभ्यां नाडीद्वयद्वारा निर्गच्छति । नाडीद्वयं च पित्तस्रोतसीत्यभिधीयते । यकृद्द्वारि ते मिथो मिलतः । मिलित्वा च पित्तप्रणालिनाम्न्या नाल्या संभूय पित्तप्राणाल्यां विपरिणमेते । एवं यदा भोजनं पक्वाशये समेति, तदा तत्तत्स्थाने विचरत् पित्तं पित्तप्रणालिद्वारा पक्वाशये व्रजति, भोजनं पाचयति च। यदा अस्यानवश्यकता भवति तदेदं पित्तं पित्तस्रोतस्तः पित्तप्रणाल्यामगत्वा पित्ताशयिकीनलीद्वारा यकृत्संलग्ने पित्ताशये गच्छति। अस्य पित्तस्य अन्यान्यपि संति कार्याणि।

१ अनेन साकं संभूय क्लोमरसः स्वकीयं कार्यमाशु संपादयति । क्लोमरसस्य वसाविश्लेषणशक्तिरतिशेते ।

२ वसापाचने—आत्मीकरणे च पित्तमत्युपयुज्यते। यदा पित्तोत्प-

त्यभाव: कारणांतरेण चास्य पक्काशये गमनाभावश्च भवति, तदा वसा नैव पचति—निर्गच्छति च बाहुल्येन मलमार्गद्वारा बहि: ।

३ आमाशयादागते भोजने आशयस्थाम्लरसमहिम्ना तस्य प्रतिक्रिया अम्लीया भवति । तामिदं पित्तं क्लोमरसेन साकं संभूय स्वमहिमानेन क्षारप्रतिक्रियायां विपरिणामयति ।

४ पित्तस्यैव प्रभावो यदंत्रांतरीयपदार्थे ( पचनशीलपदार्थे ) अधिका विकृतिर्नैव जायते । यदा हि पित्तस्य न्यूनता भवति तदैव विकार: प्रादुर्भवति । शकृच्चातिदुर्गंधि भवति । इदमाधुनिकानां दिग्दर्शनं पित्तविषये । यत्पित्तमर्वाचीनैरुररीक्रियते तत् प्राचीनाभिमतपित्तस्यैकोंऽश: । पित्तांक: आयुर्वेदसंदेश । १९३२ जून ।

## वैद्यराज पूर्णानंदपंत आयुर्वेदाचार्य ( लोहोर )

समस्तसजीवनिर्जीवसृष्टया: स्थितौ सोमसूर्यानिलानां यथोत्पत्तिर्दृश्यते, तथाऽभ्यंतरिकरूपेण वातपित्तकफानां उत्पत्त्या शरीरसुस्थितिस्स्थापितेति दृश्यते । एतेषां त्रयाणां क्रमश: सर्वक्रियाकारित्वं, अनवश्यकानां पदार्थानां शोषणत्वोत्सर्जनत्वे, आवश्यकानां वस्तूनां उत्पादनत्वमिति कार्यं विद्यते । एतेषां त्रयाणां स्वसाम्येन शरीरस्य पालनपोषणकर्मणा धातुरिति, स्ववैषम्यावस्थया अत्यंतं विकृतिभावगामित्वेन, मलरूपतया परिवर्तनशीलत्वेन, ‘ मला ’ इति, तथा गर्भावस्थामारभ्य शरीरे स्ववास्तव्येन भिन्नभिन्नानां प्रकृतीनां निर्मित्या, तथाच रसरक्तादीनां दूषणेन, ‘ दोषा ’ इति संज्ञा ऋषिभि: प्रदत्ता वर्तते ।

सर्वे एव त्रिदोषा स्वे स्वे कर्मणि प्रधानत्वमायांति ।

श्लेष्मा—स च माधुर्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षण:, तस्य समानयोनिर्मधुरो रस:, स माधुर्यादिभ्यो माधुर्यादीनि वर्धयति । सु. सू. अ. ४२ । अयं श्लेष्मा शरीराभिनिर्वृत्तौ तथाऽभिवृद्धौ प्रधानतमोऽभिमत: । युनानीवैद्यके श्लेष्माणं

' बलगम् ' इति वदंति । पाश्चात्यवैद्यके तु यद्यपि श्लेष्मेति न कश्चन पदार्थो वर्णितस्तथापि ' एकजीवाणोः ' ( अमीबा ) शरीराभिवर्णनप्रसंगे तस्मिन् १ जीवोज २ चैतन्यकेन्द्रमिति पदार्थद्वयसत्वं वर्णयंति। अस्मिन् ' जीवोज '- इत्याख्ये द्रव्ये अधिकांशेन जलं तथा च ' प्रोटीन ' नामकं द्रव्यमपि शेष-पदार्थेषु अधिकतरं विद्यते । अयं च ' प्रोटीन ' इति पदार्थ एव श्लेष्मेति निःसंशयं ग्राह्यम् । स चाऽयं श्लेष्मा पंचप्रकारको विद्यते ।

## पुण्यपत्तनीय वैद्यभूषण गणेशशास्त्री जोशी महाशयाः

( स्वीये सिद्धौषधिप्रकाशे नाम्नि महाराष्ट्र भाषामये पुस्तके १९३३ )
अस्य ग्रंथस्य प्रथमे प्रकरणे प्रारंभे एव शरीरस्य पदार्थानां गणना कृता । तेषु न्यूनाधिकविचारेण ज्ञायमानानां त्रयाणां वातपित्तकफनाम्नां पदार्थानां येषां शरीरधारणाद्धातुवर्गे गणना कृतास्ति-तेषां वर्णनमतः प्रारभ्यते । इमे त्रयः पदार्थाः शरीरसूत्रचालकाः। शरीरनिर्माणसमयादेव शरीरस्थ–इतरपदार्थानामुत्पत्तिनाशौ एतेषामेव साहाय्येन भवतः । इमे त्रयोपि पदार्थाः स्थूलास्तथा सूक्ष्मा ( नेत्रेंद्रियेणादृश्याः ) द्विविधस्वरूपाः शरीरे वर्तंते । वातपित्तकफानां सूक्ष्मस्वरूपस्य वर्णनं अनुमानेनैव कर्तुं योग्यम् । आयुर्वेदसिद्धांतेन पंचमहाभूताश्च चैतन्यं इति यदा सह संगतं भवति तदा शरीरोत्पत्तिर्भवति । चैतन्यं नाम वस्तु, महाभूतेभ्योऽन्यत् तथा अवर्णनीयम् वर्तते । चैतन्यं विहाय पंचमहाभूतानामेव व्यवहारयोग्यं संक्षेपं कृत्वा, आकाशं वायुं–वायुमिति, तेजः पित्तमिति, जलं पृथिवीं च कफ इति, नामाभिधानं दत्वा महाभूतानां वर्णनं वैद्यके कृतम् । सृष्टेः कारणानि पंचमहाभूतानि यथा सूक्ष्मस्थूलस्वरूपाणि यथा सृष्टौ विद्यंते, तथैव वातः, पित्तं, कफ इति संज्ञया निर्दिष्टाः शारीराः पदार्थाः महाभूतस्वरूपाः संतः स्थूलाश्च सूक्ष्माश्च विद्यंते । वातपित्तकफान् शरीरधारणोपयोगित्वाद्यद्यपि धातव इति वदंति तथापि वैद्यके एतेषां पदार्थानां दोषसंज्ञया वारंवारं उल्लेखः कृतोऽस्ति । रसरक्तादिसप्तपदार्थानामपि धातुसंज्ञा वर्तते ।अत एव तेषां वातादीनां परिज्ञानं सहजसुलभं यथा भवेत्, तथा तेषां महत्वमपि सम्यक् शीघ्रं यथा ज्ञातं भवेत् तदर्थं वातादीनां

स्वातंत्र्येण दूषणात्मकं विशिष्टं स्वभावं लक्ष्यीकृत्य ग्रंथकारैर्दोष इति नाम प्रदत्तम् । स्थूलं सूक्ष्मं चेति एतेषां स्वरूपमस्तीति प्राक् कथितं, तथापि एतेषु वायुः स्थूलो ( दृष्टिगोचरः ) नैवास्ति । तस्य स्वरूपं तु सदा सूक्ष्ममेव ।

शरीरस्थं तेजमहाभूतं पित्तमिति कथ्यते । तत्स्थूलं सूक्ष्मं च विद्यते । यकृदादिकोष्ठांगेभ्यो बहिरागच्छत् पित्तं स्थूलम् । कांतिवृद्धिः, उष्णतोत्पाद, इत्यादीनां कार्याणां कारणं यत्पित्तं तत्सूक्ष्मम् । सर्वेषां पित्तानामाधारस्थानं पाचकपित्तं तत् प्रायो यकृतादभिनिष्क्रामति । पाचकपित्तेनैव इतरपित्तानां पोषकद्रव्यस्योपलब्धिर्जायते ।

पृथ्वीजलमहाभूतयोः शारीरपदार्थं 'कफ' इति वदंति । स च स्थूलसूक्ष्मोभयस्वरूपकः । उरसि, संधिषु च यो चिक्कणमसृणः पदार्थो विद्यते स स्थूलः कफः । सत्वगुणः, क्षमा बुद्धिः इत्यादीनां यः कारणं स सूक्ष्मः कफो विज्ञेयः ॥ पृष्ठ ३-७ ॥

## डॉ. बाळकृष्ण अमरजी पाठक एम्. बी. बी. एस्. अहमदाबाद.

इमे प्रत्यक्षशारीरे नाम्नि स्वीये गुर्जरभाषाग्रंथे पृष्ठेषु ३६६-३७० तमेषु अस्मिन्विषये टिपण्यां स्वमतं प्राददुः ।

आयुर्वेदस्य आत्मरूपभूतोऽयं त्रिधातुवादो वा त्रिदोषवादो मूलत अस्मिन्नेव देशे अजनि । प्राचीनग्रीकदेशीयैस्तथा यूनानैरस्य केवलमनुकरणमेव कृतम् । यद्यपि श्रेष्ठतरैर्वैद्यवरैः कृतेऽपि प्रयत्ने नायं वादोऽद्यापि आधुनिकदृष्ट्या पूर्णतया ज्ञातुं सुलभोऽभवत् । प्रायो वैद्या अनभ्यस्तशारीरेंद्रियविज्ञानशास्त्रा अस्मिन्विषये समापततो नैव यथावत् विज्ञापयितुं शक्ता भवंति । भवति च महान् मतभेदोऽस्मिन् विषये तेषाम् । भवतु प्रकृतमनुसरामः— किमपि वैद्यकशास्त्रं आयुर्वेदीयं वा आंग्लवैद्यकं वा भवतु, तस्य तु अनुभवैस्तथा अवलोकनेनैव निर्मितिरभवत् । तस्मिन् कल्पनाया वा केवलानुमानस्य तु अल्पोवकाशः । भिन्नानि भिन्नानि लक्षणानि वा विकृतीर्लक्ष्यीकृत्य तेषु

केषांचन लक्षणानां बह्वीषु विकृतिषु वारंवारं संभवमभिदृष्ट्वा तथा च तेषामपि उपशमनाय ये च प्रयोगा यशस्करा अभवन्, तानपि विचार्य विकाराणां वा चिकित्साया वा यश्च भवति निश्चयो, यश्च निर्गलति सामान्यो नियमः, तेनैव वैद्यकशास्त्रस्योत्पत्तिरभूदिति इतिहासो वर्तते । एकमेव विषयं द्वे शास्त्रे अन्यया पद्धत्या वर्णयंति । शारीरविज्ञानशास्त्रं, तथा इंद्रियविज्ञानशास्त्रं परस्परं सहाय-भूतं भवति । अंकगणितशास्त्रम् तथा अक्षरगणितशास्त्रं एकमेव विषयं भिन्नया रीत्या प्रतिपादयत् दर्शयति स्वपार्थक्यम्,तथापि प्रतिपादयति समानमेव विषयम् । एतेन दिग्दर्शनेन यदायुर्वेदशास्त्रं, तथा पाश्चात्यवैद्यकशास्त्रं वा, आधुनिकविज्ञानं वा, एकमेव विषयं भिन्नभिन्नप्रकारेण कथयतीति वाचकानामवगतं स्यादेव । परं आधुनिकविज्ञानरूपादर्शे अनेके सूक्ष्मा विचाराः परिस्फुटतया साकल्येन प्रतिबिंबिता दृश्यंते । आयुर्वेदीयं शास्त्रं द्विसहस्रवर्षात्प्राक्कालीनं यथाभूतं तथा-वस्थमेव अधुनापि विद्यते । अतः सर्वे विषयास्तस्मिन्नाधुनिकशास्त्रवत् विस्तार-स्फुटा नैवेति नाश्चर्यम् । तथापि द्वे अपि शास्त्रे रोगान्, तथा रोगमूलकारणानि, तेषां लक्षणानि, तथोपशमं च ज्ञातुं कर्तुं च प्रयतत एव । सूक्ष्मविचारेषु दृष्टिर-प्रदत्ता चेत् सामान्यतया द्वे अपि शास्त्रे वक्ष्यमाणविषयान् वर्णयंतीति दृश्यते—

### ( अ ) आधुनिकविज्ञानपरिभाषया—

१ मनुष्यशरीरे द्वौ अंशौ जडचैतन्यरूपौ विद्येते । यैः पदार्थैरियं बाह्या सृष्टिर्वर्तते, तैरेव पदार्थैरिदं शरीरमपि वर्तते । शरीरस्य सूक्ष्मातिसूक्ष्म-भागः कोषेति संज्ञितो ( सेल् ) विद्यते । अस्मिन् कोषे विद्यमानो जीवनरसः ( प्रोटोप्लॅझम् ) एतैरेव पदार्थैर्युक्तो वर्तते । तस्मिन् किमप्यस्ति पदार्थेभ्योप्य-धिकं, तत्तु कोषस्थितं चैतन्यम् । तेनैवाऽयं जीवति । चैतन्यरहिते तस्मिन् निष्क्रियत्वमुत्पद्यते । तत्स्थाश्च पदार्था बाह्यसृष्टौ संमीलिता भवंति ।

### ( ब ) प्राचीनानां परिभाषया—

२ अस्मिन् शरीरे सूक्ष्मस्थूलास्संति अवयवाः । इदं शरीरं पंचमहाभूतानां जडद्रव्याणां समुदायरूपं वर्तते । अस्मिन् वर्तमानाभ्यां मनआत्मभ्यां इदं

सर्वमपि शरीरं कार्यकृत् भवति । इमानि जडद्रव्याणि—पंचमहाभूतसंज्ञितानि नष्टे देहे पंचमहाभूतोत्पन्नसृष्टौ समाविष्टानि भवंति । सूक्ष्मावयवास्तु नेंद्रियगम्या ( कोषविषये--( सेल् ) नैव किंचिदपि सूचितम् ) ।

१ मनुष्यास्तथान्यप्राणिनो वृक्षावनस्पतयश्च सजीवसृष्टिरिति प्राचीनाऽर्वाचीनाभिमतम् ।

२ सृष्टौ विभिन्नाः पदार्थास्तथा विभिन्नाः शक्तयो दृश्यंते, आसु किमपि वर्तते गूढं तत्वम् । जडद्रव्यं तथा शक्तिरित्येतयोरंतिमस्वरूपविषये तथान्योन्यसंबंधविषये विद्यते मतांतरम् ।

३ (अ) आधुनिकभौतिकशास्त्रं, रसायनशास्त्रं च कथयति सृष्टेः पदार्थेषु मूलपदार्था ( एलिमेंट्स् ) द्विनवतिसंख्याका विद्यंते, यैरियं सृष्टिर्घटिता विद्यते । एतेपि द्विनवति पदार्थाः परमाणुशःच्छिन्नास्ते धनवाहीऋणवाहीत्युभयविद्युत्कणभूता ( पॉझिटिव्ह, निगेटिव्ह, प्रोटॉन्, इलेक्ट्रॉन् ) इति ज्ञायंते । इत्यनेन ते सर्वेपि विश्वव्यापिनो विविधरूपभूता इति ज्ञायते । तथैव विद्युत्, प्रकाशः, अग्निः इत्येताः—शक्तयोपि मूलत एकस्या एव शक्ते (एनर्जी) रूपांतर्भूता विद्यंते । मूलभूतं द्रव्यं, ( मॅटर् ) तथा च शक्तिः इत्येतयोरस्संबंधोऽत्यंतं निगूढो वर्तते । सोऽद्यापि अनेकैः प्रयोगैरपि ज्ञातुमशक्य एव इति भौतिकशास्त्रज्ञास्समामनंति ।

( ब ) प्राचीनैस्तु प्रकृतिः पुरुषश्चेति द्वौ संयुक्तौ सृष्टिमूलभूतौ इति निश्चित्य सृष्टेरयं कूटप्रश्नोऽद्घाटितो वर्तते । अस्या एव प्रकृत्याः पंचमहाभूतोत्पत्तिर्भवति । इयं हि प्रकृतिः पुरुषेणसह सजीवनिर्जीवसृष्टेरुत्पत्तिं करोति । अस्यैव विचारस्य सांख्यशास्त्रानुसरतः किमपि न्यूनाधिकत्वेनावलंबनं आयुर्वेदे कृतम् । अस्यां दृश्यमानायां विविधस्वरूपायां सृष्टौ मूलभूतं अगम्यं गूढमेकं तत्वं किमपि वर्तते इति परः सहस्रादब्दात्पूर्वमेव प्राचीनैर्ज्ञातम् ।

४ (अ) आधुनिकं शारीरशास्त्रं तु कोषाणां ( सेल्स् ) सूक्ष्मातिसूक्ष्मभागान् संगणय्य, तेषामेव समूहरूपमिदं शरीरमिति अधिगच्छति । तथैव सर्वमपि शारीरकार्यं सूक्ष्मकोषाणामेव व्यापार इति च कथयति । इमे कोषाः

स्वीयं संरक्षणं कृत्वा शरीरविषयकमपि कार्यं कुर्वंति। एकस्य कोषस्य प्रवृत्या सर्वशरीरस्यापि प्रवृत्तिरभिलक्षिता भवति। ( पिंडब्रह्मांडवत् )। कोषस्तु स्वीयं पोषकांशं रुधिराद् गृण्हाति। तथैवाऽनवश्यकं पदार्थं बहिरुत्सृजति। अंतर्बहिरूद्भूतेनाघातपरिणामेनोद्विग्नो भवति। स्वभावानुरूपां वृद्धिं, र्‍हासं च गच्छति। इमे कोषाः समूहरूपेण संगत्य शरीरधातूनभिरचयंति। अत इदं शरीरमपि निर्जीवसृष्ट्या भौतिकरासायनिकघटनानियमानेवानुसरति। अपेक्षते च केषुचिद्व्यापारेषु सजीवद्रव्यम्। तथापि मनःशरीरे परस्परस्मिन् अतीव परिणामं कुरुतस्तथा परस्परे नैव कदापि पृथक् भवतः।

( ब ) **प्राचीनास्तु**—शरीरं पंचमहाभूतोत्पन्नं समामनंतीति ऊर्ध्वमागतमेव। इमान्येव भूतानि शरीररचनायास्तथा धारणायाः स्थूलतया मूलभूतानि ( फिजिकल् बेसिस् ) तथा इंद्रियव्यापाराणामपि प्रवर्तकानीति मन्यंते। परंतु सजीवशरीरे प्राणिभूते वा वानस्पत्ये—ते शास्त्रविदो पंचमहाभूतानां मूलकारणत्वेन नामग्रहणमकुर्वंतो तत्स्थाने एतेभ्य एवोत्पन्नानां त्रयाणां वातपित्तकफरूपपदार्थानां स्वीकरणं कुर्वंति। अन्यया पद्धत्या कथ्यमाने तु इयं सजीवा सृष्टिर्वातपित्तकफैरेव निर्मिता वर्तते। इमे शरीराधारकत्वात् त्रयः पदार्था धातव इति संज्ञ्यंते। शरीरस्य सर्वा अपि क्रियास्त्रिधा विभक्ता एतेभ्यस्त्रिभ्य एव जायंते। यथा बाह्यसृष्टौ मूलपदार्थाः पृथक् पृथक् परिमाणेन संमिश्राः संतो अनेकेषां पदार्थानामुत्पादका भवंति, तथा इमेऽपि त्रयो धातवः परस्परं न्यूनाधिकाः संमिश्रिता भूत्वा सप्तधातुरूपेण मूर्तस्वरूपं स्वीकुर्वंति। एवं कृते विचारे अर्वाचीनाः शरीररचनायां स्थूलात् बाह्यस्वरूपादंतस्स्वरूपं विचारेण गताः तथा प्राचीनास्तु अंतस्स्वरूपात् बाह्यस्वरूपं समागता इति लक्ष्यते।

## विद्यावाचस्पति श्री शालग्रामशास्त्री साहित्याचार्य

विद्याभूषण वैद्यभूषण कविराज लखनौ, संवत् १९८९ एतैः पंडितैः मध्यप्रांतीय द्वितीयसंमेलनावसरे अकारि भाषणम् सभापतित्वेन तस्मिन् भाषणे—इमं विषयमुद्दिश्य विचाराः स्वीयाः प्रदर्शिताः—

ब्रह्मणा सृष्टेरारंभे एकलक्षमितैः श्लोकैः, तथा एकसहस्राध्यायैरायुर्वेद आविष्कृतः। अस्य अष्टौ भागा अल्पविद्धितार्थाय कल्पिताः। आयुर्वेदस्य वेद इव महत्वं वर्तते। सांप्रतं उपलब्धसंहितास्तु नैव आयुर्वेदस्य आदिमो ग्रंथः। न तासु सर्वांगाणामायुर्वेदस्य वर्णनं विद्यते। कायचिकित्सायाश्चरकः शल्यचिकित्सायास्सुश्रुत इति तु प्रसिद्धमेव। आयुर्वेदे सर्वेष्वेव विचारेषु वातपित्तकफानामेव वैशिष्ट्यं वर्तते। सर्वेष्वेवायुर्वेदांगेषु त्रिधातूनामेव प्रधानतया जायते दर्शनम्। अस्मिन् विंशतितमे शतके विज्ञानस्य दुंदुभिध्वनिस्सर्वत्र श्रूयते। नवनवैस्साधनैः शरीरस्य अंगप्रत्यंगानां रचनाक्रमस्तथा तेषां कार्यकलापः सम्यक्तया परिज्ञातो विद्यते। कीटाणूनां अत्यंतात्यंतसूक्ष्माणामपि सूक्ष्मदर्शकयंत्रेण भवति दर्शनम्। परं वातपित्तकफानां दर्शनं पूर्णशक्तिसंपन्नैस्सूक्ष्मदर्शकयंत्रैरपि न भवति। अतः को विश्वासं कुर्यादेतेषामस्तित्वे ?। आधुनिकास्तु पिशाचवत् एतेषामस्तित्वं केवलं काल्पनिकमेव मन्यंते। भाषंते भिषजो वातपित्तकफानां कथाः, श्रावयंति च परान्, तथापि न तैः स्वयं प्रत्यक्षीकृता न वा परेभ्यः प्रदर्शिताः। अथ च आयुर्वेदस्य मूलाधारभूता एव ते। अतोऽयं आयुर्वेदस्सुतरामशास्त्रीय—( दि ग्रेटेस्ट अन्सायंटिफिक सिस्टिम् इन् इंडिया ) एव। ( अतः परं पंडितवरैरनेके अपरे चाक्षेपा उत्थापयित्वा पूर्वपक्षस्य स्थापनं कृतम्। अनंतरं च उत्तरे पक्षे उत्थापितानामाक्षेपाणां खंडनमपि चाकारि शोभनैस्तर्केतिहाससत्ययुक्तासिद्धांतैः ) सर्वप्राचीने ऋग्वेदे आयुर्वेदीयस्य त्रिधातुवादस्य स्पष्ट एव उल्लेखो वर्तते यथा—"त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरुत्तमद्भ्यः। ओमानंशंयोर्मकायसूनवे त्रिधातुशर्म वहतं शुभस्पती ॥ ऋक् १-७-३४-६ ॥ अस्मिन् त्रिधातुशद्वस्य व्याख्यायां श्रीसायणाचार्याः " त्रिधातुः " " वातपित्तश्लेष्मधातुत्रयशमनविषयम् " इत्यनेन अयं त्रिधातुवादो नैव 'यूनानवैद्यकाद्वाऽन्यस्माद्वाऽयमागतः किंतु अस्योत्पत्तिस्तु वेदे एव बभूव। वेदस्य चायुर्वेदस्येऽयं स्वीया संपत्तिर्विद्यते इति।

तैत्तिरीयोपनिषदि द्वितीयवल्यां ( ब्रह्मानंदवल्ली ) प्रथमे अनुवाके सृष्टि-

क्रमस्य निर्देश एतादृशो विद्यते--" आत्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः" । एतादृशोऽयं पुरुषोऽन्नरसमयो विद्यते। अस्य पुरुषस्योत्पत्तौ अन्नस्य रसः प्रचुरपरिमाणेन कारणं भवति। विवेचनपूर्वकया दृशा यदि दृष्टंचेदस्यां श्रुतौ यः पुरुष उक्तः स एव आयुर्वेद-मूलतत्वभूतश्चिकित्सापुरुष एव प्रतीतो भवति। " षट्धातवः समुदिताः पुरुष इति शद्बं लभंते। तद्यथा पृथिव्यापस्तेजोवायुराकाशं ब्रह्मचाऽव्यक्तमित्येत एव षड्धातवः समुदिताः पुरुष इति शद्बं लभंते " ॥ ५ ॥ चरक शारीर-अ. ५ ॥ " हिताहारोपयोग एक एव च पुरुषवृद्धिकरो भवति " ॥ च. सू. " यतोऽभिहितं पंचमहाभूतशरीरीसमवायः पुरुषः ( अ. २५ ) इति। स एष कर्मपुरुषश्चिकित्साधिकृतः" ॥ १६ सु. शा. अ. १ ) इत्यनेन उपनिषदुक्तोऽन्न-रसमयः पुरुषस्तथा चिकित्सापुरुष एक एवेति स्पष्टं भवति। अस्यांश्रुतौ अस्यैवैकस्यात्मनः सकाशात् समस्तजडचेतनजगदुत्पत्तिर्भवतीति प्रतिपा-दितम्। वेदांतसिद्धांतस्य एतावानेव विशेषो यदात्मा जगदुत्पत्तौ उपादानकारणं तथा निमित्तकारणमस्तीति मनुते तच्छास्त्रम्। अस्य सिद्धांतस्य " अभिन्ननि-मित्तोपादानता " एव ध्येयं वर्तते।

आधुनिक विज्ञानं ( सायन्स ) अधुनैव एकेनैव वस्तुना संपूर्णा सृष्टि-रुत्पन्ना इति विश्वसिति। यदा इदं विज्ञानं, " ऐटम्स् " इत्यस्मिन्नेव स्थिर-मभवत्तदा शताधिकानि मूलतत्वानि मूलकारणमिति कथयतिस्म। परं यदा ' इलेक्ट्रान् ' इत्यस्याभवज्ज्ञानं तदा इमानि शतादधिकानि मूलतत्वानि रजसि समाविष्टान्यभवन्। तथापि आत्मन अस्तित्वविषये नाद्यापि विश्वासं धत्ते इदं विज्ञानम्। सांप्रतं आत्मविषयकं विचारं उत्सृज्य वैदिकभौतिकविज्ञानयोर्यत्र नास्त्यंतरं तस्मिन्नेव विचारे किंचिद्ब्रूमः।

आत्मनः प्रथमः परिणामो वा विवर्तो वा आकाशः, तदनंतर स एव वायुरूपस्तेजरूपो, जलरूपः, पृथिवीरूपः, परिणतो जात इति श्रुत्यर्थः।

भौतिकविज्ञानमपि सर्वमपि वस्तुजातं कस्मादपि एकस्मान्मूलतत्वादुत्पन्नमिति ब्रूते। इदं मूलतत्वं 'ईथर' नामकं विद्यते। इदमेव वैदिकभाषायां आकाश इति शब्दितम्। शब्दभिन्नत्वेपि तत्वैकत्वं वर्तते उभयशास्त्रे। तथैव शक्तिशालि-दूरदर्शकयंत्रेण विज्ञानविद्भिरिदं निश्चित्योद्घोषितं, वियति अनेकानां तारकाणां पुंजो वर्तते। यश्च केवलं बाष्पमयोऽद्यापि वर्तते ( गॅस् )। यं वयं आकाशगंगेति कथयामः। सोप्यस्मादीथरनामकादेवोत्पन्नो भवेच्चेत् आकाशाद्वायुरित्यपि विज्ञानाभिमतमेव भवेत्। वर्तमानां वायवीयदशां उत्सृज्य घनीभूतावस्थां स तारापुंजो तेजोमंडलरूपतां यास्यतीति विज्ञानाभिमतमेव। वर्तमानसहस्ररश्मि-रस्यामेवावस्थयां सांप्रतं वर्तते एव। एतेन वायोरग्निरित्यपि आगमप्रोक्तं विज्ञान-सिद्धमेव। विज्ञानं कथयति इयं पृथ्वी प्रारंभदशायां सूर्यस्यैव एकोऽवयव आसीत् ( नेब्यूला )। स चाकाशे भ्राम्यमाणस्तीव्रतरगतियुक्तोऽवर्तत। स चानेकवर्ष-सहस्रं भ्राम्यमाणोऽधिकतरो घनस्संवृत्तः। तस्य च यो मध्यो अवयवस्स सूर्यः। ये चान्ये घटकावयवा आसन्, त एव बृहस्पतीशुक्रचंद्रमापृथिवीरूपा बभूवुः। अस्मात्तेजरूपगोलात् ( नेब्यूला ) त्रुटिता पृथ्वी, पूर्वं अत्यंतं उष्णद्रवरूपा आसीत्। तदानीं ज्वालापर्वतोत्पन्नद्रावद्रवात्यंतोष्णद्रवरूपपदार्थस्य समुद्र एवावर्तत पृथ्व्याम्। अनेन अग्नेराप इत्यपि श्रुतिवचनं विज्ञानसंगतमेव। पश्चा-दस्मादेव तरलोष्णद्रावपदार्थसमुद्रादेव कालांतरेण शीतरूपता प्राप्या इयं सघना पर्वतमयी पृथिवी निर्ममे। यश्च तस्यां बाष्परूपः पदार्थ आसीत् स जल-रूपेण परिणतोऽभवत्, अत अद्भ्यः पृथिवीत्येतदपि संगतमेव। अस्मद्वैदिक-मतानुसारेण स च नेब्यूला केवलं वायोर्विशुद्धस्वरूप एव नासीत्। अस्याः पूर्वदशा वायोरेवासीत् परं वर्तमानदशायां अस्मिन् क्रिया वायोरेव। ऊष्णता तु अग्नेरेव। अत अस्मिन् अग्निरूपपरिमाणे वायोरस्तित्वं वर्तते एव। तथा च ऊष्णद्रवसमुद्ररूपपदार्थेऽपि नैव विशुद्धजलस्यावस्थितिरपि तु अस्मिन् क्रियाशक्तिर्वायोरूष्णता तु अग्नेर्विद्यमाना वर्तते, अतएव अस्मिन् जले सापेक्षतया तरलत्वं घनत्वमपि वर्तते। एवं वैदिकभौतिकविज्ञानद्वारा आकाशादारभ्य पृथ्वी-पर्यंतं यथाक्रमं उत्पत्तिक्रमः समर्थितो जायते। कार्यरूपा पृथिवी स्वीयेभ्य उपा-दानकारणेभ्यो वाय्वग्निजलेभ्यः पृथक् क्षणमपि स्थातुं न शक्ता भवति। किमपि

कार्यं वस्तु, स्वोपादानकारणं विना न हि तिष्ठति । 'पृथिव्या ओषधयः, ओषधिभ्योऽन्नं, अन्नात् पुरुषः, इत्यादि सर्वमपि पृथ्व्याः कार्यजातं अतः पार्थिवमेवास्ति । व्यक्त जगति तत्वांतरोत्पत्तौ सामर्थ्यं वाय्वग्निजलानामेव विद्यते। पृथिव्यां गतिमत्वम्, परस्परसंयुक्तत्वं, उष्णता च या विद्यते ते यथाक्रमं वाय्वग्निजलानामेव गुणाः । यथा पृथिव्यामेतेषां त्रयाणामावश्यकत्वं तथा तेषां साम्येनावस्थितिरपि आवश्यिकी । एतेषां हीनाधिकरूपेण वैषम्यं पृथिव्यास्स्व-स्वरूपविकृतये भवेत् । यथा पृथिव्यास्तथा वनस्पतीनामपि स्थितिर्विद्यते । क्रियाशक्तिः, पाचनशक्तिः, संघातशक्तिः, ( वाय्वग्नि जलानां ) यदि वानस्पत्येषु न स्यात्तदा नैव जीवेयुरेते । वृक्षास्तु शिफाभिः पृथिव्यास्सकाशाद्रसाकर्षणं कुर्वंति । एकमेव रसं समाकर्षंतो वृक्षाः, समानमेव जलं पिबंतो वृक्षा, मधुरा-म्लतिक्तकटुकषायरससंपन्नफलादयो भवंति । अस्य कारणं तु तेषां पाचन-संस्थानस्य वैभिन्यमेव वर्तते । रसाकर्षणे आकर्षणक्रियायाः—वायोः—अस्य रसस्य पाचने—अग्नेः—तथा स्वाऽवयवसंघटने—पुष्ट्यै—जलस्य यथा आवश्यकता तथा तेषां यथाप्रमाणेनैवावस्थानस्यापि वनस्पतिषु दृश्यते । यथैव वनस्पतिषु तथैव अस्माकं शरीरेऽपि । अस्माकं शरीरं पार्थिवं तथापि क्रियापाचन-संघातेतिशक्तित्रयं विना अस्यास्तित्वमपि नैव संभवति । हृदयस्य गतिः, मस्तिष्कसंचालनं, आमाशयस्थूललघ्वांत्रयकृत्प्लीहावृक्कादीन्द्रियाणां क्रियाः, रक्तशोधनक्रिया उरस्थलीया, इमाः सर्वाः क्रिया वायोरेव प्रधानतमं कार्यम् । स च वायुर्व्यक्ताऽव्यक्त एव । अस्माकं शरीरे बाह्येभ्यः पदार्थेभ्यो गृहीतस्य भोजनस्य पचनं शरीरस्थोष्णतया भवति । बाह्यं वस्तु शरीरे प्राप्तं, डायजेशन्, तथा ऑक्सिडेशन् क्रियांविना शारीरांगरूपं नैव भवति । परिवर्तनं शारीरोष्ण-तांविना नैव भवति । अतः शरीरे अग्निं विना पाचनमपि दुर्घटमेव । अत इदमेवासिद्धं यदस्मदर्थमपि वाय्वग्न्योरावश्यकता अनिवार्यरूपेण वर्तते इति । जलस्य वा संघातशक्त्यास्तु आवश्यकता इयती स्पष्टा विद्यते, यस्याः प्रति-पादनं निरर्थकमेव । तैत्तिरीयश्रुतौ सृष्टिप्रसृष्टिप्रक्रियायां वाय्वग्निजलनाम्ना यत्कारणं निर्दिष्टं, तथा च येषां प्रतिपदार्थस्थित्यै नितरां विद्यते आवश्यकता ।

एतेषामेव धातुरिति विद्यते संज्ञा । ते धारणकर्मणा धातव इति निगद्यंते । ऋग्वेदे इमे हि त्रिधातवो वैद्यके च एतेषामेव वातपित्तकफा इति नाम ।

वायोस्तु वेदे आयुर्वेदे च नामैकत्वं वर्तते । पित्तस्य विषये सुश्रुतेन लिखितं पित्तमेवाग्निरिति । पित्तस्यैव नाम अग्निरिति । अग्नेर्दहन—( ऑक्सिडेशन्, डायजेशन् )—पाचनादिगुणाः पित्ते एव विद्यमानास्संति । श्लिष् धातुना श्लेष्माशद्बस्योत्पत्तिर्विद्यते । यस्य अर्थोमिलनं, एकत्रकरणं, संयोगः । जलस्यायं विशिष्टो गुणो येन शरीरं अंगप्रत्यंगसंश्लिष्टं भवति । अस्य च स्थानमामाशयः । यस्मिन् कतिप्रकारका द्रवा भोजने मिश्रिता जायंते ।

सारांशस्तु दृश्यं जगत् तथा वस्तुजातं आकाशात् (इथर) उत्पन्नं भूत्वा वाय्वग्निजलरूपेण परिवर्तितं सत् घनपार्थिवस्वरूपमगमत् । अतः प्रतिपार्थिवे द्रव्ये वाय्वाग्निजलानां स्वरूपं क्रियास्तथा गुणाः सार्वकालं विद्यमाना भवंति। पिंडब्रह्मांडधारका इमे हि त्रिधातवः । एतेषां आधिदैविकं रूपं सोमसूर्यानिलात्मिकं, आधिभौतिकं रूपं वाय्वग्निजलात्मकं, आध्यात्मिकं रूपं वातपित्तकफात्मकम् । आयुर्वेदे अनेनैव कारणेन स्थूलजगत्स्थितपदार्थास्त्रिधातुव्याप्ता इति लिखितम् । सृष्टौ एकोपि एतादृशः पदार्थो नैव लभ्येत यस्मिन् वाय्वग्निजलानि वा वातपित्तकफा नैवोपलभ्येयुः । अनेनैव कारणेन आयुर्वेदे वातपित्तकफास्सर्वशरीरचरा उक्तास्तथा तेषां विशिष्टस्थानान्यपि उक्तानि । सुश्रुते अमाशयः कफस्य स्थानम् । आमाशयस्य पार्श्वतो नाभेरुपरि पित्तस्य स्थानं, श्रोणीगुदौ वातस्थानं उक्तम् । अस्य वातस्थानस्योर्ध्वं नाभ्या अधः पक्वाशय उक्तः सुश्रुते। अमाशये भोजनं गत्वा जलद्रवैः प्रक्लिन्नं भवति । तत्र च तस्य संघातो भिन्नो भवति । अद्यतनीयं शास्त्रमपि ( सायन्स् ) अमाशय--( स्टमक् )—भित्तिस्थग्रंथिभ्यो निर्गच्छद्रसो भोजने संमिश्रो जायते । अस्मिन् रसे पेप्सिन्, हायड्रोक्लोरिक ॲसिड् इति द्रव्यं प्रधानतमं विद्यते । अस्मिन् द्रवे अम्ललवणौ रसौ विद्येते । चरके मधुराम्ललवणरसाः कफधारका उक्ताः । अतो यत्र जलाम्ललवणानामाधिक्यं, तथा तदुत्पन्नक्रियाणामपि यत्प्रधानं स्थानं तत् कफस्य स्थानं कथं नैवोक्तं भवेत् ? ।

आमाशयस्य दक्षिणभागे वर्तते एकं छिद्रं, यस्मिन् मिलितं सलग्नं क्षुद्रांत्रं अधो भागे गच्छति, अस्य क्षुद्रांत्रस्य प्रारंभिको द्वादशांऽगुलिमितो ऊर्ध्वादधः किंचित्वक्रतांगतो भागो ( डियोडिनम् ) विद्यते, यस्मिन् भवति पाचनी क्रिया। तमेव पित्ताशयः, पाकाशयः, पाचनसंस्थानमिति कथ्यते सुश्रुतेन। नाभ्यामुपरि ' डियोडिनम् ' गृहीत्वा क्षुद्रांत्रस्यान्यस्संपूर्णो भाग आगच्छति। पित्तस्य प्रधानं कार्यं पाचनं, ( डायजेशन् ) दहनं, ( ऑक्सिडेशन् ) शोषणं, ( ॲसिमिलेशन् ) भेदनं इत्यादि कार्यं अस्मिन्नेवस्थाने भवति। पित्तकोषस्य रसः अग्निधराकलाक्षारः ( पँक्रियाटिक् जूस् ) अस्मिन्नेव स्थाने भोजने संमिश्रो भवति। चरकसुश्रुताभ्यां क्षार " आग्नेयः " कथितः। तथा दहनपाचनविलयनशोधनशोषणभेदनादिकाः क्रियाः क्षारस्य निर्दिष्टाः। इदं सर्वं कार्यं क्षुद्रांत्रे एव भवति। शरीरस्य पालनपोषणकरणार्थं भोजनस्य रसे परिवर्तनं अस्मिन्नेव स्थाने प्रधानतया भवति। अत इदं स्थानं पित्तस्य प्रधानं स्थानं नैव कथं स्यात्?। अस्यैव पित्ताशयस्याग्रे बृहदंत्र वर्तते ( लार्ज इंटेस्टाइन् )। अस्मिन् संजातपित्तकार्यं वस्तु आगच्छति। अस्य अंतिमद्वादशांगुलिमितो भागो वायोः प्रधानं कार्यस्थानं विद्यते। आधुनिकास्तु 'रेक्टम्' इति यत् कथ्यते तदेवेदम्। आमाशयस्तु स्वस्मादनेकप्रकारकान् रसान् विसृजति ( विसर्गः )। पित्तायशस्तु समागतेभ्यो रसेभ्यः शरीरोपयोगि वस्तु आदत्ते ( आदानं )। तथा बृहदंत्रस्यांतिमो भागो मलस्योत्सर्जनं ( विक्षेपः ) करोति। इत्यनेन सुश्रुतवचनं " विसर्गादानविक्षेपैस्सोमसूर्यानिला यथा। धारयंति जगत् देहं कफपित्तानिलास्तथा " सुसंगतं विद्यतेति स्पष्टम्। एतावता विवरणेन ' तस्माद्वा एतस्मादित्यादिश्रुतिप्रतिपादितस्तथा ' 'षट्धातवस्समुदिताः पुरुष इति शद्बं लभंते ' इत्यादि चरकप्रतिपादितः पिंडब्रह्मांडसृष्टिक्रम एक एव। केवलं श्रुत्या ब्रम्हतो पृथिवीपर्यंतं, चरकेण च पृथिवीतो ब्रह्मपर्यंतं, आनुलोमप्रतिलोमक्रमस्वीकृतः। पिंडब्रह्मांडसृष्टिक्रमैक्यं चरकेण ' पुरुषोऽयं लोकसंमितः ' ' यावंतः पुरुषे भावविशेषास्तावंतो लोके, ' 'यावंतो हि लोके तावंतः पुरुषे ' इत्यनेन प्रतिपादितम्। सोऽयं त्रिधातुवादो जगत्कल्याणार्थमेव प्रकाशितो विद्यते। यस्मिन् सूर्यः, चंद्रमा, वायुः, कालः, दिग्, आकाशः,

पृथ्वी इत्याद्यारभ्य अत्यंतसूक्ष्मातिसूक्ष्मपरमाणुषु अंतर्हितो विद्यते। जडं च चेतनं च सर्वमध्यनेन व्याप्तम्। सर्वोऽपि प्रकृतिरनेन नियमिता वर्तते। इमे एव त्रिधातवो विकृत्यां वा विषमतायां त्रिदोषा इत्युक्ता भवंति।

## डॉ. मोरेश्वर नारायण आगाशे एल्. एम्. एस्.

प्रधानाध्यापक आर्यांग्लविद्यालय, सातारा.

'आंग्लीयेंद्रियविज्ञानमतेन वातस्य स्थानं मस्तिष्कं शिर इत्युक्तम्। आयुर्वेदग्रंथकारास्तु तन्नाभ्या अध उपदिशंति। सजीवप्राणिस्तु 'युनिसेल्युलर' अवस्थाया ( अमीबासदृशावस्थायाः ) 'मल्टिसेल्युलर' स्थितौ परिवर्तनशीलो विद्यते। तस्य अवयवानां वृद्धिरभिलक्षिता चेत्, तर्हि मानवस्य मस्तिष्कं सर्वेभ्योऽन्तिमं वर्तते इति आंग्लेंद्रियविज्ञाननिपुणेभ्यो ज्ञातमेव। किंबहुना मानवस्योत्पत्ते ऊर्ध्वमेव मस्तिष्कस्य परिपूर्णाभिवृद्धिर्भवतीति दृश्यते। अतो जीवितावस्थाया रक्षणे तथाच शरीरस्य इतरव्यवहारकरणे मस्तिष्कादन्यत्किमपि कारणं विद्यतेति सिध्यति। इदं कार्यं 'सिंपथेटिक्नर्व्ह' इत्याख्यया नाड्या भवति। ता एव इडापिंगला इति गृहीते चेत् तस्या जालं नाभ्योऽधस्ताद्वर्ततेति प्रत्यक्षशारीरेण दृश्यते। अतस्तदेव वातस्थानमिति निश्चेतुं नैव कोपि प्रमादो भवेत्। पित्तविषयेऽपि एतादृश्येव कल्पना सूचिता भवति। आर्यवैद्यके तु सर्वपदार्थानां दर्शनं दृक्स्थालोचकपित्तेन भवतीति वर्ण्यते। आंग्लवैद्यके तु तदेव ज्ञानं 'ऑप्टिक्नर्व्ह' इत्यनेन जायतेति वर्णितम्। परंतु तत्स्थं सूक्ष्मं शारीरमवलोकितं चेत्, 'रेटिना' इत्यस्य विद्यंते दशपटाः। अंतिमस्तु पटो 'रॉड्स्' तथा 'कोन्स्' इत्याख्यस्य वर्तते। तत्रैव प्रथमं रासायनिकक्रिया जायते। अनंतरं वस्तुदर्शनं भवति। प्रतिबिंबग्राहकेण ( फोटोग्राफर ) गृहीताः सर्वेऽपि काचफलकाः ( प्लेट्स् ) पूर्णावस्थायां नीयमानाः प्रथमं सर्वेऽपि सदृशा एवावलोक्यंते। न तत्र पार्थक्यपरिज्ञानं भवति। परंतु ते एव फलका रसायनद्रव्ये क्षिप्तास्तेषु भविष्यंत्या रासायनिकक्रियया ते भिन्ना भिन्ना अवलोक्यंते। इदमेव कार्यं 'रॉड्स्' तथा 'कोन्स्'

इत्याख्ये पटे भवति । तदेव रसायनं आलोचकपित्तमिति गदितुं नैव कोऽपि प्रत्यवायो विद्यते ।

तथैव हृदयं चेतनास्थानमित्यपि यथार्थं विद्यते । आंग्लवैद्यके तु चेतनास्थानं मस्तिष्कं वर्णितं । तत्र कतरत्सत्यमिति संदेहे केनापि योगिवरेण ध्यानधारणावस्थायां स्वकीयशरीरव्यापारास्तंभितास्तथा नाडीस्पंदस्तंभितोऽपि हृद्स्पंदस्तंभो नैव कर्तुं शक्य इत्यनेन हृदेव चेतनास्थानं प्रधानमिति वक्तुं युक्तम् । अपरं च आंग्लेंद्रियविज्ञानज्ञैस्तु हृदयस्नायुषु ज्ञाननाडीभिर्विना जीवितुं तथैव प्रसरणाकुंचनात्मकं कर्म कर्तुं विद्यते स्वतंत्रा शक्तिरिति प्रत्यक्षीकृतम् । अनेनाऽपि हृदयं चेतनास्थानमित्येव यथार्थमिति दृश्यते । अपरं च रसस्य रक्तत्वं यकृति भवति । अयं आयुर्वेदीयः सिद्धांतः प्रथमं परिहासयुक्तो भाति, तथापि पर्यालोचनया तदेव युक्तमिति दृश्यते । यकृतः क्षुद्रांत्रे परिवहत् पित्तं, पीतहरितं वर्तते अनेन रसरंजनं भवत्येव । पचनेंद्रियेभ्यो एकीभूतो रसधातुरशुद्धे रक्ते संमिश्रो भवति । इदं रक्तं हृदये गच्छत् प्रथमं यकृति समागच्छति । अनंतरं हृदयं गच्छति । रक्ताः शोणितकणाः स्वीये शरीरकार्ये संपूर्णे नष्टा भवंति । नष्टेभ्यो रक्तकणेभ्यो वर्तमानो लोहधातुर्यकृति संचितो भवति । पचनमार्गादागतं यकृति रक्तं बहिर्निर्गच्छत् तमेव लोहधातुं गृण्हाति । तेनैव लोहेन अस्थिस्थो मज्जधातुर्निर्मापयति रक्तवर्णान् शोणितकणान् । तथैव वर्द्धमाने गर्भे यकृदेव रक्तं निर्मापयति । शोणिते द्रवरूपेण संतिष्ठत् ' फिब्रिनोजेन् ' नामकं द्रव्यं, यकृति एव भवतीति आंग्लवित्संमतमेव । अनेन रसस्य रक्तत्वं यकृति एव भवतीति सत्यः सिद्धांतः ।

## पंडीत दुर्गादत्तशास्त्री आयुर्वेदशास्त्राचार्य (बनारस)

चतुर्विधं हि पांचभौतिकं षड्रसं द्विविधवीर्यं वाऽष्टविधवीर्यं अन्नपानं, मुखंगतेन प्राणवायुनाऽधः प्रणुन्नं, जिव्हामूलात् स्वरयंत्रपश्चाद्भागेनामाशयं गतयाऽन्नप्रणाल्या अमाशयमुलभ्यावतिष्ठते । तच्चादौ मधुरीभूतं किंचन प्रकृतितः प्रादुर्भूतं स्रावं ( गॅस्टिक जूस ) उदीरयत्, तद्युतं सततमेवोदकैर्गुणैर्भिन्नसंघातं

प्रक्लिन्नं यकृद्गताद्रक्तान्निसर्गतो विविक्तं पित्तं पित्तकोषमधितिष्ठत् तत्कोशसंसक्तेन हंसपक्षनालाकारेण स्रोतसा 'अग्न्यधिष्ठानमन्नस्ये'त्यनेन निरूपितां ग्रहणीं ( डियोडिनम् ) अधिष्ठाय समानाख्येन वायुना उद्दीपितं सत्पचति आमाशय-संकोचविकासाभ्यामधःस्थोऽग्निः स्थाल्यामोदनाय जलतण्डुलमिव द्रवीभावमापा-दयितुम्। ततश्च विदग्धतयाऽम्लभावमापन्नं द्रवीभूतं तदन्नपानं—आमाशयपार्श्वा-वलंबिना छिद्रेण अधो नयत् ग्रहणीगतेनाग्नेयरसान्वितेन पाचकाख्यपित्तेन सह मिश्रीभूय पक्वामाशयमध्यस्थायाः पित्तधरायाः प्राग्भागेऽवस्थितं पच्यते पित्त-तेजसा यथाकालम् ।

ग्रहणीसमाश्रितं हि पित्तं स्वस्रोतोमिलितमुखेन ग्रहणीपार्श्वांतःक्रोडा-वस्थिताग्न्याशय–( पँक्रियाज् ) संसक्तेन पृथक्स्रोतसा समागतेनाग्नेयरसेन ( पँक्रियाटिकजूस् ) अन्वितं सदेव विशेषेण पाचनाय कल्पते। इति तद्यु-क्तमेव पाचकपित्तमिति संज्ञां लभते, पक्वामाशयमध्यस्थस्यैव पित्तस्य पाचक-युक्तत्वेनाभिधानात् । एतच्च पाचकपित्तं—भुक्तमात्रस्य पाकारंभे निसर्गतः समुदीरितेनामाशयरसेन ( गॅस्टिक जूस् ) कफापरपर्यायेण प्रक्लिन्नमेव मधुर-पक्वमम्लतां गतमन्नपानं भुक्तमार्गार्गलभूतां क्षुद्रांत्रप्राग्भावस्वरूपां ग्रहणीं शनैः समाश्रितं पचति। इति रसरुपतया समुदीरितस्य कफस्यैवास्ति प्राक् पाचनसहा-य्यम् । एवंच—आमाशयगतस्यान्नस्य तत्रैव प्रकृतितः समुद्रिक्तेन मुखकुहरांतः सृणिकाग्रंथिचतुष्टय– [ सलायव्हरी ग्लँड्स् ]– स्रुतलाला– [ सलायव्हा ] स्रावकृतसाहाय्येनात्यम्लेन रसेन पाकारंभाय क्लेदनं भवति, ततश्चामाशयात् क्षुत्रांत्रप्राग्भागं शनैः समाश्रितमर्धपक्वमन्नपानं, तत्रैव पित्तकोषादागतं पित्तं आग्न्याशयादागत आग्नेयरसश्चेत्युभयमेव संमीलितमुखेन स्रोतोद्वयेन प्रसिक्तं पचति । इत्येवं निरूपितः प्रतीच्यसिद्धांतोऽपि प्राक्तनप्राच्यसिद्धांतेनैवानुगतो नाभिनव इति स्पष्टं प्रवक्तुं शक्यते ।

ततश्च क्षुद्रांत्रे पित्तधरायाः प्रागुक्तग्रहण्यतिरिक्तं देशं संप्राप्तं, सर्वतो भावेन विपक्वं, च तदन्नपानं तत्रैव पित्ततेजसा पोष्यमाणं क्षुद्रांत्रीयव्यापारेण

पक्वाशयं यातं, परिपिंडितपक्कं कटुभावमापन्नं, आमपक्वाशयचरेण वन्हिसंगतेन समानवायुना च विपाच्यमानं द्विधा विभज्यते रसमलभेदेन । ततश्च वायोर्बलमभिवर्धयति ।

क्षुद्रांत्रे ग्रहणीभिन्नदेशे निसर्गतः समुद्भूतो रसोऽपि [ स्यूकस् एंटरिकस् Succus Entericts ] प्रागुक्तपाचकपित्तोपलब्धबलो विशेषेण विपक्वान्नविद्रावणाय कल्पत। इत्याग्नेयगुणभूयिष्ठत्वात्तस्याऽपि पक्वाशयमध्यस्थत्वेन पाचकपित्ते एवांतर्भावः ।

एवं च क्षुद्रांत्रेषु पच्यमानस्यान्नस्य तदन्तःपर्याचिताभी रसांकुराभिराकृष्टरसस्य मलभागेन परिणतिः प्रारभ्यते । स्थूलांत्रस्यारंभदेशे च सा सर्वथा संपद्यते इत्येवं यः पाश्चात्यनयः सोऽपि प्राच्यैरुक्तदिशा पुरैव निर्दिष्ट इत्यभिन्न एवेति निर्देष्टुं शक्यते ।

इत्थं च विविच्य समुत्पन्नोऽन्नपानरस आमपक्वाशयांतः प्रसृतैः सूक्ष्मतरैः स्रोतोभिः पृष्ठवंशमनु नाभिसमप्रदेशस्थितं द्वादशमिरसवहस्रोतोमूलसंश्लिष्टं रसाशयं गत्वा यकृत्प्लीहानौ च प्राप्य पाकरागावुपेत्य हृदयाद्यभिमुखमुपैति । स चायं रसः कृत्स्नदेहचरेण रससंवहनोद्यतेन व्यानाख्येन वायुना 'व्यानेन रसधातुरित्युक्तदिशा विक्षिप्तो विभन्नमार्गस्वरूपैः परिभ्रमन्, सर्वान् धातून् पुष्णाति प्रीणाति च देहगतान्स्तान्स्तान् भावान् ।

अस्य चान्नपानरसस्य यो हि सर्वथा प्रीणनानुपयुक्तोऽसारभागः क्षारद्रवः स तु सूक्ष्मतरैः स्रोतोभिः पृष्ठवंशमुपगत एकादशद्वादशपर्शुकयोरुपकंठावस्थितं महाशिंबीबीजाकारं वृक्कद्वयमासाद्य तत्संसक्तेन बस्तिसंश्रितेन स्रोतोद्वयेन मुत्राशयं संप्राप्तो यथाकालमपानाख्येन वायुना प्रेरितश्चोपस्थमार्गेण बहिर्निर्याति देहकल्याणहेतवे । मलस्तु पक्वाशयारंभस्थानमुण्डुकाख्यमासाद्य मांसधरायां कलयां सर्वतो भावेन विड्रूपतया परिणतः स्थूलांत्रव्यापारेणापानवायुना च क्षिप्तो गुदमार्गेण बहिर्निर्याति ॥ वैद्यसंमेलनपत्रिका जुलै १९३२ ॥

## पं. वंशीधर जोशी आयुर्वेदाचार्य ( ग्वालेर )

वैद्यसंमेलनपत्रिका डिसेंबर १९३४.

**दोषाः**—दोषानाम वातपित्तकफाः । एते प्राकृतावस्थायां धातव इति विकृतावस्थायां च दोषा इति च निर्दिश्यंते । प्रकृतिमधिश्रित्यारोग्यं पालयंतो वा विकृतिमधिगत्य रोगान् वर्धयंतो वा त एते त्रयोऽपि खलु दोषाः सर्वदाऽप्याशरीरपातमशेषमप्याश्रित्य शरीरमधितिष्ठंते । प्राणिनां सजीवत्वं च ' नित्याः प्राणभृतांदेह ' इति पद्येन स्वाशयमाविष्करोति चरकमुनिः । वातादयस्त्रयो दोषा नित्याः रजस्तमसी तु न नित्ये । इति वातादिदोषत्रयस्य मूलतो हानौ न हि कश्चित्पुरुषो जीवती, रजस्तमसी मूलतो व्यपोह्य सात्विका मुनय इतरे च जनाः सुखेन सुचिरजीविनो जीवंतिस्म ।

खल्वेते वातादयः शरीरे द्विधा विलीनास्तिष्ठंति तत्र । तेषां ये सूक्ष्माः सारभूताः शरीरधारणचालनान्नविपाचनपोषणादिकारिणोंऽशास्ते प्रसादाः, शरीराबाधकरास्त्याज्यभागास्तु ( कफशिंघाणकपित्तद्रवापानवातप्रभृतयः ) विद्यंते मलभूता इति । एवं च प्रसादभूतेषु खल्वेव तेषु वातादिसंज्ञा मुख्या, मलभूतानां तु तेषां वातादित्वेनाभिधानं गौणमित्याचार्याणामाशयः । " शारीरधातवः पुनर्द्विविधाः संग्रहेण मलभूताः प्रासादभूताश्चेत्यादिना " ।

तथा च वायुः साधारणो मरुदेव, पित्तं नाम मुखादिनिर्गतं पीतद्रव्यमेव, श्लेष्मा नासादिनिर्गतो मलविशेष एव । साररूपेण प्रसादरूपेण वा विद्यमाना वातपित्तकफानां सूक्ष्मांशास्तिस्रः शक्तयः । मलरूपेण दृश्याः स्थूलांशाः दोषाणां किट्टांशाः ।

## ' त्रिदोषसिद्धांतः ' वैद्य चैतन्य देसाई मुंबई.

वैद्यसंमेलन पत्रिका ऑगस्ट १९३५.

वातपित्तकफादोषास्त्रयो धारकचालकाः ।
भूतभूता व्यापिनस्ते शरीरपरमाणवः ॥ २ ॥

**टीका**—' दोषा ' इति सामान्या संज्ञा । पंचमहाभूतोत्पन्ना भूतभूता । किंरूपा व्यापिनः । शरीरे परमाणुरूपेण तिष्ठंतः । अनेन दोषाणां प्रत्यक्ष-द्रव्यत्वं सूचितम् ।

भूतं किं रूपकं ? तत्तु प्राचीनैः परिकल्पितम् ।
इंद्रियारंभकं द्रव्यं गृहीतं पंचवर्गकम् ॥ ३ ॥

**टीका**—भूतमिंद्रियद्रव्यं, चरकोपि पंचमहाभूतानि, पंचेंद्रियद्रव्याणि, इति कथयति । ते पंचवर्गाः पंचमहाभूतानि । तेन द्रव्यविज्ञानोक्तमूलद्रव्यैः सह केचिन्महाभागा महाभूतानि तुलयंति, तन्न साधु । द्रव्यविज्ञानोक्तमूल-द्रव्याणि तु ( केमिकल् एलिमेंट्स् ) प्रत्यक्षसिद्धानि । भूतवादस्य विज्ञान विरुद्धत्वं कथयति ।—

विज्ञानविरूद्धत्वात्त्याज्यास्यात् भूतकल्पना ।
दोषास्तस्माद्धि द्रष्टव्या प्रत्यक्षद्रव्यमेलकाः ॥ ४ ॥
शक्तेर्द्रव्याधिष्ठानत्वात्, दोषास्तु शक्तिरूपकाः ।
केवलाश्चेति यैरुक्तं आगमस्तैस्तिरस्कृतः ॥ ५ ॥

**टीका**—दोषशक्तिवादं दूषयति । दोषाणां केवलशक्तिस्वरूपत्वं प्रत्यक्षा-नुमानागमविरुद्धमतएव त्याज्यम् । अधुना प्रस्तुतदोषविषयस्य ये विभागाः शारीरविज्ञानतः परिकल्प्यास्तान् प्रति प्रदर्शयति, दोषाणां विशेषरूपं कार्यं च कथयति ।—

दोषास्त्रयः क्रमेणस्युर्गतिपक्तिस्थितिकराः ।
स्रावरूपा विशेषेण शारीरे च विभागतः ॥ ६ ॥
शुक्रशोणितभागश्च गर्भकललकस्तथा ।
द्वौ च गर्भांगशारीरे दोषाः स्युर्यत्र कारकाः ॥ ७ ॥
स्वस्थशारीभागस्तु सूक्ष्मरूपेण चालकाः ।
स्थूलान्नरसभागाभ्यां दोषाः स्युर्धारकास्तथा ॥ ८ ॥

गर्भांगस्वस्थयोर्दोषा दृश्यंते धातुरूपकाः ।
विकृतोत्सृष्टस्रावाभ्यां रुग्णशारीरमुच्यते ॥ ९ ॥
यत्र वातादयो दृष्टा मलादोषास्तथैव च ।

**टीका**-दोषास्त्रय इत्यादि । दोषाणां कार्यं स्रावरूपत्वं चाग्रे स्पष्टम् । अत्र प्रबंधानुसारेण परिकल्पितदोषविषयविभागा आलेखविन्यासरूपेण प्रदर्शयामः-

धातुः ।

(१) गर्भांगशारीरम् ( **क** ) शुक्रशोणितविभागः ( एंब्रिऑलजी )
( **ख** ) गर्भकललविभागः ।
(२) स्वस्थशारीरम् ( **क** ) सूक्ष्मशारीरम् [ चालकाः ] ( ॲनॅटमी )
( **ख** ) स्थूलशारीरम् [ धारकाः ]
( **ग** ) अन्नरसविभागः [ पोषकाः ]
(३) रुग्णशारीरम् ( **क** ) विकृतस्रावाः [ दोषाः ]
( **ख** ) उत्सृष्टस्रावाः [ मलाः ]

शुक्रार्तवाभ्यां ते चैव देहसंभवहेतवः ॥ १० ॥
कफस्वरूपे फलबीजे तयोश्च प्रतिपुद्गले ।
निचये पित्तवातौ च स्रावौ पाचकप्रेरकौ ॥ ११ ॥

**टीका**—शुक्रार्तवाभ्यामित्यादि—देहसंभवहेतुभूतत्वाद्दोषा उपादान-कारणमिति प्रतिपादयति । यथाह सुश्रुतः ' वातपित्तश्लेष्माण एव देहसंभव-हेतवः' । तथा च डल्लणः-'अविकृता वातादयः शुक्रार्तवादिसहकारितया देह-जनका अभिप्रेता इति ' । परं गर्भसंभवे दोषा न केवलं सहकारिकारणं, किंतु ह्युपादानकारणं संतीति प्रबंधकारस्याभिप्रायः । वीर्ये फले च प्रचुरं 'ॲल्ब्युमिन्' दृश्यते । ( हॅलिबर्टन फि. ८६८-७० ) सैतिकं ( ॲल्ब्युमिन् ) मौलकभेदः ( प्रोटीन् ) । सर्वाणि मौलकानि कफमयानि दृश्यंते । माधुर्यात्पिच्छिलत्वाच्चिक्कण-त्वाच्च । वीर्यजंतुषु फलजंतुषु ( ओव्हम् ) ये पाचकस्रावास्ते पित्तं, ये

प्रेरकस्त्रावास्ते वायुरेवमवगंतव्यम् । तौ द्वौ प्रतिपुद्गले निचयप्रांते ( न्यूक्लीयस् ) तिष्ठतः । एवमेव प्रतिपुद्गले ( सेल् ) त्रयो दोषा वसंति । बीजफलसंयोगात् फलकं प्रादुर्भवति ।

कललं फलबीजाभ्यामुत्तराधरमध्यगाः ।
तस्मिन्नेव वातपित्तकफाः स्युर्धातुकारकाः ॥ १२ ॥

**टीका**—कललं यथाक्रमं विभज्यते । तस्मिन् त्रयो भागा जायंते--यथा १ कललोत्तरं (एक्टोब्लास्ट ) २ कललमध्यं ( मीसोब्लास्ट ) ३ कललाधरं ( एंडोब्लास्ट )। एतेभ्यस्त्रिभ्यो भागेभ्यः शारीरांगाणि जायंते । तेनैते विभागा-वातकारका उक्ताः । एतेषु त्रिषु प्रत्येकात् यान्यंगानि जायंते—

वाताच्च बाह्यत्वक्, संज्ञा, स्रोतांसि, निखिलानि च ।
पित्तादन्नवहस्रोतो, ग्रंथयः, कवचादयः ॥ १३ ॥
कफात्संधानकाश्चैव धातवो मांसकस्तथा ।
रसासृक्पुद्गलानि स्युः प्लीहा च रसग्रंथयः ॥ १४ ॥

१ **वातः**—बाह्यत्वक् तस्या नखादीनि उपांगानि । मुखांतस्त्वक् च दृष्टिश्च काचकः । मीणः । स्वादेंद्रियाणि । संज्ञावाही स्रोतोधातुः । पिच्यु-टरी, पीनिअलग्रंथी । उपवृक्कग्रंथेर्मध्यः । ( दि इसेन्शिअल् ऑफ हिस्टालॉजी पृष्ठ २५ ) ।

२ **पित्तम्**—अन्नवहस्रोतस्त्वक् । यकृदग्न्याशयादिपाचकग्रंथिर्बाह्यत्वक् च । कवचग्रंथिः, प्रतिकवचग्रंथिश्च, स्तनकग्रंथेर्जालकम् ।

३ **कफः**--सर्वे संधानधातवः । रसासृक्पुद्गलानि । प्लीहा च रसग्रं-थयः । मूत्रजनकनलिका बाह्यात्वक् । पुंस्त्र्यंडबाह्यात्वक् । पुंस्त्रीबीजे । बुद्धि-प्रेरितमांसधातुः । हृदयस्य पेशीनां मांसकधातुश्च ।

स्थूलशारीरके वातान्मज्जा भवति देहिनाम् ॥ १५ ॥

पित्तं लसीका रुधिरं कफाच्छुक्रं भवेत्तथा।
रसमेदोऽस्थिमांसानि कंडरा च जलं भवेत् ॥ १६ ॥

## स्थूलशरीरालेखः—

| दोषः | धातूपधातुः | स्थानं | विशेषस्थानम् |
|---|---|---|---|
| वातः | अस्थि ( मज्जा ) | पक्काशयः, कटिः, सक्थिनी,पादौ,अस्थि, श्रोत्रं, स्पर्शनं च | पक्काशयो विशेषेण |
| पित्तम् | स्वेदो, लसीका,रुधिरम् | नाभिरामाशयश्चक्षुः स्पर्शनं च | नाभिर्विशेषेण |
| कफः | रसो मेदः ( मांसा-दिकम् ) | उरः, कंठः, शिरः, क्लोम, पर्वाण्यामाशयः घ्राणं, रसनं च | उरोविशेषेण |

आगमे यद्यपि तत्रास्थानि स्थितो वायुः, तथापि 'अस्थीनि मज्ज्ञः पुष्टिं च' इति सुश्रुतवचनेन मज्ज्ञ उपलक्षणं ज्ञातव्यम्। वायोर्धातुर्मज्जाचेत्यवगंतव्यम्। अस्थ्नां श्लेष्मजन्यत्वस्य प्रत्यक्षसिद्धत्वात्। वस्तुतस्तु वातपित्तयोर्धातूपधातूदर्शितौ तौ परमार्थतया न ग्राह्यौ। एतयोर्द्वयोरपि न धातुकर्तृत्वं किमप्यस्ति । कृत्स्नं शरीरं कफजं तस्मिन्वातपित्ते स्रावरूपेणैव दृश्येते न तु घटकरूपेण, तयोः स्रावरूपत्वं सूक्ष्मशरीरे स्पष्टं भवति।

सूक्ष्मशरीरके वायुः प्रेरकस्राव उच्यते।
पित्तं तु पाचकस्रावो वर्णकेन सहोच्यते ॥ १७ ॥
कफश्च पोषकस्रावः स्नेहनोऽपि विनिर्दिशेत्।

**टीका**—वातपित्तकफाः प्रेरकपाचकस्नेहस्रावकरूपेणोक्ताः सूक्ष्मशरीर-विभागदृष्ट्या। केचित्तुवायुं संज्ञावाहिस्रोतस्सु घटयंति तन्नसाधु। स्वतंत्रे शास्त्रे

संज्ञावाहिस्रोतांसि चैव मनोवहस्रोतांसीत्युक्तत्वात् । मज्जाधातुः संज्ञावहना-दन्यत् कार्यं न करोति, तस्मात् स प्रेरकगुणवत्वविशिष्टेन वायुना सह न समानः। संज्ञाप्रेरकं तु मनः । तस्मात् प्रेरकस्रावत्वं वायोर्युक्तियुक्तम् । दोषरूपाणां त्रयाणां स्रावाणां पाश्चात्यवैद्यकानुगतपदार्थैः सह समीकरणं कुर्मः—

१ **वातः**—हार्मोन् अँड् नर्व्ह एंडिंगसीक्रिशन्स् ।
२ **पित्तम्ः**—एंझाइम्स अँड पिग्मेन्टस् ।
३ **कफाः**—न्युट्रायटिव्ह अँड लुब्रिकेटिंग सीक्रिशन्स् ।

रुग्णशारीरके वृद्धाः क्षीणा दोषास्त एव च ।
उत्सृष्टाश्च मला उक्ता वातवर्जा विशेषतः ॥ १९ ॥

**टीका**—रुग्णशारीरे त एव वातपित्तकफदोषा इत्युच्यंते। विकृता वृद्धास्त-एवोत्सृष्टा बहिक्षिप्ता मला इति चोच्यंते ।

तेषां नियंता प्रमुखोवायुर्विद्युत्समो भवेत् ।
विशेषेणास्थिगो यस्मात् मज्जस्थोप्युपलक्ष्यते ।
उपवृक्कादिजन्यत्वाद् बस्तिस्थो मुख्य उच्यते ॥ २० ॥
संज्ञावाहिस्रोतसां तु यस्तु उत्साहवर्धनः ।
स मुर्धाकंठहन्नाभिबस्तिस्थः पंचधा स्थितः ॥ २१ ॥
धारणायत्नगत्यग्निदानोत्सर्गान्करोत्यसौ ।
कृष्णरक्तवर्णकात्मा ह्यरुणश्याव उच्यते ॥ २२ ॥
शोषोऽन्हासश्च नाशश्च संज्ञागतिविघातनान् ।
विकृतः कुरुते शूलस्तंभाटोपादिकान् गदान् ॥ २३ ॥

**टीका**-नियंता प्रेरकः । मज्जात्वास्थिगता (बोन मॅरो) । गतित्वत्पुद्गलजनक-त्वात्, संज्ञावाहिस्रोतसां धातुनां तथैव पुद्गलानामप्युत्साहवर्धनः प्रेरक एको वायुर्नान्यः पदार्थः ।

१ **प्राणः** —पिचुट्री--सीक्रिशन्स् ।

२ **उदानः** —थायराइड्–सीक्रिशन्स् ।
३ **व्यानः** —नर्व्ह एंड–सीक्रिशन्स् ।
४ **समानः** —स्यूकस्–एंटरिकस् ।
५ **अपानः** —अॅड्रिनल–सीक्रिशन्स् इत्येवं भाति ।

कृष्णरक्तवर्णकात्मा इत्यादि । अरुणश्यावौ वातवर्णौ । जनकवर्णात् जन्यवर्णाः । तेन ' बोन मॅरो, नर्व्हटिशु, स्किन्, आदिषु रक्तवर्णकौ दृश्येते तौ वातस्रावसंबंधिनौ भवितुं युक्तम् । वातपित्तकफानां स्वाधिष्ठितस्थानेषु तत्तल्लक्षणयुक्ता वर्णकाः ( पिग्मेंट्स ) उपलभ्यंते । तत्तद्वर्णकस्तत्तत्स्रावाधीनः । इति स्पष्टम् ।

पित्तं पक्तिं ग्रहणीस्थं यकृत्स्थं रसरंजनम् ।
हृत्स्थं ( असृक्स्थं ) चोत्साहं कुरुते तारकास्थितम् ॥ २४ ॥
तद्रूपग्राहकं, बाह्यत्वचि वर्णप्रकाशकम् ।
हृत्स्थमोजश्च तत्सर्वं रुपांतरक्रियाक्षमम् ॥ २५ ॥
अग्निरूपं पुद्गलेषु कैण्वं धात्वग्निरुच्यते ।
पीतं नीलं तु सामं च पाचकं पित्तरक्तकम् ॥ २६ ॥
समानं तेन रक्तस्थं उक्तं च किट्टमसृजः ।
तद्योनित्वात् कटुतीक्ष्णं क्षारमम्लं तु वैकृतम् ॥ २७ ॥
वर्धितं रक्तपित्तातिसारपांड्वामयांस्तथा ।
पूयभावं च कुरुते पित्तं कैण्वसरुपकम् ॥ २८ ॥

**टीका**—' पित्तं पक्तिं ' इत्यादिना पित्तस्य स्थानं स्वरूपं च प्रकटयति । तदनुसारेण पित्तभेदान् प्रदर्शयामः—

| नाम | स्थानम् | कार्यम् | पाश्चात्त्यसंज्ञा |
|---|---|---|---|
| १ पाचकं, | ग्रहिणी, | पचनं, | बॉईल् अँड पँक्रिॲटिक् जूस्, |
| २ रंजकम्, | यकृत्प्लीहानौ, | रसरंजनम्, | सीक्रिशन्स् ऑफ दि लिव्हर ॲन्ड स्प्लीन, |

| | | | |
|---|---|---|---|
| ३ साधकम्, | हृत्स्थम् (असृक्), | उत्साहः, | हेमोग्लोबिन्, |
| ४ आलोचकम्, | अंतस्तारकः, | रूपग्रहणम्, | पिग्मेंट ऑफ रेटिना, |
| ५ भ्राजकम्, | त्वक्, | त्वग्वर्णप्रकाशकम्, | पिग्मेंट ऑफ एपिडर्मिस्, |

कफश्चामायशस्थोऽन्नक्लेदनं च ह्युरःस्थितः ।
हृदयादिरक्षणं जिव्हादिस्थो हि रसद्रावकः ॥ २९ ॥
शिरःस्थो द्रवरूपः स करोतींद्रियतर्पणम् ।
स्निग्धत्वाच्चिक्कणत्वाच्च कुरूते संधिश्लेषणम् ॥ ३० ॥
श्वेतच्छायात्मकः स्निग्धः पिच्छिलो मधुरस्तथा ।
औदकैश्च गुणैर्युक्तो विकृतो लवणः स्मृतः ॥ ३१ ॥
रसे च लसिके चैवासृजि श्वेतैश्च पुद्गलैः ।
मांसास्थिकंडरास्नायुमेदःकाचाभकेषु च ॥ ३२ ॥

| नाम | स्थानम् | कार्यम् | पाश्चात्तनाम |
|---|---|---|---|
| १ क्लेदकः, | आमाशयः, | अन्नक्लेदनम्, | गॅस्टिक म्यूकस् सीक्रिशन्स्, |
| २ अवलंबकः, | उरः, | हृदयाद्यवलंबनम्, | सीरस फ्ल्युइड्, |
| ३ बोधकः, | जिव्हामूलकंठाः, | अन्नद्रव्यद्रावणम्, | म्यूकस सीक्रिशन् इन दि माउथ्, फॅरिंक्स, ॲन्ड इसाफेगस्, |
| ४ तर्पकः, | शिरः, | इंद्रियतर्पणम्, | सेरिब्रोस्पायनल् फ्ल्युइड्, |
| ५ श्लेषकः, | पर्वाणि, | संधिदार्ढ्यम्, | सायनोव्हिआ, |

दोषास्तिष्ठंति केवले शरीरे प्रतिपुद्गले ॥ ३३ ॥
अन्नद्रव्येषु तद्वच्च नास्त्यदोषं च किंचन ।
अन्ने वायुः प्राणदैः स्यात्पित्तं कैण्वैः स्थितं तथा ॥ ३४ ॥
श्लेष्मा मौलकस्नेहाभ्यां पिष्टकेन हि तिष्ठति ।

**टीका**—वायुः प्राणदनाम्ना, ( व्हिटॅमिन्स् ) पित्तं कैण्वद्रव्यविशेषैः ( एन्झाय्मिस् ) कफस्तु मौलकनाम्ना ( प्रोटीन् ) द्रव्यविशेषेण, तथा स्नेहैश्च ( फॅट्स् ) पिष्टकेन, ( स्टार्च ) चेति दृश्यते । चकारान्मधुररसं जलभूयिष्ठं च द्रव्यं श्लेष्मोत्पादकम् । लवणाम्लरसक्षारतीक्ष्णं च पित्तजनकम्, कटुतिक्तकषायं च वायुजनकमिति तंत्रोपदेशात्प्रसिद्धम् ।

## दोषसिद्धांतः—

## कविराज द्वारकानाथ (कलकत्ता) विरचितः

### पित्तस्य निरूपणम्—पृष्ठ ५४

पित्तं तु तैजसं द्रव्यं सततं उष्णयोगतः ।
उपष्टंभकमेतस्य विद्यात् क्षितिजलादिकम् ॥ १ ॥
द्रवतेजोमयं द्रव्यं पित्तं हि द्रावकोपमम् ।
विभिन्नवर्णयोगी च विभिन्नमूर्तिमत्तथा ॥ २ ॥
द्विधा संजायते पित्तं शरीरे प्राणिनां यथा ।
किंचिन्मलस्वरूपेणापरं च स्वच्छरूपतः ॥ ३ ॥
पच्यमानात् सदा काये स्वोष्मणा रक्तधातुतः ।
आविर्भवति यत् पित्तम् मलरूपं तदुच्यते ॥ ४ ॥
अन्नस्य पच्यमानस्य विदग्धस्याम्लभावतः ।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ ५ ॥
तेजोभागातिरिक्तत्वात् द्रवांशपरिहीनतः ।
पच्यमानाशये जातं तत् स्वच्छमिति कथ्यते ॥ ६ ॥
पक्कामाशययोर्मध्यप्रदेशवर्तिना पुनः ।
देहधारकपित्तेन संभूय तच्च निर्मलम् ॥ ७ ॥
पाचकाग्निस्वरूपेण परिणम्य स्वतेजसा ।
देहोष्मणामशेषाणां करोति शक्तिवर्धनम् ॥ ८ ॥

**कफनिरुपणम् पृष्ठ ६८**—

कफः स्नेहाश्रयत्वेन जलीयं द्रव्यमुच्यते ।

तस्यापि द्विविधोत्पत्तिर्विव्रियते यथाक्रमम् ॥ १ ॥
आदौ षड्रसमप्यन्नं पाकोन्मुखं हि तेजसा ।
क्लेदनकफसंयोगान्माधुर्यं भजते ध्रुवम् ॥ २ ॥
तदा मधुरभावाच्च भुक्तद्रव्यात्तु तादृशात् ।
आमाशये कफस्तावत् फेनभूतः प्रजायते ॥ ३ ॥
एष एव कफः सार आमाशयगतः खलु ।
क्लेदनश्लेष्मसंसर्गाद् याति तस्य सरूपताम् ॥ ४ ॥
स्वशक्त्या स्नेहदानेन सलिलकर्मणा तथा ।
समग्राणां शरीराणामनुग्रहं करोति च ॥ ५ ॥
पच्यमानान्मलांशोऽपि निरेतीक्षुरसाद्यथा ।
तथाऽहाररसात् किट्टं धातुरसाच्च जायते ॥ ६ ॥
तच्च किट्टं कफो नाम प्रोक्तो रसमलोऽपि च ।
वायुना प्रेरितो ह्येषः श्लेष्मस्थानं प्रधावति ॥ ७ ॥
गत्वाच तत्र देहस्य धारकश्लेष्मभिः सह ।
संगत्य तांश्च पुष्णाति नवंभोऽब्धिजलं यथा ॥ ८ ॥

## त्रिदोषस्वरूपम्

### ले. अनंत भास्कर कर्डिले आयुर्वेदविशारद

एम्. ए. बी. एस्. सी. नासिक ।

दोषाणां पांचभौतित्वम्--अत्र जिज्ञास्यं किं स्वरूपा इमे दोषाः, किं–कविकल्पना, उत गुणाः, अथ शक्तिरूपाः अथाहो कार्यानुमेयकारणस्वरूपाः, अथवा प्रत्यक्षस्य विषयाः पांचभौतिकाः पदार्था इति। अत्रोच्यते न खलु दोषाः कविकल्पना, नवा गुणाः, न शक्तिरूपाः, नापि कार्यानुमेयकारणस्वरूपाः, किंतु इंद्रियगोचराः पांचभौतिकपदार्था इति ।

दोषाः सर्वत्र द्रव्यगुणयुक्ता उक्ताः । यथा वायुः शद्ववान्, पित्तं द्रव-

मम्लं, कटु, पीतं, नीलं, ताम्रं, अच्छं, विस्रं च। कफो घनः, पिच्छिलः, अच्छः सफेनो, मधुरश्च। गुणा अधिष्ठानमंतरेण न शक्ता अवस्थातुं। तस्माद्दोषा एतद्गुणयुक्ताः पदार्था इति निश्चयं विना न विद्यते गतिः। अपि च दोषाणां शरीरे स्थानं, मानं, वृद्धिः, क्षयः, तेषां पूरणार्थं तत्समानगुणानां पदार्थानामुपयोग उपदिष्टो ग्रंथेषु, तस्मादपि न शक्यमन्यथाऽनुमातुम्।

**वातः**–'रुक्षःशीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः। विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति'॥ च. सू.॥ वातस्वरूपस्य तत्वावग्रहणं न सुकरम्। किं तु अतीव कठिनम्। यतो वायुः स्वरूपतो नेत्रेंद्रियग्रहणाऽक्षमः प्राकृतोऽपि। तेन हि शरीरबहिःप्रांतेऽपि तस्य गुणावबोधः प्रयासेन साधनविशेषैरेव भवति, किमुत नयनपथात् सुगूढे शरीरांतर्भागे। शरीरे वायोः कार्यं बहुविधं वर्णितं, येन तस्य स्वरूपज्ञानं गहनतरं जातम्। चरक सुश्रुतवाग्भटानां सर्वेषामपि ऐकमत्यं यद्वायुः पक्वाशये आहाररसात्प्रादुर्भवति। तत्र चास्थितः शेषाणां वातस्थानानां पूरणं करोति। पाश्चात्यशारीरशास्त्रमतेन तु विशेषकार्यकरा वायवः १ अक्षः, [ प्राणः, ऑक्सिजन् ] तप्तांगारजो वायुः, ( कर्बद्विप्राणिलः,–कार्बन् डाय् ऑक्साइड् ) नवसादरआर्द्रचूर्णकाभ्यां जायमानो वायुः, ( अमोनिया ) इत्यादयो ये भिन्नप्रकारास्संति। तथा आंत्रयोरपि जंतुक्रियया बहुप्रकारा वायव उद्भाव्यंते, (बॅक्टीरिअल अॅक्शन्) एते सर्वेऽपि वायवो आयुर्वेदे वायुशब्दाभिहिताः। तथा शरीरस्थेषु अणुस्रोतस्सु ( सेल् ) वायुर्विद्यते। सर्वाणि अणुस्रोतांसि श्वासोच्छ्वासक्रियामभिनिर्वर्तयंति। रक्तेऽपि प्राणो, ( ऑक्सिजन् ) व्यानश्च, ( ऑक्सिजन् तथा कार्बन्डाय् ऑक्साइड् ) विद्येते एव। तस्मादियं व्यवस्था कल्प्येत–मुख्यः प्राणः श्वासेन बाह्यतो अभिवर्तमानात् वातात् शोष्यमाणो ऑक्सिजनः। स तु पंचधा आत्मानं अवस्थाप्य, आहाररसाज्जातेन वायुना बलं लब्ध्वा प्राणादिवायूनां स्थानानि यथावत् सुषिराणि कृत्वा, तानि भिन्नभिन्नवायुनिमित्तानि कार्याणि संपादयति।

१ **प्राणः**–स पाश्चात्यरसायनशास्त्रविदां ऑक्सिजन एव।

२ **उदानः**--फुप्फुसयोरधस्थाने वर्तमानो वायुः । प्राचीनानामपि एतदेव-मतम् ' उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः ' । फुप्फुसोदरविभाजकं पटलं ( डायाफ्राम् ) उदानवायोः प्रवर्तकं उच्येत, तदाश्रया हि प्रागुक्ताः क्रियाः ।

३ **समानः**—आमपक्वाशयचरो वायुः ।

४ **व्यानः**—सर्वदेहचरो वायुः हृदयाद्धमनीः प्रपद्यमानः प्राण एव व्यानः । अथवा प्राणाज्जायमानो तप्तांगारजो वायुः ( कार्बन् डॉय् ऑक्साइड् ) ।

५ **अपानः**—पक्वाशये जायमानो वायुः ।

**पित्तम्**--पित्तं अम्लं सरं कटु च । शरीरे ये केऽपि भावा एतद्रस-विशिष्टास्ते सर्वे पित्तसंज्ञां प्राप्नुवंति ।

**प्रत्यक्षशारीरीयं मतम्**—प्रथमं अम्लपित्तं आमाशये अम्लीभूतेन अन्नेन उदीर्यते । तत् सूक्ष्मांत्रं गत्वा ततो ग्रहणीस्थं पित्तं (स्यूकस् एंट्रिकस्) उदीरयति । तच्च पुनः ग्रहणीस्थं पित्तं भूरिप्रमाणेन उदीरयति । अनंतरं तैरन्नं पाच्यते । तस्य च सारात् किट्टं विभज्यते । तस्माद् ग्रहणीस्थं पित्तं पाचक-पित्तानां श्रेष्ठम्, इतरपित्तोदीरणशक्तिमत्वात् । पाश्चात्यशरीरप्रक्रियायां ये च पाचका रसा विशेषद्रवरूपा अम्लकटुरसास्तीक्ष्णाश्च तेषां सर्वेषां समुच्चयो आयुर्वेदे पित्तशब्देन अभिधीयते । जठरस्थो अम्लोरसः क्लोमस्थो रसः ( पँक्रियाटिक् जूस् ) यकृत्स्थं पित्तं पीतं, ग्रहणीस्थं पित्तं, एते सर्वे रसाः पाचकपित्तं उच्यंते आयुर्वेदे । एतेषां क्रिया यद्यपि अन्योन्येभ्यः किंचित् भिन्नास्तथापि तेषां भूयस्तरं साम्यम् अम्लकटुरसयुक्तैः पदार्थैः । सर्वेऽपि ते उदीर्यंते, तस्मात्तेषां समाहारः पित्तसंज्ञया क्रियते । सर्वेऽपि ते उष्णवीर्याः ।

२ **यकृत्प्लीहानौ रंजकपित्तस्य**—स्थानम् । तत्स्थं पित्तं पीतं ताम्रं नीलं च । तेन रंजितो रसो रक्तत्वं याति । तस्मात्तत् रंजकं उच्यते ।

३ **हृदयस्थं पित्तं साधकम्**—हृदयशब्दोऽत्र हृदयसमीपप्रदेशवाची ग्राह्यः। हृदयस्थं च पित्तं यकृत्स्थं पित्तमेव ग्राह्यम्।

४ **नेत्रयोः पित्तं आलोचकं**—उच्यते। तेन नेत्रे स्वच्छे आलोचनसमर्थे च भवतः। **प्रत्यक्षशारीरीयं मतम्**—नेत्रयोर्द्वौ ग्रंथी स्तः। ( दि लॅक्रीमल ग्लॅंड्स् )। याभ्यां सततं नेत्रोदकं स्रवति, येन नेत्रे तेजोयुक्ते भवतः। तत् क्षारयुक्तं द्रवं, तदेव नेत्रस्थं पित्तम्।

५ **त्वक्स्थं पित्तम्**—यत्त्वचि पित्तं तत् भ्राजकं उच्यते। त्वचि हि सूक्ष्मरसवाहिन्यस्संति। ताः पित्तरक्तेनापूर्यमाणास्सत्यो त्वचं पित्तस्थानमापादयेयुः। अथवा त्वक्स्थेषु अणुस्रोतस्सु ( सेलस् ) वर्तमानः पित्तांशो भ्राजकपित्तम्। पित्तस्य प्रमाणं पंच अंजलयः—अशीति तोलकप्रमाणं। पाश्चात्यशारीरप्रक्रियायां दैनंदिनपीतपित्तप्रमाणं ( ५००--१००० घनसेंटिमीटराणि ) चत्वारिंशत्तोलकादशीतितोलकपर्यंतं उक्तम्। इतरेषां पित्तानां प्रमाणं न विशेषेण निश्चितम्।

**पित्तस्य रक्तमलत्वम्**:—पित्तं रक्तस्य मल उक्त आयुर्वेदे। तस्य एष अर्थो यत् रक्तात्पित्तं जायते तत्तु न शरीरधातुवत्। पाश्चात्यशारीरप्रक्रियायां पीतं पित्तं [ बाईल् ] रक्तस्थिततताम्राणुविकारः। तथा इतराणि पित्तानि [ गॅस्ट्रिक् जूस् इत्यादीनि ] तेषु तेषु स्थानेषु रक्तादेव जायंते।

**कफः**---श्लेष्मा गुरुः स्निग्धः शीतो मृदुर्मधुरः स्थिरः पिच्छिलश्च। स अन्नस्य पाचनकाले प्रथममामाशयादुदीर्यते। स शरीरे संधिसंश्लेषणं, स्नेहनं, रोपणम्, पुरणम्, बलं, स्थैर्यं, उदककर्म च करोति। तस्य प्रमाणं चरकेणोक्तं षट् श्लेष्मणोऽजलय इति। तस्य स्थानानि प्रोक्तानि चरकेण—उरः, शिरो, ग्रीवा, पर्वाणि, आमाशयो, मेदश्च। तस्मात् कफः पांचभौतिकः पदार्थ इति निःशंकमनुमीयेत। स अन्नपाचनकाले प्रथमं प्रादुर्भवति आमाशये। अन्नेन च मिलित्वा, अन्नस्य मधुरपाकेन अधिकं कफं जनयित्वा रसेनोपगम्य,

इतराणि आत्मनः स्थानानि गत्वा, तत्रतत्रस्थाः क्रियाः करोति । कफः अन्न-संघातं द्रवीकरोति तस्मात् स द्रवः ।

**कफस्वरूपं--पाश्चात्यशारीरप्रक्रिया**—रसयुक्तरक्तात् स्निग्धः पिच्छिलोऽच्छो द्रवः पदार्थ उत्पद्यते । स वातयुक्तरक्तवाहिनीभ्यः सिराभ्यो निस्सरति । स एव कफः । रक्ते त्रयः पदार्थाः संति । १ द्रवः ( प्लाझ्मा ) २ रक्ताणवो ( रेड्ब्लड्कार्पस्कल्स् ) ३ श्वेताणवः ( व्हाइट् कार्पस्कल्स् ) इति । तेषां अच्छो द्रवो यं रस इति वयं आचक्ष्महे । तस्माद्द्रवादच्छः कफो ( लिंफ ) जायते। स हि सर्वावयवानां पोषणे नियुक्तः । स आयुर्वेदे वर्णिताभिः श्वेतसिराभिरुह्यते [ लिंफॅटिक्स् ] । कफः [ लिंफ ] कोष्ठस्थाभिः कफवाहिनीभि उह्यमानः श्वेतो लक्ष्यते [ लॅक्टिलस् ] । अपि च तस्य रसस्य [ लिंफ ] विशेषोत्पत्तिर्मधुरलवणाम्लरसैश्च । तथा च तस्य विशिष्टं गुरुत्वं १०१५ । जलस्य यदि १ गुरुत्वं, तर्हि तस्य १०१५ । पित्तस्य तु [ अम्लपित्तस्य १·००३—१·००४ । तस्मादायुर्वेदे वर्णितः कफः सर्व-देहसंचारी लिंफ एव तथा च रक्तगतश्वेताणवः ।

**१ आमायस्थः कफः**--प्रत्यक्षशारीरक्रियायां--मुखे तथा च अन्नवाहिनलिकायां तथा च श्वासमार्गे उपरितने भागे लाला, अन्यश्च पिच्छिलः पदार्थः स्रवति तत्तत्पदार्थोत्पादकेभ्यो ग्रंथिभ्यः । लालोत्पादनार्थं जिव्हाया अधस्तात् गल्लकर्णयोश्चांतराले ग्रंथयः संति—सलायव्हरीग्लँड्स्—येभ्यो लाला-स्रवति । लाला एव क्लेदकः कफः, सा अन्नं मधुरीकरोति आमाशये । लाला च मंदवीर्या, लवणान्विता, आमाशयस्थअम्ल—पित्तशामिका, अतः कफप्रकार एवोच्यते । कंठस्था इतर ग्रंथयोऽपि आत्मनः पिच्छिलरसेन अन्नसंघातं स्नेहयुतं कुर्वंति स च रसः कफस्वरूपः । लाला आमाशये अन्नस्थं पिष्टमयं द्रव्यं ( स्टार्च ) मधुरं करोति । तथा च आमाशयेऽपि सांद्रः स्वच्छो घनः पदार्थ उत्पद्यते अन्नपाचनकालमंतरेण । एवं लाला, तथा अन्नं आमाशये मधुरीभवती, तथाच आमाशयोद्भवः सांद्रः पदार्थ आमाशयस्थः कफ उच्येत ।

२ **उरस्थः**—उरसि स्थितः कफस्त्रिकधारणं, अन्नवीर्येण च हृदयावलंबनं करोति, स अवलंबकः श्लेष्मा । उरसि फुप्फुसयोश्च श्लेष्मग्रंथयः ( म्यूकस्-ग्लँड्स् ) संति, येभ्यः श्लेष्मा उत्पद्यते । तथा च हृदयपरीतो द्रवपदार्थो ( पेरिकार्डियाक् फ्लुइड् ) विद्यते एव, तेन हृदयचालने साहाय्यं जायते, स द्रवपदार्थः कफ ( लिंफ ) एव । अथवा यकृत्स्थो मधुरः पदार्थः ( ग्लाय्कोजन ) कफस्य आधार उच्यते, स अन्नरसादुत्पद्यते, यकृति च संगृह्यते । यदा रक्ते ( रक्तरूपरसे ) मधुरः पदार्थो अनशनात् क्षीयते, तदा यकृत्स्थात् मधुरपदार्थात् स रक्तेन प्राप्यते । एवं रसस्थकफस्य सोऽवलंबक उच्येत । अथवा अन्नस्थपिष्टमयद्रव्यादुत्पद्यमाना शर्करा ( ग्लूकोज् ) यया हृदयं चाल्यते सा अवलंबकः कफ उच्येत ।

३ **जिव्हामूलकंठस्थः** कफो रसानां बोधनाद्बोधकः । जिव्हाया मूले कफोत्पादकग्रंथयो विद्यंते । यः पदार्थस्तद्रसे विद्राव्यते तस्य एव रुचिज्ञानं भवति । तस्मात् जिव्हामूलसूक्ष्मछिद्रेषु उत्पद्यमानो जलसदृशः पदार्थ एव कंठस्थः कफो अवबोधक उच्येत ।

४ **शिरस्थः कफस्तर्पकः**—मस्तिष्कस्य मध्ये कफसदृशः पदार्थो विद्यते, ( सेरिब्रोस्पायनल् फ्ल्युइड् ) तस्मिन् क्षारा द्राक्षशर्करा च ( ग्लूकोज् ) विद्यते । तेन मस्तिष्कः सदा आर्द्रो भवति । स मस्तिष्कस्य आधार उक्तः पाश्चात्यशारीरे । स पदार्थो मस्तिष्के सर्वशरीरगामिकफात् प्रादुर्भवति, मस्तिष्कस्य अधस्तात्तिष्ठंतीभिः सिराभिरपनीयते । स एव तर्पकः कफ उच्येत । नेत्रगोलकयोरंतस्तथाकर्णयोश्चांतोच्छपिच्छिलः पदार्थो विद्यते एव सोऽपि तर्पकः कफः ।

५ **संधिस्थः कफः**—अस्थिसंधयः श्लेष्मणः स्थानम् । अस्थिसंधिषु यः कफो वर्तते स यंत्रसंधिषु तैलमीवोपयुक्तः, तेन हि संधिषु घर्षणं न भवति । अस्थीनि अनायासेन चलंति । संधिस्थः कफः श्लेषक उच्यते, तेन अस्थीनि संधिषु आश्लिष्टानि भवंति ।

**कफमूलम्**—कफोऽन्नरसाज्जायते । स रसस्य मलः । रसः ब्लडप्लास्मा । कफः लिंफ अँड अदर सीक्रिशन्स् । चरकमतेन ९६ तोलको विद्यते कफः।

**पित्तधातुसंबंधः**—'तत्र असृक्स्वेदयोः पित्तम्' रक्ते स्वेदे च सक्षाराः पदार्थास्संति तथा आम्ला अपि, व्यायामात् रक्ते लॅक्टिक् ॲसिड् जायते, तथा भोजनोत्तरं पित्तप्रकोपे रक्ते अम्लत्वं दृश्यते। 'रक्तस्थितरक्ताणूनां पीतपित्तेन संबंधो वर्तत एव। रक्तेन शरीरे औष्ण्यं रक्ष्यते। रक्तात् भिन्नभिन्नपित्तानि जायंते। अतः रक्तं पित्तस्थानम्।

**कफधातुसंबंधः**—शेषेषु धातुषु श्लेष्मा रसमांसमेदमज्जशुक्रइत्येषां मध्ये यो मधुरः स्निग्धः शीतो अंशो विद्यते स कफस्वरूपः । शुद्धकफवृध्द्या मांसादीनां वृद्धिः । कफक्षयात् क्षयः । दुष्टकफादेते धातवो दूष्यंते । लालास्वरूपान्नपाचकः कफो दोषरुपः । अन्नस्थपिष्टद्रव्यादुत्पद्यमानं मधुरं द्रव्यं अन्यश्च पिच्छिलोंऽशो धातुरूपः कफ इति । ( पृष्ठ १-३० )

## आयुर्वेदे विज्ञानम्।

### पंडितप्रकांड लक्ष्मीरामस्वामी भिषगाचार्य ( जयपूर )

इत्येतैर्मद्रराजपुरशासनाधिकारिस्थापिताया आयुर्वेदशास्त्रे वास्तविकतासंशोधनसमीत्याः प्रस्तावोद्देश्यनिमित्तं प्रदत्तानि उत्तराणि 'आयुर्वेदविज्ञान' मिति पृथक् संमुद्र्य प्रकाशितानि संवत् १९८३ । तेषु त्रिदोषविषयमधिकृत्यागतो विषयः-(४) पृष्ठ ३ " किंचायुर्वेदे य इमे व्यापकाः सिद्धांताः स्थिरीकृताः संति, तेऽपि सुस्पष्टमिदं साधयंति यदेतेऽवधानपूर्वकं चिरकालायातप्रयोगानुभवद्वारैव स्थिरीभूताः संति । ये एतावत्कालं नवीनसंस्कारं विनैव यथायथं कार्येषु परिणमिता अद्याप्यव्यभिचरितं प्रदर्शयंति फलम्। एवं विधानां व्यापकसिद्धांतानां स्थिरीकरणं न साधारणपरिज्ञानस्य कार्यं भवतुमर्हति । तेषामेव सिद्धांतानां मूलभूतः सिद्धांतः सेयं त्रिदोषपद्धतिर्नाम । या किल शरीरे संरक्षिणी शक्तिर्विघातिनीशक्तिश्चोररीक्रियते । सा हि वस्तुतोऽस्माकं सिद्धां-

तानुसारं वातपित्तकफानां प्राकृती वैकृती च गतिरूपाऽवस्थाऽस्ति । वातपित्त-कफाश्चापि शरीरे सूक्ष्मस्थूलरूपेण द्विविधा अभ्युपेयंते। तेषु सूक्ष्मा वातादयः केवलं कार्यानुमेया एव। स्थूला वातादयस्तु अनेकरूपेषु अनेककार्याणि कुर्वंतो विलोक्यंते । अत एव शरीरस्य स्वस्थदशायां रुग्णदशायां वा प्राकृतवैकृतभेदेन वातादीनां संबंध एव निश्चीयते । यदाश्रयेण आयुर्वेदस्य जीवनसर्वस्वं महत्वं चावतिष्ठते ।

**द्वितीयप्रश्नस्य** ( अ )—भवदीयवैद्यकतंत्रमनुरुध्य व्याधिहेतुत्वे सिद्धांतः सिद्धांता वा के नाम विद्यंते ? इत्याद्यात्मकस्य--उत्तरे--" आभ्यंतरो हेतुरपि बहुविधः ।

शरीरे यानि द्रव्याणि धातुरूपाणि, दोषरूपाणि, मलरूपाणि, प्रसाद-रूपाणि, आश्रयीरूपाणि, आश्रयरूपाणि, अंगोपांगादिभेदेन अवयवभेदेन विद्यमानानि संति, ( इत्यत्र दोषाणां द्रव्यत्वं प्रतिपादितम् दातारः ) तथा तत्र शारीरभावा रसरक्तमांसवसास्थ्यादयो धातवः, शिराधमनीस्नायुनाडीकंडरादयोप-धातवः, फुप्फुसहृदययकृत्प्लीहांत्रवृक्कादीनि नानाविधानि यंत्राणि, कलाः, आशयाः, विण्मूत्रस्वेदादयो मला दोषाश्च' । ( इत्यत्र दोषा भावरूपेण व्याख्याता दातारः ) पृष्ठ ५-६ । तथैव ' क्रिम्यादीनां रोगोत्पत्तिकारणत्वे स्वीयसिद्धां-तसंक्षेपः—यद्यपि प्रतिरोगं भिन्नाकाराः क्रिमयः कारणमिति प्रत्यक्षमुपलभ्यते इत्यतः क्रिमीणामेव कारणत्वं स्यादिति विचार्यते तथापि तत्तदाकारक्रिमि-व्यक्तीनां केषुचिदेव कुष्ठादिषु रोगविशेषेषु उत्पादकत्वं तदन्यत्र तु संक्रामकत्व-मेव, उत्पादकत्वं तु तत्तत्क्रिमिविशेषशरीरारंभकाणामभिवर्द्धकाणां पोषकाणां वायुजलदेशकालानामेव । यतो वायुविशेषो जलविशेषश्च आहारत्वेन, देशवि-शेषश्च विहारत्वेन तत्तत्क्रिमीणामारंभको वर्द्धकः पोषकश्च भवति सामान्यात्, इत्यतस्तदनुकूलवायुजलादय एव कारणानि, ते च तत्वतो विविच्यमाना वात-पित्तकफाः । यतस्तदानुकूल्यमेव लोके वा शरीरे वा सर्वेषां जंगमोद्भिदादीनां क्रिमीणामपि उत्पत्त्यभिवृध्द्योः कारणम्, तत्प्रातिकूल्यं च विघातकारणमिति

सर्वत्र वातपित्तकफसंबंधो न व्यभिचरतीति सिद्धांतः '( इत्यत्र जलाग्निवायवो लोके त एव शरीरे वातपित्तकफा इति प्रतिपादितं इति जलाग्निवायुनां यथा द्रव्यत्वं तथैव वातपित्तकफानामपि विद्यते एव दातारः ) पृष्ठ ११ ।

## श्री. पं. केशव लक्ष्मण दप्तरी बी. ए. एल्. एल्. बी. ( नागपूर )

( प्रख्याता ज्योतिर्विदा धर्मशास्त्रचणाः समपद्धतिचिकित्सकाश्च )

एतैरस्मिन्विषये ये च व्यलेखि निबंधास्तत्सारः—

**अस्माकमयं तर्कः** --१ जीवशक्तिः शारीरप्रतिर्जीवाणौ विद्यते, सा च त्रिप्रकारा प्रकटिता भवति । गतिं वा ज्ञानं वा या उत्पादयति इयमेव प्राकृतवाताभिधा । उष्णतोत्पादिनी द्वितीया इयमेव पित्तमिति वर्णिता । शरीरघटका इयमेव कफसंज्ञिता । इयं त्रिप्रकारा शक्तिरमूर्ता विद्यते । अस्याः शक्तेः क्रियाया यद्यदुत्पद्यते तत्तदपि वातपित्तकफनाम्ना संकीर्त्यते आयुर्वेदे । जीवशक्तिः कदापि न विकृता भवति । तथापि साधनसामुग्र्यारभावात्तस्याः कार्यं विकृतं भवति । कस्यास्सामिग्र्यारभावाज्जीवशक्तेः कार्यमभूद्विकृतमिति निश्चित्य तस्याः पूरणमेव चिकित्सा । एतस्याश्चिकित्सायाः कृते कतिविधेऽयं सामुग्रीभवत्युपयुक्ता, तस्याः प्रत्येकस्यारभावाज्जीवशक्तेः कार्यं कथं कथं विकृतं भवतीति निश्चेतव्यम् । एकस्या एकस्याः सामुग्रेरभावाद्यानि संभवंति रोगचिन्हानि तान्येव वातादिदोषाणां प्रत्यकशो लक्षणानि । एतेषामपि दोषाणां पुनरपि दत्तमभिधानमायुर्वेदाविद्भिर्वातपित्तकफा इति । इत्येवं प्रकारेण वातपित्तकफशब्दा भिन्नभिन्नार्थेन प्रयुक्ता वर्तंते । तानर्थाननभिसमीक्ष्य भिन्नार्थप्रयुक्ताः शब्दा एकार्थत्वेनैव प्रयुक्ता इति च मत्वा कुर्वंति विपर्यासं त्रिदोषकल्पनायाः केचन । त्रिदोषास्सर्वदेहचरा इति यदा वक्ति आयुर्वेदस्तदा त्रिप्रकरा इयं जीवशक्तिरित्यर्थोऽभिप्रेतोऽस्ति । वातपित्तकफा अस्मिन्नस्मिन्स्थाने वा अस्मिन्नस्मिन्काले तिष्ठंति इत्यादि आयुर्वेदवचनं यत्रागच्छति, तदा तस्यास्त्रिप्रकारकायाः शक्तेः प्राकृतं कार्यं बहुधा विकृतमभवदिति ज्ञापकोऽर्थो वा विद्यते तस्य वचनस्य । यत्र दोषाणां वर्तते पदार्थरूपेण वर्णनं तत्र तस्या जीवशक्तेः

प्राकृतं वा वैकृतं कार्यं निर्दिष्टमिति ज्ञेयम् । इत्येवं तर्कगम्यं दोषस्वरूपम् । तत्तु कथं वा भवतु, तस्य चिकित्सायां नैव कोऽपि परिणामो भवति । सामान्यानां रोगचिन्हानां वर्गीकरणेन प्रतिवर्गं दोषमिति विकल्प्य च तस्मिन् सामान्यं तथैव निश्चित्तमौषधं प्रकल्प्यमित्येव चिकित्साशास्त्रस्य साध्यमिति । आयुर्वेद अंक ४ वर्ष १७ आषाढ शके १८५२ ।

## डॉ. सुरेंद्रनाथदास गुप्त एम्. ए. पी. एच्. डी. प्रिन्सिपॉल संस्कृत कॉलेज ( कलकत्ता )

स्वीये ' हिस्टरी ऑफ इंडियन फिलॉसफी ' आंग्लभाषामये निबंधे अस्मिन्विषये एवं लिखितवंतः

शरीरधर्मस्तु संक्षेपाद्विविधः येन शरीरं दुष्टं ( मलिनं ) भवति, अन्येन च शरीरधारणं भवति ( प्रसादः ) ॥ चरक शारीरस्थान अ. ६ ॥ वातपित्तकफास्तु शरीरस्य सर्वप्रकारकाया विकृतेर्मूलं कारणं अत एव ते दोष-संज्ञया संज्ञिताः । तथापि इमे सर्वेऽपि यावत्समानावस्थितास्तावन्न ते शरीरविकृतिं जनयंति न वा शरीरदौर्बल्यं संपादयंति न वा रोगोत्पादका भवंति । अत एव ते तावत् धातवो वा शरीरघटका वा इत्युच्यंते । मलधातवो वा प्रसादधातवो वा यदा योग्य प्रमाणेन वर्तंते तदा अन्योन्यसहकारेण शरीरधारणं कुर्वंति । यदा शरीरसंवर्धकानि खाद्यपेयानि आमाशये पचनेंद्रियैरग्निना संयुज्यंते तदा उष्णतायाः प्रभावेण पचनं नयंति । पाचितानां खाद्यपेयानां सारभागो रसो ( कॉइल् ) निष्पद्यते । अन्यच्च देहे समरसतामगच्छन् भागः किट्टं वा मलो वेति भण्यते । तस्मात्किट्टात् वातपित्तकफास्तथा मूत्रमलादिरिंद्रियमलो निष्पन्नो भवति । अन्नस्याशुद्धोभागो मूत्रमलौ, रसस्याशुद्धोभागः पित्तं ( बॉइल् ) इत्यादि । इत्यस्य अयमर्थो लक्ष्यते यदिमे अन्यपदार्थवत् शरीर-स्याभ्यंतराभ्यो ग्रंथिभ्यः स्रवमाणा द्रवपदार्था ( सीक्रिशन् ) वर्तंते । ते यदा योग्यप्रमाणेन स्रवमाणास्तदा ते शरीरधारणकर्मणि उपयुज्यंते । परं ते यदा समप्रमाणापेक्षया हीना वाप्यधिका वा स्रवमाणा भवेयुस्तदा शरीरविकृतिं वा

शरीरनाशं वा आपादयंति । सर्वेभ्यस्त्रवद्भ्यः पदार्थेभ्यो मलरूपद्रवेभ्यो — वातपित्तकफास्तु मूलत एवात्यंतमुपयुक्ताः पदार्था ( वस्तूनि ) निगद्यंते ।

शरीरं रसादिशुक्रांतसप्तधातुभिर्घटितमिति । यदस्माभिरद्यतेऽन्नं तच्छ-रीरधातुपोषणायोपयुक्तं भवति । तथापि भक्षितं सर्वमप्यन्नं शरीरवर्धनायोपयुक्तं न भवति । तस्मात्किमपि शरीरानुपयुक्तं शिष्टं भवत्येव । अत्राऽयं प्रश्नस्समु-त्पन्नो भवति यद्वस्तु शरीरं धारयति वा नाशयति वा तत्किमस्ति ? धातूनां योग्यप्रमाणमेव शरीरप्रकृतिः । तथापि इदं योग्यं प्रमाणं तदैव सुस्थितं भवेत् यदा प्रतिधातुं योग्यांशेन पोषको भागो यदा प्राप्येत । स हीनो वाप्यधिको वा नैव युक्तः । सोऽयं योग्योंऽशः खाद्यपेयानां उपयोगेऽवलंबितो वर्तते । अन्यच्च एतदपि आवश्यकं यद्धीनताया वा वृद्धेः कारणानां योग्यं कार्यं भाव्यम् । तदित्थं यत्तेषां घटकानां तथा सर्वशरीरघटकानां योग्यप्रमाणस्यास्तित्वे तेषामुपयोगः । अतो निरुपयोगिनां पदार्थानां प्रमाणतो न्यूनत्वं वा वृद्धि-र्धातुसाम्यावस्थाया विकृत्युत्पादकस्सातत्येनानुषंगिकः पदार्थ एव । अतएव तेषां शरीरानुपयुक्तपदार्थानां न्यूनता वा वृद्धिः सर्वधातुवैषम्यस्य कारणमिति शास्त्रे प्रतिपादितम् । यावत्कालपर्यंतं तेषां पदार्थानां नैव न्यूनता वा वृद्धि-स्तावत्कालपर्यंतं ते निरुपयोगिनः पदार्थाः शरीरकार्यकराः प्रवर्तका एव । अतस्ते धातव इति ज्ञातुं योग्यमेव । यदा तेषां मध्ये एकस्य वा अधिकानां भवति प्रमाणतो न्यूनता वा वृद्धिस्तदा ते शरीरधारणकार्यविरोधिनो भवंति, तदा ते दोषशद्बेनाऽभिसंज्ञिता भवंति । शरीरानुपयोगिनः पदार्थास्तु नैकशो विद्यंते । तथापि तेषांमध्ये वातपित्तकफाः शरीरवृद्धिशरीरनाशयोर्वा आरोग्यरोगाणां वा मूले वर्तमाना अतिशयेन महत्ववंतो विद्यंते ।

अत्र तावदेको विद्यते महान् प्रश्नः, तत्रावधानमावश्यकम् । मलशद्बस्तु कुत्रचित् दूषयितारः प्रवर्तका इति, कुत्रचित् अशुद्धपदार्थास्तथा कुत्रचित् निरुपयोगिपदार्था इति ग्रंथेषु उपयुक्ताः । अतो मलशद्बार्थे भ्रमोत्पत्तिर्भवेत् । मलशद्बस्य संबंधो रोगोत्पत्तिरित्यत्र, तथा किट्टशद्बस्य निरुपयोगिपदार्थो,

ग्रंथिभ्यश्चयवमाना द्रवपदार्था इत्यर्थोऽपि विद्यते । ते यदा एवं प्रमाणाः संतो रोगोत्पादका भवंति तदा ते मलशद्बिता भवंति, मलशद्बितास्ते यावत्प्रमाणावस्थितास्संतो रोगानुत्पादकास्तावत्प्रमाणावस्थितास्ते ' मलधातु ' शद्बेनाभिहिता भवंति। नैव ते तदा मलाः । चरके तु ( सूत्रस्थान अ. २८ श्लोक ३ ) संजातपचनादन्नात्सारं किट्टं चाभिनिर्वर्तते—( किट्टं—ग्रंथिभ्यश्चवमाना द्रवपदार्थाः ) अस्मात्किट्टात् स्वेदो, मलमूत्रे, वातपित्तश्लेष्माणोऽत्पद्यंते । मला अपि योग्यप्रमाणावस्थितास्साम्यावस्थास्थिता सप्तधातव इव शरीरधारणात् धातव एवोच्यंते इत्युक्तम् ।

किट्टशद्बस्य सत्योऽर्थः क इति निश्चेतुं दुष्करमेव । तथापि तस्याऽर्थस्तु—अन्नरसस्य पक्वरस इव न पक्वो भागः । रक्तमिव न पक्वो भागो वा सप्तधातुषु अपक्वो भागः । किंवा अन्नरसात् शरीरपोषकभागस्य शोषणेन पश्चादुर्वरितोऽशुद्धो भागः । अपक्वे भागे संगतास्तत् तत् धातुभ्योऽत्सृष्टा द्रवपदार्थाः ये सर्वथा नैव पक्वाः । किट्टशद्बस्य धातुमला वा धातूनामशुद्धपदार्थाः । इमे धातुभिः परित्यक्ताः पदार्थाः आंतरग्रंथिभ्यः उत्सृज्यमानाः—पदार्थाः शरीरस्य विधायकशक्तेर्वा विनाशकशक्तेर्वा कारणानि विद्यंते ।

अत्र एवं प्रश्नोत्पत्तिर्भवेत्—वातपित्तकफाः किं स्वरूपाः पदार्था ? वा केवलं काल्पनिका वा ? येषामस्तित्वं विनैव बहूनां लक्षणानां ते चिन्हानि ? इति । काल्पनिकानि लक्षणानां संकेतचिन्हानि इत्यस्यार्थस्य ग्रहणे विद्यंते बहवः प्रत्यवायाः । संति एतादृशानि वचनानि बहूनि येषु दोषाणां वर्णनं–ग्रंथिभ्यस्स्रवमाणा द्रवपदार्था–इति विद्यते। तेषां समप्रमाणात् शरीरधारणं शरीरोत्पादो भवति, विषमप्रमाणाद्रोगोत्पादस्तथा शरीरनाशो भवति । तथा तेषां विवक्षितो वर्णः, तेषां दृश्यं स्वरूपं विद्यते तेषां नियतानि स्थानानि, तेषु स्थानेषु तेषां संचयो भवति इत्यादिकं वर्तते, येन वर्णनेन ते दोषाः काल्पनिकास्तथा भिन्नानां लक्षणानां समावेशकानि संकेतचिन्हानि विद्यंते इत्ययमर्थो नैव सुतरां संगच्छते ।

अथ च दोषगुणानां संख्यासंबंधेनाऽपि प्रामुख्येनेदमवगंतुमावश्यकं यत् एकदोषस्य प्रकोप इत्यनेन तस्य दोषस्य सर्वेषामेव गुणानां पूर्णांशेन च प्रकटनं भवतीति नैव। दोषाणां एकस्य द्वयोर्वा बहूनां वा सर्वेषामपि गुणानां प्रकटनं भवेद्वा नैव भवेदित्यर्थोऽपि दोषप्रकोपशब्देनागच्छेत्। यथा वातस्य प्रकुपितस्य–रूक्षलघुचलबहुशीघ्रशीतवातगुणेषु मध्ये शीतगुणस्यापि वृद्धिर्भवेदन्येषां गुणानां नैव वा वृद्धिर्भवेत्। ते गुणास्तु तथैवावस्थिता वा भवेयुः। एवं वातगुणेषु मध्ये एकस्य द्वयोर्वा बहूनां वा सर्वेषां यथासंभवतो निदानतश्च वृद्धिर्भवेद्वानैव भवेत्। कदाचिदेवमेवापि भवेत् प्रकोपावस्थायां दोषगुणेषु मध्ये केचन गुणा वृद्धा वा केचन न्यूना वापि भवेयुः। इत्यनेन एवं निर्गलितोऽर्थो भवति, दोषो नाम ग्रंथिभ्यः प्रस्रवमाणो द्रवपदार्थः, तथा भिन्नभिन्नगुणयुक्तानां स्रवमाणानां द्रवपदार्थानां मिश्रणं, ( दोषः ) विशेषतो पित्तकफौ एकस्या एव ग्रंथेस्सकाशात्स्रवमाणौ द्रवपदार्थौ इत्यपेक्षया अनेके-भ्यो ग्रंथिभ्यश्च्यवमानद्रवद्रव्याणां समुदाय इत्यभिज्ञानं समुचितमिति। अयं च द्रवद्रव्यसमुदायो भिन्नभिन्नगुणयुक्तोऽपि सहकारितया निरुग्णावस्थायां एकया एव पद्धत्या करोति कार्यम्। रुग्णावस्थायां तु यदा प्रकोपावस्था भवति तदा दोषघटकग्रंथिभ्यस्स्रवमाणानां द्रवाणां वैषम्येणाभिनिष्पत्तिर्भवति। केचन द्रवपदार्था न्यूनोत्सृष्टा वा अधिकोत्सृष्टा वा नैवोसृष्टा वा भवेयुः। आयुर्वेद वर्ष २० अंक ४ आषाढ शु. १५ शके १८५५ श्री. **दा. भा. पटवर्धन** इत्येतैर्महाराष्ट्रभाषायामनुवादितस्य निबंधस्य गैर्वाण्या सारोद्धारः।

## डॉ. के. एस्. ह्मसकर एम्. ए., एम्. डी., डी. पी. एच्. मुंबई.

( इत्येतैः पैठणग्रामीयवैद्यसंमेलनावासरे ‘ आयुर्वेदोन्नते मार्गा ’ इत्यस्मिन्विषये यदकारि भाषणं तस्मिन् त्रिदोषविषयमुद्दिश्याऽधोलिखिता विचाराः प्रकटीकृताः )

‘ केचन आयुर्वेदवैद्यधूरिणाः स्वां कूपमंडूकवृत्तिं त्यक्त्वा आधु-निकशास्त्रेभ्योऽपि स्वीयशास्त्रेण समानं यत्किंचिदपि ग्राह्यमुपलभ्येत तस्मिन्

जागरुकाः संतो प्रयत्नं कुर्वंति, पुरातननूतनशास्त्रयोस्तुलनात्मकमभ्यासं कुर्वंति, तथाच नवीनस्य ग्राह्यांशभागग्रहणेन पुरातनशास्त्राभिवृद्धिं वांच्छंति। आयुर्वेदस्य पाश्चात्यवैद्यकसाम्यं दर्शयिष्यंति प्रयतंते तदर्थम्। अनेन प्रयत्नेन आयुर्वेदोपरि गृह्यमाणो अशास्त्रीयत्वारोपो नश्येत। आयुर्वेदीयसंदिग्धवाक्यानां प्रत्यक्षप्रयोगसदृशं महत्वं यास्यति। जगति वर्तंते नैकविधा-श्चिकित्सापद्धतयः। तासु सर्वासु चिकित्सायां विशेषतो वर्तते साम्यं, परं रोगहेतुसंप्राप्तिनिदानविचारपरंपरायां नैवावलोक्यते समानता। पाश्चात्यानां 'ह्यूमर्स' तथा आयुर्वेदीयानां त्रिदोषा एतेषु स्थूलालोचनेन दृश्यतेऽतीव सादृश्यम्। ग्रीकानां रोमनानां च संबंधमभिलक्ष्यीकृत्य परस्परेषां विचारसंक्रमणमभविष्यदिति संभाव्यते। तथापि इमां 'ह्युमर्स' कल्पनां दूरीकृत्य आधुनिकपाश्चात्यशास्त्रदृष्ट्या अयमायुर्वेदः शास्त्रशुद्धो वा नवेति द्रष्टुं त्रिदोषविषयका नैकविधाः कल्पनाः सांप्रतं संमुखं समापतिता वर्तंते। १ वातपित्तकफा यथासंख्यं १ एक्टोब्लास्ट, २ मेसोब्लास्ट, ३ एंडोब्लास्ट तथा १ ॲनॅबॉलिझम्, २ मेटॅबॉलिझम्, ३ कॅटॅबॉलिझम् तथा १ इरिटेशन्, २ इन्फ्लमेशन्, ३ सप्युरेशन् तथा १ कार्बन् डाय्, ऑक्साइड् गॅस् ( वातः ) २ बॉइल ( पित्तं ) ३ गॅस्ट्रिक सिस्टिम् ( कफः ) अथवा १ सेंट्रलनर्व्हज् ॲन्ड सिंपथेटिक् सिस्टिम्, २ हीटप्रॉडक्टिंग मेटॅबॉलिझम्, ३ रेस्पिरेटरी सिस्टिम् इति। तथापि अस्मिन्विषये सूक्ष्मतया दृष्टिनिपातो दत्तश्चेदिदं सर्वप्रकारकं साम्यदर्शनं झटित्येवापूर्णमेव प्रतिभाति। अतोऽपि व्यापकास्तथा सूक्ष्मा आयुर्वेदीयानां सिद्धांता भवेयुरिति जायते बुद्धिः।

एते सर्वे एव विचाराः प्रयोगातीताः केवलं कल्पनामयाः। कल्पनोद्गम आयुर्वेदीयैः कार्यः। तस्य सत्यासत्यत्वप्रतीतिविषये पाश्चात्याः प्रयतेयुः। अस्माभिरपि संशोधनोत्सौक्यार्थं सूच्यंते विचाराः। पाश्चात्यैः पंचविंशतिवर्षेभ्यः पूर्वं 'ह्यूमर्स' कल्पनायाः परीक्षणे कृतः प्रयत्नः। शरीरस्य व्यापाराबाह्यरसस्रावे तथा आंतररसस्रावे अवलंबिता वर्तंते इति अद्यापि केचन मन्यंते। परं अधुना एतेभ्यो रसस्रावेभ्योऽपि कारणं प्रतिजीवाणौ ( सेल् ) द्वौ

वा त्रयो वा स्रावा वर्तंते, तेषु इमे सर्वे व्यापारा अधिष्ठिताः संतीति शास्त्र-ज्ञानां मतं वर्तते । इमे स्रावाः शरीरावयवानां जीवाणुषु भवंतो दृश्यंते । ते च सततं जायमाना अभिलक्ष्यंते । शरीरधारणात्मके कार्ये निष्पन्ने नष्टा भवंति । एकस्मिन्समये सर्वास्मिन्शरीरे भवति तेषामल्पं प्रमाणम् । इयं तेषां साम्यावस्था । वैषम्यावस्थायां तेषां वृद्धिक्षयौ भवतः । ते तु अत्यंतया सूक्ष्मया मात्रया स्वीयं कार्यं कुर्वंति यत्केवलेन लोचनेन किमपि तु अत्यंतसूक्ष्मदर्शकयंत्रेणापि न दृश्यते । ते तु एकस्या रत्तिकायाः कोटयंशमितया मात्रयाऽपि विकृत-परिणामान् दर्शयंति । स्थानवैशेष्यात् तेषां गुणभिन्नता च भवति । कुत्रचित् ‘ रक्तवेगाधिक्यं ’ ( ब्लडप्रेशर ) कुत्रचित् वृद्धाः संतो निद्रामुपजनयंति । एकत्र तेषां संयोगात् विरुद्धाः क्रियाः कुर्वंति । तेषामुत्पत्तौ नियंत्रणं वातवाहिनीभिर्भवति । यदि सूक्ष्मप्रमाणेनापि उत्तेजिता, भवति तेषां विपुलः स्रावः । अयमत्र प्रधानो भावो यदेतेषां स्रावाणां सूक्ष्माणि द्रव्याणि रसायनप्रयोगशालायामुत्पन्नानि भवंति । काचकूप्यां दृष्टुं शक्यानि । तथैव पूर्वोक्तसूक्ष्मप्रमाणेन शरीरावयवेषु तेषु तेषु निक्षिप्तानि स्युस्तदा पूर्वप्रतिपादिताः क्रियाः प्रादुर्भूता भवंति । एतेषां सूक्ष्मद्रव्याणां गुणाः वातपित्तकफसमानाः प्रायो विद्यंते । ( एतेषां स्रावाणां नामानि असेरील्, कोलिन् )

जडसृष्टयाः अणुपरमाणुकल्पनायाः सांप्रतं असंख्यातायां प्रोटॉन् इलेक्ट्रान् इत्यादिशक्तिसृष्टौ रूपांतरं जातम् । पाश्चात्यानां पूर्वोक्तजडा-त्मकात्यंतसूक्ष्मस्राविपदार्थानां आदिकारणं शक्तिसृष्टौ नैवोपलभ्येतेति वक्तुं कः साहसं कुर्यात् । कदा वा पाश्चात्येभ्यो एतादृशाः शक्तिरूपास्तथा अप्रत्यक्षास्त्रिदोषाः स्वतंत्रेण संशोधनेनोपलब्धाश्चेत् शक्तिरूपत्रिदोषवादि-पक्षोऽपि शास्त्रीयसंशोधनेन समर्थितो भवेत् कदाचित् ।

पाश्चात्यानां उपरितनानां त्रिदोषसमानां पदार्थानां प्रयोगा अद्यैव मया कर्तुं शक्याः । परं अस्माकं प्रयोगपद्धतिः श्रीमद्भ्यो मान्या वर्तते इति प्रथमं विश्वासो देयः । उत श्रीमतामपि का प्रयोगपद्धतिस्साऽपि वक्तव्या तदैव एतत्सर्वं सुशकम् । ता. २-५-३५, भिषग्विलास ।

## त्रिदोषाणां आधुनिकशास्त्रदृष्ट्या विचारः

डॉ. दा. मा. जळगांवकर एल्. एम्. एस्.
(नॅ.) एम्. सी. पी. एस्. दर्यापूर.

भिषग्विलास माघ शके १८५०.

१ **कफः** —शरीरपरमाणुषु वर्तमाना संयोजकशक्तिः ।

२ **पित्तम्ः** —विजातीयद्रव्याणां छेदनेन शरीरसात्म्यत्वं यया संपद्यते सा शक्तिः ।

३ **वातः** —शरीरपरमाणूनां चलनात्मिका शक्तिः । इत्यनेन, शरीरे सूक्ष्मपरमाणुषु दृश्यमाना संयोजकशक्तिः, भ्राजकशक्तिः, गत्यात्मकशक्तिरेव त्रिदोषाः।

शक्तिरयं गुणः । अदृश्यत्वेन तस्य आश्रयस्थानत्वेन कस्याऽपि वस्तोरावश्यकता विद्यते । अत येषां दृश्यपदार्थानां त्रिदोषैराश्रयः कृतः तेषां पदार्थानां गुणविषयको विचारः कृतश्चेत् कफो वा कफगुणाश्रितं वस्तु वा स्निग्धो मसृणः शांतो दृश्यते । पित्तं वा पित्तगुणाश्रितं वस्तु वा तीक्ष्णं, अम्लं विद्यते, वातस्य आधारभूतं वस्तु सूक्ष्मं चंचलं लघु वर्तते । त्रिदोषा अस्माभिर्दृश्यमानानि नैव वस्तूनि किंतु वस्त्वंतर्गता शक्तिरेव । आसां शक्तीनां कार्यं शारीरिकव्यापारेषु स्थूलत्वेन अन्नपचनमारभ्य सप्तधातुमार्गेण शरीरपोषणशरीरस्वास्थ्यांतं एतेषामेव दोषाणामाधारेण संपद्यते ।

आयुर्वेदीयानि तत्वानि बुद्धिगम्यानि, आधुनिकशास्त्राणि प्रत्यक्षप्रमाणदर्शकाणि संति । तदर्थं एकमुदाहरणं दृक्पथमायातम्—रोगकारकाः कीटाणवः सांप्रतं रोगोत्पादका इति संगिरंते, ते तु कीटाणवो वातावरणे संचरंतो शरीरसंबद्धाऽपि न हि सर्वेषामेव रोगोत्पादका भवंतीति दृश्यते । कीटाणुरूपं विजातीयद्रव्यं शरीरे गच्छत् शरीरस्थश्वेतपिंडैः (फागोसाइड्स्) नष्टं भवति । ते तु पिंडा यया पद्धत्या तत्कीटाणुरूपं विजातीयद्रव्यं नाशयंति

तस्या विचारः कृतश्चेत् इदं दृश्यते दृश्यम्—तस्मिन् वस्तुनि शरीरसंरक्षकाः श्वेतपिंडा आकर्षिता भवंति । तदनु स्वोदरे संनिवेशयंति, तस्मिन्तेषां च्छेदनं भवति । त्याज्यवस्तु किट्टरूपं बहिः क्षिप्तः भवति । इदं सर्वमपि सूक्ष्मदर्शक-यंत्रेण द्रष्टुं शक्यते प्रयोगशालासु । —अस्यैव दृश्यस्य आयुर्वेदीयपरिभाषया तस्मिन् कीटाणुवस्तुनि श्वेतपिंडानां संयोगः कफेन भवति, संयोगकृत् कफः । तस्य वस्तुनश्च्छेदनं पित्तेन भवति, पृथक्करणकृत् पित्तं, । किट्टरूपम-लांशक्षेपणं यया भवति सा शक्तिर्वातः, विक्षेपकृद्वातः । ईश्वरस्य नियम एवाऽयं येन नियमेन स्थूलो देहस्संबधस्तेनैव नियमेन शरीरस्थसूक्ष्माणुपिंडा अपि संबद्धा वर्तते । अस्माभिरद्यमानमन्नमपि अनेनैव नियमेन संबद्धं वर्तते । तस्य संयोजनं मुखस्थितलालारूपः कफः करोति । पित्तस्य पाचकं कार्यं तदामाशयस्थं पित्तं करोति । अन्नकिट्टरूपं वस्तु वायुर्बहिः क्षिपति । या वृत्तिर्देहस्य सैव तस्य परमाणूनामपि ।

## डॉ. दा. म. भोसेकर ( हैद्राबाद दक्षिण )

" आयुर्वेदीयत्रिदोषाः " भिषग्विलास फाल्गुन १८५१ ।

त्रिदोषा वा त्रिधातवः ? अयं वादोऽत्यंतं रमणीय एव । वस्तुतस्तु त्रिधातवस्त्रिदोषा एके एव । धातवो दोषा अपि पदार्था एव । तेषां नाम-भिन्नत्वं तेषां अणुमिश्रणप्रमाणवैभिन्यात्तथा कार्यवैभिन्यादेव वर्तते ।

यदा हि ते पदार्थाः शरीराभिवृद्धिकरास्संपद्यंते—शरीरघटकेषु संमिश्रा यदा भवंति-तदा ते धातुसंज्ञया व्यवहार्याः । यदा ते शरीररोगकारका वा शरीरनाशका वा भवंति तदा ते दोषसंज्ञया व्यवहार्याः । धातवो, दोषा, मला, इत्ययं संज्ञा मूलत एकस्यैव पदार्थस्य विद्यते । निरुपयोगिनो पदार्था मलाः । दुष्टाः पदार्था दोषाः । उपयुक्ताः पदार्था धातवः ।

सचेतनस्य आत्मनश्चैतन्यशक्तिर्जडसृष्टेर्जननी विद्यते । इयमेवादिशक्तिः स्वकार्यानुरूपेण त्रिगुणात्मिका भवति । इयं शक्तिः कदा व्यक्त ( ॲक्टिव्ह )

कदा चाऽव्यक्तं ( लेटंट, पॅसिव्ह, ) इति द्विप्रकारकं कार्यं करोति। सजीवशरीरे इयं त्रिगुणात्मिका विद्यते।

एकस्या विद्युतः प्रकारास्त्रयो भवंतीति १ निगेटिव्ह २ पॉझिटिव्ह ३ गतिमान् इति तेषां नामानि। कार्येणैव अस्य भिन्नता प्रकटिता भवति। इयं शक्तिः पदार्थाश्रिता भवति। तस्याः कार्यवैभिन्येन नामकरणमपि विभिन्न-प्रकारकं जायते। विद्युत्प्रवाह-(करंट) प्रारंभे अचेतनपदार्थस्य वा द्रव्यस्य आश्रयो आवश्यक एव। जले किंचिदम्ल--( ॲसिड् ) प्रक्षेपाद्विना विद्युत्प्रारंभो नैव भवति। अतः स्पंदनं वा क्रियावान् संदेशो वातस्य स्वरूपमिति वक्तुं युज्यते।

**पित्तम्**—अयं पदार्थो वातापेक्षया अधिको घनो ( द्रवरूपो )ऽस्ति अस्य गुणधर्माः पाचकोत्तेजकाः शरीरोपकारका विद्यंते। दाहकभस्मकादयो ये गुणास्ते शरीररोगकारकाः संति।

दाहकं पित्तम् दूषितं, पाचकं पित्तं पोषकं इत्ययं भेदः। वस्तुतस्तु पित्तं मूलतो एकमेव द्रव्यम् इदं। च गुणवैभिन्न्यं तस्मिन् द्रव्ये परिणामका-रिण्याः पित्तशक्त्याः संस्कारेणोभ्दूतमिति विज्ञेयम्। यथा कोष्णं जलं स्नाने पाने च हितावहं, अत्युष्णं उभयस्मिन्नपि कर्मणि अयुक्तं अहितावहं च। एक-मेव जलं तथापि तस्मिन्नुष्णतामानेन वैभिन्यं समागतं वर्तते। तथैव एकस्मि-न्पात्रे स्थितं दुग्धं अत्यंततप्तं चेदूर्ध्वमागच्छत् भूम्यां निष्पतत् पानाऽयोग्यं भवति। सम्यक् तप्तं पानयोग्यं भवति। अवस्थाद्वयापन्नं दुग्धं तु एकमेव, परं भिन्नस्थित्यंतरापन्नत्वेनैषावस्था जायते। इयं चावस्था नैव दुग्धाधीना किंतु तस्मिन् गत्युत्पादनप्रवणस्याग्निशक्तेः कार्यमिदमिति तु स्पष्टमेव।

**कफः**—अयं पदार्थो ( वस्तु ) घनस्वरूपो शीतो मसृणः क्षारयुक्तश्च विद्यते। यथा उष्णताप्रधानो द्रवरूपः पदार्थः पित्तस्याधिष्ठानं, तथा शीत-गुणप्रधानो घनरूपः पदार्थः कफशक्त्या अधिष्ठानम्। अस्याः शक्तेः कार्यं पित्तकार्यविरूद्धम्। यथा हिमं, शीतो वायुश्च किंचित्कालं शरीरस्पर्शसुखकरो

भवेत् । परंतु एतस्यैवातिरेकेण एतद्द्वयमपि शरीराऽपायकरं संभवेदेव । एतद्द्वयमपि हिमं, शीतस्पर्शो वातश्च विरूद्धकारणेन रोगकारकमभूत् । एकस्मिन् वायोरुष्णताप्रधानस्पंदनस्य कार्यं विद्यते, अपरस्मिन् वायोः शीतगुणकार्यस्य स्पंदनं वरीवर्ति । एवं एकस्या एव मूलशक्ते इमे रूपांतरे बभूवतुः । अनेन विवेचनेन—वातपित्तकफाः कार्यकारिणो नैव पदार्थाः । किंवा तदाश्रितपदार्थास्तु-नैवाचिंत्यशक्तयः ।

त्रिगुणात्मिका जगच्चालकशक्तिरंशरूपेण पिंडेऽपि जीवात्मन आश्रयेण वर्तते । चालकपोषकसंवर्धकशक्तियुताः पदार्थास्त्रिधातवः । संहारकशक्तियुता वा रोगोत्पादकशक्तियुता वा पदार्था दोषा इत्युच्यंते । मला अपि दोषा एव । परं सर्वथा निरुपयोगात्त्याज्यत्वान्मलेति संबोधिताः । शरीरे दोषधातुमलानां नित्यमस्तित्वं वर्तते एव, ते तस्य स्तंभाधाराः । मलस्तु शरीरे सात्मीभूतपदार्थानां निरुपयुक्तो भागः । पदार्थानां अस्तित्वेन साकं शरीरे तस्यास्तित्वं वर्तमानमेव । शरीरे चालकशक्तयस्तु स्वतंत्रतया वर्तमाना भवेयुरिति ।

## पंडित दिगंबरजी बक्षी कैवल्यधामवासी ( बोरवली )

आयुर्वेदस्य ‘ तात्विको विचारः ’ भिषग्विलासे चैत्र—ज्येष्ठ
शके १८५५ अंके १-३ अस्मिन् विषये लिखितवंतः ।

आयुर्वेदोऽनादिरिति तस्मिन्नेव कथितम् । प्रलयकालादूर्ध्वं सृष्ट्युत्पत्तिर्बभूव । सा च विकासवादपद्धत्या नैवोत्पन्ना अपि तु सर्वेऽपि जीवाऽजीवा यथा पूर्वस्मिन्संकल्पे अभवन् तथैव समुत्पन्ना बभूवुरिति पौरस्त्यमतम् । समुत्पन्ना जीवाः स्वपोषणाय प्रयतमाना यमेवाशनपानं जगृहुस्तस्य अव्यवस्थया वा प्रज्ञापराधेन वा तेषां शरीरस्वास्थ्यस्य दुष्टेरनेकाः प्रसंगा अपि प्रादुर्भूता भवेयुः । उत्पन्नमस्वास्थ्यं नाशयितुं स्वभावादेव तेषां प्रयत्नोऽपि प्रारब्धो भवेदेव । ये च तदर्थं तैर्गृहीता द्रव्याऽद्रव्यप्रयोगाणामनुभवास्तानेकत्र संकलय्य तेषां विवेचनं च कृत्वा नियमान् निर्माप्य यदभूत्संग्रहः सा एव चरक-

संहिता। संहिता शब्देनैव इतस्ततः पर्यस्तज्ञानस्य संग्रह इत्यर्थबोधो भवति। सृष्टेरनादित्वादायुर्वेदोऽपि अनादिरेव।

अस्मिन्नेवाऽयुर्वेदशास्त्रे १ किं नाम जीवितम्, २ जीवितस्य व्यापाराः कथं केषु च कैर्भवंति ३ जीवितव्यापाराणां नियतपूर्ववृत्ति किं वर्तते एतेषां विचारः कृतोऽस्ति।

सृष्टिविषयकविचारकरणे प्रवृत्ते द्वे वर्तेते सांख्यन्यायनामके शास्त्रे। द्वयोरपि शास्त्रयोस्तुल्यबलत्वमासीत्तस्मिन् काले। द्वयोरपि शास्त्रयोः सिद्धांतान् अंगीकृत्य आयुर्वेदेन जीवितिशास्त्रस्य सिद्धांता आविष्कृताः। शास्त्रद्वयतोऽपि शरीरेंद्रियसत्वात्मसंयोग एव जीवितमित्यस्मिन्नायुर्वेदीयसिद्धांते न कापि विप्रतिपत्तिर्वर्तते—

स चायं संयोगो अनुमेय एव तस्य इमानि लक्षणानि।

यच्चाप्नोति, यदादत्ते, यच्चात्ति विषयानिह।
यश्चास्य संततो भावस्तस्मादात्मेति गीयते॥

इमानि यत्र वर्तंते तत्रात्मसंयोगो नियत एव। भोगार्थं लिंगशरीरं तथा मनश्चापि तस्मिन्विद्यते। एवमस्ति तत्र जीवितमित्यवबुध्यते। यतो "नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते। संयोगः पुरुषस्येष्टो विशेषो वेदनाकृतः। आदानं, विसर्गः, संवेदना, भोक्तृत्वं, संततभावश्चेत्येतैर्लक्षणैरात्ममनःशरीरसंयोगो ज्ञाप्यते। तथा च १ अस्ति, २ जायते, ३ वर्द्धते, विपरिणमते, ५ अपक्षीयते, ६ म्रीयते, (नश्यति) इत्येतैः षड्भावैरपि जीवितस्याकलनं भवति। लिंगशरीरस्थूलशरीरयोस्संजाते संयोगे इमे षड्भावाः प्रादुर्भवंति। एवं च जीवितस्वास्थ्यस्य विचारे प्रारब्धे केवलाया मनुष्यसृष्टेरेव विचारस्तु अपर्याप्तो भवेत्। तदर्थं वृक्षकीटकपतंगादीनां अपि विचारस्यावश्यकता विद्यते। यतस्तेषु सर्वेष्वपि अनुस्यूतं एकमेव जीवितं कथं प्रवर्तते, तस्य नियतपूर्ववृत्तीनि कानि कारणानि, गौणानि कानि, अन्यथासिद्धानि कानि, इत्यस्यापि परामर्श आवश्यक एव।

शरीरस्य पृथिवी उपादानकारणं, चत्वारि अन्यानि महाभूतानि उपष्टंभकानि विद्यंते। शरीरं तु कृमिकीटादीनामपि ग्राह्यम्। आकाशभूतं तु विभु वर्तते। आप्तेजवायव एव शरीरे कार्यकर्तारो विद्यंते। कृमिकीटकपतंगाद्यारभ्य मानुषपर्यंतं जीवितचिन्हानि तु १ भक्षणं, २ उत्सर्जनं, ३ संवित् ४ वृद्धिः ५ क्षयः ६ स्वजातीयप्रजोत्पादश्चेति समानानि लक्ष्यंते। सर्वेषां जीवानां जीवनं तु जलसूर्यतापवायुस्वाधीनं वर्तते। इमान्येव आप्तेजवायुभूतानि जीवितस्य नियतपूर्ववृत्तिकारणानि विद्यंते। 'यत्सत्वे यत्सत्वं यदसत्वे यदसत्वं' इत्यनेन नियमेन सर्वजीवानां जीवितस्य इमान्येव कारणानि नियतपूर्ववृत्तीनि, अपराणि तु अन्यथासिद्धानि। बाह्यसृष्टेः आप्तेजवायुभूतानां शरीरांतर्गताप्तेजवायुभिः सह नित्यं संबंधो वर्तते। तेषां बाह्यानां त्रयाणां महाभूतानां शारीरमहाभूतैः संबंधो हिनाधिकत्वेनागतश्चेत् तेषामपि हिनाधिकत्वं उपजायते। सर्वत्र महाभूतानां साजात्यात्।

शरीरांतस्थोपष्टंभकमहाभूतत्रयमेव क्रमेण कफपित्तवातेति संज्ञितम्। तान्येव द्रव्याणि बाह्यसृष्टौ आपः, तेजः, वायुः, इति नाम्ना संबोधितानि। बाह्यजगति वर्तमानानि इमानि द्रव्याणि भौतिकानि, तथा जीवित्शरीरे वर्तमानानि कफपित्तवातात्मकानि जीवद्रव्याणीति महान् अनयोर्द्वयोर्मध्ये भेदो विद्यते। १ सूक्ष्मशरीरं–लिंगदेहः–स्थूलशरीराद्भिन्नम्। २ तत् शुभाशुभकर्मणा भोगार्थं नानायोनिषु भ्रमति। ३ ताश्च योनयो नैकविधा वृक्षकृमिपशुपक्षिमनुष्यादयः। ४ एतान्येव भोगायतनानि। ५ इमानि सर्वाण्यपि स्थूलशरीराणि पार्थिवानि। ६ इतरभूतानि तु उपष्टंभकानि। ७ एतेषां च लिंगशरीराणां संयोग एव जीवितम्। ८ अस्यच जीवितस्य व्यापाराः सुखकरा वा असुखकरा आप्तेजवाय्वाधीनाः। ९ जीवसाक्षित्वेन विलक्षणभावमापन्नानां एतेषां जीवनद्रव्याणां वातपित्तकफेति विद्यते संज्ञा। १० एतेषां द्रव्याणां साम्येन सुस्थे जीवितव्यापारे जीविताधारकत्वाद्धातुरिति तेषां संज्ञा विद्यते। ११ एतेषां वैषम्याज्जीवितव्यापारदुष्टिर्जायते। १२ दुष्टिकारणत्वाद्दोषा इति संज्ञिता ह्येते। १३ एतान्येव यदा मलरूपेण स्थूलावस्थायां दृष्टानि भवंति तदा तेषां

मलेति संज्ञा । इयमेव त्रिधातुत्रिदोषपद्धतिः आर्याणाम् ।

शरीरे अभिदृश्यमानानि द्रव्याणि ( पदार्थाः ) रसासृग्मांसमेदोस्थिमज्जाशुक्राणि धातवः । मूत्रशकृत्स्वेदादयो मलाः । स्नायुकंडरा उपधातवः । मलस्वेदरक्तादिवहस्रोतांसि । फुप्फुसादिधात्वाशयाः । ते सर्वेऽपि अन्नसंभवाः । 'आहारसंभवं वस्तु ( देहः ) रोगाश्चाहारसंभवाः' । चरकसूत्र. ॥ इमे सर्वेऽपि धातूपधातुमला आहारसंभवाः । धात्वादिकानां कारणं अन्नरसः । एतेषां सर्वेषां धात्वादिकानां विशिष्टस्समुदाय एव शरीरम् । कफपित्तवाता उपष्टंभकद्रव्याणि धात्वादिकेषु वर्तमानानि जीवितव्यापारकारणानि भवंति । इमानि त्रीणि द्रव्याणि सर्व शरीरव्यापीनि विद्यंते । तथापि आमाशयादूर्ध्वांगानि, मेदः, पर्वाणि, मूत्रं चेति कफस्थानानि । तथैव रक्तं, लसिका, स्वेदः, पक्काशयश्चेति पित्तस्थानानि । बस्तिः, अधरपक्काशयः, अस्थीनि, मज्जाचेति वातस्थानानि । तथा तेषां कार्याण्यपि पृथक् पृथक् विद्यंते । एतेषामेव वातादीनां कार्यविशेषात्, व्यापारविशेषात् धातवो, दोषा इति च विद्यते संज्ञा । रसादिधातवो ' शरीरघटकाः ' मलमूत्रादि ' मलाः ' एते सर्वेऽपि व्याधिविचारेण ' दूष्या ' इति संज्ञिताः । एवं च शरीरं नाम दोषा, धातवो, उपधातवो, मलाश्च, भिन्नानि स्रोतांसि, च एतेषां समुदायः । अस्मिन्समुदाये त्रीन् दोषान् विहाय इतरेषु अर्थक्रियाकारित्वं नास्ति । दोषेष्वपि वायोरेवार्थक्रियाकारित्वं अधिकतरं वर्तते । अतएव 'पित्तं पंगु कफः पंगु पंगवो मलधातवः । वायुना यत्र नीयंते तत्र वर्षन्ति मेघवत्' इत्युक्तम् । एवमेषा आयुर्वेदस्य त्रिधातुत्रिदोषपद्धतिर्विद्यते । इयमेव पद्धतिः सर्वेष्वपि जीवेषु, वृक्षेषु, यत्र यत्र वा जीवितं विद्यते तत्र तत्र समानैवांगीकृता शास्त्रकृद्भिः । वृक्षपशुमनुष्येषु जीवितं नाम एकमेव । अतस्तच्छास्त्राणां मूलसिद्धांतोऽपि एक एव । एकपेशीमये जीवाणौ यद्यपि कफपित्तवायुनां नैव विद्यंते पृथक् स्थानानि । रसधातुं विहाय रक्तादिधातवोऽपि न भवंति, अंगप्रत्यंगानामपि अभाव एव । तथापि तस्मिन्नेकपेशीमये जीवाणौ कफपित्तवातानां अस्तित्वं नास्तीति न । तस्मिन्नपि वृद्धिः, अन्नग्रहणं, अन्नस्यशोषो वा रूपांतरं, मलस्योत्सर्ग इत्यादिकाः क्रिया भवंत्येव । अत एतास्सर्वा

क्रिया विना कफपित्तवातेभ्यो नैव संभाव्याः । तात्पर्यम्—वृक्षादिस्थावरेषु, एकपेशीजीवादारभ्य मानुषपर्यंतेषु जंगमेषु कफपित्तवातानां वर्तते अनुस्यूतत्वम्।

## वैद्यरत्न पंडितप्रवरमूर्धन्य त्र्यंबकशास्त्री जोशी वैद्यराज वाराणसी.

आयुर्वेदे रोगाणां कारणज्ञापकसिद्धांतस्त्रिदोषतत्वे प्रतिष्ठितो वर्तते । त्रिदोषाणां साम्यावस्था एव आरोग्यम् । तेषां वैषम्यं रोगः । इयं साम्यावस्था कालस्य शीतोष्णवर्षस्वभावात्, तथा वैपरीत्यात्, असात्म्येंद्रियार्थसंयोगात्, । तथा शारीराभिघाताद्विकृता भवति तया च भवति रोगाणां प्रादुर्भावः ।

एतेषां त्रिदोषाणां परिमाणस्य नैकविधा जातयो, भिन्नानि च स्थानानि नैकविधानि संति । अतो रोगा अपि असंख्येयाः । इमे च त्रिदोषाः पाश्चात्यास्त्रयो ' ह्यूमर्स् ' इव विज्ञेयाः । ( मद्रास रिपोर्ट )

## वैद्यराज अप्पाशास्त्री साठे मुंबई.

आयुर्वेदो नाम आयुषो ज्ञानम् । आयुष्यं नाम पांचभौतिकं शरीरं, पंचेंद्रियाणि, मन आत्मा च येषां संयोगः । आत्मा चांतर्गतबहिर्गतकारणैर्न-कदापि विकृतो भवति । न च स्वयं विकारान्कुरुते । पांचभौतिकं शरीरं, इंद्रियाणि, मन, इमानि विकृतिं गच्छंति । तया च विकृत्या आत्मा दुःखभाक् भवति । यस्मात् तैस्तस्य साहचर्यं वर्तते । अयमेव रोगः । शरीरे तदवयवेषु च रोगद्वैविध्यं भवति । अंतर्गतदोषप्रकोपेण, बाह्यैर्हेतुभिश्च ।

अधुना अंतर्गतरोगकारणविचारं कुर्मः—प्रथमतो दोषा नाम के इति विचार आवश्यकः । आयुर्वेदस्तु षड्दार्शनिकः । स, विश्वस्योत्पात्तिं उपादान-कारणभूतेभ्यः पंचमहाभूतेभ्य एव भवतीति मनुते । मानुषं शारीरमपि पंचमहाभूतोत्पन्नमेव विद्यते । रोगाणां निदानं चिकित्सा सम्यक्तया कर्तुं एतेभ्य एव पंचमहाभूतेभ्यास्त्रिदोषाणामुत्पत्तिर्जातेति तद्विदां मतम् । जीव-माने शरीरे आकाशवाय्वोस्तैर्वातेति प्रदत्ता संज्ञा । तेजसः पित्तमिति संज्ञा,

तथा च पृथ्वीजलयोः कफेति संज्ञा तैः प्रदत्ता । जीवतः शरीरादन्यत्र नेयं संज्ञा तैर्व्यवहृता । तेषां साम्यं नाम आरोग्यम् । वैषम्यं नाम अनारोग्यम् । विश्वस्मिन्समुद्भूतानि द्रव्याणि पंचमहाभूतोत्पन्नानि मानुषशरीरे समप्रमाणेन अन्नरूपेण समाविष्टानि यदा भवंति तदा तेषां पाचनं भूत्वा तानि तत्वानि स्वस्य स्वस्य स्वरूपस्य प्रमाणाधिकतां वर्द्धयंति । तेजोधिकानि द्रव्याणि पित्तं वर्धयंति । तथा च पृथिवीजलप्रमाणाधिकानि अन्नद्रव्याणि कफस्य वृद्धिं कुर्वंति ।

गृहीतमन्नं आनने गच्छत् चर्वितं भवति । अनंतरं गच्छति आमाशये । तत्र तस्मिन्नुपरि कफस्य संस्करणं भवति । तदनंतरं तत्पित्तसंस्कारार्हं भवति । यदा तद्गच्छति पित्ताशये तदा तस्मिन्नुपरि पित्तस्य क्रिया भवति । तस्माज्जीवनप्रदरसस्य तथा मलमूत्रादेर्वैभिन्यं भवति । मलमूत्रादयस्स्वेन मार्गेण बहिर्गच्छंति । सत्वरूपोऽन्नसारो अभिसरणक्रियया शरीरे अभिसृतो भवति । शरीरे रसादिशुक्रांतास्सप्तधातवो विद्यंते । एतेषां वर्तते स्वतंत्रोऽग्निः । अन्नरसस्य यदा एतेषु धातुषु संबंधो जायते, तदा इमे धातवः स्वीयाग्नेर्बलात् स्वोपचयकरद्रव्याणि अस्माद्रसात् शोषयंति । अन्नरसस्थद्रव्येषु पंचमहाभूतानां प्रमाणसाम्यं यदा नैव भवति तदा वातपित्तकफेष्वपि न्यूनाधिक्यमुपजायते । सप्तधातवोऽपि स्वां क्रियां यथायोग्यतया कर्तुं न समर्था भवंति । तेन कोऽप्यंशोऽपाचित एव तिष्ठति । स एवामो दोषेषु विकृतिमुत्पादयति । एकस्य दोषस्य प्रमाणं वर्धयति, अपरस्य दोषस्य प्रमाणं हीनं करोति । इमे एव प्रकुपिता दोषाः शरीरे प्रसरंतो यत्र स्थाने आघातं कुर्वंति, भवति तदा रोगाणामुत्पत्तिः । अयमंतर्गतरोगकारणानां विचारः । आम एव रोगस्य कारणं मन्यंते कोविदाः । अत एव रोगोऽपि आमय शब्द संज्ञितो वर्तते । ( मद्रास रिपोर्ट )

## पंडित वासुदेव नंबसेन कोचीन.

‘ तथाहि—अप्रत्यक्षो वायुरिति कश्चन पदार्थो रूक्षत्वचलनत्वादि लिंगैरनुमीयते ’ ।

एवं विधस्य वायोरप्रत्यक्षत्वान्नवीनैरस्याधारभूतः प्रत्यक्षवेद्यश्च स्नायुः

' नर्व्ह ' एव तत्स्थाने व्यवऱ्हीयते। स्नायुशक्तिः ' नर्व्हस् फोर्स ' इत्याधुनिक-व्यवहारेण या विषयीक्रियते स एवायं वायुः। अपिच चराचरात्मकस्यास्य जगतस्सर्वस्यापि पंचभूतैरेवोत्पत्तिरिति सर्वेषां सिद्धांतः। तदन्तर्गतवाय्वग्नि-जलान्येवात्र वातपित्तश्लेष्मपदैर्व्यवऱ्हीयंते। शेषयोराकाशस्तु वायुत्वेनांगीकृत-आस्ते। पृथिव्यास्त्वत्यंतस्थूलत्वात्तज्जन्यस्य देहांशस्य वाय्वादिजन्यांशस्येव सर्वा विकृतिर्जायते। पृष्ठ १३६-१३७। (मद्रास रिपोर्ट)

## अहमदाबाद वैद्यसभा

## वैद्यराज नारायणशंकर देवशंकर अन्येच वैद्या

पाश्चिमात्यवैद्यैर्यस्य ' नर्व्हफोर्स ' इति कथ्यते, तस्य आयुर्वेदप्रणेत्रा ' वायु 'रिति कथ्यते। महर्षिभिर्यस्य नाडीमंडलमिति शब्देन वर्णनं षट्चक्रं इति कृतम्, तदेव पाश्चिमात्यग्रंथेषु नर्व्हस् सिस्टिम्, इति शब्देन व्यवऱ्हीयंते। पृष्ठ १५१ नर्व्हस् सिस्टिम्, ब्लॅड् सिस्टिम्, लिंफॅटिक् सिस्टिम् इति पाश्चिमात्यवैद्यके धातुरूपेण संज्ञिताः॥ १५०॥

हीटप्रॉडक्टिंग मेकॅनिझम्, मेटॅबॉलिक फंक्शन्, उष्णोत्पत्तिकृदज्ञेय-शक्तिरिति पाश्चिमात्यग्रंथकारैः कथ्यते। अग्निरूपस्यैव पित्तस्य पाचकादिसंज्ञा। पाचकाग्निः " बॉइल् " इति गृहीतः। रंजकपित्तमिति अन्वर्थकं नाम। ' दि ' कलरिंग मॅटर ऑफ दि बॉइल ' इज ड्राइव्हड् फ्रॉम अँड् रिलेटेड टु दॅट् ऑफ् ब्लड्, सिन्स् दि क्वालिटी ऑफ दि बॉइल पिग्मेंट, सीक्रेटेड ऑर मार्केड्ली इंक्रीज्ड् बाय् दि इंजेक्शन् ऑफ् सब्स्टन्स इन्टु दि व्हेन् ईच ऑर केपबल ऑफ् सीटिंग फ्री हेमोग्लॉबिन्। साधक पित्तेन हृत्प्रकोष्ठस्य संकोचविकासौ भवतः। आलोचकपित्तस्य स्थानं दृष्टिमंडलम्। दृष्टिमंडले या पित्तस्य क्रिया अस्ति (मेटॅबॉलिक् प्रोसेस्) तयैव दर्शनशक्तिर्जायते॥ १५२॥

क्लेदनकफस्य आमाशयस्थानम्। ' लाला ' शब्देन पाश्चिमात्यैः शब्दितम् ' सलायव्हा '। अवलंबनकफस्य रस इति पाश्चिमात्यसंज्ञा ' सीरम् ' इति।

स्नेहनकफस्य स्थानं शिरः । श्लेषणकफस्य स्थानं संधयः । ' सायनोव्हिया ' इति पाश्चिमात्या वदंति ॥ १५२ ॥

यच्छक्त्या शरीरजीवनव्यापारो जायते तच्छक्त्या पाश्चिमात्यग्रंथकारेभ्यो ' नर्व्हफोर्स ' इति ज्ञायते एव ॥ १५१ ॥ ( मद्रास रिपोर्ट )

## व्ही. नारायण नायर.

" आयुर्वेदीया पद्धतिस्तु त्रिदोषतत्वे अधिरूढा वर्तते । इयं त्रिदोष-पद्धतिस्तु प्राचीनग्रीक 'ह्यूमर्स' पद्धत्या नैव संबद्धा । इमे त्रिदोषास्तु सुप्तशक्ति-युता ' मॅक्राकम् ' इत्यस्य विभिन्नविशिष्टत्रितत्वमूला ( धिस् त्रिदोष इज् दि नेम् गिव्हन् टु दि लेटंट फोर्स् ऑफ् दि मॅक्राकम्, क्लॅसिफाइड् अंडर थ्री बेसिक प्रिन्सिपल्स् ) त्रयो दोषास्तु शक्तिरूपा नैव द्रव्याणि ॥ पृष्ठ २२२॥ ( मद्रास रिपोर्ट )

## आयुर्वेदभूषण पं. सी. व्ही. सुब्रह्मणिशास्त्री.

पंचमूलद्रव्येभ्यः शरीरं अभिनिर्वृत्तं । अग्निः ( फायर ) वायुः ( एअर ) जलम् (वॉटर) पृथ्वी (अर्थ्) आकाशः ( ईथर् ) पृथ्व्याः सकाशात् सप्तधातवः ।

त्रिदोषानाम शक्तिमंतो तेजात्मका शरीरमूलद्रव्याणि । ( पॉवरफुल् ऑर् व्हायटल् एलिमेंट्स् ऑफ् दि बॉडी ) चत्वारी भूतानि त्रिदोषानुत्पादयंति ॥ पृष्ठ २२६ ॥ ( मद्रास रिपोर्ट )

## दोषसिद्धांतः

## कविराज श्री द्वारकानाथसेन शर्मा,

### काव्यव्याकरणतर्कतीर्थ विरचितः –( कलकत्ता )

" आयुर्वेदे खलु सर्वस्यैव उपभोगसाधनीभूतद्रव्यस्य क्षित्यादिपंच-महाभूतारब्धत्वं व्यवस्थापितम् । तापपाचनादितेजोद्रव्यकार्यजननात् पित्तं तैजसमपि ( शरीरारंभकतेजःप्रधानपंचभूतविकारात्मकं, तेजःस्वरूपमपि )

न केवलं तेजः, क्षित्यादीतरभूतसंयुक्तत्वात् तेजस एव पित्तोत्पत्तेः । अतएव सुश्रुते पित्तं तैजसमित्युक्तम् । तेजोद्रव्योपादनत्वेऽपि पित्तस्य इतरभूतसहायादेव तेजस उत्पत्त्या विलक्षणस्वरूपेण प्रतीयमानत्वात् । तेजोगुणातिरिक्तकटुद्रव्यत्वादिविशिष्टगुणवत्त्वाच्च पृथङ्नामरूपाभ्यां निर्देश एवोचित इति । तत् तेजोविशेषमपि तेजोनाम्ना अनिर्देश्यसुवर्णवत् विलक्षणेन पित्तनाम्ना परिभाषितम् । आग्नेयत्वात् तस्मिन् पित्ते दहनपाचनादिक्रियास्वभिवर्तमाने अग्निरिति, तेज इति, व्यपदेशोऽपि युज्यत एव । अत आयुर्वेदे पित्तस्य तत्तन्नाम्ना कीर्तनमपि परिलक्ष्यते ।

एवं कफस्य जलासाधारणधर्मस्नेहवत्तया उदककर्मणा शरीरस्योपकारकतया च जलीयत्वेऽपि न जलाभिधानेन कीर्तनमर्हति । भूम्यादीतरभूतविमिश्रितजलादेव तस्योत्पत्तेः । विभिन्नाकारेण प्रतीतेश्च । अतस्तादृशशारीरजलीयद्रव्यस्यासाधारणेन कफादिनाम्नाऽभिधानमेव युज्यते । अभिन्नद्रव्यस्यापि हेत्वंतरयोगात् पृथग्रूपेण परिणतस्य तत्तद्विलक्षणरूपपरिचयार्थं, पृथक् पृथक् नाम्ना संकेतोऽन्यत्रापि दृश्यते-यथा सलिलादभिन्नानां तुषारहिमकरकादीनां सलिलविलक्षणेन तत्तन्नाम्ना । जलसदृशकार्यकारित्वाज्जलप्रधानोपादानकत्वात् च कफे जलमित्युपचारः क्रियते ।

अथ शरीरचरस्य वायोरपि पांचभौतिकत्वेन पृथिव्यादीतरभूतसंबंधवत्तया पित्तकफवत् पृथक् संज्ञया व्यवहार एवोचितः । नन्वविलक्षणेन सर्वतंत्रप्रसिद्धेन वाताभिधानेन इतिचेन्न । 'वायोरात्मैवात्मा' इति सुश्रुतवचनेनावगम्यते-सर्वैः- सर्वदानुभूयमनाद् बाह्यवातादेव शारीरवातस्योत्पत्तिरिति । परमसूक्ष्मरूपेण पृथिवीजलसूर्यकिरणाकाशानां संयोगसद्भावेऽपि बाह्यवायौ यथा तस्य असंघातरूपत्वेनादृश्यमूर्तित्वेन च विलक्षणावयवसंस्थानादिमत्तयानुभूतिर्न स्यात् । तथा वायूपादानकस्य शारीरवायोरपि परमसूक्ष्मतयेतरभूतसंबंधसत्वेऽपि असंघाताऽदृश्यपदार्थत्वात् विशिष्टद्रव्यरूपेण विशिष्टाकारेण च प्रतीतिर्नस्यादेव । अतस्तस्य पृथक् नाम्नाऽनिर्देशः । अपि तु समानगुणयोगित्वात् बाह्यशरीरवातयोरभिन्नाभिधानेन निरूपणमेवोचितम् ॥ पृष्ठ ४—५ ॥

वातः पित्तं कफश्चेति त्रीणि द्रव्याणि वैद्यके ।
धातुर्दोषोमलश्चेति गीयंते कार्यभेदतः ॥
वातपित्तकफा एव देहसंभवहेतवः ।
त एव विकृतास्संतो भवंति लयहेतवः ॥
अव्यापन्नैश्च तैरेव धार्यते शरीरं यतः ।
गृहमिवत्रिभिः स्तंभैस्तस्मात् ते धातवः स्मृताः ॥
भावास्सर्वेऽपि देहस्य दूष्यंत्येभिर्विकारगैः ।
यतस्तस्मान्निरुक्तास्ते वाताद्या दोषसंज्ञया ॥
मलधातूपधातूनां मलिनीकरणाच्च ते ।
मला इति निरुच्यंते वैद्यशास्त्रानुशीलिभिः ॥

अथवा

पच्यमानरसादीनां किट्टरूपेण संभवात् ।
वाताद्या व्यपदिश्यंते विद्वद्भिर्मलसंज्ञया ॥ पृष्ठ १४ १५ ॥
यदा ते विकृतिं यांति तदैव दोषसंज्ञया ।
गीयंते मलनाम्ना वा समास्तु धातुसंज्ञया ॥
अविकृतदशायां तु, दोषमलाभिधानतः ।
दुष्टिस्वरूपयोग्यत्वात् कीर्तनमौपचारिकम् ॥

## शरीरगतवातस्य स्वरूपम्

स्पर्शवान् रूपहीनो यः स वायुरुच्यते बुधैः ।
सर्वदा गतिमानेष ज्ञेयः स्पर्शादिहेतुभिः ॥
त्वगींद्रियेण तस्यापि प्रत्यक्षं भवति स्फुटम् ।
इति नैय्यायिका नव्याः प्रवदंत्यनुभूतितः ॥
बहिश्चरति यो वायुः स एव श्वासकर्मणा ।
शरीरांतः प्रविष्टोऽते ख्यायते धातुसंज्ञया ॥
अन्यथाप्यनिलो देहे जायते स च कथ्यते ।
पच्यमानं पुनर्भुक्तं शोष्यमाणं च वन्हिना ॥

सुपक्वं मलरूपेण यदा परिणतं भवेत् ॥
पक्वाशये तदा तत्तु भजते कटुतां ध्रुवम् ।
तथा परिणताच्छुष्कादन्नात् स्यादनिलोऽपरः ॥
वायोरस्यैव संपर्कात् बाह्यवातः शरीरगः ।
देहस्य धारणे शक्तो नान्यथा स क्षमो भवेत् ॥
प्रवेश्याऽपि बहिर्वातं मुखनासादिभिर्भृशम् ।
न प्राणान् रक्षितुं कोऽपि शक्नोतीतिहि दृश्यते ॥

मलरूपेण जायमानादाहारात् मलस्थाने चोत्पत्त्या वायोरपि मलनाम्ना व्यपदेशो युज्यते । ननु ' वायोरात्मैवात्मा ' इत्यनेन सुश्रुते कथनात् कथं पक्वाशये परिपक्वात् कटुभावापन्नादाहारद्रव्यादपि वायूत्पत्तिकथनं संगच्छते इति तु न शक्यम् । पंचभूतात्मकमाहारद्रव्यं हि ऊष्मणा यथायथं परिपक्वं विश्लिष्टावयवं सत् स्वावयवभूतेन तेन तेन क्षित्याद्यंशेन शरीरस्य तं तं क्षित्यादिभागं जनयति चरमपाककाले आहारद्रव्यकारणात् भूतवातादेव शरीरवातस्योत्पत्तेः ॥ पृष्ठ ४१ ॥

## वैद्यरत्न जोगींद्रनाथसेन एम्. ए. कलकत्ता

कानपूर वैद्यसंमेनाध्यक्षाः ( १९१२ ) भाषणम् पृष्ठ २२ ।

**दोषत्रयवादः**—" व्याधीनां आश्रयः शरीरं, सत्वसंज्ञं मनश्च । व्याधीनां कारणं त्रिविधं, असात्मेंद्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्च । तत् त्रिविधं कारणं शरीरचरं वायुं पित्तं कफं च दूषयित्वा विकारान् उत्पादयति । तत्र वातः, शीतो लघुः सूक्ष्मश्चलो विशदः खरश्च । पित्तं, सस्नेहमुष्णं तीक्ष्णं द्रवमम्लं सरं कटुकं च । कफो, गुरुः शीतो मृदुः स्निग्धो मधुरो स्थिरः पिच्छिलश्च । ते च वातपित्तकफा यदा समाः प्रकृतिमापन्नास्तदा देहं धारयंति अतो धातव इत्युच्यंते । यदा विषमा, विकृतिमापन्नास्तदा देहं दूषयंति, अतो दोषा इत्युच्यंते । मलिनीकारणान्मला इत्यपि । तथा च शारंगधरेणोक्तम्—

शरीरदोषणाद्दोषा धातवो देहधारणात् ।
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः ॥ ५–२० ॥

## वैद्यपंचानन कृष्णशास्त्री कवडे बी. ए. राजमहेंद्री,

संमेलनसभापतयः, भाषणम् संवत् १९७८ पृष्ठ २७

"गुणलक्षणकार्यात्मकं दोषाणां वर्णनमायुर्वेदीयग्रंथेषु बहुलतरमुपलभ्यते। परं वस्तुरूपनिदर्शकं, तेषां वर्णनं न दृश्यते। अतो वातपित्तकफाः काल्पनिका न तु शरीरगताः शरीरधातव इति पाश्चात्यवैद्यशास्त्रविदुषामन्यथा ग्रहस्संजातः। वस्तुतो विचार्यमाणे दोषा अपि शरीरगता अवयवा इति सुस्पष्टम्। दोषशद्बो आयुर्वेदीयग्रंथेषु केनाऽर्थेनोपयोजित इत्यस्य प्रश्नस्य निर्णयो दोषशद्बस्य निर्देश आयुर्वेदे येषां येषां शद्बानां साहचर्येण कृतो दृश्यते तेषां सर्वेषां समुच्चयविचारेण भविष्यति। 'दोषधातुमलमूलं हि शरीरम्' "त्वचः कलाः धातवो दोषा मला यकृत्प्लीहानौ" इत्यादि वचनेषु दोषाणां निर्देशः कृतः। समानानामेव हि प्रायेण समभिव्याहारा भवंति। यदुपरि निर्दिष्टवाक्येषु धातुमलैः सह दोषशद्बस्य साहचर्यं दरीदृश्यते, न तत्केवलं संख्यानार्थं प्रत्युत तद्विशिष्टगुणकर्मख्यापनार्थम्। दोषधातुमलाः शरीरावयावा इति स्पष्टतमं प्रतिभाति। शरीरं चेदं, पांचभौतिकं षड्रसात्मकं सेंद्रियं सजीवमिति सुप्रथितम्। तस्मिंश्च संग्रहात्मको वर्धनात्मको विशरणात्मकश्च व्यवहारः कायतनुशरीरशद्बप्रयोगेणावगम्यते। तस्मादवयविनो देहस्य संग्रहवर्धनविशरणात्मकस्य व्यापारस्य चालका ये अवयवा दोषधातुमलास्तेऽपि पांचभौतिकाः सेंद्रियाः सजीवा इति वक्तुं न कोऽपि संशयः। तथापि तेषामस्तित्वमनुमानेनैव सिध्यति।"

## वैद्यशास्त्री लक्ष्मीशंकर नरोत्तमभट्टाः भावनगरस्थाः

बटोदरीयाऽयुर्वेद संमेलन—( गुजराथ, कच्छ, काठियावाड चतुर्थ वैद्यसंमेलन ) सभापतयः भाषणम्

पृष्ठ ६-१२ ता. १७-३-१९२९

आयुर्वेदशास्त्राचार्या वातादिदोषप्रतीतिविषये कथयंति यत्, मुखनासिकाभ्यां शरीरे गच्छन् वायू रूपरहितत्वाददृश्यो वर्तते। तथापि स्पर्शनें-

द्रियेण ज्ञायते । स च वायुः शरीरे अंतः प्रविशन् करोति नानाप्रकारकाः क्रियाः । कफस्तु रसधातोर्मलस्तथा पित्तं रुधिरस्य मलो वर्तते । यतः प्रत्येको रसादिधातुः स्वाग्निना पक्को भवति । पक्कस्य धातोर्भवंति भागास्त्रयः । अथ च स्वात् परस्य धातोः पुष्टयै तस्मिन्साम्मिश्रो भवति तस्य सूक्ष्मो भागः । अपरश्च स्थूलो भागः स्वस्वरूपं यावत्प्रमाणं रक्षितुं तस्मिन्नेव धातुस्थाने तिष्ठति । अन्यश्च तृतीयो मलरूपो भागः स्वीये मले संयुक्तो भवति । एवं आमाशयादुत्पन्नस्य रसस्य त्रयो भागा भवंति । सूक्ष्मो भागो रक्तस्य पोषणार्थं गच्छति । द्वितीयः-स्थूलो भागो रसरूपो रसस्य स्थायीभावार्थं रसस्थाने एव तिष्ठति । तस्मान्नि-र्गतो मलरूपस्तृतीयो भागः कफरूपो शरीरपोषणं करोति । स च प्रवाहीरूपो विद्यते । एवमेव पित्तं तृतीयाच्छोणितमलादुत्पन्नं भवति । तदपि द्रवरूपं पित्तस्थाने गच्छति, शरीरस्थाऽन्यपित्तानां पोषणं करोति । एवं रसधातो-र्मलरूपः कफो स्वीये मुख्यस्थाने आमाशये तिष्ठति । अन्यस्थानस्थकफाना-मपि साहाय्यं तत्रस्थ एव सन् ददाति । इत्यनेन तेषु स्थानेषु स्वीयं प्रवाहि रसं प्रददाति । केचिदत्र ' सौक्ष्याद्रसानाददानो विवेक्तुं नैव शक्यते ' इत्यनेन वचनेन सूक्ष्म इति इंद्रियागोचर इति अर्थं कुर्वंति, तथा च कफपित्ते दृश्यादृश्ये इति द्विप्रकाररूपे मन्यंते, परंतु ' गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः । श्लेष्मणः प्रशमं यांति विपरीतगुणैर्गुणाः' । इत्यनेन वचनेन प्रोक्ता गुरुशीतस्निग्धादि गुणाः प्रवाहीरूपस्य कफस्यैव संति । तथा च कफस्य अन्यस्थानेष्वपि एतद्रूपगुणप्रवाहयुक्तो रसरूपः कफः कियताऽपि अल्पप्रमाणेन वर्तमानो भवेदेव । अतः सूक्ष्मशद्बस्य अत्यंतद्रवस्तथात्यंताल्पो वर्तमानो विवेक्तुं शक्यो नैवेति वक्तुं योग्यम् । अतः कियताप्यंशेन अदृश्यः कियताप्यंशेन दृष्य इति कथितुं नैव योग्यम् । एवमेव पित्तस्याऽपि प्रक्रिया मंतव्या । तीक्ष्णोष्णाः स्निग्धगुर्वादयो गुणाः केनाऽपि द्रव्येण विना कथं तिष्ठेयुः । अधिष्ठानमंतरा आधेयरूपा गुणाः कथं अधिष्ठिता भविष्यंति । अतः प्रवाहीद्रव्यरूपपित्त-कफयोरंतस्तीक्ष्णस्निग्धादिगुणास्तिष्ठंति । धात्वग्निसंज्ञितं पित्तं अतिशयेन स्वल्पं मंतव्यम् । अतः ' सूक्ष्म ' शद्बस्य अर्थो अदृश्य इत्यपेक्षया अतिशय-स्वल्प इत्येव कर्तव्यः ।

## पंडित शिवशर्मा आयुर्वेदाचार्य लाहोर.

ब्रिकानेरसंमेलांतर्गतनिदानसंभाषापरिषदाध्यक्षाः १९३२ भाषणम् पृष्ठ ३

ममाऽत्र नायमभिप्रायो वर्तते यदस्मिन्प्रसंगे त्रिदोषविषये विशदः शास्त्रार्थः कर्तुम्। तथापि प्रसंगोचितः स्वविषयसंगतो विषय एव वक्ष्ये।

जीवितः शरीरस्यांतिमा पदार्था वातपित्तकफा विद्यंते। ( अल्टिमेट फिजिकल् फॅक्टर्स ) इमे चातिसूक्ष्मामतींद्रियामवस्थां गृहीत्वा स्थूलां तथा सरलतया इंद्रियगोचरामपि अवस्था गृण्हंतो शरीरे विद्यमाना भवंति। तथा एतेषां कार्यभेदा रूपभेदाश्चात्यंतं विस्तृता वर्तंते। तथा प्रथमदृष्टिपातेन एतेषां सुसंबद्धः सिद्धांतो वक्तुं नैव शक्यते। तथापि दोषवर्णने द्विधायाः क्रियाया वर्णनं शास्त्रकारैः कृतमिति तु लक्ष्यते। एका शारीरिकी क्रिया अपरा च मानसिकी। शारीरकार्ये वायोस्स्रोतसां भेदनं, मलोत्सर्गः, अवयवानां परस्परम-संघातः, क्लेदस्य शोषणं इत्यादिभिः स्थूलरूपस्य कार्यवर्णनं दृश्यते। सूक्ष्म-रूपस्य वायोर्ज्ञानवाहिशिराणां तत्कार्यं वर्णितं विद्यते, येन विषयस्य इंद्रियसंनिकर्षेण ज्ञानोत्पत्तिर्जायते। ( सेंट्रल अॅन्ड अॅटॉनॉमिक नर्व्हस् सिस्टिम् ) मलोत्सर्जको वायुर्यद्यपि अदृश्यस्तथापि स एकः स्थूलः पदार्थ एव, यतस्तस्य प्रत्यक्षं त्वगिंद्रियेण भवति। परंतु यस्य वायोर्हर्षोत्साहमयं स्वरूपं विद्यते तत्तु अतिसूक्ष्ममतींद्रियं च तथा कार्यानुमेयं च विद्यते। एवमेव उपचयो, वृषता, दार्ढ्यं इत्यादि रूपः कफस्स्थूलरूपेण स्वस्य परिचयं ददाति। तथा प्रसन्नता, बुद्धिः, इत्यादिरूपेण सूक्ष्मरूपं दर्शयति। तथैव, भुक्तान्नपाचने यश्च समुद्भवति पाचकरसस्तत् पित्तस्य स्थूलरूपम्। परंतु शौर्यं, क्रोधः, इत्यादि तु अतीवसूक्ष्ममतींद्रियंच पित्तस्य स्वरूपपरिचयं ददाति। पाश्चिमात्या अद्य-यावत्कालं शारीरमानसक्रियाणां पारस्परिको घनिष्ठः संबंधो विद्यतेति न मन्यंते स्म। परं पौर्वात्यास्तु ऋषयः प्राचीनात्कालादारभ्य वर्णयंति संबंधमिमम्। अन्नपाचनकार्यं तु केवलं शारीरिकमेव। तथापि मनोधर्मोऽपि कार्येऽस्मिन् विघ्नमुत्पादयति यथा—'मात्रयाप्यभवहृतं पथ्यं चान्नं न जीर्यति'।

चिंताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥

इत्यनेन अन्नपाचने मनोधर्माणां प्रभावः कथं संभवतीत्यभिलक्ष्यते। क्रोधेन ज्वरवृद्धिर्जायते शिरःपीडाऽपि समुत्पद्यते, तथा शीतलजलपानेन वा स्नानेन क्रोधस्तथा क्रोधजन्यविकाराः प्रशमं यांतीति प्रत्यक्षमनुभूयते। आधुनिका अपि सांप्रतं इमं सिद्धांतं मानयित्वा कथयंति—उपवृक्कग्रंथ्युत्तेजनेन ( ॲड्रिनल ग्लँड् ) एको द्रवीभूतः पदार्थ उत्पद्यते, येन मानवे क्रोधस्योत्पत्तिर्जायते, तथा केनाऽपि अन्येन कारणेन नरे क्रोधोत्पत्तिस्संभवति तदा उपवृक्कग्रंथयोऽपरितनं स्रावमुत्सृजंति। अयं च स्रावो द्रवीभूतं पित्तमेव। तथैव शोकाद्वायोर्वृध्द्या मरणं, धैर्येण कफवृध्द्या शोकजनितवायोः प्रशमनेन प्राणरक्षणं, आकस्मिकधनप्राप्त्या दरिद्रस्योन्मादावस्था, तस्यां उन्मादावस्थायां कफजोन्मादलक्षणानामुत्पत्तिस्तथा अस्यामेवोन्मादावस्थायां त्रासनभयोत्पादनचिकित्सया वातवृध्द्या कफस्य ऱ्हासनं, तेन चोन्मादोपशम इत्येवमादिना यथा शारीरे क्षेत्रे दोषवृध्द्या व्याध्युत्पत्तिस्तथा विरुद्धगुणभूयिष्ठदोषस्य वर्धनेन उत्पन्नरोगस्य शांतिर्भवतीत्यभिलक्ष्यते। तथा मानसिकविकारेऽपि वातपित्तकफाः स्वास्थ्येन तथा व्याधिना च स्वीयं साम्यं वृद्धिं ऱ्हासं च दर्शयंतीति स्पष्टमेव। इत्यनेन दोषाः स्थूलसूक्ष्मस्वरूपेण शरीरे मनसि च निवसंतो शारीरमानसिकाः क्रियाः कुर्वंतो अस्मज्जीवनभूता विद्यंते इति स्पष्टमेव।

## पंडित एम्. व्ही. शास्त्री आयुर्वेदभूषण मंगलोर

सभापतिः त्रितीयम् कर्नाटकआयुर्वेदसंमेलनम्

विजापूर १९२७ भाषणम्—

१ " अनुपलब्धत्वात् त्रिदोषसंज्ञा वातपित्तश्लेष्माणो न विद्यंते। २ क्वचिदपि प्राणिशरीरे यदि च विद्येरन् न च ते स्वास्थ्यकरणे साधकाः ३ यदि च संरक्षणे साधकास्तथापि अस्वास्थ्यकरणे न हेतव इति "। अत्रोच्यते १ चरकस्य शारीरस्य प्रथमाध्याये त्रयोविंशतिप्रश्नेष्वेव ' कारणं वेदनानां

किं ' इत्यस्य प्रश्नस्योत्तरत्वेन ' इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः । वेदनानामसात्म्यानां इत्येते हेतवः स्मृताः ' इत्यत्र दोषशब्दो वातपित्तश्लेष्मण अभ्युपैति । सुश्रुते तु ' असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः । ततोऽस्यांत्राणि जायंते गुदं बस्तिं च देहिनः । तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति ' । इत्यनेन आंत्रगुदबस्तीनां प्रत्यंगानां समुत्पत्तौ वातादीनां कार्ययोनित्वं कथितं । वातादयोऽत्रांऽत्रादीनां जन्मन्युपादानकारणत्वेन तिष्ठंति । किंच धातुरूपेषु वातपित्तश्लेष्मसु भूतरूपेभ्यो वाय्वग्निवारिभ्यो जातेष्वपि तेभ्य एव समुत्पन्नेभ्यः शारीरेभ्यो धात्वंतरेभ्यो रक्तादिभ्यो विशिष्यंते । तस्मादायुर्वेदशास्त्रे पंचमहाभूतान्यंगीकृत्यापि दोषसंज्ञानां वातपित्तश्लेष्मणामपि ग्रहणमवार्यम् । ' त्रिधातुशर्म वहतं शुभस्पती मं. १ अ. ७ सू. ३४ ' इत्यस्यां ऋचि वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखं वहतं इति वेदेष्वपि त्रिदोषाणां नामनिर्देशोस्त्येव । २ वातपित्तश्लेष्माण एव स्वास्थ्यरक्षणे हेतवस्संपद्यंते । धातवोऽपि रसादयो दोषापेक्षया शरीरे व्याप्यास्संति प्रसादजन्या अपि किट्टजन्येभ्यः शरीरे दोषेभ्यः परिमिताश्च । न हि रसादीनां शरीरे दोषादीनामिव सर्वचरत्वं, धातवस्तु नियते कलेवरप्रदेशे जायंते, वर्धंते, च चरंति च । जन्मनि सत्यपि धातूनां रसादीनां प्राशस्त्ये जीवने धातुसंज्ञकानामेव दोषाणां भवतीति । सत्यमुक्तं दोषा स्वास्थ्यसंरक्षणे हेतव इति । स्वयंरक्ष्या धातवः कथं रक्षेयुर्धात्वाख्यात् परान् । तस्मादेव सुश्रुतो ' वातपित्तश्लेष्माण एव देहसंभवहेतव ' इत्यादि प्राह । परंत्वत्राऽयं खलु विचारणीयोंऽशः । त्रिदोषशब्देन के ग्राह्या इति ? । वातपित्तश्लेष्माणो ग्राह्या इति तर्हि किमिति संदिह्यते । संदेहश्चात्र वातपित्तश्लेष्मणां त्रिदोषाख्यानां द्वैधीभावात् । तथाहि ते च अंतर्गता, बहिर्गता इति, दोषभूता, धातुभूता इति, समाः कुपिता इति च द्वैधीभावमापद्यंते । तथासंपन्नेषु के ग्राह्या इति संदेहः । अत्र अंतर्गता धातुभूताः समाः अव्यापन्नाश्च लौकिकाः शारीरगताः प्राण्यंगधातुत्वेन स्थिता वाय्वग्निसोमा एव स्वास्थ्यसंरक्षणे हेतव इत्युच्यंते । अस्वास्थ्यकारणे ' रूक्षशीताद्यशनानेभ्यो वायुः प्रकोपमापद्यते ······ तदाज्वरमभिनिर्वर्तयते ' इत्यनेन रोगोत्पादने वायुः

कारणं नाम समवायि कारणमित्यर्थः। वेदेऽपि त्रिदोषसंज्ञानां वातपित्तश्लेष्मणां रोगान् प्रति समवायिकारणत्वं प्रतिपादितम्। ' अथर्ववेदस्य प्रथमकांडस्य तृतीयेऽध्याये द्वादशतमे सूक्ते तृतीयऋचि ' " मुंच शीर्षक्त्या उत कास एनं परुष्परुराविवेश, यो यस्य। यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्स च तानार्वतांश्च " । अत्र त्रिदोषसंबद्धानां वाक्यानां व्याख्यानं कुर्वन् सायणाचार्य एवं व्याचख्यौ " इदानीं वातपित्तश्लेष्मविकारजनितानां सर्वेषां व्याधीनां अस्मात्पुरुषादन्यत्राऽवस्थानं प्रार्थयते यो अभ्रजा इति — यो रोगः अभ्रजाः अपो बिभर्तीत्यभ्रं प्रवर्षको मेघसंघः तस्माज्जायते प्रवर्षणोदकसंसर्गेण उत्पद्यते इति। अभ्रजः श्लेष्मरोगः। तथा यो वातजोः वातात् कौष्ठयाद्वायोर्जात उत्पन्नो रोगः। यश्च शुष्मः शोषकः पित्तविकारजनितो ज्वरादि रोगोऽस्ति। दोषत्रयोद्भूतः स सर्वोऽपि रोग एनं पुरुषं विहाय वनस्पतीन् काननस्थान् वृक्षान् पर्वतांश्च मनुष्यसंचाररहितान् शिलोच्चयांश्च स च तान्समवैतु आश्रयतु इत्यर्थः। अत्र अर्वाचः शारीरे कृतदीर्घपरिश्रमाः रसादिसप्तधातून् शारीरावयवान् सूक्ष्मेणांऽतः प्रकाशकादियंत्रजालैः कणशोऽणुशश्च वीक्ष्यमाणादोषानुपलब्ध्या प्रत्यवतिष्ठंते। अत्र विषमाणां शारीराणां वातपित्तश्लेष्मणां व्याधिनिमित्तानां शोधनाय ( शारीरादेतान् बहिष्कृत्य ) आयुर्वेदशास्त्रे वमनविरेचनादिपंचकर्मोपदिष्टम्। तानि पंचकर्माणि श्लेष्मपित्तवातान् शरीराद्बहिरानयंतीति सर्वेऽपि वैद्या अवगच्छंति। तथा च बहिरानीतेषु रौक्ष्यलाघवशैत्यादिलक्षणैस्समान्वितं वायुं, औष्ण्यस्नेहत्वतैक्ष्ण्यादिलक्षणैरन्वितत्वं पित्तं, गौरवशैत्यमार्दवस्निग्धत्वादिलक्षणयुक्तं श्लेष्माणं च यथा स्वेनेंद्रियेण साक्षात् कर्तुं शक्नुयुः। विशेषतस्तत्तत्प्राचुर्येषु व्याधिषु आनाहाध्मानादिषु वायुं, पांडुकामलादिषु पित्तं, श्वासकासयक्ष्मादिषु श्लेष्माणं चं, प्रत्यक्षीकर्तुं समर्थयंते। शोधनशोधिताश्चैते प्रकुपितत्वात् शरीरस्य बाधकत्वेन स्थिता न पुनः साधकत्वेन। एते च बहुद्रव्ययुक्तास्स्थूलतरा अंतिमकार्यरूपा इति ज्ञेयाः। एतत्पूर्वावस्थायां स्थितास्सूक्ष्मरूपास्तथा च कार्यात्मिका लंघनसाध्या अनुमानगम्या भवंति। एतस्मादपि पूर्वावस्थायां स्थितास्सूक्ष्मरूपा तथा कार्यात्मिकाः स्वास्थ्य-

संरक्षणे हेतवोऽनुमानगम्या सूक्ष्मेक्षणांऽतःप्रकाशकादिभिर्यंत्रविशेषैर्दृश्या दोषा भवंति । परमेतेषामपि कारणजाताः सर्वस्त्रोतस्सु व्यापकत्वेन शरीरसर्वप्रदेशे धात्वंतरव्यतिकराः सूक्ष्मेक्षणादिभिर्जातुचिददृश्या गुणकर्मभिर्हेतुभिरनुमेयाः केवलं ज्ञानचक्षुषां तपश्चक्षुषामेव विषयीभूताः प्रविभक्तकर्मनिष्ठा वाय्वग्निसोमात्मका-द्यावापृथिव्योरंतरिक्षे समधिष्ठितमूलप्रभावा देहधारणाद्धात्वभिधाना, सदात्मकाश्च ते व्यवहारसौकर्याय दोषव्यपदेशेनाऽकार्यंते । ॥ पृष्ठ ६-१४ ॥

## श्रीमान् पंडित गणपतीचंद्र केला

धन्वंतरी भाग ११ अंक १ पृष्ठ ५६-६०

त्रिदोषास्तु आयुर्वेदस्य आधारभूता वर्तंते । शारीरः सर्वोऽपि व्यापार-स्तथा द्रव्यौषधीनां विभजनमपि वातपित्तकफाधारानुवर्ति विद्यते । अयं हि सिद्धांतो युगयुगानुप्रवृत्तः प्रचलति ।

सांप्रतं दक्षतराः ( डॉक्टर्स् ) विवदंति त्रिदोषविषये । ते च कथयंति त्रिदोषवादस्तु निराधार एव । अशास्त्रीय एव । न वातो न पित्तं न च कफः शरीरस्य आधारः । एतेषां गुणकर्माणि नैव तानि दृक्पथमनुयांतीति ।

शरीरस्य यंत्रं बहु कोमलं ( पेचीदा ) विद्यते, अस्य दार्ढ्याय विद्यंते अस्थीनि । इदं शरीरं अतीवसूक्ष्मतमैर्जीवकोषैः ( सेल्स् ) घटितम् । एतेषां जीवकोषाणां कार्यक्षमत्वमेव जीवनम् । तथा एतेषां पोषणमेव देहधारणम् । संज्ञावहाः क्रियावहाश्च नाड्यो जीवकोषान् चालयंत्यो तेभ्यः कारयंति कर्माणि नानाविधानि । केचन जीवकोषा विवेककार्यं कुर्वंति । केचन आहारं गृण्हंति, केचन कुर्वंति मलोत्सर्गमिति । एतेषां जीवकोषाणां पालनं शोधनं च शोणितेन भवति । इदं शोणितं अहर्निशं समस्तशरीरे धावति । लसीकारूपेण समस्तजीवकोषेभ्यो प्रददाति पुष्टिम् । मलहरणेन तथा शान्तिप्रदानेन समस्त-शरीररोगविषमुपशमयति । तथा स्वेनोष्मणा समस्तशरीरांगप्रत्यंगेषु स्वास्थ्यानुवृत्तिकरमुष्माणमाभिरक्षति । अनेनैवोष्मणा पचति भोजनादिकम् । अयमेवोष्मा रक्तमलेन ( बॉइल् ) सह यकृति संगत्य पाचनसमर्थो भवति ।

इदमत्र विचारणीयम् यत्--शरीरचालकं, तापकं सुखापादकं, नाडीमंडलम्, रक्तरसौ, लसीका चेति त्रयम् आर्षग्रंथेषु वातपित्तकफनाम्नाऽभिवर्णितमिति ।

वैज्ञानिकशारीरशास्त्रे नाडीमंडले इदं सर्वं समाविष्टं भवति येन समस्तशरीरक्रियाप्रवर्तनं भवति । यथा ' कौपर्स स्ट्रायटम् ' येन मानसिकशक्तिसमुत्पादो जायते । चक्रांगसमूहेन ज्ञानकर्मकारिण्यः शक्तयः प्रकटा भवंति । नाडीकेंद्रेण ( नर्व्हसेंटर ) इंद्रियजन्यो बोधो मनसाऽवबुद्धो भवति । ' थैलमस् ऑप्टिकस् ' इत्यनेन शारीराणां धातुनां क्रमबंधनं भवति ( धातुओंको क्रममें बांधता है ) हृदयादिकानां चालनं ' प्लेक्सस् ' इत्यनेन जायते । ये च शरीरस्य संधिबंधनैस्संयताः ( ताने हुये ) संति । तथा च वाणीमुत्पादयंति, ( व्होकल् कॉर्ड् ) स्नायुकंडरादिकानां शैथिल्यमापदयंति, । स्पर्शज्ञानश्रवणादिज्ञानोत्पत्तिरनेनैव नाडीमंडलेनाभिजायते । हर्षोत्साहाभ्यामेतेषु स्फूर्तिशक्त्योः प्रादुर्भावोऽभिजायते । तथैव चिंताशोकभयैरेतेषु क्षीणताया भवति प्रादुर्भावः ( नर्व्हस् डीप्रेशन् ) । अतोऽधुना इंद्रियव्यापारा मस्तिष्कस्य तथा नाडीमंडलस्य नाम्ना ये प्रचलंति, ते सर्वेऽपि आयुर्वेदे वातगुणकर्मेषु समाविष्टा विद्यंते ।

आयुर्वेदे वायुरग्नेर्वर्धको, दोषशोषको, मलोत्सर्जको, स्थूलसूक्ष्मस्रोतः-शुद्धिकरो, गर्भस्थबालकस्याकृतिनिर्माणको, आयुस्थैर्यकरः कथितोऽस्ति ।

शरीरे ऊष्मोत्पत्तेः प्रकारद्वैविध्यं वर्तते । वायुना फुप्फुसमार्गेण, तथा आहाररसेन, पाचनक्रियया च । फुप्फुसयोः संकोचविकासौ, आंत्रयोर्जलौकावगतिमत्वं वातसंस्थानस्यैव कर्म ( नर्व्हस् सिस्टिम् ) विद्यते । प्रतिजीवकोषस्थदोषसंचयस्य हृदयाभिगमनात्तथा तस्य च शोषणं वायुः फुप्फुसयोरेव करोति । यस्य गतिर्नाडीमंडलस्यैव कार्यम् । इदमेव नाडीमंडलं गुदसंकोचिन्याः पेश्याः ( स्पिंक्टर एनी ) वलीनां संकोचविकासौ कृत्वा निस्सारयति मलम् , तथैव मूत्रादिकमपि । शरीरस्रोतसां विबंधेन समुत्पन्नं दुःखं अनेनैव

नाडीमंडलेन शमितं भवति । गर्भे बालको मातुः स्वस्थमस्तिष्कत्वात्प्रसन्नेंद्रियत्वादेव स्वस्थो भवति । अन्यथा विकृतो भवति । इदमपि कार्यं नाडीमंडलस्यैव ( वायोरेव ) वर्तते ।

**द्वितियं द्रव्यं पित्तम्**—शरीरे ऊष्णताया वितरणम्, शैत्याद्रक्षणम्, अन्नस्य पाचनम्, त्वगादीनां वर्णोत्पादनं नेत्रयोर्दर्शनक्षमता इत्यादीनि कर्माणि पित्तस्य वर्तंते । यद्धरितपीतादि मुखादुद्गीर्णं भवति तदेव पित्तमिति सामान्या भाषंते, स्यात्तेनाऽपि पाचनसाहाय्यम् । तथापि पूर्वोक्तानि कर्माणि एतस्यैवेति न हि सत्यम् ।

लोहितं शरीरे प्रतिक्षणं संचरति । तस्मिन् पीते तरलद्रव्ये ( रक्तरस—सीरम् ) श्वासवायुना गृहीतो ' प्राणः ' ( ऑक्सिजन् ) संमिश्रो भवति । यकृति संचितेन मधुरतत्वेनोत्पन्नश्चोष्माऽपि ( कोलेस्टरीन् ) रसरूपेणास्मिन् रक्तरसे तिष्ठति तथा स सर्वास्मिन् शरीरे प्रतिपन्नो भवति । एवं रक्तरसः शारीराणून् अंगप्रत्यंगानि च ददाति ऊष्माणम्, शारीरदोषान् शोषयति । उपवृक्करसः ( अॅड्रिनेलीन् ) क्लोमरसः ( पॅंक्रिअॅटिक्‌जूस ) इत्यादयोऽपि अस्मिन्नेव रक्तरसे संमिश्रा भूत्वा उत्तेजयंति शारीरावयवान् । आपादयंति बलं, निर्भयतां समुत्पादयंति । अयमेवोष्मा—रक्तमलेन ( बॉइल ) साकं यकृतेऽभिसृत्य पक्वाशये पाचयति आहाररसम् । अयमेवोष्मा पीततरलरूपो अक्ष्णोरंतरे स्थित्वा प्रकाशं वाहयति । त्वगपि अनेनैवोष्मणा स्ववर्णमपि यथावस्थमभिरक्षति । रक्तरसे पीतोवर्णस्तथोष्णता चेति समानं पित्तेन, तथा रक्तरसस्सर्वशरीरचरो भूत्वाऽपि यकृति, प्लीन्हि, हृदये, अक्षिगोलकयोः, त्वचि आधिक्येन तिष्ठतीति समानं पित्तस्थानैः । अतो रक्तरसः ( सीरम् ) तथा तदधिष्ठिताश्च श्वेताणवः पित्तस्य समानगुणकर्मात्मका इति स्पष्टं भवति ।

**कफः**—रक्तरसादन्यत् अत्यंतमहत्वपूर्णं वस्तु शरीरे विद्यते, येन शारीरजीवकोषाणां निर्माणं, जीवकोषस्थन्यूनाधिकत्वस्य साम्योत्पादनेन तथा तद्गतक्षीणताया अपि पूरणेन नाशो भवति । येन समस्तमपि शरीरं निर्मितं

पालितं च भवति। रक्तप्रवाहादिदं केशवाहिनीनां भित्तिषु भूत्वाऽभिसरति, जीवकोषाणां संमततस्संभृतं भवति। इदमेव द्रव्यं लसीकासंज्ञितं ( लिंफ ) वर्तते। अस्यां लसीकायां निमग्ना जीवकोषाः ( सेल्स् ) स्वाभिलषितां सामग्रीं गृहीत्वा उत्पादयंति अन्यान् जीवकोषान्, विसृजंति स्वसंचितं मलं विकार-करं अस्यामेव लसीकायाम्। सचाऽयं मलोऽन्येनैव लसीकावहमार्गेण प्रत्यावृत्तो महालसीकावहया ग्रीवासमीपशोणिते संमिश्रो भवति। इदं श्वेतं पिच्छिलं लसीकारूपं द्रव्यं रक्तकणसहयोगेन ददाति शरीराय नवीनां जीवनसामग्रीं, बलं च। हृदयस्नायून् तर्पयति। मुखे, आमाशये, आंत्रे, लालायां, तथा जाठररसे स्थित्वा भोजनोष्मणा अभिरक्षति इमान् अवयवान्। मस्तिष्के सर्वाधिकान् जीवाणून् उत्पादयति पोषयति च। संधिस्थलेष्वपि संचितो भवति। शरीरे कस्याऽपि विषद्रव्यस्य जाते आक्रमणे, विषयुक्त-द्रव्यसंसर्गे सविषप्राणिदंशजाते अनयैव लसीकया भवति शमनम्। अत इयं लसीका ( लिंफ ) तथा तस्या गुणाः कर्माणि च आयुर्वेदीयं कफं स्वगुणकर्मसहितं स्मारयंति साम्येन।

एवं प्रकारेण वातपित्तकफानां स्थूलं स्वरूपं, नर्व्हस्‌सिस्टिम्, रक्तरसः, लसीका, इत्यादि रूपेण संमुखमुपैति। वातसंस्थानं नाडीषु दरीदृश्यते, तथा एतासु विद्युतः संचारं भूत्वा जायते ज्ञानम्। लोहिते कियता कालेन पीतो रक्तरसः पृथक्तया निष्कासनयोग्यो जायते। विश्लेषयितुमपि शक्यते। लसीकायां फेब्रीन् नामकं द्रव्यं संचितं भवति। एतेषु द्रव्येषु अंतर्निहितास्सूक्ष्माः-शक्तयो विद्यंते, याभिः क्रमशो मेटॅबॉलिझम्, ( शक्तिसंचारः ) कॅटाबॉलिझम् ( विनाशः ) तथा ॲनाबॉलिझम् ( रचनानिर्माणं ) चलंति।

दक्षतराः ( डॉक्टराः ) रोगचिकित्सायां नर्व्हस् टेंपरामेंट, बिलीयस्, टेंपरामेंट, फ्लॅग्मॅटिक् टेंपरामेंट इत्येतत् त्रित्वं अभिलक्षयंति। इमा एव वातपित्त-कफप्रकृतयो विद्यंते। नर्व्हस्‌प्रकृतिर्नरो वातरोगी, तथा फ्लॅग्मॅटिकप्रकृतिर्नरः कफरोगी, बिलियस्‌प्रकृतिस्तु पित्तरोगी प्रायो भवति। इत्येतदेव नहि, अपि तु

केषांच न वातस्थानानां ( चक्रांगाणां ) छेदनेन मानुषविचाराणां क्रियतेऽन्यथा भावम् । पित्तरसवर्धनेन ( ॲड्रिनॅलिन्, पॅंक्रियॅाटीन् ) क्रोधोत्पत्तिं कर्तुं शक्यते । तथैव पिचुटरीग्रंथ्युित्तेजनेन मानवः स्थूलो आलसो पुरुषत्वहीनो शांतो मंदश्च शक्यते संपादयितुम् । अतएव आशास्यते इयं विज्ञानवल्लिः आयुर्वेदतरावैव अचिरात्समारुढा भूत्वा संपादयिष्यति जनहितमिति ।

## पित्तम् ❋

## अवधूत वासुदेव वैद्य

आर्यभिषक् वर्ष १४ अंक ९ ( १९०६ )

### ' पित्तमाग्नेय '

अग्नेः ( तेजसः ) पित्तोत्पत्तिर्भवति ।

दृष्टिः पाकः प्रकाश उष्मा पित्तं च तेजसः ॥

आयुर्वेद संहिता

अथ तेजसः ( पित्तस्य ) दर्शनंचक्षुरुष्माकायाग्निहृदयपर्यंतमिति । तत्र चक्षुर्गतं रुपाणि गृण्हाति । कायाग्निरामाशयपक्वाशययोरंतरस्थो धातुनां चांतरेषु प्रमोचयति । आ. म. दी. ।

पित्तस्य द्वौ भेदौ वर्तते १ तेजसगुणविशिष्टः २ रूपगुणविशिष्टश्च । इमे द्वे अपि शरीरांतर्गते एव । शरीरे हृदयमारभ्य त्वक्पर्यंतं शोणितेन ऊष्णतायाःप्राप्तिर्भवति । शरीरे प्रत्यहं भवंत्या अजस्त्रायाः क्षीणतायाः पूरणे जीवनावश्यकस्यान्नस्योदरे समानवायुसहाय्येन पचनं भूत्वा तस्मात्समुद्भवति पोषको रसः । अस्य रसस्योत्पत्त्यै आमाशयपक्वाशययोर्वर्तमानानां पित्तविभागानामावश्यकता वर्तते । अस्य रसधातोर्निष्पत्यनंतरं तस्मिन् संचितेन पित्तविभागेन—कायाग्निना—भिन्नाभिन्ना रक्तादिशुक्रांता धातवो ओजस्सहिता यथा-

---

❋ एतेषां अस्यामेव पूर्वपीठिकायां सप्तमेपृष्ठे समारब्धा लेखांशस्ततोऽस्य लेखस्याऽनुवृत्तिर्वर्तते ।

क्रमं निष्पद्यते, ततोर्ध्वमपि ओजसो गर्भनिष्पादनकर्मण्यपि अस्य कायाग्नेर्विद्यते आवश्यकता । अतो रसधातोः परं शोणितमांसमेदादिधातूत्पत्तौ कायाग्निसंज्ञक-पित्तस्य वस्तुनो विद्यते आवश्यकतेति निर्गतम् । अतएवोक्तम्—

स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ।
तेषां सादातिदीप्तिभ्यां धातुवृद्धिःक्षयोद्भवः ॥

अनेनैव कायाग्निना धात्वंतर्गतेन धातूनामण्वीभवनं ( घटना ) भवतीति स्पष्टम् । अतएवोक्तम्—

अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ।
तन्मूलास्तेहि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥

अतो धातूनां वृद्धौ मुख्यतस्तैजसगुणविशिष्टस्य पित्तस्य साम्यमाव-श्यकमिति ।

अस्य पित्तस्य रूपं रूचिरपि संक्षेपेण दीयते । पीतं रक्तं विदाहि कृष्णं चेति । पित्तं पुनराग्नेयमुष्णं तीक्ष्णं रूक्षं लघु कट्वम्ललवणानुबंधि विशदम् ।

१ बाहुल्यात्पित्तं पीतं, ताम्रं, कदा वा कृष्णं वर्तते ।
२ तत्पचनावश्यकं रूक्षमुष्णं लघुचास्ति ।
३ पित्तस्य रुचिः —तिक्ता, आम्ला, लवणा च विद्यते ।
४ तथैवाऽस्मिन्पित्ते—अण्वीभवनशक्तिः — पदार्थघटकधर्मः — तथा भेदकता--द्रव्याणुविघटनशक्तिरपि विद्यते ।

मानुषशरीरस्य त्रयो विभागा विद्यंते १ कोष्ठः २ हस्तपादाः ३ शिरः । कोष्ठे पित्तपंचकेषु त्रयाणां पित्तानां—साधकपाचकरंजकाणां स्थितिर्विद्यते । शीर्षे नेत्रयोरालोचकं पित्तं, सर्वबाह्यत्वचि भ्राजकं पित्तं ( व्यानवायुवत् ) सर्वत्र वर्तते । साधकपित्तपाचकपित्तस्योद्गमो रक्तादेव भवति, रक्ताधारं तु हृदयं, अतो हृदयस्य विचार आवश्यकः—

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत् सूत्रं च यन्महत् ॥

साधकपित्तस्य स्थानं हृदयं वर्तते । तस्मिन् व्याप्य प्राणवायुस्तिष्ठति, तथा वर्तते चैतन्यशक्तिरपि, तथैव ज्योतिः ( उष्णतोत्पादकधर्मि तेजः ) विद्यते । यदेव तेजस्तदेवास्माकं साधकं पित्तमिति प्रतिभाति । हृद्यंत्रं तु चतुःकोष्ठमयं स्थूलैस्तनुभिरसंख्येयैर्जालमयैः स्नायुभिर्घटितं विद्यते, तेषु केषांचन स्नायूनां विकासे समकालमेवान्येषां स्नायूनां भवति संकोचः । संकुचितानां स्नायूनां विकासे पूर्वविकसितस्नायूनां भवति संकोचः । इत्येतेन प्रसारणाकुंचनसातत्येन शोणितं दश ' इंच ' प्रमाणकं गच्छति अग्रे । एवं केशवाहिनीपर्यंतमपि शोणितगमने हृद्यंत्रस्य स्पंदनोत्पन्नस्याघातस्य वर्तते आवश्यकता । अयं चाघातो हृद्यंत्रघटकस्नायुगतिजन्योऽस्तीति स्पष्टमेव । इयं च स्नायूनां गतिः संकोचविकसनशीला—उष्णताया उत्पादिका । यतः गतिश्चोष्णताच परस्परस्यारुत्पादिकेति प्रसिद्धमेव । अत एव हृस्था चित्कला साधकपित्तस्य सहाय्येन साधयति हृत्कार्यमिति । इयमेवोष्णताऽस्माकं साधकं पित्तं येन जीवतोनरस्य हृद्गतिस्संततं प्रवर्तते ।

**रंजकपित्तम्ः**—शरीरपोषकं, जीवनाधारं ( व्हायटल् फ्लुइड् ) वर्तते देहे शोणितम् । तस्मिन् विद्यंते चत्वारो घटकपदार्थाः १ रक्तकणाः २ श्वेतकणाः ३ फेब्रिन् इत्याख्यं द्रव्यम् ४ सीरम् इत्याख्यं द्रव्यं च । तत्र रक्तकणानां वर्णस्ताम्रः, श्वेतकणानां वर्णः श्वेतस्तथा सीरम् इत्याख्यस्य द्रव्यस्य पीतो वर्णो विद्यते तथा च एतत् द्रवं द्रव्यम् । अस्य द्रव्यस्य नित्यं क्षपणं भवति । तत्परिपूर्तये लेह्यखाद्यादिपदार्थानां प्रत्यहमावश्यकता च वर्तते । तेषां पचनसमये रूपांतराण्यपि बहूनि भवंति । तत्कार्यं तु रूपगुणविशिष्टरंजकपित्तेनैव भवति । अस्य तावदुत्पत्तिस्तु सार्द्धप्रस्थमिताद्यकृताद्भवति । शिरागतं नीलं लोहितं हृदयेऽभिगच्छत् शुद्धये गच्छति फुफ्फुसयोः । तत्र प्राणवायुमिश्रणात् भवति शुद्धं तथापि तस्मिन् ये उर्वरिता विषमयपदार्था वा क्षारा वा शिरागतलोहितस्थविषमयपदार्थक्षारा विद्यंते तेषां नाशस्तु इदमंतरिंद्रियं करोति ।

यकृतस्तु पाचकपित्तोत्पत्तिस्तथा शोणितशुद्धिरिति कार्यद्वयं विद्यते । शरीरेऽभिसरतो लोहितस्य नष्टेभ्यस्ताम्रकणेभ्यो रंजकपित्तस्योद्भवो भवति यकृति । तदेतत् पित्तं संयुक्तपित्तवहनलिकया ( कॉमन् डक्ट् ) आमाशयाऽधो मुखे याति । पित्तकोषे च संचितं भवति ( गॉल ब्लॅडर् ) तत् आमाशये अन्नपूर्णे जाते सति तस्मादभिसरति ( पित्तकोषात् ) । इदं पीतस्निग्धं वर्तते ।

**पाचकं पित्तम्**--यथाकालं भक्षितमन्नं प्राणवायुसहाय्येन गच्छति जठरे । तत्र पित्तमिश्रितकफक्रियया भवति मृदुरूपम् । तदनंतरं तस्मिन्नामाशयपक्काशयाभ्यां समानवायुकार्येण निर्गतस्य तैजसगुणविशिष्टपाचकपित्तस्य भवति कार्यम् । तदनंतरं पचनक्रियोष्णताजनितेन तथाऽन्नप्रविभक्तवातांशेन च रसधातुविभजनं, किट्टविभागनिस्सरणं च भवति । एतावता अन्ने उदरे गच्छति सति प्रथमा पित्तमिश्रितकफक्रिया, द्वितीया उष्णोत्पत्तितो तैजसपित्तस्य क्रिया, तृतीया पित्तक्रियासहाय्येनैव ( योगवाहिधर्मतो ) वातवृध्द्या वातक्रिया च भवति । अत्र एतास्तिस्रः क्रिया अपि पित्तसाहाय्येन यद्यपि जायमानास्तथापि या तैजसगुणविशिष्टा द्वितीया पित्तक्रिया येन भवति तदेवाऽस्माकं पाचकं पित्तम् । इदं पाचकपित्तं पक्कामाशयगतं वर्तते । इमानि साधकरंजकपाचकपित्तानि द्रव्यरूपाणि प्रत्यक्षदृष्टानि विद्यंते ।

**आलोचकं पित्तम्**—अस्मच्छरीरे ज्ञानेंद्रियाणां ये विषया वर्तंते अनुभवजन्यास्तेषामनुभवार्थं द्वयोस्साधनयोस्साहाय्यमभीष्टम् । १ एकं बाह्यसृष्टिगतम्, २ द्वितीयं अंतःसृष्टीस्थम् । एकेन विना अन्येन इंद्रियविषयज्ञानं नैव शक्यम् । यथा ध्वनेः श्रवणाय बाह्यसृष्टौ बाह्यवायुकंप आवश्यको तथैव शद्बग्राहकज्ञानतंतुषु मध्येऽन्तः कंपस्यापि विद्यते आवश्यकता । कृता चैतादृशी शारीरयोजनाऽन्तरीयकी । अस्मच्छ्रवणेंद्रियरचनाऽपि अंतःकंपोत्पादनानुकूला वर्तते । अतो यत् द्रव्यं या च योजना इंद्रियजन्यज्ञानाय आवश्यिकी तत् द्रव्यं सैव योजना अंतरपि तस्मिन्निंद्रिये तथैव विद्यते इति सिद्धम् ।

अतस्तेजोविशिष्टं नेत्रेंद्रियं प्रकाशग्रहणसमर्थं भवति । इयं प्रकाशशक्तिर्येन रस-विशेषेण नेत्रगततत्तद्वययवेषु समुत्पन्ना विद्यते स एव रस अस्माकमालोचकं पित्तम् ।

**भ्राजकं पित्तम्**—त्वचि वर्तते, १ वर्णः, २ विद्यते चोष्णता, ३ कांति-मत्वमपि तस्यां वर्तते । ४ घर्मवाहकत्वमपि तस्यामस्ति, अतो एतग्दुणविशिष्टं संचितं द्रव्यमेव त्वक्स्थं भ्राजकमिति ।

## कफदोषः

सर्वमपि स्थावरजंगमात्मकं पदार्थजातम् घनरूपं, द्रवरूपं, वायुरूप-मिति त्रिभागावस्थावस्थितं दृश्यते । तथा घनरूपपदार्थास्तु द्रवरूपाद्वायुरूपा-देवोत्पन्ना इति च दृश्यते । आधुनिकं पदार्थविज्ञानशास्त्रमेतदेव कथयति । इदमेवास्माकं तत्वपद्धत्यां पंचमहाभूतमय्यां दरीदृश्यते । सोऽयमेव प्रका-रोऽस्माकं शरीरेऽपि पूर्णतया युक्त एवेति । रेतार्तवाभ्यां—वायुद्रवावस्थाभ्यां—शरीरमभिनिर्वृत्तं भवति । संयोगसंस्कारेण घनरूपत्वमेति । शरीरघटने, तेजःशक्तिः, वायुः, द्रवपदार्थश्चेति त्रयं मूलतयाऽवश्यकमिति । पूर्वं वायोस्ते-जसश्च संजातो विचारः । क्रमप्राप्तस्य द्रवरूपपदार्थस्येदानीं क्रियते विचारः—

अस्मच्छरीरं द्रवात्मकं, अतस्तस्य द्रवस्य समप्रमाणावस्थितये पानीयस्यात्यंतावश्यकता विद्यते अत एवोक्तं ' पानीयं प्राणिनां प्राणा विश्वमेव हि तन्मयम् ' । व्यतिरेकदृष्ट्याच ' अन्नहीनो दहेद्धातुरंबुहीनं च शोणित-मिति । औदका भावास्स्नेहः, क्लेदः, शैत्यं, रसो, रसनं, चेति शरीरे वर्तंते । यदा शरीरे उदकजन्यो द्रवोभागस्तेजोगुणविशिष्टो भवति तदा स भागः पित्तवर्गे समाविष्टो भवति । तेजोगुणावशिष्टो द्रवो भागः कफसंज्ञया व्यवहृतो भवति । अस्य व्याप्तिस्तु रसमांसमेदमज्जाशुक्रमूत्रेषु वर्तते । पूर्वं कफविषयको विचारस्तु स सर्वदेहस्योपलेपनं वर्ततेत्येव कृतोस्ति । अत ऊर्ध्वं तस्य विस्तरः क्रियते ।

**कफोत्पत्तिः**—विशेषतो आप्तत्वतोऽस्योत्पत्तिर्वर्तते तेन अप्गुणाः स्नेहः, क्लेदः, शैत्यं, रसो, रसनं, इत्यादिकास्तु वर्तंते श्लेष्मणि । तथा च ‘ स्निग्धः शीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः कफ ’ इत्येतेऽपि गुणाः श्लेष्मणो विद्यंते । तत्र अवलंबकः श्लेष्मा—‘ उरस्थः स त्रिकस्य स्ववीर्यतः ।

हृदयस्यान्नवीर्याच्च तत्स्थ एवांबुकर्मणा ।
कफधाम्नां च शेषाणां यत्करोत्यवलंबनम् ॥

अतोऽवलंबकः श्लेष्मा’ । वाग्भट । ‘अथ या एता वक्ष्यमाणा हृदयस्य पुंडरीकाकारस्य ब्रह्मोपासनस्थस्य संबंधिन्यो नाड्यो हृदयपिंडात्सर्वतो विनिसृताः । आदित्यमण्डलादिव रश्मयस्ताः । कथमासां वा आदित्यः पिंगलो वर्ण एष आदित्यः शुक्लोपि एष नील एष लोहित एष आदित्य एव ’ । (शांकरभाष्यं) ।

हृदयपिंडान्निर्गतानां नाडीनां वर्णने काऽपि नाड्यः शुक्ला वर्तंते । आसां किमर्थं शौक्ल्यम् ? ओजोवाहकत्वात्—ओजस्तु “ स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ” इत्यनेन श्वेतवर्णात्मकम् । ओजसि स्निग्धत्वं, शुद्धत्वं, अप्भूयिष्ठत्वं च अवलंबककफस्यैव । ओजघटकोह्ययमवलंबकः श्लेष्मा । सोऽयं अवलंबकः श्लेष्मा अन्नरसादाशयप्रमाणानुरूपो हृदये आगच्छति, ततो व्यानसहाय्येन सर्व देहस्य विशेषतो रक्तस्य जीवनाधारो भवति, सर्वस्मिन्देहे च संचरति । इतरकफधाम्नामपि अवलंबनमनेनैव भवति ।

आंग्लवैद्यके तु सर्वस्मिन्देहे संचरतो रक्तस्य संचारिण्यो केशाकाराभ्यो नलिकाभ्यो रक्तं वहद्भ्यः स्रवति द्रवांशस्तस्मिन्तस्मिन्स्थले, सच्छिद्रत्वात्तासाम् । सचाऽयं संचितो रसो ( द्रवांशः ) रसवाहिनीभ्यो सर्वदेहप्राविसृतो भवति । सर्वा अपि रसवाहिन्यो वामदक्षिणस्थयोर्बृहद्रसवाहिन्योस्त्यजंति रसं ( सांचितं द्रवम् ) दक्षिणरसवाहिनी लिंफॅटिक्स् डॅक्ट् इत्यभिधीयते, वामरसवाहिनी तु थोरॅसिक् डक्ट् इत्यभिधीयते । अस्या एव वामरसवाहिन्याः केचन भागा जठरे, क्षुत्रांत्रेचापि प्रसृता विद्यंते । तैर्भागैरन्नस्य

दुग्धधवलो रसः शोषितो भवति च वामरसवाहिन्यां समाविष्टो भवति । अन्नरसवाहिन्यो लॅक्टिटल्स् इत्यभिधीयंते । इमे दक्षिणवामरसवाहिन्यौ हृदयावकाशे रक्तवहशिरायां ( एओर्टा ) उत्सृष्टे भवतः । इत्यनेन वक्षस्थलावकाशे एताभ्यां वाहिनीभ्यां अन्नस्य चरमोऽशरूपो रसो रक्ते समाविष्टो भवति । अनेनैवावलंबककफस्य सर्वदेहेऽस्तित्वं स्थितं भवति । सर्वासां रसवाहिनीनां कफकार्ये साहाय्यं भवति ।

**क्लेदकः**–ये च पूर्वं कोष्ठस्थरसाः पाचकपित्तवर्णने उदाहृतास्तेषामेवास्य क्लेदककफस्य विचारेऽपि नामग्रहणमावश्यकम् । तदा पित्तविचारे तद्रसस्थतेजोद्रव्यस्य तत्स्थितगुणानां च विचारः कृतः । अधुना तद्रसस्थितद्रवत्वस्य तद्गतगुणानां च विचारस्यावश्यकता विद्यते । चत्वारो अन्नविद्रावकारसाऽस्मिन्देहे विद्यंते । १ लालोत्पादकपिंडेभ्यो जायमानः, यस्य व्याप्तिरन्नमार्गे विद्यते यश्च अन्ने संमिश्रो भूत्वाऽगच्छति आमाशये । अयं च प्रत्यहं सार्द्धप्रस्थादारभ्य सार्द्धद्विप्रस्थमितोऽभिनिःसरति । २ द्वितीयो आमाशये एवोत्पन्नो भवति, अयं च नितरां द्रवः स्वच्छो वर्णरहितः केवलं जलमयो प्रतिभोजनवेलायां सपादप्रस्थमितोऽभिनिर्याति । ३ तृतीयो मांसरसविभेत्ता स्वादुपिंडाद्वा क्लोम्नो निसृतो भवति सोऽयं सार्धकुडवमितो भवति । ४ चतुर्थस्तु आंत्राणि तावत् स्निग्धमसृणचिक्कणया त्वचा आच्छादितानि विद्यंते ( म्यूकस् मेंब्रेन् ) तस्यां त्वचि विद्यंते बह्वः क्षुद्राः पिंडाः तेभ्यः पिंडेभ्योऽभिस्रवत्यऽयं रसश्चतुर्थः । रसधातुविमिश्रितस्य शोणितस्य भिन्नभिन्नेषु एषु भागेषु वहनकाले इमे अवयवाः स्वस्मिन् प्रविसृताभिः केशाकारवाहिनीभीरसशोषणं कुर्वंति । अनेन रससंयुक्तोऽवलंबकश्लेष्मा एव एतेषां अवयवस्थरसानामुत्पत्त्यै कारणं भवति । तथा च अस्मिन् रसविद्रावणोत्पन्नान्नपरिपाके एव अवलंबकस्य तथा रसधातोस्सामर्थ्यमवलंबितं वर्तते । अतएव ' श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः ' । इति परस्परावलंबित्वं स्पष्टं भवति ।

**बोधकः श्लेष्मा**:–अन्नस्य चर्वणसमये जिव्हाया इतस्ततो मुखविवरे संचरणं भवति । तेन च मुखस्थलालापिंडेभ्यस्स्रवति लाला । येषां पिंडानां

कर्णाधःप्रदेशे तथा दंष्ट्रांतर्वर्तिविवरे अस्तित्वं वर्तते । तेभ्यो यो भवति लालास्रावः स एवास्माकं बोधक इत्यवगम्यते । अतएव रसनास्थायी, रसन- इत्यप्युच्यते ।

**तर्पकः**—शिरःस्थाने वर्तमानस्य रससमानद्रवसमुहस्य नाम तर्पक इति । येन रससमूहेन नेत्रगोलकचलनं, नेत्रयोः शैत्यं, काचवत् स्फटिकवत् पटलवत्वम् समुत्पन्नं भवति । सचाऽयं मस्तिष्के वर्तते तस्य च ' ज्ञानरसः ' इत्यपि भिन्ना संज्ञा वर्तते ।

**संधिकः श्लेष्मा**—शुद्धश्लेष्मा स्थिरत्वस्निग्धत्वसंधिबंधनत्वकर्मभिः पालयति देहम् । अप्तत्वतो श्लेष्मणि स्नेहनक्लेदनादिधर्मास्समायांति । अतः स्नेहनधर्मस्य कफस्य क्रियते विचारः । सलिले मसृणत्वं स्वभावादेव वर्तते—तत्तु घर्षणप्रतिरोधि, कस्मादपि स्निग्धपदार्थात्स्नेहनस्य निष्कासनसाधनीभूतं च विद्यते । अतोऽन्नरसात्स्नेहनकफनिष्कासने, अप्द्रव्यसाहाय्यं वर्तते । गमन- क्रियायां स्निग्धद्रवस्य साहाय्यमावश्यकमिति । गतिमच्चक्रयंत्राणां सुगत्यै स्नेहनं सूपयुक्तं भवति । शरीरावयवानां सजीवावस्थायां नित्यं भवति चलनं वलनं । एवं संभवत्यपि शरीरसंधिचलनकर्माणि यन्नैव भवति किमपि दुःखं वा कष्ट- स्तस्य कारणं तु संधीनां स्नेहयुक्तत्वम्, सोऽयं स्निग्धः पदार्थ एव श्लेषकः श्लेष्मा वा संधिकः श्लेष्मा । संधयोऽत्र शिरास्नाय्वस्थिमांसपेशीनां त्रिविधा वर्तंते, तेषां सर्वेषां गृहणं कार्यम् ।

## डॉ. फ्रामरोज माणेकजी सेठना.

' त्रिदोषपद्धतिः ' आर्यभिषक् अंक ६० सन १९०८—

इत्येतैरैशवीये १९०० अद्बे कै. भा. म. **शंकरशास्त्री पदे** इत्येतेषां जातस्य व्याख्यानस्य सारांशरूपो निबंधो व्यलेखी, तस्य निबंधस्य सारोद्धारः क्रियते विषयानुरोधतः ।

आर्यवैद्यकस्य मूलं वातपित्तकफाः । चिकित्साशास्त्रे शारीरज्ञानं

प्रत्यक्षमूलकमवश्यं। तथापि अनुमानं, उपमानं, आप्तवाक्यानीति ज्ञानसाधनानीति अवगंतव्यम्। आप्तैस्तु स्वीयं ज्ञानं केवलायां जडसृष्ट्यामेव नैव संगृहीतमपि तु जडसृष्टयाः परतो विद्यते किमपि चैतन्यनामकं वस्तु, तत्साहाय्येनापि तैर्ज्ञानावग्रहः कृतो विद्यते।

जडं चेतनं चेति शक्तिद्वयं परस्परतो भिन्नं वा चैतन्यमेव केनापि रूपेण जडतामाप्नोति वा जडमपि चैतन्यत्वमेति? इत्यस्मिन्विषये बहवः संशयास्समुत्पन्नाः, अतः परमपि समुत्पत्स्यंति नानाविधाः संशयाः। तथापि जडस्य चेतनस्य च न्यूनाधिकत्वं भवति, न्यूनाधिकत्वेन च एकस्मिन्नपरस्य वृद्धिस्तथा एकस्य हानिर्भवति इति प्रत्ययः समुपैति, अतो इमे भिन्ने शक्ती वर्तेते इत्यपेक्षया अयं संयोगविशिष्टो रासायनिकः प्रयोगो वर्तते इति वक्तुं वा गृहीतुं युक्तम्। इत्यनेन स्थितिविभिन्नत्वेन अनयोः पार्थक्यं, तथा शक्तिवैशिष्ट्यादनयोरैक्यं स्वीकर्तुं शक्यं भवेत्। रासायनिकप्रयोगकर्तारस्तु जानंत्येव यथा कस्याऽपि पदार्थस्याकाशे विद्यते वायुरदृश्यः। स च कयापि क्रियया तस्मादाकाशात् पृथक्कर्तुं शक्यः। अतः शक्तिरूपो वायुश्चैतन्यावस्थायां अदृश्योऽपि रासायनिकप्रयोगेण स भवत्येव दृश्य इति सिद्धं भवति। तथा च अस्मादपि विपरीतमपि कर्तुं शक्यते। यथा पाषाणस्य चूर्णं परमाणुरूपं कृत्वा एतादृशी तस्यावस्था कर्तुं शक्या या अदृश्यस्वरूपं प्राप्नुयात्। इत्यनेन यत्र यस्य विशिष्टं शक्तिमत्वं तत्र तस्य भूयस्त्वेन दर्शनं वैशिष्ट्येन ज्ञानं च भवति।

शरीरस्य अंतर्रचनायास्सामान्यं विशिष्टं च ज्ञानमावश्यकं येन सम्यक्तया सर्वं ज्ञानं भवेत्। आंग्लवैद्यशास्त्रे ' नर्व्हस् सिस्टिम्, डायजेस्टिव्ह सिस्टिम्, लिंफॅटिक् सिस्टिम्, इति त्रिप्रकारास्संस्था विद्यंते याभिस्सर्वमिदं शरीरं स्वजीवनव्यापारं करोति। नर्व्हस् सिस्टिम्' इत्याख्या संस्था संस्कृतभाषायां ज्ञानतंतुरिति, डायजेस्टिव्ह सिस्टिम् इत्याख्या संस्था पचनव्यापार इति, लिंफॅटिक् सिस्टिम् रसवाहिनी व्यवस्था इति च व्यवहृयते कैश्चित्। ज्ञानतंतूनां विद्यंते चत्वारो भेदाः —प्रथमो ' सेरिब्रोस्पायनल् सेंटर, मस्तिष्कस्य तथा पृष्ठवंशस्य ज्ञानतंतूनां भागः, अस्य द्वितीयं आंग्लनाम

' ॲक्सिस् ' इत्यपि वर्तते । मस्तुलुंगं मस्तके विद्यते, तस्यैवांशः पृष्ठवंशे समागतोऽस्ति । नर्व्हस् सिस्टिम् इत्याख्यायास्संस्थाया मुख्यस्थानं शिरोभ्यंतर्गतं मस्तिष्कम् । तस्य तंतवो ' नर्व्हज् ' इत्यभिहिताः । तेषां च शक्तिसाधकाः कणाः ( गॅंग्लिया ) तथा ' ऑर्गन्स् ऑफ एक्स्टर्नल् सेन्सिस् ' ज्ञानतंतुभ्यो बाह्यज्ञानप्रदातारो ज्ञानप्रदाः परमाणव इत्ययं चतुर्धा विभेदो विद्यते, येन क्रियाशक्तिर्ज्ञानशक्तिस्संभवति । एतेषां चतुर्णां समुदायो नाम ' नर्व्हस् सिस्टिम् ' इति कथ्यते ।

शरीरं गतिक्रिया, ज्ञानक्रिया च सुव्यवस्थितया पद्धत्या भवितुं अस्यास्संस्थायाऽत्यंतावश्यकता वर्तते । अस्यां संस्थायां यत्किंचिदपि न्यूनत्वमधिकत्वं स्यात्तेनैव गतिज्ञानशक्त्योरपि न्यूनत्वमधिकत्वं भवेत् । अतरियं संस्था सर्वशरीरव्यापारेषु मुख्या प्रधानतमा च । अतरियं मुख्या शक्तिर्विद्यते । मुख्याशक्तिरिति वर्णनेन केवला इयं शक्तिरेव, नहि दृश्यः पदार्थ इति नैव मंतव्यम् । पंचज्ञानेंद्रियाणां, पंचकर्मेंद्रियाणां तथा मनसश्च सर्वा अपि क्रिया अस्या एव प्रवर्तंते । अपरा च या संस्था—डायजेस्टिव्ह सिस्टिम्—इति गदिता तस्या मूलं यकृत् वर्तते । यकृत उर्ध्वं एका विद्यते ' गॉल् ब्लॅडर ' नाम्नी पेशिका तस्यां यकृति च, अन्नस्य पचनकरणसमर्थो विद्यते एको रसः स च यदा पचनयोग्यः पदार्थ आमाशये समुपैति तदा तस्मिन् मिश्रितो भवति तेन च पचनकार्यं साधु चलति । पित्तपेशिकास्थपित्तद्रवेण शरीरावश्यकस्यौष्णस्यापि भवति लाभः । इत्यनया पद्धत्या तस्याः कार्यं शरीरे प्रवर्तते । तृतीया च या लिंफॅटिक् सिस्टिम् इत्युक्ता तया रसवाहिनीभ्यो रसवहनं भूत्वा यथोचितस्य शैत्यस्य लाभः शरीरे जायते । इति संक्षेपतस्तिसृणामपि संस्थानां वर्णनं कृतम् । चलशक्तेर्वातस्य कार्यं, नर्व्हस् सिस्टिम् इत्यनया, पित्तस्य कार्यं डायजेस्टिव्ह सिस्टिम् इत्यनया संस्थया, कफस्य कार्यं लिंफॅटिक् सिस्टिम् इत्यनया च संस्थया भवतीति वक्तुं युक्तम् । इमास्तिस्रः शक्तयोऽपि वक्तुं युक्तम् । शक्तिरिति चेतना, इयं कार्यकर्त्री विद्यते । चैतन्यरूपायै शक्त्यै

यथा यथा स्वरूपं प्राप्तं भवति तथा तथा सा भिन्नभिन्नस्वरूपा भूत्वा भिन्नं भिन्नं करोति कार्यम् । खादिद्रव्यांणां पंचज्ञानेंद्रियैः पंचकर्मेंद्रियैर्यदा संयोगो भवति तदा चैतन्यानुभवो भवति । असंयोगे द्रव्याणामचेतनत्वं वर्तते । स चायं संयोगो यया शक्त्या भवति, तस्या यावत्प्रमाणं शरीरे स्यात्तावत्प्रमाणं कार्यं भवेत् । यस्मिन् यस्मिन् पदार्थे इयं शक्तिर्यथा यथा संयुक्ता भवति तथा तथा अस्या अपि शक्त्यास्संयोगस्थितिरपि भिन्ना भवति । बाह्यसृष्टेस्सकाशादियं शक्तिरंतर्गच्छंती, यश्च प्रकारो अस्या भवेत् तस्माद्भिन्नः प्रकारोऽन्तर्भवेत् तस्मादपि भिन्नः प्रकारोत्यंतांतर्गमने भवेत् । शुद्धो बाह्यो वायुः शरीरे गच्छन् यदा तस्य रुधिराभिसरणे क्रिया भवति तेन रुधिरस्य स्थले स्थले अस्य संयोगाद्भिन्ना भवति स्थितिः । तेन च वर्णसंक्रमणमपि भवति । प्रथमं ईषत्कृष्णः, पश्चात्कृष्णः, तदनंतरं शुद्धस्वरूपप्राप्त्या ईषत्ताम्रः, अनंतरं ताम्रः, पश्चात्ताम्रतमो वर्णो रक्तेऽभ्युपैति । अस्य वर्णांतरस्य कारणं संयोग एव । सच संयोगः शक्त्या एव । रक्तसहितायाः शक्त्या एवाऽयं वर्णस्वरूपसंक्रमो भवति । यदा द्वौ पदार्थौ अभिन्नक्रियया संचरतस्तदा अन्योन्ययोर्गुणावगुणानां उभययोरपि यथा प्रसंगतः संसर्गो भवतीति सूक्ष्मदर्शकयंत्रेण दृश्येभ्यो रक्तस्य त्रिभ्यो वर्णेभ्य एवावबोधो भवति । इयमेव चैतन्यशक्तिरार्यवैद्यके वायुरिति भण्यते । सचाऽयं वायुरदृश्यस्संयोगवशाद्वा दृश्य इति द्विप्रकारको भवितुं शक्यः । चैतन्यशक्तेर्यदुपरितनं वर्णनं वायोरपि यथावद्युज्यते । संपूर्णावकाशे प्रदेशे गत्युत्पादनेन वायोस्स्पर्शज्ञानं समुद्भवति तस्मिन्नवकाशे निस्पंदरूपेण गतेरनुत्पादात् स च स्पर्शवान् वायुर्नैवानुभवतामेति, इत्यनेन आकाशे वायुर्नास्त्येवेत्यनुमानमयुक्तं वायोस्सत्वात् । अत्राकाशे गत्युत्पादनक्रिया वायुनैव क्रियते, तथैव वायोरस्तित्वमनुभवतामेति, अत एव वायुश्चल इति वर्णितः । स चाऽयं वायुः केनाप्यन्येन पदार्थेन मिश्रितो वा तस्मिन् कोपि संस्कारः कृतश्चेत्स दृश्योऽपि भवितुं शक्य एव । तस्य तावत्तदानीं स्वरूपं संस्कारानुरूपं भवेत् । तथापि तस्य तावत् स्वीयं रूपं नीलं श्यामं वा शास्त्रकारैर्वणितम् । वायोर्वणनं चरके वातकलाकलीयाध्याये 'वायुस्तंत्रयंत्रधर' इत्यनेन सुविस्तृतं कृतमेव । शरीरे यानि दृश्याणि द्रव्याणि विद्यंते तेभ्योऽन्यो

वायुस्तेषु क्रियासामर्थ्योत्पादको विद्यते। स च वायुस्तेषु क्रियानिमित्तं संमिश्रो भवति तदा स च दृश्यस्वरूपत्वमेति । शरीरे विद्यते सर्वत्र चलशक्तिः । सा च आंग्लवैद्यके 'नर्व्हस् सिस्टिम्' इति गीयते । 'नर्व्हस् सिस्टिम्' इत्याख्या व्यवस्था दृश्या वर्तते। तस्याः कार्यं गतिरूपं ज्ञानशक्तिरूपं च वायोरेव वर्तते । दृश्या या ' नर्व्हस् सिस्टिम् ' रचना सास्माकं नैव वायुस्तर्हि तस्यां रचनायां या चलशक्तिर्विद्यते सैवास्माकं वायुः ।

१ **प्राणवायुः**-आंग्लवैद्यकीयो सेरिब्रोस्पायनल् सेंटर् अथवा ऑक्सिस् ।
२ **उदानो वायुः**—सर्व्हायकल् प्लेक्सस् ।
३ **व्यानो वायुः**—कॉर्डियाक् प्लेक्सस् ।
४ **समानो वायुः**—सोलर् प्लेक्सस् तथा लंबर प्लेक्सस् ।
५ **अपानो वायुः**—हायपोगॅस्टिक् तथा सेक्रल् प्लेक्सस् ।

एवं जगति चलस्वरूपः शक्त्यात्मको वायुर्वर्तते। तथापि संयोगवशात् उष्णशीतधर्मौ समुद्भवतः । ताभ्यामपि शरीरस्य कार्यमकार्यमपि भवति। केषांचन मतेन गत्या एव मंदा क्रिया तथैव तीव्रा क्रिया भवति तयैव शीतोष्णयोः पदार्थयोरनुभवोद्भवति । अत्यंतसूक्ष्मविचारेण तु चैतन्यमेव सत्यं वस्तु । सर्वमपि चैतन्यमयमेव । तथापि चैतन्यशक्तेरिमे द्वे शक्ती इति कल्पिते तथापि तयोर्ज्ञानमपि परमावश्यकमेव । शरीरे पचनव्यापारकारिणी द्वितीया वर्तते शक्तिः । तयोः शक्त्योस्समानगुणाः पदार्थास्ते तयोर्घटकावयवा वा तयोर्दृश्यस्वरूपाणि इति गृहीतुं युक्तमेव । जडतत्वपद्धत्यापि दृष्टं चेत् इमे द्वे साधने शरीरस्योपयुक्ते एव । आंग्लपद्धत्या 'डायजेस्टिव्ह सिस्टिम्' तथा 'लिंफॅटिक् सिस्टिम्' द्वे पद्धती वर्णिते वर्तते । तयोर्मध्ये पचनादिव्यापारकारिणी 'डायजेस्टिव्ह सिस्टिम्' पित्तसमाना वर्तते । 'लिंफॅटिक् सिस्टिम्' कफस्य लक्षणसमाना विद्यते। एतयोरपि कफपित्तयोः पंचपंचप्रकारा आयुर्वेदे वर्णिता विद्यंते। रसवाहिनीभ्यो कफस्य कार्यं भवतीति तस्य च स्थानं उर इति पाश्चात्यवैद्यकेन समानमेव । स चाऽयमुरसि वर्तमानः कफः सूक्ष्मस्वरूपः परमशुद्धश्च वर्तते। यश्च

बहिरायाति सिंघाणकरूपः ष्ठीवनरूपः कफो स चाऽशुद्ध एव । रजश्च तमश्च मानसदोषौ वर्तेते । त्रिगुणात्मकं जगत्, पंचभूतेषु सूक्ष्मतया त्रिगुणानां सत्वरजस्तमसां सूक्ष्मरूपेणास्तित्वं वर्तते एव, तथा वातपित्तकफेष्वपि त्रिगुणानामस्तित्वं विद्यते, तथापि मानसौ दोषौ रजस्तमसी, शारीरदोषाः कफपित्तवाताः पृथक्तयाऽयुर्वेदे वर्णिता विद्यंते । मानसदोषाभ्यां शारीरदोषा विकृता भवंति । शारीरदोषैर्मनोदोषौ विकृतौ भवतः । इत्ययं परस्परेषां मिथः परिणामोऽनुभवमायाति एकयोनित्वात्, समानधर्मत्वात्, परस्परसंश्लेषात्, । दोषाणां साम्यं, वैषम्यं, क्षयो, वृद्धिः, विकृतिर्भवति । दोषा दुष्टा धातून् दूषयंति, धातवो दुष्टा मलान् दूषयंति, मला दुष्टा मलायनानि दूषयंति, अथ च रोगप्रादुर्भावो भवति । दोषाः स्वयं दुष्टा भवंति, परास्परानपि दुष्टान् कुर्वंति, अथ च धातून् मलान् दूषयंति, परं मला वा धातवो वा नैव कदाचित् दोषदूषका भवंति सामर्थ्याभावात् । अतएव ते दोषसंज्ञया संज्ञिता भवंति ॥

## 'वैद्यरत्न' स्व. कविराज जोगेंद्रनाथसेन एम्. ए. कलकत्ता.

चतुर्दशवैद्यसंमेलनसभापतिभाषणे प्राहुः

### दोषत्रयवादः

" व्याधीनामाश्रयः शरीरं, सत्वसंज्ञं मनश्च । व्याधीनां कारणं त्रिविधम्—असात्म्येंद्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्च । तत् त्रिविधं कारणं शरीरचरं वायुं पित्तं कफं च दूषयित्वा विकारान् उत्पादयति । तत्र वायुः शीतो लघुः सूक्ष्मश्चलो विशदः खरश्च । पित्तं सस्नेहमुष्णं, तीक्ष्णं, द्रवमम्लं सरं, कटुकं, च । कफो गुरुः, शीतो, मृदुः, स्निग्धो, मधुरः, स्थिरः, पिच्छिलश्च ।

ते च वातपित्तकफा यदा समाः प्रकृतिमापन्नास्तदा देहं धारयंति, अतो धातव इत्युच्यंते । यदा विषमा विकृतिमापन्नास्तदा देहं दूषयंतीति अतो दोषा इत्युच्यंते, मलिनीकरणान्मला इत्यपि । तथा च शारंगधरेणोक्तम्—

शरीरदूषणाद्दोषा धातवो देहधारणात् ।
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः ॥ इति "

## वैद्यरत्न राजवैद्य पंडित रामप्रसादजी ( पतियाला )

स्वीये विंशतितमवैद्यसंमेलनसभापतिपदप्रयुक्तसंभाषणे प्रोचुः—

आयुर्वेदीयशारीरज्ञाने, वातपित्तकफानां त्रिदोषापरपर्यायाणामपि ज्ञानमत्यावश्यकम् । वाग्भटे प्रोक्तम्—

' वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ।
विकृताऽविकृता देहं घ्नंति ते वर्तयंति च ॥ '

अर्थात् वायुः पित्तं कफः इमे शरीरस्थास्त्रयो दोषाः । इमे साम्यावस्थावस्थिता देहधारणं कुर्वंतो धातव इत्युच्यंते । यदा मिथ्याहारविहारैर्मलिना भूत्वा रसादिसप्तधातून्मलिनी कुर्वंति तदा ते ' मला ' इत्युच्यंते । ' दूषयंतीति दोषा ' इति वाक्यं वातपित्तकफेभ्य एव सम्यक् संज्ञितं भवति ।

संपूर्णस्य जगतः स्वास्थ्यकारणं यथा चंद्रमा, सूर्यो वायुश्चेति । तथैव संपूर्णमानवानां स्वास्थ्यं वातपित्तकफानां साम्यावस्थाऽऽयत्तम् ।

संपूर्णस्य प्राणिमात्रस्य, शरीरे सदैव भवंति तिस्रः क्रियाः । यथा संचालनं, स्वेदनं, स्नेहनं, इति । एतासु संचालनक्रियाकारको विद्यते वायुः, यथा सर्वशरीरक्रियाकरो विद्यते तथा मनसोऽपि नियंता प्रणेता च विद्यते । मनसोगत्याः किंचिदपि जाते परिवर्तने शारीरवायोः क्रियासु संजायते विकृतिः । लंघनाद्यैर्यथा वातस्य साम्यावस्था नश्यति तथैव कामशोकादिमनोविकारैरपि भवति वायोः प्रकोपः ।

यथैव वायुस्समो शरीररक्षणं पोषणं च करोति, विकृतः शरीरविनाशं करोति, तथैव पित्तमपि स्वेदनपाचनादिक्रियाभिः शरीररक्षां, अन्नस्य पाचनं,

वातकफयोः साम्यं, रसस्य लोहितस्वरूपापादानं करोति । स्वीयैः प्रकोपणैः प्रकुपितं पित्तं यथा व्याधिकरं भवति तथैव क्रोधरूपमनोविकारेण विकृतं भद्भवति विकारकरम् ।

एवमपि श्लेष्मा स्नेहनादिस्वीयगुणैः शरीरं पालयति । निजहेतुभिः प्रकुपितस्सोऽपि यथा नानारुजाकरस्संपद्यते । तथैव मनसस्तुष्ट्याऽपि स्थौल्यादि कफविकारास्संजायंते । तात्पर्यमिदमेव यत् मनोविकाराणां त्रिदोषाणां वर्तते कोऽपि पारस्परिकस्संबंधः । इत्येते त्रिदोषा आयुर्वेदे शरीरस्य धारणपालन-कर्माणि, तथा दीर्घायुष्ट्वे च सर्वथा कारणं विद्यंते ॥

## श्री. पं. गोवर्धनशर्मा छांगाणि भिषक्केसरी ( नागपूर )

स्वीये भाषणे अधिजगुः

“ कथमेते वातादयस्त्रय एव दोषा भवितुमर्हंति ? विविधावस्था-स्थानोपद्रवप्रकाराणां विकाराणामुत्पत्तिकारणमित्याशंक्यते कैश्चिदायुर्वेदतत्वा-नभिज्ञैरतो निवेद्यते किंचित् । सुविदितमेवास्त्यायुर्वेदविदां यदपरिसंख्येयाना-मातंकानां सामान्येन भवति शोथदाहशूलात्मकं त्रिविधमेव स्वरूपम् । सर्वेषा-मपि रोगाणां शूलसंभवाः शूलात्मानो वा, दाहसंभवा दाहात्मानो वा, शोथ-संभवा शोथात्मानो वा इति त्रिधैव भवति सुगमं संख्यानम् । शूलदाहशोथा-श्चैतेवातपित्तकफोद्भवा एवेत्युक्तमायुषो वेदे । ” यथा—“ शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ” इति । तथैव “ कुपितानां हि दोषाणां शरीरे परिधावताम् । यत्र संगः खवैगुण्याद् व्याधिस्तत्रोपजायते ।” इत्यनेन संगादेव संभवो व्याधीनामिति प्रतिपादितम् । संगस्यैवापरं नाम शोथ इति । प्रकारेणानेन संचितस्य रोगोत्पत्तिकारणद्रव्यस्यैव दरीदृश्यते रोगविज्ञाने “ आम ” इति नाम्नाऽपि व्यवहारः । व्याधिविज्ञानोपवर्णितमिदमामाख्यं, दोषाख्यं, मलाख्यं, वा द्रव्यमेवाहारोपयुक्तैर्द्रव्यांतरैस्तद्गुणानुरोधेन शूलदाहशोथानामेतेषामन्यतमस्य वा भवत्युत्पादकम् । आख्यायते च शूलादिकारणानां वातादीनां प्रकोपणमिति । ‘ दुष्टा वातादयो दोषा ’ इति व्यपदेशोऽपि शूलशोथादिकारणानामेव द्रव्या-

णाम्। तत एव प्रचलिता संचयप्रकोपप्रसरस्थानसंश्रयव्यक्तिभेदानां सुश्रुतोक्तविकाराणां परंपरा। सिद्धत्येवं शूलदाहशोथात्मकस्य विकारनिकरस्य कर्तारो वातादयस्त्रयो दोषा एव ॥

## डॉ. पोपट प्रभुराम वैद्य एल्. एम्. एस्. प्राणाचार्य (मुंबई)

स्वीये गुर्जरप्रांतीयसंमेलनसमये (१९२५) सभापतित्वेन प्रोक्तवंत:—

" नायं वातः कोऽपि साधारणवायुः, किंतु जीवनरक्षायां संबद्धायाः सर्वस्याः क्रियायास्तथा तत्कार्यस्य कर्तारस्सर्वे अवयवास्तेषां गतिप्रदा विद्यते काऽपि महती शक्तिः ।

यद्वमनवेलायां निर्गच्छति पीतं द्रव्यं तदेव पित्तमिति सर्वथा प्रमादप्रचुरं, किंतु शरीरे सततं जायमानाः क्रिया यासु क्रियासु मध्ये शरीरे उष्णताया यथायोग्यस्संचयो यथा सुरक्षितो भवति, यया च भवति यथायोग्यमन्नस्य पाचनं, यया भवति शोणितस्योत्पत्तिर्वृद्धिश्च, तथैव शरीरस्वास्थ्याय आवश्यकाणां भिन्नभिन्नरसानामपि यया समुत्पत्तिर्भवति, यया च शरीरोपयुक्तद्रव्याणां जायते गृहणं, किट्टमलादीनां च भवति उत्सर्गः, एतादृशी विद्यते काऽपि पित्तमिति शक्तिः ।

तथैव कसनवेलायां बहिरागच्छन् स्निग्धमसृणः पदार्थ एव श्लेष्मेति नैव सत्यं, किंतु शारीरोष्णतायाः स्वीयेन सामर्थ्येन नियमनं कृत्वा शरीरे शैत्यमादधाना, तथैव भिन्नभिन्नानां रसानां स्निग्धादिपदार्थाणां प्रसवित्री विद्यते काऽपि श्लेष्मेति शक्तिः ॥

यावत् वातपित्तकफानां कार्याणि शरीरे समानेन परिमाणेन जायंते, तावत्पर्यंतं ते ' त्रिधातु ' संज्ञया व्यवहृता भवंति । एतेषु कार्येषु यदा भवति न्यूनाधिक्यं, तेन च रोगोत्पत्तिसंभवोऽपि दृश्यते तदा ते ' त्रिदोष ' संज्ञया संज्ञिता भवंति । सांप्रतं इंद्रियविज्ञानशास्त्रस्याऽपि अभ्यासो नितरामावश्यक एव। यकृदामाशयहृदयमस्तिष्कांत्रफुफ्फुसादिभिरवयवैर्यानि भवंति शरीरेकार्याणि

तानि सर्वाण्यपि सम्यगवगत्य पश्चादेषां सर्वेषामपि अवयवकार्याणां सामुदायिकेन बलेन शरीरस्वास्थ्यार्थमस्तित्वमुपयातानां वातपित्तकफानां याश्च भवंति क्रियास्ताभिः शरीमिदं स्वस्थं, समर्थं च भवति । अतएव वातपित्तकफास्त्रिधातव इत्युच्यंते ।

## कै. वैद्यराज त्रिंबकलाल त्रिभुवन मुनी ( मुंबई )

गुर्जरप्रांतीयत्रितीयअधिवेशनसभापतिः १९२७ प्राह ।

" अनेकवर्षपर्यंतं आंग्लवैद्यकप्रवीणा गृण्हंति आक्षेपं यत् आयुर्वेदस्य मूलसिद्धांत एव अशास्त्रीय अवैज्ञानिकश्चेति । न तु ते वातपित्तकफान् जानंति । अहं तावदित्येव दर्शयितुं प्रयते यदयं त्रिदोषसिद्धांतो वैज्ञानिकैः स्वीकृतेन ' प्रोटोप्लाझम् ' सिद्धांतेन कथं कियत्प्रमाणेन समकक्षामधिरोहतीति ।

वाग्भटेन ' ते व्यापिनो ' इत्यनेन त्रिदोषाणां व्यापकत्वं वर्णितम् । व्यापकस्तु पदार्थस्स एव यो हि सूक्ष्मातिसूक्ष्मेषु अणुष्वपि विद्यमानो भवेत् । इत्यनेन त्रिदोषाणामस्तित्वं प्रत्यणौ सिद्धम् ।

१ ' प्रोटोप्लाझम् ' पदार्थस्तु सूक्ष्माणुरूपः त्रिदोषा अपि व्यापित्वेन अनुरूपास्सूक्ष्माश्च, २ ' प्रोटोप्लाझम् ' सक्रियस्त्रिदोषा अपि क्रियावंताः ३ प्रोटोप्लाझम् पदार्थेन रसरक्तस्नाय्वादिसंपूर्णं शरीरमुत्पन्नं भवति, त्रिदोषैरपि संपूर्णशरीरस्यो त्पत्तिर्भवति । ४ प्रोटोप्लाझम् पदार्थेन समुत्पन्नया नर्व्हस् सिस्टिम् संज्ञायाः प्रणाल्याः क्रियाभिर्यथा ज्ञानं, भानं, इच्छा, इत्यादि समुत्पद्यते तथा आयुर्वेदीयवातेनाऽपि ज्ञानं, भानं, इच्छा, इत्यादीनां समुद्भवो भवति । भवंति च सर्वा अपि चलनवलनादिकाः शारीरचेष्टा, उभाभ्यामपि समाना एव ।

प्रोटोप्लाझम् पदार्थे ' व्हाइट् कार्पस्स्कल् ' इति द्रव्यस्य यो विद्यते समुल्लेखस्तत् द्रव्यं अर्धद्रवरूपं ( सेमिफ्लुइड् ) विद्यते, तदेवास्माकं पित्तं

तथा तस्मिन् द्रव्ये यश्च घनरूपः पदार्थस्स एवाऽस्माकं कफ इति गृह्यते वातपित्तकफानां शास्त्रसिद्धमस्तित्वं सिद्धं भवति ।

## कै. कविराज हाराणचंद्र चक्रवर्ती [ कलकत्ता ]

बंगालप्रांतीय वैद्यसंमेलन सभापतयः ।

" महाशयाः, आयुर्वेदस्य वैज्ञानिकत्वे तथा त्रिधातुसंबंधे च किमपि वक्तुमावश्यकम् । त्रिधातवः के अस्मिन् विषये वर्तंते बहूनि मतानि परं धन्वंतरिस्तु सारल्येन सुंदरां व्याख्यामाचख्यौ ।

' विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ॥
धारयंति जगद्देहं कफपित्तानिलास्तथा ' ॥

यथा समस्ते जगति चंद्रसूर्यवायवो यथा कार्यं कुर्वंति तथैव जीवदेहे कफपित्तवायवः कार्यं कुर्वंति । इत्यनेन त्रिधातूनां स्वरूपगुणक्रियाणां संकेतः कथित एव । कफस्य स्वरूपं जलं, शैत्यादिगुणा, रसदानं वा विसर्गः क्रिया, पित्तस्य स्वरूपमग्निस्तपादिगुणः, आदानं वा रसशोषणं क्रिया, वायोः स्वरूपं वायुः शैत्यादिगुणः, परिचालनं वा विक्षेपः क्रिया वर्तते । त्रिधातूनां साम्यावस्था नाम स्वास्थं, वैषम्यं नाम रोगः । शरीरस्य धारणं कुर्वंतीत्यतस्त्रिधातव उच्यंते । विगुणास्संतो शरीरे दोषाणामुत्पादनं कुर्वंतीत्यतस्त्रिदोषा उच्यंते । "

## कविराज यामिनी भूषणराय ( कलकत्ता )

अतः परं येषु शारीरं मानसिकं च स्वास्थ्यं निर्भरं वर्तते तेषां वातपित्तकफानां क्रियते विचारः ।

त्रिदोषसिद्धांतं पारंपर्येण स्वीकुर्वंति पाश्चात्याऽपि । पाश्चात्यवैद्यके यश्च विद्यते ' नर्व्ह फोर्स ' स एवायुर्वेदीयो वायुः ।

' एन्सायक्लोपीडिया ब्रिटानिका ' नामके विश्वकोशे " मि. एम्.

**कोन्ड्रिक** " नामकः पंडितः कथयति ' नर्व्ह ' नामिका संस्था कस्याऽपि विशिष्टायाः शक्त्या वाहिकास्ति, तस्याः शक्त्याःयाथातथ्यदर्शकनामाभिधाना-भावात् ' नर्हफोर्स ' इत्येव वयं ब्रूमः ।

पित्तकफविषयकी कल्पना काऽपि पाश्चात्यवैद्यके सुयोग्या नैव विद्यते।

डॉ. फास्टर नामको दक्षतरो ब्रूते, यत् नित्यं प्राणिशरीरं मृयते तस्याऽयं भावः यत् प्रतिक्षणं शरीरस्य कश्चनोपि घटकः प्रक्लिन्नो भवति, नाशं च गच्छति । सत्यत्वेन जीवत् प्राणिशरीरं न दग्धं भवति, यतस्तस्मिन् विद्यते बहुतरो जलांशः । परं यदि तत् शुष्कं कृतं चेत् ' ऑक्सिजन् नामक वायुसाहाय्येन इंधनवत् ज्वलनक्षमं भवेत्तथा तस्मान्निर्गच्छेत् ऊष्णता, तथा काऽपि शक्तिः । यत् शीर्यते तत् शरीरं इति आयुर्वेदेऽपि पठितं तथा पित्तस्याऽपि क्रिया ज्वलनवच्छरीरदाहिका विद्यते ।

कफस्य क्रिया अग्नेः सकाशाच्छरीरसंरक्षणरूपा विद्यते । पित्तं नाम सूर्यः, कफो नाम चंद्रमा, अस्यार्थः पाश्चात्यवैद्यकशास्त्रमपि पर्यायतस्त्रिदोष-सिद्धांतं समामनति ।

## पंडित वैद्यराज भिकाजी विनायक डेग्वेकर

एम्. ए. एल्. एल्. बी. ( जबलपूर )

"**कणादः**–१ इदं जगत् परमाणुभिर्निष्पन्नं ( ॲटम् )

२ संयुक्तैः परमाणुभिर्गुणानामभिनिष्पत्तिर्भवति ।

३ शरीरं मनश्चायुरपि परमाणुभिरेवाभिसंपन्नं विद्यते ।

४ सूक्ष्मा नित्याश्च परमाणवो जगत्कारणं, तेभ्यस्संयुक्तेभ्यो भिन्नानां पदार्थानां भवत्याविर्भावः । कणादमतानंतरमग्रे सांख्यानां मतोत्पत्तिर्जाता ।

**सांख्यमतम्**:--एकस्मादेवाखिलस्य विश्वस्योऽत्पत्तिर्बभूव । आधुनिकैः पाश्चात्यपंडितकृतैस्संशोधनैर्विद्युत्प्रवाहसहाय्येन परमणूनां स्वरूपमपि विभिन्नं कर्तुं शक्यते । अयं भावः –मूलतत्वं तु एकमेव, परं तस्यानेकानि रूपाणि भवंति ।

**सत्कार्यवाद**: कस्मिन्नपि पदार्थे तन्मूलतत्वं सूक्ष्मत्वेन प्रतिवसति । यतः शून्यात् शून्यस्यैव भवेदुत्पत्तिः । सतः पदार्थस्य कारणं तु सद्रूपमेवावश्यकम् । इदं तु सत् सूक्ष्मं नाम अव्यक्तं ( प्रकृतिः ) विद्यते ।

## इदमेव सुश्रुतमतम् ।

व्यवसायात्मकया बुद्ध्या संयुक्ता विद्यते प्रकृतिः, परं तस्यामात्मनो नैव विद्यते अस्तित्वम् ।

प्रकृतौ अहंकारस्योद्गमो भवति तेन च भिन्नभिन्नपदार्थेषु पार्थक्यभावना प्रादुर्भवति ।

पंचज्ञानेंद्रियैर्येषां पृथक्त्वेन संजायेत ज्ञानं इतादृशाणि विद्यंते पंचतन्मात्राणि, येभ्यस्स्थूलानां पंचमहाभूतानां भवति प्रजननम् ।

**सृष्टिः** –एतेभ्यः पंचमहाभूतेभ्यो निरींद्रियसृष्टेः प्रादुर्भावो भवति । इदमेव पंचीकरणम् ।

**सुश्रुतः** —अस्मिन् शास्त्रे पंचमहाभूतशरीरीसमवायः पुरुषः ।

**चरकः** —तत्र शरीरं नाम चेतनाधिष्ठानभूतं पंचमहाभूतविकारात्मकं, समयोगवाही । एतादृशे शरीरे पंचमहाभूतानां न्यूनाधिकत्वमेव विकारः ।

**त्रिदोषाः** —द्रव्याणि [ मॅटर ]

यद्यपि सचेतनमचेतनं वा शरीरं पंचमहाभूतात्मकमेव, तथापि आयुर्वेदस्य

जीवयुक्तपुरुषोपचारकरणं प्रधानतमं कार्यं विद्यते। अतो सजीवस्य पांच-भौतिकस्य शरीरस्य विचारे पृथ्वी, आपः, तेजः, इत्यादितत्वानां तान्येव नामानि शास्त्रकारैर्नैवोपयुक्तानि। अपि तु स्वतंत्रया संज्ञया तेषां व्यवहारः कृतः। अस्मिन्नूतनसंज्ञाकरणप्रसंगे पृथिव्याकाशयोरंतिमयोस्तत्वयोस्तु नैव कृतं गृहणम्। यतः शून्यस्वरूपमादिममाकाशभूतम्। तथा पृथ्वीभूतमत्यं-तिमं तत्वम्। उभयोरपि नैव शारीरघटनायां किंचिदपि स्वरूपपार्थक्यसंभवः। तथा च मंदगुरुसांद्रगुणाः पृथ्व्यापां समाना एव। तथा तीक्ष्णलघुसूक्ष्मगुणा-स्तुवाय्वाकाशयोस्समानास्संति। अत आकाशस्य वायौ, तथा पृथिव्या अप्सु, समावेशनं कृत्वा आप्तेजवायूनामेव सजीवे शरीरे कफपित्तवातेति प्रदत्ता संज्ञा। अर्थात् कफपित्तवाता इतीमानि तत्वानि पांचभौतिकानि नैव विद्यंते अपि तु सजीवानि ( बायॉलॉजिकल् ) संति। वातपित्तकफा इति संज्ञास्तु केवले सजीवे शरीरे एवोऽपयुज्यंते, पृथ्वी, आप, इत्यादयस्संज्ञास्तु जीवरहिते शरीरे प्रयुक्ता भवंति।

यथा पाश्चात्यपदार्थविज्ञानशास्त्रपद्धत्या कृते विचारे प्रकृत्याः ( मॅटर ) असंख्यातानां पदार्थानां ( रेडियंटमॅटर ) घनद्रववायुतेजाकाशा ( ईथर )-इति पंचद्रव्याणां विशिष्टस्थितिदृष्ट्या वर्गीकरणं भवति, तथैवायुर्वेदस्याऽपि पंच-महाभूतात्मकं वर्गीकरणं जीवरहितप्रकृतेरेव। परंतु तस्मिन्नेवशरीरे जीवकार्यं यदा समारब्धं भवति, तदा तेषामेव शारीरतत्वानां वैषम्यं रोगस्साम्यमारोग्यमिति भवति व्याख्यानम्। अत एव सुश्रुताचार्या " वातपित्तश्लेष्माण एव देह-संभवहेतव " इत्यादि प्राहुस्तथा वाग्भटाचार्योऽपि " रोगस्तु दोषवैषम्यं दोष-साम्यमरोगतेति " जगाद। एवं पांचभौतिकशरीरस्य ( फिजिकल् ) तथा सजीवशरीरस्य ( बायालॉजिकल् ) परस्परः कः संबंधस्तथा सजीवशरीरस्य प्रचलति व्यापारे मूलतत्वेषु शास्त्रीयपद्धत्या यश्च भवति विपरिणामस्तस्य विवेचनमेतावत्पर्यंतं जातम्। त्रिदोषविवरणप्रसंगेन एतदपि सुस्पष्टीकरणं युक्तं यत् त्रिदोषविवरणे शारीरलक्षणैस्सह मानसिकविकारलक्षणानामपि अस्मत्-

शास्त्रे समावेशः कृतः । आधुनिकाः केचन शास्त्रज्ञा नैतद्युक्तमिति प्रतिपादयंति । तथापि अन्येऽपि केचन पाश्चात्यपंडिताः प्रत्यक्षप्रयोगद्वारा शारीरव्याधिभ्यो मनोव्याधीनां उद्भवो, मनोव्याधीभ्योऽपि शारीरव्याधीनामुत्पत्तिर्भवतीति कथंयति । प्रयोगैरेतत्सिद्धं यदौषधैस्तथाविधैराहारैश्च शारीरांतर्ग्रंथयोयद्युत्तेजितास्तदा रागसंतापयोर्मनोविकारयोरुत्पत्तिर्भवति । तथैव रागसंतापाभ्यामपि मनोविकाराभ्यां समुत्पन्नाभ्यां शरीरांतर्ग्रंथिभ्योपि भवति स्रावप्रादुर्भूतिः । इत्यनेन दोषाणां मनसि मनसश्च दोषेषु कोऽपि भवति परिणामः । वर्तते परस्परावलंबित्वं दोषविकारमनोविकारयोरिति ।

यद्यपि दोषाः शरीरस्य सूक्ष्मेभ्योऽपि सूक्ष्मतमभागेषु स्वीयं स्वतंत्रं कार्यं कुर्वंति, तथापि पक्वाशयः, ( लार्ज इंटस्टीन् ) आमाशयः, ( स्टमक् ) उरः, ( लंग्ज् ) इति वातपित्तकफानां क्रमेण स्थानानि मुख्यानि । अन्नग्रहणयोग्ये काले विधियुक्तमुपभुक्तमन्नं मुखे दंतचर्वणेन लालायुक्तं भूत्वा प्रविशत्यामाशये । तत्रैव स्रवद्भिरनेकैर्द्रवपदार्थैः क्लेदकेन कफेन च द्रवरूपं भूत्वा तत्रैव पाचकाख्यपित्तविशेषेण ( आग्नेयतत्वप्रधानद्रवपदार्थः ॲसिड्अम्लः ) पचति । दोषधातुमलानामुत्पत्तिःस्थितिर्नाश इत्यादि क्रियाभ्यस्समुत्पद्यमानोऽन्तरग्निरयमेव । उदरंगते अन्ने उद्भवति आम्लस्रावः, आम्लस्रावे अन्नसंयुक्ते सति उष्णतोत्पादनं भवति । सैवोष्णता वांछत्यन्नमित्येवं चक्रं संततं प्रवृत्तं भवति । षड्रसान्नस्य आमाशये क्लेदककफेन सह भवति मिश्रणम् । ततोऽनंतरं तस्मिन्नेवामाशये पचनक्रियाकाले मधुरीभूतस्य कफस्य प्रादुर्भूतिर्जायते । ततो पाचकपित्तस्य संयोगेन पित्तद्रव्यस्य संसर्गतो अन्नरसेऽम्लत्वं समुपैति । तेनैव दाहस्य संभूतिर्जायते, अथ च तत्रैव पित्तस्योत्पत्तिर्भवति । स एवान्नरसः पक्वाशयपर्यंतं गम्यमानो गृहण्यास्थितकटुरसप्रायैराग्नेयद्रव्यैस्संमिश्रो भवति । तेन च तत्रैवान्नस्य शोषणक्रियाया भवति प्रारंभः । तेन द्रव्ये घनत्वप्राप्त्या कटुरसत्वेन च वायोर्भवति प्रादुर्भावः । इदमेवाऽत्र तात्पर्यं सुसूत्रत्वेन शारीरपचनक्रियाभवने आवश्यकाणां वातपित्तकफानां

उत्पत्तिस्तु पचनक्रियाया जायमानायाः काले एव भवति । अतएव वातस्य स्थानं—यत्रान्नपचनवेलायां तस्योत्पत्तिर्भवति स पक्वाशयो, यत्र च तस्मिन्नेव काले भवति पित्तस्योत्पादस्स आमाशयः पित्तस्य स्थानमिति । श्लेष्मणोऽपि उरस्थानमिति स्थानं यत्कथितं तस्य कारणं तु शरीरस्याऽस्तित्वं श्वसनक्रियाधीनम् । इयं श्वसनक्रिया उरस्थानस्थसूक्ष्मछिद्रयुतमांसपिंडानां निसर्गसिद्धसंकोचविकासक्रियया भवति । अयं च संकोचविकासस्सुखेनैव भाव्य इत्यर्थं एतेषु मांसपिंडेषु स्निग्धादिमृदुगुणयुक्तद्रव्यस्यात्यंतं वर्तते आवश्यकता । अतः श्लेष्मणस्तत्र संभूतिर्भवति । आमाशये भक्षिताहारे पचनाक्रियाया जाते संस्कारे यश्च निर्गलति रसस्स गच्छति यकृति । तत्रस्थान् संस्कारान् गृहीत्वा स रसो रक्तत्वं समुपगच्छति । अस्याहाररसस्य रक्तरूपरूपांतरकाले एव यश्च तस्मादुत्पद्यते मलस्स उरस्थानस्थितकफाप्यायनं करोति । अयमेवोऽरस्थः कफः । अन्यान्यपि वर्तंते वातपित्तकफानां स्थानानि ।

**वायुः**—तत्र प्राणोदानसमानापानव्याना इति पंचप्रकारको वायुः । प्राणवायोस्स्थानं मूर्धा, श्रोत्रचक्षुर्जिव्हाघ्राणेंद्रियनियंत्रकोऽयं मुखगलोऽरस्संचरणशीलो वायुनियामको वर्तते । आधुनिकभाषायां ' सेंट्रल नर्व्हस् सिस्टिम् इति ' वक्तुं सांप्रतम् । तथैव उज्जनो ( ऑक्सिजन् ) इति वायुः प्राणवायुरेव । अपानवायुस्तु ( कार्बन् डाय् ऑक्साइड् ) कर्बवायुरेव । शरीरे प्रामुख्यतः कार्यकर्तारौ इमावेव द्वौ वायू । तथापि तयोर्भिन्नभिन्नप्रमाणतस्संजातेन संयोगेन भिन्नकार्यस्थानत्वेन च प्राणापानव्यानोदानसमाना इति शास्त्रकारैः संज्ञा प्रदत्ता । एतेषां सर्वेषां वायूनां प्रत्यक्षतः संचयं कृत्वा रासायनिकं पृथक्करणमत्यंतमावश्यकमेव ।

**पित्तं**—वाग्भटचरकसुश्रुतग्रंथेषु पित्तस्य ऊष्णतीक्ष्णादिगुणवर्णनं यद्दृश्यते तत्तु गंधकाम्ललवणाम्लवत् जलेन द्रवीकृतस्याम्लद्रव्यस्य गुणवर्णनमिवाऽभाति । तत्तु पाचकभ्राजकालोचकरंजकसाधकभेदेन पंचविधं, तेषु

पाचकं पक्वामाशयमध्यस्थं [ स्मॉल् इंटस्टाइन्–पक्वाशय, डिओडिनम्–पक्वामाशयमध्य ] वर्तते। तस्य स्रावस्तु ग्रहण्यामेव भवति। पाचकं पित्तं लवणाम्लगंधकाम्लवत् [ हायड्रोक्लोरिक् ॲसिड् तथा सल्फ्यूरिक् ॲसिड् ] द्रवं वर्तते। इदं पित्तं आमाशयस्थितमन्नं, तथाऽमाशयांत्रावरणस्थश्लेष्मलग्रंथिभ्यस्समुत्पन्नमपि द्रवद्रव्यं [ गॅस्ट्रिक ज्यूस ] पचति। पित्ताशयाग्न्याशयाभ्यां [ गॉल ब्लॅडर, पँक्रियाज् ] नलिकाद्वाराप्रस्रवदन्ननलिकां च गच्छत्स्रावमिश्रणं, अन्नविपाचनं च करोति।

## कफः

१ **बोधकः कफः**–अन्नं मुखे प्रक्षिप्तं दंतैः चर्वितं भवति। तस्मिन्काले मुखांतस्स्थितलालाग्रंथिभ्यः स्रवंती लालाऽन्नमिश्रिता भवति। जिव्हा तु तदन्नं वारंवारं दंताधो नयति चर्वणार्थम्। जिव्हावेष्टितं श्लेष्मलमावरणं स्रवति कमपि स्रावं तेनैव भवति रसज्ञानम्। जिव्हासमंतास्थिताभ्यो ग्रंथिभ्यः (म्यूकस ग्लँड्स्) स्रवमाणो द्रवस्राव एव 'बोधको रसबोधनात्' बोधकः कफः।

२ **क्लेदकः कफः**–मुखस्थितलालाग्रंथिभ्यः प्रस्रवमाणो लालास्रावो-आमाशयस्थितक्लेदककफेऽन्तर्भूतो भवति। मुखादारभ्यामाशयसहितोऽर्ध्वभागः क्लेदककफस्य स्थानम्।

३ **तृतीयः कफो उरस्थः**–रसधातोस्सारभागो रक्तं, तस्य मलः कफः स तु फुप्फुसांतस्स्थितसूक्ष्मावरणगतश्लेष्मलग्रंथिनिष्पन्नस्स्रावः। अस्यैवावलंबः कफ इति संज्ञा वर्तते।

**चतुर्थः श्लेषकः कफः**–अस्थिसंधिषु आसमंतात् आवरणं कृत्वा स्थितेभ्यस्सूक्ष्मत्वग्रूपकोषेभ्यस्समुत्पन्नो द्रवपदार्थ एवायं श्लेषकः कफः।

५ **पंचमस्तर्पकः कफः**–सचाऽयं श्लेष्मा मस्तुलुंगस्य निवासभूता या

करोटी वर्तते, तस्यां विद्यते श्लेष्मलत्वच आवरणं, तस्यास्सकाशाद्यश्च स्रवति स्रावस्सोयं तर्पक इति।

एवं शरीरे वातपित्तकफा नाम दोषा द्रव्याणि, प्रत्यक्षदृश्यपदार्थाश्चोत्पद्यमानास्स्रावाश्चेति। शरीरे दोषाः ( सीक्रिशन्स् ) धातवः ( टिशूज् ) मलाः ( इन्क्रीशन् ) इति इंद्रियविज्ञानशास्त्रे विद्यंते संज्ञाः। यथैव दोषधातुमलानां क्रियाभिः, शरीरमिदं सम्यक् धार्यते इति गदत्यायुर्वेदस्तथैव स्रावैः, ( सीक्रिशन्स् ) धातुभिः, ( टिशूज् ) स्वेदमूत्रादिमलैः, ( इन्क्रीशन्स् ) योग्यप्रमाणकार्यकरैरिदं शरीरं धार्यते इति इंद्रियविज्ञानशास्त्रमप्याधुनिकं वदति।

भिषग्विलास पुस्तकाणि ३१-३३ वर्ष शाके १८५०–५३ तथा वैद्यकसंमेलनपत्रिका सन १९२९-३१ अंकाः, जर्नल् ऑफ आयुर्वेद कलकत्ता।

## वैद्यपंचानन गंगाधरशास्त्री गुणे अहमदनगर.

स्वीये चतुर्थकर्नाटकवैद्यसम्मेलनाध्यक्षीये भाषणे अस्मिन्विषये प्राहुः—

१ आयुर्वेदः ( जीवितज्ञानं ) प्राचीनतमं शास्त्रम्। स्वास्थ्यानुवृत्तिकरो रोगोच्छेदकरश्चेत्यस्य द्वौ भागौ विद्येते। १ हेतुः, २ लक्षणं, ३ औषधिविज्ञानं चेत्यस्य त्रिस्स्कंधाः। यस्मिन् शास्त्रे साकल्येन शरीरज्ञानं प्रतिपादितं तदेव शास्त्रं जीवितशास्त्रसंज्ञायोग्यं भवति। अतएव चरके ‘ शरीरं सर्वथा सर्वं सर्वदा वेद यो भिषगिति ’ प्रतिपादितम्।

शरीरस्य व्याख्या च ‘ तत्र शरीरं नामचेतनाधिष्ठानभूतं पंचमहाभूतविकारसमुदायात्मकं समयोगवाहि ’ चरकाचार्येण कृता विद्यते। यत्पंचमहाभूतविकारात्मकं तथा चेतनाधिष्ठानभूतं तच्छरीरम्। १ शरीरं, २ इंद्रियाणि, ३ मनः, ४ आत्माचेति चतुर्णां संयोग एव जीवितं वा आयुः।

शरीरेंद्रियसत्वात्मसंयोगोधारिजीवितम् ॥ च. सू. अ. १ ॥ शरीरस्य

१ पंचमहाभूतविकारसमुदायात्मकत्वं, २ चेतनाधिष्ठानभूतत्वं चेति द्वौ विभागौ भवतः । तत्र पंचमहाभूतविकारसमुदायात्मकं शरीरं स्थूलं, तथा चेतनाधिष्ठानभूतं शरीरं सूक्ष्मं इति तु भेदः । पंचमहाभूतविकारसमुदायात्मकं शरीरं तु पंचमहाभूतेभ्यस्समुत्पन्नानां नानाप्रकाराणां द्रव्याणामेव । शरीरस्यांतिमः-सूक्ष्मात्सूक्ष्मतरोऽवयवस्तु चिदंशपरमाणुरेव । आयुर्वेदीयः शारीरपरमाणुस्तु आधुनिकशास्त्रनिर्दिष्टसेल्सदृश एव ।

आधुनिके शास्त्रे शरीरस्यांतिमः परमाणुस्तु चिदंशपरमाणुरिति गृहितम् । तस्मादेव सर्वस्य शरीरस्य सर्वेप्यवयवसमूहा निष्पन्नाः । तेषां व्यापारास्तु पंचमहाभूतविकारसमुदयात्मका विद्यंतेति-( ' फिजिको—केमिकल ' ) आधुनिकं वैद्यशास्त्रं तथेंद्रियविज्ञानशास्त्रं समामनति । शरीरस्य सर्वेऽपि व्यापारा आधुनिकरसायनपदार्थविज्ञानशास्त्रविज्ञानसिद्धनियमानुसारं चलंति । मदशक्तिवत् द्रव्याणां परस्परसंमूर्च्छनेन प्रादुर्भवत्यात्मशक्तिरतस्स्वातंत्र्येण आत्मतत्वस्य गृहणमनावश्यकं निरर्थकं चेति सांप्रतं प्रचलति मतम् ।

आयुर्वेदस्तु शरीरांतिमावयवं चित्परमाणुरूपमविभाज्यस्वरूपं समामनति च संगिरते च सर्वमपि शरीरं तन्मयमिति । " शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवंति, अतिसूक्ष्मत्वादतिबहुत्वादतींद्रियत्वाच्च " ॥ च. शा. अ. ७ । एतावत्पर्यंतमाधुनिकशास्त्राणामायुर्वेदस्य वर्तते ऐकमत्यम् । परंतु आयुर्वेदस्तु परमाणवस्स्वतंत्रा इत्यधुनिकशास्त्रमिव नैवामनुते । परमाणोः परं नैव शरीरे किमपि द्रव्यमिति नैवायुर्वेदसंमतम् । परमाणूनां संयोगविभागकरसमर्थानि विद्यंते कारणानि, ' तेषां संयोगविभागे परमाणूनां कारणं वायुः कर्म स्वभावश्च ' । चरक शा. अ. ७ ॥ इत्यनेन निर्दिशत्यायुर्वेदः ।

अनेनैव सिद्धांतेन न स्थगितोऽयमायुर्वेदः । अतः परमपि मनस्तु स्वतंत्रं अणुरूपं द्रव्यमिति पठित्वा ' मनसस्तु चिंत्यमर्थः ' तथा ' चिंत्यं विचार्यमुह्यं च ध्येयं संकल्प्यमेव' चेति वचनेन तत्कार्यमपि निर्दिष्टम् । मनसः परमपि चेतनावत

आत्मनस्स्वातंत्र्येणास्तित्वमपि पृथक्तया वर्ततेऽत्युद्धोषति सिद्धांततत्ववाक्यैस्तर्क-कर्कशबुद्धिनिकषसिद्धैः । एवं १ पंचमहाभूतानि ( फायनेस्ट एलिमेंट्स् ) २ पंचतन्मात्राणि, इति शारीरः पंचमहाभूतद्रव्यगुणसंग्रहस्तथा मनो, मनोऽर्थौ, बुद्धिः, आत्मा, चेति अध्यात्मद्रव्यगुणसंग्रहः । उभाभ्यां संग्रहाभ्यां संगृहीतोऽयं जीवकोशः ( शरीरं ) ।

शारीराध्यात्मद्रव्यगुणसंग्रहस्य शारीरे पंचमहाभूतद्रव्यगुणसंग्रहे भवति कोऽप्यवितर्क्यः परिणामः । तेन शरीराद्बाह्येभ्यः पंचमहाभूतविकारसमुदयोत्पन्नेभ्यो द्रव्येभ्यस्सुधाक्षारलोहादिभ्यः शरीरस्थपंचमहाभूतविकारसमुदयोत्पन्नद्रव्येषु तेष्वेव सुधाक्षारलोहादिषु द्रव्येषु स्वभावतो, गुणतः, कार्यतश्च संजायते, संदृश्यते, चानुभूयते, सर्वथा पार्थक्यम् ।

विविधाशीतपीतपांचभौतिकद्रव्यमयान्नस्य रसरक्तादिधातुरूपविपरिणमनेन सजीवत्वरूपप्राप्तिस्तु केवलेनाऽध्यात्मद्रव्यगुणसंग्रहणैव विशेषतस्त्वात्मनश्चेतनावतः परिणामेन भवति । पांचभौतिकद्रव्याणां रूपांतरं भूत्वा सजीवशरीरे सजीवकणरूपभवनेन तेभ्यस्समायाति त्रिधातुत्वम् । अनया रीत्या पांचभौतिकद्रव्याणां रूपांतरं सजीवशरीरे सजीवकणमयत्रिधातुरूपेण भवति । अत एव ‘ वायुः पित्तं कफश्चेति शारीरो द्रव्यसंग्रहः ’ च. सू. अ. १ इत्युक्तम् । इमे त्रिधातवस्तु शरीराधारा, व्यापिनः कार्यकर्तारस्तथा साम्यावस्थितत्वेन शरीरस्वास्थ्यधारका विद्यंते ‘ शरीरधातूनां प्रकृतिभूतानां तु खलु वातादीनां फलमारोग्यम् ’ च. शा. अ. ६ ॥

एतावता १ आत्मा ( सोल् कॉन्शस् थिंग इन् इट्सेल्फ )

२ मनः, अस्मिन्नेवबुद्धेरंतर्भावो भवति, ( ‘ फिजिक् ’ )

३ त्रिधातुः ( बायो–फिजिक् )

४ स्थूलधातुः ( बायो—प्लास्मिक्, ॲार बायो-केमिक् )

५ पंचमहाभूतविकारसमुदायः ( फिजिको—केमिक् )

इत्येतैर्भिन्नभिन्नैर्द्रव्यैः शरीराभिनिवृत्तिर्भवति ।

त्रिधातवो यस्माद्धारयंति देहं तस्मात्ते धारणाद्धातवः । ते व्यापिनस्सर्वशरीरचराश्रितपरमाणुष्वपि वर्तमानास्तथाऽन्तर्बहिरपि विद्यमानाः, ( इंट्रासेल्यूलर, अल्ट्रासेल्यूलर ) संति । एते एकचित्परमाणुमये ( यूनी सेल्यूलर ) प्राणौ विद्यंते । तेषां वैषम्येण शरीरं विकृतं भवति, तेन हेतुना ते दोषसंज्ञिता भवंति । अतिप्रकोपेण दोषास्तथा शारीरव्यापारे जायमाने संपद्यमानानि निस्सत्वानि द्रव्याणि ' मल ' संज्ञया संज्ञितानि भवंति ।

केचन वातवहमंडलमेव [ नर्व्हस् सिस्टिम् ] ' वात ' इति कथयंति । परं नैतद्युक्तम् । वातवहमंडलेन भवति वायोर्वहनम् । अतस्तत्कथं भवेदेकरूपम् । वातो वातवहमंडलं चेति द्वयं सर्वथा भिन्नमेव ।

अंतःस्रावकग्रंथिभ्यस्स्रवमाणास्स्रावाः समाकर्षयंति पंडितानां मनांसि त्वास्मिन् विषये, परं त्रिधातुभ्यस्तासां ग्रंथीनां वा तदुद्भूतस्रावाणां नियमनं भूत्वा संरक्ष्यते तेषां साम्यम् । अंतस्स्रावकग्रंथयस्तु शरीरावयवा एव । तेभ्यो वायोः पूरणं, शोणितस्य संयमनं ( प्रेशर ) श्लेष्मण आर्द्रता, इत्येतदावश्यकमेव ॥ भिषग्विलास पुस्तक ३१ शाके १८५० अंक ४ ॥

---

सूचनाः—मतसारोद्धारेऽस्मिन् प्रायो मतसाराणां गीर्वाणवाणीवेशस्तु मया कल्पितो विद्यते, अतोस्मिन् वेशकल्पने सर्वथा निर्दोषत्वासिद्धये कृतेऽपिप्रयत्ने ये च लेखनदोषा वा मतानां वास्तवरूपाऽप्राप्तिदोषा भवेयुस्तेसर्वथागीर्वाणभाषाऽनभिज्ञस्य ममैवेतिमन्तव्यम् । येषां तु मूलतएव विद्यते गीर्वाणवाणी तेषां ममोऽपरि नैव गुणदोषभार इति विज्ञप्तिः । अतः परमस्य सारोद्धारस्य क्रियते संक्षेपतो विचारः ।

वामनशास्त्री दतार.

इति द्विसप्तत्यधिकमतानां सारोद्धारवाचनेनेदं सर्वेषां विदुषां दृक्-पथमागच्छेत् यत् त्रिदोषविषयकाणि नैकमतानि प्रचरंति वैद्यदक्षतरसमाजे । आयुर्वेदीयत्रिदोषसिद्धान्तस्तु मूलमेवाऽयुर्वेदस्य।अस्यैवत्रिदोषतत्वस्य स्वरूपविषये संशयास्पदत्वं, नैकरूपत्वं, विवादविषयत्वमेवमेवास्मिन् समाजे वर्तेत चेत्, आयुर्वेदस्याशास्त्रीयत्वप्रवादस्सत्यस्वरूपत्वमधिरोहेदित्यत्र नास्त्याशंका । अस्मिन् सारोद्धारे द्विप्रकारा विचारपद्धतिस्सामान्यत्वेन वर्तते । एका केवला पौर्वात्य-शास्त्रकल्पनाधिरूढा, द्वितिया पौर्वात्यप्रतीच्यशास्त्रकल्पनातुलनायुता, अस्मिन्नपि द्वैविध्ये विद्यते विविधा विचारमतपद्धतिः यया पद्धत्या मतमतानांसंकरएवदरी-दृश्यते नैकोपि कमपिमानयति वा न पृच्छति एवं प्राया स्थितिस्संजाता दृश्यते । प्रत्येकशो हि भिन्ना मतपद्धतिः । पौर्वात्यशास्त्रकल्पनारूढाया विचार-पद्धत्यास्तु निम्नलिखिता भेदाः संक्षेपतो विद्यंते ।

## आयुर्वेदीयमतानि.

१ त्रिदोषाः – कल्पनाः

२ त्रिदोषाः –प्रत्यक्षाः दृश्याः शक्तिरूपेण अदृश्याश्च

३ त्रिदोषाः –पंचमहाभूतानि.

४ त्रिदोषाः –शक्तयः

५ त्रिदोषाः –प्रत्यक्षाः द्रव्यं, शक्तिः,

६ त्रिदोषाः –द्रव्यम्.

७ त्रिदोषाः –अदृश्याः, तर्कानुमेयाः, सूक्ष्माः, तर्कदृष्ट्या दृश्याः, अणवःपदार्थाः, शक्तयः,

८ त्रिदोषाः –त्रिधातवो दोषाश्च, पंचमहाभूताधाराः, विकाररूपा वातपित्तकफास्तुभिन्नाः

९ त्रिदोषाः –स्थूलास्सूक्ष्माश्च इन्द्रियगोचराः अतीन्द्रिया अदृश्याः

१० त्रिदोषाः –सत्वरजस्तमोयुतपंचमहाभूतोत्पन्नाः धातवस्थूलास्सू-क्ष्माश्च.

११ त्रिदोषाः –परोक्षवर्णनेन संज्ञिताः बाह्यजगद्घटनानुभवा अमूर्ताः

१२ त्रिदोषाः —वायुर्मूर्तामूर्तो कफपित्ते तु मूर्ते.

१३ त्रिदोषाः --पांचभौतिकाः, द्रव्याणि, तेषां पंचप्रकाराः परस्परं भिन्नाः

१४ त्रिदोषाः —आधिदैविकाः सोमसूर्यानिलाः आधिभौतिका वाय्वग्नि-जलात्मकाः, आध्यात्मिका वातपित्तकफाः

१५ त्रिदोषाः —धातवो दोषाः प्रसादरूपेण सूक्ष्माः शक्तयः मलरूपेण-स्थूलाः

१६ त्रिदोषाः —प्रत्यक्षद्रव्याणि,कारकाः, चालकाः, धारकाः, सूक्ष्माः स्थूलाः, स्रावरूपाः

१७ त्रिदोषाः --द्रव्याणि, पित्तकफौ अच्छमलस्वरूपौ द्विप्रकारकौ

१८ त्रिदोषाः --त्रिप्रकाराजीवशक्तिः गत्युष्णताघटकरूपा.

१९ त्रिदोषाः --भिन्नभिन्नग्रन्थिस्रुतस्रावाः, द्रवाः

२० त्रिदोषाः --जीवद्रव्याणि महाभूतत्रयमेव धातवो दोषा मलाश्च.

२१ त्रिदोषाः --पांचभौतिका द्रव्याणि धातवो दोषा मलाश्च.

२२ त्रिदोषाः --दृश्याः रसरूपाः द्रव्यं, सूक्ष्मा इति स्वल्पाः

२३ त्रिदोषाः --पदार्थाः स्थूलाः सूक्ष्माश्च.

२४ त्रिदोषाः --स्थूलाः सूक्ष्माः सूक्ष्मतराः

२५ त्रिदोषाः --संचालनस्वेदनस्नेहनकर्तारो दोषधातुमलरूपाः

२६ त्रिदोषाः --शूलशोथदाहात्मकाः वातपित्तकफा दोषाः

२७ त्रिदोषाः --चंद्रसूर्यवायवो-जलस्वरूपं कफः, अग्निस्वरूपं पित्तम् वायुस्वरूपं वायुः धातवो दोषाः

२८ त्रिदोषाः --सजीवतत्वानि द्रव्याणि, दोषा, धातवः प्रत्यक्षदृश्य-पदार्थाः उत्पद्यमानस्रावाः

## पाश्चात्यतत्वानुगतमतानि.

२९ त्रिदोषाः --त्रिधातवः ( बायोफिजिक् )

३० त्रिदोषाः -वायुः पंचप्रकारको ग्यासः, तेजोरूपगुणद्वयात्मकं पित्तं

द्विप्रकारकं द्रव्यात्मकं, तेजोगुणाविशिष्टो द्रवोभागः स्त्रावरूपः कफः

३१ त्रिदोषाः --नर्व्हस्, बिलियस्, लिम्फ्याटिक्स्.

३२ त्रिदोषाः --नर्व्हस्सिस्टिम्, वायुः सीरम् कफः

३३ त्रिदोषाः --नर्व्हस्. ब्लडसिस्टिम्, लिंफ्याटिक्सिस्टिम्.

३४ त्रिदोषाः --नर्व्हस्. बिलियस्, फ्लेग्म्याटिक्,

३५ त्रिदोषाः --प्राडक्टस् ऑफ ॲनाबोलि. पांचभौतिकाः सेन्द्रियाः सजीवाः

३६ त्रिदोषाः -एपिब्लास्ट वायुः, मीसोब्लास्ट पित्तं, हैपोब्लास्ट कफः,

३७ त्रिदोषाः --सेरिब्रोस्पायनल् प्रणालिः वायुः, अन्नपचनप्रणालिः पित्तं, स्केलेटल्सिस्टिम् कफः

३८ त्रिदोषाः --प्रोटीड-कफः एन्झाइम्-पित्तम्. ग्यास्-वातः

३९ त्रिदोषाः --नर्व्हफोर्स-वातः सेमिलिक्विड्ग्रन्थिरसाः कफः

४० त्रिदोषाः —वायुः —

## वायुः

१ प्राणः --फेरिंक्स्, न्यूमोग्यॅस्ट्रिक्पल्मनरि, कार्डियल् प्लेक्सस्-प्रभृतिमज्जातंतुकार्यम्.

२ उदानः --लॅरिंजियल्कार्यम्.

३ व्यानः --मोटारज्ञानतंतुकार्यम.

४ समानः —सोलरज्ञानतंतुकार्यम्.

५ अपानः --पेल्व्हिक्प्लेक्सस्कार्यम् ।

**पित्तम्ः** --डायजेस्टिक्, ग्यॅस्टिक्जूस्, पॅंक्रियाटिकजूस्, इन्टेस्टनल्सिक्रिशनस् कॉइल् ।

## कफः

१ क्लेदकः --आमाशयिकरस. एलेमेन्टरीकॅनालम्यूकस् इन्टेस्ट-

नल्सिक्रिशन् कॉईल ।

२ अवलंबकः --फ्ल्यूलर पेरिकार्डियल् फ्ल्युइड्.

३ बोधकः --सलॉयव्हा.

४ स्नेहकः --सेरिब्रोस्पायनल् फ्ल्युइड्.

५ श्लेष्मकः --सायनोव्हियल् फ्ल्युइड्.

४१ त्रिदोषाः --वातः व्हायटल्फोर्स.

४२ त्रिदोषाः --वातः ऑक्सिजन्, कॉर्बनडायअक्साईड.

४३ त्रिदोषाः —

**वातः**

१ उदानवायुः --कार्डियल्प्लेक्सस्.

२ समानवायुः --सिंपथेटिक्सिस्टिम्.

३ अपानवायुः --लंबरप्लेक्सस्.

४ व्यानवायुः --व्हॅस्क्युलरीसिस्टिम् ।

**पित्तम्**: --पाचकोरसः यकृत्जन्यं पित्तं, क्लोमरसः क्षुद्रान्त्ररसः

४४ त्रिदोषाः —

**कफः** --आमाशयः कफस्थानम्-आमाशयाभित्तिस्थरसः पेप्सिन्, हैड्रोक्लोरिकॲसिड्द्रव्ययुतः अम्ललवणोरसः ।

**पित्तम्**: --डियोडिनम् क्षुद्रान्त्र, पॅंक्रियाटिक् पित्तकोषरसः क्षारोरसः क्षारोआग्नेयम्. पित्तम्. ।

**वातः** --बृहदंत्रानिम्नद्वादशांगुलमितोभागः रेक्टम् वातस्थानम्.

४५ त्रिदोषाः --सिंपथेटिक्नर्व्ह इडापिंगळा वायुस्थानम् . आलोचकपित्तम्-रॉडस्कोन्स् यत्र रासायनिकक्रिया भवति इदं रसायनमेव आलोचकपित्तम्.

४६ त्रिदोषाः –

### वातः

१ प्राणः –पिचुट्री सिक्रिशन्स्.

२ उदानः --थायराइड्सिक्रिशन्स्.

३ व्यानः --नर्व्ह ॲण्ड् सिक्रिशन्स

४ समानः --स्यूकस्एंटरिकस्.

५ अपानः --ॲड्रानॉलिन्सिक्रिशन्स्.

### पित्तम्ः

१ पाचकं --बाइल ॲण्ड पँक्रियाटिक्जूस्.

२ रंजकं --सिक्रिशन्स्, ऑफ लिव्हर ॲण्ड स्प्लीन्.

३ साधकं --हीमोग्लोबिन्.

४ आलोचकं –पिग्मेंट ऑफ रेटीना.

५ भ्राजकं --पिग्मेंट ऑफ एपीडर्मिक्.

### कफः

१ क्लेदकः --ग्यॉस्टिक्म्यूकस्सिक्रिशन्स्.

२ अवलंबकः --सीरम् फ्ल्युइड.

३ बोधकः–म्यूकस्सिक्रिशन्स् माउथ, फ्यारिंक्स् इसाफेगस्. ।

४ तर्पकः --सेरिब्रोस्पायनल् फ्ल्युइड.

५ श्लेषकः --सायनोव्हिया.

४७ त्रिदोषाः —

**वायुः** --प्राणः -ऑक्सिजन्, व्यानः -कॉर्बन् डायक्साईड.

### पित्तम्ः

१ पाचकंः --गृहणीस्थं पित्तं, आमाशये अम्लं पित्तं, स्यूकस-एंटरीकस्. जठरस्थो अम्लोरसः क्लोमस्थोरसः यकृतस्थं पित्तं.

२ रंजकंः --यकृत्प्लीहानौ रंजकपित्तस्थानम्.

३ साधकं --यकृत्‌थमेव साधकं पित्तम्.

४ आलोचक —दि लॉक्रिमल् ग्लँडस्स्रुतं नेत्रोदकं.

५ भाजकं --त्वक्स्थं पित्तम्-त्वक्स्थाणुस्रोतस्थपित्तांशः

**कफः** —रसयुक्तरक्तात् अच्छो द्रवः स्निग्धः पिच्छिलः पदार्थ उत्पद्यते स एव कफः लिंफ.

**क्लेदकः** --लाला.

**आमाशयस्थः** --सान्द्रपदार्थो आमशयस्थः कफ उच्यते.

**उरस्थः** --कफः पेरिकार्डियाक्फ्ल्युइड अथवा यकृत्स्थः पदार्थो मधुरः ( ग्लायकोजेन. )

**अवबोधकः** --जिव्हामूलसूक्ष्मछिद्रेषु उत्पद्यमानो जलसदृशः पदार्थः

**तर्पकः** --सेरिब्रोस्पायनल्फ्ल्युइड.

**श्लेषकः** --अस्थिसंधिस्थः

४८ त्रिदोषाः --पाचितानां खाद्यपेयानां सारभागो रसः शुद्धो भागः ( कॉईल, ) रसस्य अशुद्धो भागः ( बॉइल्, ) अन्यपदार्थवत् शरीरस्याभ्यन्तराभ्यो ग्रन्थिभ्यः स्रवमाणेभ्यो मलरूपद्रवेभ्यो स्रवभ्द्यो वातपित्तकफा निगद्यंते अत्यन्तमुपयुक्ताः ग्रन्थिभ्यः स्रवमाणा द्रवपदार्थाः किट्टमयः

४९ त्रिदोषाः --प्रतिजीवाणौ द्वौ वा त्रयो स्रावा वर्तंते, येषु सर्वे व्यापारा अधिष्ठिताः एतेषां सूक्ष्मद्रव्याणां गुणाः वातपित्तकफसमानाः, एतेषां स्रावाणां नामानि असेरील्, कोलिन्,

५० त्रिदोषाः --वातः विद्युत्स्पंदनं वा क्रियावान् संदेशः

पित्तम्: --वातापेक्षया घनो द्रवरूप:पदार्थः

कफः --घनरूपः शीतो मसृणः क्षारयुक्तः पदार्थः

५१ त्रिदोषाः --दि लेटन्ट फोर्स ऑफ दि मॅक्राकम्.

५२ त्रिदोषाः --पावरफुल् आर् व्हायटल् एलिमेंटस्.

५३ त्रिदोषाः —

वायुः

१ प्राणवायुः --सेरिब्रोस्पायनल् सेंटर अथवा ॲक्सीस्.

२ उदानोवायुः --सर्व्हायकल् प्लेक्सस्.

३ व्यानोवायुः --कार्डियाक् प्लेक्सस्.

४ समानोवायुः --सोलरप्लेक्सस् तथा लंबरप्लेक्सस्.

५ अपानोवायुः --हायपोगॅस्टिक् तथा सेक्रल् प्लेक्सस्.

**पित्तम्**: --डायजेस्टिव्ह सिस्टिम्

**कफः** --लिंफ्याटिक् सिस्टिम्.

५४ त्रिदोषाः --प्रोटोप्लाझम्

५५ त्रिदोषाः --ह्युमरस्.

इत्येतानि पौर्वात्यप्रतीच्यविचारारूढानी पंचपंचाशन्मतानि संगृहीतानि, येषु मतेषु सूक्ष्मदृष्ट्या विचारितेषु यद्यपि विद्यते परस्परतो वैभिन्यं तथापि अस्मिन् वैभिन्येऽपि त्रिविधमेव वैभिन्यं प्रामुख्येन विद्यतेति सूक्ष्मतया ऽवलोकिते व्यक्तीभवति १ त्रिदोषाः --केवलं कल्पना २ त्रिदोषाः --शक्तिरूपा अदृश्याः ३ त्रिदोषाः --द्रव्याणि ( पदार्था वा ) दृश्याणि। एतस्मिन्मतत्रितये भवन्तु प्रत्येकस्मिन् मतान्तराणि, तथापि त्रितयात्कमपि मतमेकं केन्द्रतया स्वीकृत्यैवान्तरमतभिन्नत्वं वर्तते इति दृक्पथमागच्छेत्। अतएव सर्वमतानां समन्वयकृदेकः शास्त्रवचनबृंहितः सरहस्यो त्रिदोषस्वरूपदर्शकः कोऽपि प्रबंधः आवश्यक इति हेतोः त्रिधातुसर्वस्वनामकनिबंधस्य ख्रीस्तीय १९२८--१९२९ तमे वत्सरे महाराष्ट्रप्रान्तेन पारिते, निखिलभारतीयवैद्यसंमेलने एकोनविंशे

लेखकेभ्यो आभारतीयेभ्यो पंचशतरूप्यकमितं पारितोषिकं प्रतिश्रुत्य स्वागतसमित्या जनस्थानस्थितया आकारणं कृतम्। निर्मापिता च भारतप्रसिद्धवैद्यपंडितानां परीक्षकसमितिः। निबन्धलेखने सौलभ्यं परिपूर्णतां च संपादयितुं निष्कासितमासीत्तदानीमेकं स्वागतसमित्या पत्रकम्।

पत्रकक्रमांकश्चतुर्थः

## जनस्थाने

एकोनविंशतितमस्य भविष्यतो वैद्यसंमेलनस्य स्वागतसमित्या समभिलषितः प्रबंधः

पारितोषिकं पंचशतरूप्यकमितं

### प्रबन्धविषयः

## "त्रिधातुसर्वस्वम्"

अस्मिन् विषये सरलया सुबोधया समासरहितया गीर्वाणभाषया गद्यमय्या एकेन पण्डितेन वा बहुभिर्वा विद्यालयेन वा वैद्यकसंस्थया वा पंचविंशत्यधिकशतपृष्ठात्मकः प्रबन्धो लेखनीयः। यस्य लेखकस्य प्रबन्धः समागतसर्वप्रबन्धातिशायी भवेत् तल्लेखको लभेत प्रतिज्ञातं पारितोषिकम्।

अयमस्य प्रबन्धलेखनस्य हेतुः यत् आयुर्वेदशास्त्रे "दोषधातुमलमूलं हि शरीरम्" इत्यनेन दोषा धातवो मलाश्च समकक्षीयाः पदार्था अंगीकृताः। तत्र यथा धातूनां मलानां च यथावत् ज्ञानं स्पष्टतया भवति। तथा दोषाणामपि साकल्येन स्पष्टतया च ज्ञानमावश्यकं, येन स्वज्ञाननिष्ठया परसंशयोच्छेदनसामर्थ्यं लभेयुरायुर्वेदविदः। निबन्धलेखने चरकसुश्रुतवृद्धवाग्भटाष्टांगहृदयाश्चत्वारएव ग्रंथाः प्रामुख्येन प्रमाणीकृताः आभेडादिभावप्रकाशपर्यन्तापि प्रमाणत्वेनाङ्गीकृताः। नातोर्ध्वं नव्यसंभूतग्रंथाः प्रमाणम्। निबन्धेऽस्मिन् ग्रंथचतुष्टयगतत्रिधातुविषयकशङ्काकल्पनाविचाराणामशेषतया संग्रहणं आवश्यकम्। तथा च लेखनपरिपाट्या लेखकैस्तथा यत्नः कार्यो येन आधुनिकानां त्रिधातुगतं अशास्त्रीयत्वापवादनिरसनं निर्दिष्टप्राचीनग्रंथप्रणेतृभिः साभिप्रायं

योजितः त्रिधातुविषयकसंज्ञाशद्वानां अपरिवृत्यैव भवेत् । निम्नलिखितप्रकरण-चतुष्टये तत्तद्विषयनिवेशनपूर्वकं लेखनं कार्यम् । प्रतिप्रकरणेप्रथमागतशद्ब-कल्पनाविचाराणां भिन्नार्थत्वेन भिन्नप्रयोजनेन च पौनरुक्त्यं स्वीकृतं भवेत् । प्रबन्धलेखनसौकर्यार्थं प्रतिप्रकरणे आवश्यकाणां त्रिधातुगतविषयाणां समा-वेशनार्थं सूचीपत्रकमधोदीयते । नैतदेवसर्वथा पूर्णमितिमन्तव्यम् । दर्शित-विषयांशेभ्यो भवेयुरन्येऽपि केचनांशास्तेषामपि सविवेचनं समावेशनं कार्यमेव ।

## त्रिधातुसर्वस्वस्य सूचीपत्रम् ।

### १ आकृतीविज्ञानम् नाम प्रथमं प्रकरणम् ।

अस्मिन् प्रकरणे त्रिधातुनां स्वरूपवर्णमानस्थानपांचभौतिकत्वत्रिवृत्क-रणपंचविधत्वसाधर्म्यवैधर्म्यद्रव्यत्वसाम्यादीनां विवेचनमावश्यकम् ।

### २ प्रकृतिविज्ञानम् द्वितीयं प्रकरणम् ।

अस्मिन् द्वितीये प्रकरणे त्रिधातुनां सर्वशरीरव्यापित्वं एकदेशव्यापित्वं सप्तधातुमलाग्निप्रकृत्याशयकलाधमनीशिरास्नायुस्रोतआहाररसेषु संबंधः । तथा आहारानाहारात्क्षीणता कालर्तुलक्षणप्रकृतिकर्माणां वर्णनं, तैर्देहवर्तनं, तेषां गुणः स्वतंत्रत्वं, पंगुत्वं, चालकत्वं, सोमसूर्यानिलसाम्यत्वं, पोष्यपोषकत्वमाश्रया-श्रयीभावः, आहारसमये स्थितिः, गतिवयदिनरात्रिभुक्तकोष्ठेषु संबंधः, शुक्रार्तव-संबंधः, कालसंबंधः, गर्भाशयसंबंधः, महाभूतविकारप्रकृतिसंबंधः, विसर्गादान-विक्षेपाः, शरीरधारणस्थानसंश्रया इत्येते विषया विवेचनीयाः ।

### ३ विकृतिविज्ञानं नाम तृतीय प्रकरणम् ।

अस्मिन् प्रकरणे त्रिधातुनां दोषत्वप्राप्तिः, चयादिषट्कं, संसर्गाः, संनिपाताः, आमपच्यमानपक्वावस्थाः, क्षयोवृद्धिः, विपरीतगुणरुचिकर्तृत्वं, समानगुणरुचिकर्तृत्वं रूपवृद्धिः, रूपक्षयः, कोपेन शीघ्रदेहव्यापित्वं रोगकर्तृत्वं, व्याध्युपद्रवकर्तृत्वं, संस्थानविशेषः- स्थानांतरगमनं, दूष्यदेशादिसंबंधः, मल-रूपत्वं, क्षयवृद्धिभेदसंख्या, अतिप्रवृत्तत्वं, संगः,स्रवणं देहनाशकत्वं, इत्यादीनां विषयाणां संग्रहः कार्यः ।

## प्रकरणं चतुर्थं चिकित्सा।

अस्मिन् प्रकरणे रोगकारणभूतानां त्रिधातूनां प्रकृतिप्रापणार्थं लंघनबृंहण-शमनशोधनसाधनीभूतानां स्नेहस्वेदवमनविरेचननस्यादिपंचकर्मणां तथा त्रि-धातूनां अल्पाल्पनिवर्तनं, क्षीणानां वृद्धिः, वृद्धानां क्षयः, प्रधानप्रशमे प्रशमः, इत्यादिविषयाणां विवरणं कार्यम्।

लेखकैर्निबंधलेखनं पत्रकस्य एकस्मिन्नेव पृष्ठभागे कार्यं। अक्षराणि सुवाच्यानि लेखनीयानि। प्रतिपृष्ठे सामान्यतया शब्दसंख्या सार्धत्रिशतपर्यन्ता नियोजयितव्या। लेखकैर्लिखितप्रबंधे स्वनामलेखनं न कार्यं, किंतु किमपि चिन्हं अंकितव्यं तच्चिन्हसहितं स्वनाम अन्यस्मिन् पत्रे मंत्रिणः सविधं प्रेषितव्यं। निबन्धलेखनस्यावधिस्तु आंग्लफेब्रुवारीमासपर्यंतं सुनिश्चितः।

समागतनिबंधानां परीक्षणं भारतमान्यैस्तत्तत्प्रांतीयप्रतिनिधिभूतैः पंडितप्रवरैः भिषग्वरैर्भवेत्।

तेषां नामानि यथाकालं सुस्पष्टानि भविष्यंति। पारितोषिकार्हस्य प्रबन्धस्य स्वामित्वं स्वागतकारिणीसभायाः सर्वथा भवेत्।

निबंधविषयकं अन्यदपि किंचिद्विचारणीयं स्यात् तदायुर्वेदाचार्य-पुरुषोत्तमशास्त्री नानल सदाशीवपेठ नं.९८५ पुण्यपतनं इत्येतेभ्यः सकाशात् पत्रप्रापणेन वेदितव्यं।

लिखिताः प्रबंधाः वैद्यभूषण वामनशास्त्री दातार [ जनस्थान ] नासिक इत्येतेषां सविधे रजिष्टरीद्वारा प्रेषणीयाः।

भवताम्

**१ वैद्यभूषण वामनशास्त्री दातार.**
**२ वैद्यरत्न विष्णुशास्त्री केळकर.**
**३ डॉ. दत्तात्रय बळवंत खाडीलकर.**
**४ डॉ. विष्णु महादेव भट.**
**५ शिवशंकरशास्त्री शौचे.**

१९ वैद्य संमेलन स्वागतसमितिमंत्रिणः जनस्थानम्.

# त्रिधातुसर्वस्वनिबंधपरीक्षणवृत्तम्

ले.-वै. भू. वामनशास्त्री दातार, नासिक.

फत्तेपुरीये अष्टादशवैद्यसंमेलनसमये सम्मीलितानां महाराष्ट्रीयप्रमुख-वैद्यानां मिथः संलापे एकोनविंशतितमं वैद्यसंमेलनं महाराष्ट्रप्रांते जनस्थाने कृत्वा, तत्र तद्विद्यसंभाषाणां प्राथम्येनैव संमेलनांगीयं प्रचारणं संसाध्य, पंच-शतरूप्यकपारितोषकदानेन आयुर्वेदमूलानां त्रिदोषाणां प्राचीनतंत्रानुगतम्, रह-स्योद्घाटकं,विपक्षाक्षेपप्रशामकं, यथावद्वस्तुवर्णनक्षमं,'त्रिदोषसर्वस्वनामकं' सरल-सुबोधगीर्वाणगद्यमयं, प्रबंधं भारतीयायुर्वेदविल्लेखकेभ्यो विलिख्य तस्य प्रकाशनं कार्यमिति विचारनिर्धारणं समभूत् । तदनुसारं एकोनविंशतितमं वैद्यसंमेलनं महता समारोहेण जनस्थाने वर्षद्वयात्पूर्वमेव संमीलितमिति विदितचरमेव । तदानीं संमेलनसमयात्प्रागेव षण्मासं त्रिधातुसर्वस्वनिबंधलेखनार्थं विज्ञापिता आयुर्वेदज्ञाः । लेखनसौकर्यार्थं विद्वद्वरवैद्यानुमोदितमेकं पत्रकं चतुर्थक्रमांकितं मुद्राप्य सर्वस्मिन् प्रांते प्रेषितमासीत्। त्रिधातुसर्वस्वनिबंधे, त्रिधातूनां १ आकृति-विज्ञानं, २ प्रकृतिविज्ञानं, ३ विकृतिविज्ञानं, ४ चिकित्सा इति प्रकरण-चतुष्टये चरकसुश्रुतवृद्धवाग्भटाष्टांगहृदयगतत्रिदोषविषयकशद्बकल्पनाविचाराणां अशेषतया संग्रहणं कृत्वा दोषाणां साकल्येन स्पष्टतया ज्ञानं यथा स्यात्तथा प्रयतनीयम् । येन प्रबंधेन ' परसंशयोच्छेदसामर्थ्यं लभेयुरायुर्वेदविदः । प्रबन्ध-लेखनहेतुस्तु' ' दोषधातुमलमूलं हि शरीरमित्यनेन दोषा धातवो मलाश्च सम-कक्षीयाः पदार्था अंगीकृता आयुर्वेदशास्त्रे । तत्र यथा धातूनां मलानां च यथावत् ज्ञानं स्पष्टतया भवति तथा दोषाणामपि साकल्येन स्पष्टतया च ज्ञान-मावश्यकम् इति ।' निबंधस्तु ' पंचविंशत्यधिकशतपृष्ठात्मको आवश्यकः ।' प्रबन्धलेखकेन स्वलेखनपरिपाट्या तथा यत्नः कार्यो येन आधुनिकानां शास्त्री-यत्वापवादनिरसनं प्राचीनग्रंथप्रणेतृभिः साभिप्रायं योजितत्रिधातुविषयकसंज्ञा-शद्बानां अपरिवृत्त्यैव भवेत्, इत्यादिकं सर्वमपि क्रमांकचतुर्थमिते पत्रके प्रका-शितमासीत् । अत ऊर्ध्वं ' वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकरैः' वातपित्तकफानां

त्रिदोषसंज्ञासत्वे ' त्रिधातुसंज्ञयोच्चारणं शास्त्रविरुद्धम् । ' केचन वैद्या हटादेव त्रिदोषसंज्ञोच्चारणे बद्धपरिकरास्तेषामेवायं ' त्रिधातुसंज्ञाप्रचारणार्थं समुद्योगः त्रिधातुसर्वस्वानिबन्धलेखने ' । पंचशतरूप्यमितपारितोषकदानेन वृथा धन-व्ययः स्यादिति विवादः समारब्धः । तन्निराकरणार्थं अष्टमं पत्रकं निष्कासि-तमभूत् । तस्मिन् पत्रके 'प्रथमं तावदंगीक्रियते वातपित्तकफानां आयुर्वेदशास्त्रे तत्कर्मवैशिष्ट्यज्ञापनार्थं, रसादिसप्तधातुभ्यस्तेषां व्यवच्छेदनार्थं, त्रिदोष इति संज्ञाकरणं प्रामुख्येन परिभाषितमिति । तथापि ' तेषां केवलं स्वयं दुष्टत्वं परदूषकत्वमित्येतदेकमेव कर्म नास्ति अपि तु शरीरोत्पादनधारणपोषणादिकमपि कर्मजातमायुर्वेदशास्त्रे गदितमिति प्रथितमेव । तथैव प्रथितसर्वायुर्वेदतंत्रेषु वात-पित्तकफानां त्रिदोषत्वेनेव त्रिधातुत्वेनापि परिभाषणं मुक्तकंठतयाऽनेकस्थलेषु कृतमिति दरीदृश्यते चान्यैरप्यायुर्वेदेतरभिन्नाभिन्नशास्त्रविद्भिश्च इति विलिख्य धातुसंज्ञायुतवाक्यानां पंचविंशन्मितानामुद्धारं कृत्वा धातुसंज्ञाकरणं सर्वथा शास्त्रसिद्धमेवेति दर्शितम् ' । तथापि मृषाविवादनाशार्थं तदानीमेव तस्मिन्नेव पत्रके वातादीनां धातुसंज्ञयोच्चारणमशास्त्रीयमितिमन्यमानैर्विद्वाद्भिः स्वप्रबंधस्य लेखनं दोषसंज्ञाकरणेनापि कार्यमिति सनति विनिवेदितम् । नास्माकं धातुशब्दे हटाग्रहः । केवलं वातादीनां साकल्यस्वरूपकार्यावबोधे प्राचीनग्रंथगतवातादि-विषयकं सकलवचनकल्पनोद्धारेण संकलनार्थं समुद्यम इति च प्रकाशितमेव । पत्रकद्वयप्रकाशनादनंतरमुद्घोषितसमयपर्यन्तं द्वादश प्रबन्धाः समागता आसन्.

| क्रमसंख्या | लेखकाः— |
|---|---|
| १. | उमामषेश्वर शर्मा होसमने, गोकर्ण पृष्ठसंख्या १३ |
| २. | कविराज नानकचंद्र आयुर्वेदाचार्य लवपुरम् पृष्ठसंख्या ३४ |
| ३. | एम्. व्यंकटशास्त्री, पेड्डगोनूर पृष्ठसंख्या १२६ |
| ४. | वैद्यराज मूळजी महात्मा बडीसादडी ( मेवाड ) पृष्ठसंख्या १४ |
| ५. | पी. वासुदेवन् नांवेसन् त्रिचुर ( कृष्णा डिस्ट्रिक्ट ) पृष्ठ-संख्या १२७ |

६. वैद्यरत्न वासुदेवशास्त्री कडेगांवकर, सातारा पृष्ठसंख्या २०३
७. वैद्य महेश्वर राम जोशी पुराणिक, मालवण ( रत्नागिरी ) पृष्ठ-संख्या १४३
८. वैद्य त्र्यंबकशास्त्री जोशी, सांगली पृष्ठसंख्या १२३
९. पं. भिकाजी विनायक डेग्वेकर, एम्. ए., एम्. एस्सी., एल्. एल्. बी. जबलपूर पृष्ठसंख्या १२४
१०. श्री. अनंत भास्कर कर्डिले बी. ए., बी. एस्सी., जनस्थानं पृष्ठसंख्या १२७
११. वैद्य दुर्गादत्तपंत, अमीनाबाद ( लखनऊ ) पृष्ठसंख्या ७४
१२. कविराज धीरेंद्रनाथराय् एम्. एस्. सी. कलकत्ता पृष्ठसंख्या ६४

एतेषु प्रबंधेषु ११।१२ इति प्रबंधौ समयातिपातमागतौ क्रमांक-१।२।४।११।१२ एते प्रबन्धाः निर्दिष्टपत्रसंख्यया न्यूनाः, षष्ठः प्रबन्धः यथा दर्शितपत्रसंख्यया द्विगुणितः, क्रमांकः द्वादशीयः प्रबन्धः आंग्लभाषायुतः इत्येते प्रबन्धा भिन्नैर्भिन्नैः कारणैः चतुर्थपत्रकदत्तनियमबाह्यत्वेन मंत्रिणा अ-स्वीकार्या एव । तथापि प्रबन्धानां संख्याल्पत्वात्सर्वेऽपि निबंधाः परीक्षणार्थं परीक्षकेभ्यः प्रदत्ता एव । अष्टसंख्याके पत्रके प्रबंधपरीक्षणार्थं १. वैद्यराज गुणेशास्त्रिणः २. पं. लक्ष्मीराम स्वामिनः ३. कविराज शामदास वाचस्पतयः ४. कॅ. जी. श्रीनिवासमूर्तयः ५. पं. जादवजी आचार्याः ६. पं. कृष्णशास्त्री देवधराः ७. पं. नानलशास्त्रिणः ८. पं. डेग्वेकराः ९. पं. ठाकूरदत्तवर्माणः १०. पं. श्रीनिवासशास्त्रिणो वाराणसीस्थाः ११. पं. एम्. व्ही. शास्त्रिणो मंगळुरस्थाः १२. पं. के. शेषशास्त्रिणः १३. कविराज गणनाथसेन महा-भागाः इत्येते महाभागा विज्ञापिताः । एतेभ्य एव प्रबन्धपरीक्षणार्थं परीक्षका भवेयुरिति च प्रकाशितमभवत् । एतेषु सेनमहाशयैः रुग्णत्वेन, पं. जादवजी शर्मभिः कार्यबाहुल्यात्, पं. डेग्वेकरैः स्वयं प्रबन्धलेखकत्वेन नांगीकृतं परी-क्षणकार्यम् । पं. श्रीनिवासशास्त्री, पं. शामदास वाचस्पति, पं. के. शेष-शास्त्री इत्येतैः पत्रोत्तरमेवादत्तम् । पं. देवधरशास्त्रिभिः परीक्षककार्यमकृत्वैव

प्रबन्धावलोकनं स्वीकृतम् । अतः १. पं. लक्ष्मीरामस्वामी जयपूरम् २. कॅ. जी. श्रीनिवासमूर्ती मद्रास, ३. पं. ठाकूरदत्तवर्मा लाहोर, ४ पं. नानलशास्त्री पुण्यपत्तनम्, ५. पं. दुर्गाशंकर केवलराम मोहमयी, ६. पं. जगन्नाथप्रसाद वाजपेयी वाराणसी, ७. पं. रामेश्वरशास्त्री ग्वाल्हेर, इत्येते परीक्षका नियुक्ता आसन् । परीक्षणार्थं १. वाक्यसंग्रहे २५ गुणाः । २. वाक्यानां विषयसंगत्या वर्गीकरणे २५ गुणाः । ३. विषयबोधने २० गुणाः । ४. प्रचलितशास्त्र-तुलनायां २० गुणाः । अवांतरकौशल्ये १० गुणाः । इति शतगुणमितं पत्रकं चतुर्थपत्रकेण साकं प्रेषितम् । संमेलनसमये पं. लक्ष्मीरामस्वामीनामेव परीक्षणं पूर्णमभूत । ततोऽनंतरमांग्लतालिका २४।३।३१ मितकालपर्यन्तमन्यैः षट्भिः परीक्षकैः प्रबन्धपरीक्षणं कृतम् । परीक्षणार्थं पर्याप्तः कालो दत्तः । सर्वैरपि समाहितेन मनसा परीक्षणं कृतम । प्रायो वत्सरद्वयादधिकः कालः परीक्षणकरणे व्यतीतोऽभवत् । अतोऽधिकपरीक्षकेभ्यः परीक्षणार्थं कालाति-पातभयात् लेखकनां प्रबन्धपरीक्षणफलश्रवणोत्सुकानां, अत्यौत्सुक्यात्, प्रबन्ध-प्रेषणं न कृतम् । परीक्षकेभ्यः प्रबन्धलेखकानां नामानि तथा लेखकेभ्यः परीक्षकनामानि अज्ञातान्येवासन् । अस्मिन्नेव समयाभ्यन्तरे पुनरपि वैद्यवर हिर्लेकरशास्त्रिभिः पं. डेग्वेकराः प्रबन्धलेखकाः सन्तोपि परीक्षकत्वेन नियुक्ता इति सर्वथा अनृतप्रायो मात्सर्ययुतः परावहेलनप्रचुरः आक्षेपः वैद्य-संमेलनपत्रिकायां आयुर्वेदपत्रे च गृहीत्वा यत्किमपि लेखनमारब्धम्, इत्यने-नैवापरिसमाप्तमिति मन्वानैः कैश्चित् पं. डेग्वेकरमहाशयाः पंचशतरूप्यकमित-पारितोषकं लब्धवन्त इत्यपि प्रकाशितम् ।

एतत्तु सर्वमपि दृष्टिपातनिपातायोग्यमेवेति सिद्धं । सर्वैरपि निबन्ध-लेखकैर्विशेषतो पं. डेग्वेकरमहाभागैः स्वप्रबन्धे त्रिदोषशब्दे त्रिधातुशब्द-प्रयोगकरणे हटाग्रहो नैव स्वीकृत इति प्रबन्धावलोकनानन्तरम् सुविज्ञात-मभवत् । स्वागतसमित्याः केवलं त्रिधातुशब्दप्रयोगकरणार्थमेव पंचशतरूप्यक-पारितोषकदाने समुद्योगस्सर्वथा नैवाऽभवत् न लेखकानां स्वप्रबन्धलेखने सत्यपि शास्त्रमान्ये त्रिधातुशद्बे । भवतु, सर्वैः परीक्षकैः स्वपरीक्षणफलं गुणांकितम्

कृत्वा प्रेषितम् । कैश्चन परीक्षकैर्गुणांकदानसाकमेव प्रबन्धविषयकं स्वमतं विलिख्य प्रेषितम् । विशेषतस्तु पंडितप्रकांडैर्लक्ष्मीरामस्वामिभिः स्वीयं मतं प्रतिप्रबंधं सविस्तरं विलिख्यैव प्रदत्तं वर्तते । सर्वेषां परीक्षकाणां प्रबन्धपरीक्षणफलं निम्नलिखितमिव तात्पर्यतो वर्तते १ नैकोऽपि प्रबंधः सर्वपरीक्षकैकमत्येन प्रथमकक्षीयः । २ नैकोऽपि प्रबन्धः परीक्षकबहुमतत्वेनाऽपि प्रथमकक्षीयः । ३ दशमक्रमांकितः श्री. अनंत भास्कर कर्डिले इत्येषां प्रबन्धः परीक्षकत्रयमते प्रथमकक्षीयः। ४सप्तमक्रमांकितो श्रीराम महेश्वरशास्त्री जोशी महाभागानां प्रबंधः परीक्षकद्वितयमते प्रथमकक्षीयः । ५ अष्टनवमैकादशक्रमांकिताः प्रबन्धाः एकैकपरीक्षकमतेन प्रथमकक्षीयाः । गुणांकसंकलनेन पं. डेग्वेकरमहाभागानां प्रबंधस्तु ३९१ गुणांकप्राप्त्या सर्वतोऽप्यधिकोऽपि एकं विहाय षट्परीक्षकैः न सर्वश्रेष्ठः, ' प्रथम ' इति नैव संबोधित इति। ३-५-७-८-९-१० इति क्रमांकितेष्वेव प्रबंधेषु अहमहमिका परीक्षणसमये समभूत् परीक्षकमहोदयान्तःकरणेष्विति दृश्यते । क्रमांकाः १-२-४-६-८-१२ इति संज्ञिताः प्रबन्धाः परीक्षकमत्या अनुच्चस्थानत्वे परिगणिता इति दृश्यंते । आंग्लतालिकायां ( २४-४-३१ ) सर्वेपि निबंधाः मंत्रिसकाशं प्रत्यागतास्तदनंतरम् ये षट्प्रबन्धा अवरत्वेन परीक्षकैर्गणितास्ते सत्वरमेव लेखकमहोदयसकाशं प्रेषिता अभवन् । अपरेषां षण्णां प्रबन्धानां गु. प्रा. कृष्णशास्त्री देवधर, वैद्यरत्न विष्णुशास्त्री केळकर, वैद्यभूषण वामनशास्त्री दातार इत्येतैः पृथक्त्वेन वाचनं कृत्वा तेषां त्रयाणामपि परीक्षकमतानुकूलमेवाजनि मतम्। १ अन्ततः नैकोऽपि प्रबन्धः ' त्रिधातुसर्वस्व ' संज्ञा शद्बार्हः । २ नैकोऽपि प्रबन्धः आयुर्वेदवाग्विलासे अत्युत्कृष्टत्वेनाऽद्वितीयः। ३ नैकोऽपि प्रबन्धः आयुर्वेदपिपठिषूणां आदर्शत्वेनाभ्यसनानुकूलः । ४ नैकोऽपि प्रबन्धः आधुनिकानां त्रिदोषाक्षेपगृहीतॄणां सर्वाक्षेपनिरसनकरोद्बोधकः। ५ नैकोऽपि प्रबन्धः गृहीताऽयुर्वेदानां प्राचीनानां नाविन्यत्वेन चित्तहृत्तोषक इति कृत्वा, तथा च सर्वथा सर्वोत्कृष्टत्वेन गरीयानेव प्रबन्ध आवश्यकः येन चरकसुश्रुतवाग्भटादीनां समकक्षीयत्वेन स्थानं स्वगुणैर्लब्धं भवेत् । अयमेव स्वागतसमित्याः पारितोषकदाने

प्रधानो हेतुः । अतः सखेदमपि तथ्यं प्रकटीकरोति स्वागतसमितिर्यत् सर्वेऽपि समागताः प्रबन्धाः प्रबन्धलेखकैर्महता प्रयत्नेन पांडित्यभरेण लिखिताः। तेषु च नवमदशमांकितौ प्रबन्धौ सर्वेभ्योऽतिशायितौ यद्यपि वर्तेते तथापि पूर्वलिखितविचारेण पंचशतरूप्यकमितपारितोषकदाने प्रथमकक्षायामपि प्राथम्यत्वेन परीक्षकैरैकमत्येनागणितत्वात् अनर्हौ । अतः नैकेनापि लेखकमहाभागेन लब्धमिदं पारितोषिकं तथैव वर्तते इति । इदं तावत्प्रथमतः, खेदास्पदं यदखिले भारते वर्षे परमविख्यातपंडितानां आयुर्वेदविदुषां विद्यमानत्वे, आयुर्वेदवृक्षस्य मूल एव त्रिदोषतत्वे सत्यपि, तदुपरि नानाक्षेपेषु परकीयवैद्यविद्याविद्भिर्गृह्यमाणेषु सत्स्वपि, तन्निराकरणार्थं पंचशतरूप्यकप्रदानेन याच्यमाने प्रबन्धे द्वादशैव प्रबंधा आभारतात्समागता इति । आगतेषु प्रबन्धेषु नैकोऽपि प्रबन्धः पारितोषकदानयोग्यः सम्पन्न इति विनिवेदयितुं दुनोति नः स्वांतम् । तथापि यत्प्राप्तं तत्कार्यमेवेति न्यायेन सखेदमेव निवेदयामः । एतद्विषये फत्तेपूरसंमेलने संमीलितानां वैद्यवर गुणेशास्त्री, वैद्यराज पराडकरशास्त्री, वैद्यश्रेष्ठ नानलशास्त्रिणामपि पत्रोत्तरलब्ध्या संमतिरपि समासादिता एव । तथापि 'प्रारब्धमुत्तमजना न परित्यजंतीति' न्यायेन पुनरपि त्रिधातुसर्वस्वनिबंधलेखने लेखकवराः समभ्यर्थ्यंते । तदेव पारितोषिकं पुनरपि श्रेष्ठनिबंधलेखकः प्राप्स्यति । निबंधलेखनार्थं पर्याप्तकालप्राप्तिर्भविष्यति । प्रबंधपरीक्षणं शीघ्रमेव समाप्तं भवेत् । पारितोषकदाने प्रबन्धमुद्रणे पर्याप्तं धनं सुगुप्तं यथापूर्वं वर्तत एव । स्वागतसमितिः सर्वश्रेष्ठनिबंधलब्ध्या तन्मुद्रणेन विना नैव स्थगिता भविष्यति स्वोद्यमादिति । अन्ततः यैर्यैः लेखकवरैः स्वागतसमितिविज्ञप्त्यनंतरं श्रमशतं स्वीकृत्य प्रबन्धलेखनं कृतम्, सार्धद्विहायनमितः कालोपि प्रतीक्षितः । यैश्च पंडितप्रकांडैः प्रबन्धपरीक्षणं स्वोद्योगशतं परित्यज्य स्वीकृतं, निःपक्षपाततया पारितं च, तेषां तेषां सविनयं सांजलिबंधं क्षमायाचनपूर्वकमभिनंदनं कृत्वा विरम्यते ।

**त्रिधातुसर्वस्वनिबंधपरीक्षणवृत्तम्**—अस्मादनंतरम् पुनश्च स्वागतसमित्या निबंधाः अस्मिन्विषये समाहूताः । प्रदत्ता च वृत्तपत्रेषु मासिकपत्रेषु

प्रगटा विज्ञप्तिः। पुनरपि निष्कासितम् पत्रकम्। प्रेषितं चासीदाभारतीयेषु प्रसिद्धेषु स्थलेषु पंडितवरेषु पाठशालाविद्यालयेषु च। समागताः षट् निबंधाः। तेषां परीक्षणं पुनरपि कृतम्। तस्यापि परीक्षणस्येतिवृत्तं दीयते।

---

॥ श्री ॥

१८५५ शाकीये वैशाखीये शुक्लपक्षे तृतीयायां गुरुवासरे, नासिक.

## त्रिधातुसर्वस्वनिबंधपरीक्षणफलम्।

१ जनस्थानमध्ये एकोनविंशतितमे निखिल-भारतवर्षीय-वैद्यसम्मेलन-समये परीक्षणार्थं पुनः प्रार्थितानां "त्रिधातुसर्वस्वं" इति विषयमधिकृत्य निबंधानां षट्संख्यकानां परीक्षणानंतरं परीक्षकमंडलेन यश्च प्रादायि अभिप्रायः

२ षट्संख्याकेषु, निबंधेषु, एकोऽपि निबंधः "विद्यमानाक्षेपाणां" निरासकरः तथाच शास्त्रीयतासिद्धिदश्च नैव दृश्यते। निखिल-भारतवर्षीय-वैद्य-संमेलनस्य यादृशी अपेक्षाऽस्मिन्विषये आसीत् तस्याः पूरणं नैकेनाऽपि भवितुमर्हति।

३ प्रतिनिबंधं वाक्यानां संग्रहः, तथा कृतो दृश्यते यथा स प्रविविक्षूणां साहाय्यसंपादनमपि कर्तुमसमर्थ एव।

४ सर्वेषामपि परीक्षकाणां परीक्षणविधौ गुणप्रकर्षेण नैकोऽपि निबंधः सर्वातिशायित्वेन वरीवर्ति।

५ यद्यपि नैकोऽपि निबंधः परीक्षकाणां मनांसि आकर्षयतिस्म, अतः पारितोषिकमपि नैकेन संप्राप्तम्, तथापि निबंधलेखकानां प्रोत्साहनार्थं वयमित्थं निवेदयामः यत् श्रीशंकर—डबलडी खड्धारी च एते निबंधलेखकाः प्रोत्साहकपारितोषिकप्रदानार्हाः तदर्थं प्रतिनिबंधलेखकाय पंचाशद्रूपकपरि-मितं पारितोषिकं प्रदेयमिति। *

---

* एतेभ्यः पंचाशद्रूप्यकमितं पारितोषिकं स्वागतसमित्या प्रदत्तम्।

सार्धशतरूप्यकाः प्रदत्ताः वामनशास्त्रीदातारः

६ वयमिदानीं जनस्थानीयस्वागतमंडलाय सादरमित्थं संसूचयामः यदयं आयुर्वेदस्य प्राणभूतो विषयः तस्य च निश्चितस्वरूपस्य प्रस्थापनार्थं विचारार्थं च अचिरादेव महाराष्ट्रीयतज्ज्ञवैद्यानां एका परिषद् विधेया तया सोयं प्रश्नः अवश्यमेव तथा विचारणीयः यथा अस्य गंभीरस्य विषयस्य सर्वेभ्यः सम्यक् ज्ञानं भवेत् इति निवेद्य ।

विरमामः

गंगाधरशास्त्री गुणे, वैद्य.
पु. स. हिर्लेकर, वैद्य.
पुरुषोत्तम गणेश नानल वैद्य.

ततो परीक्षकविचारानुरोधात् कुत्रापि एतादृशी त्रिदोषपरिषत् संमीलिता चेत्सुमहत्कार्यं भवेदिति विचार्यमाणेन मया मदीयपरमसुहृद्वरवैद्यराजपंडित-नानलशास्त्रीणां साहाय्येन पनवेलग्रामनिवासिभिः प्रथितनामधेयैस्सुनिपुणकार्य-कर्तृभिः आरोग्यमंदीरव्यवस्थापकैः श्रीयुक्तैर्गंगाधरशर्मभिः पुराणिकाव्हयैर्यदि इयं परिषद् स्वीये नगरे मंदिरे च समाहूता पारिता चेत् समीचीनं स्यात् इति मनसि विचिंत्य विज्ञापितास्ते अस्याः परिषदः आमंत्रकास्सानंदं बभूवुः । ततो उत्साहभरितमानसेन मया समाहूता परिषत् । निष्कासितानि पत्रकाणि । निर्मापिता च स्वागतकारिणी परिषत् । निर्वाचिताश्च भिषगाचार्याः त्रिंबकशास्त्री-आपटे महाभागाः परिषदध्यक्षाः । नियोजिताश्च वे. शा. सं. नारायणशास्त्री वाडीकरोपाव्हा न्यायरत्नास्तथा आयुर्वेदाचार्या पुरुषोत्तमशास्त्री नानलाः, भिषग्वराश्च पुराणिकोपाव्हा दत्तात्रेयशास्त्रिणो आवेक्षकाः । निर्धारितश्च २९-१२-३३ दिनमारभ्य १-१-३४ दिनपर्यंतं चतुर्थदिनात्मकश्च परिषत्कालः सा च परिषत् यथावसरं पनवेलग्रामे महतोत्साहभरेण श्रीमतां नानासाहेब-पुराणिकमहाभागानां भव्ये आरोग्यमंदिरे संमीलिताऽभवत् । यस्याः परिषदः सर्वोपि द्रव्यव्ययः श्रीमद्भिरेवोदारतया कृतः ।

तत्परिषदोऽदन्तं अंशभूतं सारगर्भं चाधस्तादीयते ।

## पत्रकं चतुर्थम् ।

समागच्छति डिसेंबरमासे ता. २९-३०-३१ वत्सरे १९३३ तथा ता. १-१-१९३४ एतेषु चतुर्षु दिनेषु निर्दिष्टपरिषदि त्रिदोषविषयस्यैव प्रामुख्यतो भवेद्विचारः । आयुर्वेदे त्रिदोषविषयस्य वर्तते अतितराम् महत्वम् । ननु स विषयो आयुर्वेदस्य मूलभूत एव । आधुनिकाः त्रिदोषाणां पाश्चात्यवैद्यकीयेन्द्रियशारीर-शास्त्रप्रणाल्या नैव वर्तते प्रत्यक्षमस्तित्वमिति समामनंति । इयं हि प्राचीनानां विद्यते कापि कल्पना । विद्यंते त्रिदोषाश्चेत् तेषां अस्तित्वं प्रत्यक्षसिद्धं श्रीमद्भिर्दर्शनीयमिति तेषां विद्यते आव्हानं । स चायं वादो विद्यते पंचाशत् वत्सरात्मकः । अनेकैरस्मिन्विषये स्वीयानि मतानि विचाराश्च प्रदर्शिताः नैकमत्यं भवत्यस्मिन्विषये अद्यापि । १ त्रिदोषाः कल्पनामया एव । २ त्रिदोषाः पंचभूतोत्पन्नाः । ३ त्रिदोषा एव पंचमहाभूतानि । ४ त्रिदोषाः सूक्ष्मा अनुमानगम्या विद्यंते । ५ त्रिदोषाः शक्तिरूपाः । ६ त्रिदोषा द्रव्याणि ७ त्रिदोषाः स्थूलाश्च सूक्ष्मा इति द्विविधस्वरूपा इत्याद्यनेकानि प्रचलितानि विद्यंते मतानि सांप्रतम् । अतो भिन्नभिन्नमतसंकरप्रचुरेऽस्मिन्विषये अस्मिन् काले अस्य विषयस्य शास्त्रशुद्ध उहापोह आवश्यको वर्तते । येन विदुषां वैद्यानां ऐकमत्यं भवेत् । वर्ततेऽस्मिन्विषये विद्वद्वैद्यवराणां मतैक्यस्यावश्यकता । सर्वेषु मतप्रकारेषु १ त्रिदोषाः प्रत्यक्षदृश्या नित्योत्पत्तिमंतो स्रवणशीलाः पदार्थाः ( द्रव्याणि ) २ त्रिदोषाः शक्तिरूपाः अनुमानगम्याः पदार्थाः परमसूक्ष्मा अदृश्याश्च न द्रव्याणि प्रत्यक्षदृश्याणि । एतयोर्मतयोरेव वर्तते प्राधान्यम् । अतोऽस्मिन्नेव मतद्वैविध्ये भवेत्परिषदि विचारः । अतो भवद्भिः स्वीयानि मतानि शास्त्रपूतानि प्रमाणसहितानि परिषदि उपस्थापयितव्यानि । श्रीमद्भिः पांडित्यस्य, शास्त्रीयाध्ययनस्य, साहाय्यं आवश्यमेव दातव्यम् । अस्यां परिषदि विवादविचारसमये विषयानुकूलानामन्येषामपि विषयाणां यथावश्यक एव स्पष्टीकरणसमर्थोऽन्यविषयविमर्शोऽपि स्वीकृतो भवेत् । सर्वैरपि इयं चर्चा सुहृद्भावजन्यसहजप्रेम्णा, शास्त्रनिष्ठान्तःकरणेन स्पष्टतया, आवश्यं कार्या । नैवाऽत्र स्वीयजयपराजयाकांक्षाऽत्र कार्या । प्रथमं श्रीमद्भिः

विषयस्यास्य परिशीलनं कृत्वा स्वकीयविचाराणां सारोद्धारं कृत्वा लिखित्वा च मंत्रिसमीपे परिषत्कालादर्वागेव प्रेषणीयः। विद्यते खलु एतावान् कालावकाशः। श्रीमद्भिरस्याः परिषदःसुमहत्कार्यसाहाय्यं दत्वा साफल्यं संपादनीयम् आवश्यं चोपस्थातव्यमिति प्रार्थना।

श्रीमतां

परिषदः स्थानं—पनवेल, श्रीधूतपापेश्वर आरोग्य-मंदिरम्।

**गंगाधर विष्णु पुराणिक.**
स्वागताध्यक्ष.
**पुरुषोत्तम सदाशिव हेर्लेकर वैद्य.**
**वामनशास्त्री दातार वैद्य.**
मंत्री, त्रिदोषचर्चा परिषद्.

---

॥ श्री ॥

१८५५ शाकीये वैशाखीये शुक्लपक्षे तृतीयायां गुरुवासरे, नासिक.

# त्रिदोषचर्चापरिषद्।

## चर्चापद्धतिः।

१. आयुर्वेदतत्वरूपाणां वातपित्तश्लेष्मणां स्वरूपनिर्धारणं अस्याः परिषदो हेतुः।

२. चर्चाविषयभूतानां दोषाणां स्वरूपनिश्चये सभासद्भिः स्वाभिप्रायः संक्षेपतो विलिख्य तदनुसारेण विवेचनं करणीयं येन विवेचन-विषयस्यावबोधः सुकरः।

३. विवेचनं सर्वमप्यायुर्वेदप्रामाण्यानुसारेण भवेत्। आयुर्वेदीयतंत्र-प्रामाण्याधिष्ठितस्तर्कयुक्तिवादोप्यवश्यं स्वीकरणीयः स्यात्।

४. मतानां परस्परं विभिन्नानां विवेचनं स्वाभिप्रायप्रगटीकरणाय प्रथमं विधेयं। ततः स्वल्पतरमतभेदविमर्शः।

५. वातपित्तकफानां किं स्वरूपं, कथमवबोध्यं, कान्यवबोधक्षमानि लक्षणानि, कथं वा स्वस्थातुरशरीरक्रियाकरत्वमेतेषु, व्याधीनां विविधानां विज्ञानार्थमुपशमनार्थं च दोषविज्ञानेन को लाभ इति स्पष्टीकरणमेवाऽस्मिन् विवेचने प्राधान्येन स्वीकरणीयं ।

६. प्रमाणभूतानां तत्रांतरीयवाक्यानां समुच्चयस्तत्वप्रतिपादनानुसारं प्रसंगात् करणीयः । न चात्र वाक्यसमुच्चयस्य प्राधान्यम् ।

७. वातादितत्वविवेचने आयुर्वेदप्रतिपादितसंज्ञार्थ एव प्रमाणीकर्तव्यः आयुर्वेदेतरशास्त्राणां न्यायसांख्यादीनां विवेचनसहाय्यकत्वेन उपयोगो विधेयः ।

८. विवेचने—

१ दोषाणां द्रव्यशक्तिमूर्तामूर्तप्रत्यक्षानुमानगम्यपंचमहाभूत-पंचभूतविकारत्वेनोपवर्णितानां स्वरूपनिश्चयः ।

२ निश्चितेन तेषां स्वरूपेण सर्वशरीरव्यापीनां सामान्यानां विशिष्टानां च अवयवांतरसंभवानां कर्मणां कथं संपादनं भवति ।

३ व्याधिविज्ञाने दोषविज्ञानात् व्याधयो विविधास्तेषामवस्थाश्च कथमवगंतव्याः ?

४ दोषविज्ञानेन कथं चिकित्सासौकर्यं किं वा चिकित्सायां प्रयोजनं दोषज्ञानस्य ?

५ शारीरेंद्रियविज्ञाने दोषविज्ञानस्यांतर्भावः करणीयो न वा, करणीयश्चेत् कथं ?

६ वातादिदोषाणां रसवीर्यविपाकप्रभावानां च संबंधः कीदृशः ?

९. दोषज्ञानात्सुस्पष्टमिंद्रियविज्ञानं भवेन्न वा ?

१०. निदानचिकित्सादिव्यवहारे दोषाणां तथा तैः संपादितानां क्रियाणां विक्रियाणां च लौकिकभाषायामवबोधक्षमं वर्णनं शक्यं न वा ?

( सर्वमपि विवेचनमुदाहरणैरवबोधसुलभं करणीयं )

विवेचनोपयुक्तानां द्रव्यशक्त्यादिशास्त्रीयशद्बानां स्वाभिप्रायेण सुस्पष्टोऽर्थनिश्चयः करणीयः ।

पु. स. हिर्लेकर, वैद्य.
वामनशास्त्री दातार, वैद्य.

---

## पनवेल त्रिदोषचर्चापरिषद् ।

विदितचरमेव सर्वेषां निखिलभारतायुर्वेदमहामण्डलवैद्यसंमेलनसंबद्धानां विदुषां यन्नासिकवैद्यमहासंमेलनप्रसंगे स्वागतकारिण्या समित्या ‘ त्रिदोषसर्वस्वं ’ इति विषयमधिकृत्य लिखितस्य सर्वोत्तमस्य निबंधस्य कृते पंचशतमुद्रात्मकं [ ५०० ] पारितोषिकं प्रोद्घोषितमासीदिति । यथानियमं द्विवारं समागतेषु निबंधेषु सर्वातिशायित्वेन परीक्षकाणां संतोषाय भवेदित्येवंविधो न कोऽपि निबंध आसीत् । कारणादेतस्मात् अतःपरं प्रथमं तावत् महाराष्ट्रीयवैद्यविदुषां काचित् परिषद् संयोजनीया । तस्यां च एतद्विषये साकल्येन चर्चा कार्या । तदनंतरं च सर्वसंमतनिर्णयानुरोधेन निबंधप्रार्थना ग्रंथरचना वा करणीया इत्येवं निश्चितवती स्वागतकारिणीसमितिः ।

निश्चयमेनमनुसृत्य कोंकणप्रान्ते पनवेलग्रामे ता. २९-१२-३३ दिनादारभ्य ता. १-१-३४ दिनपर्यंतं ‘ श्रीधूतपापेश्वर आयुर्वेद ट्रस्ट ’ इत्याख्यायां संस्थायां परिषदेषा प्रचलिता । अस्याः संस्थाया ये च कार्यदर्शिनः श्रीमंतो महानुभावाः नानासाहेब पुराणिक इत्याख्याः तैः यथार्थमेव स्वार्थत्यागपूर्वकं स्वागताध्यक्षत्वं स्वीकृतमासीत् । नासिकस्वागतकारिण्याः प्रधानमंत्रिभिः ‘वामनशास्त्री दातार’ महाशयैः तथा च ‘वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकर’ ‘ आयुर्वेदाचार्य पुरुषोत्तमशास्त्री नानल ’ इत्यादिभिः सशरीरक्लेशमपि सभाया

अस्याः संयोजना कृता । बृहन्महाराष्ट्रीयेषु विद्वत्सु वैद्योत्तमेषु पुरस्तान्निर्दिष्ट-नामधेयाः प्रमुखसदस्यत्वेन उपस्थिता आसन् । ते च यथा—वैद्यराज भि. वि. डेग्वेकर एम्. ए., एम्. एस्. सी., एल्. एल्. बी. जबलपूर; डॉ. तपस्वी बाबासाहेब परांजपे यवतमाळ, वैद्यपंचानन गंगाधरशास्त्री गुणे, वैद्यतीर्थ विनायकशास्त्री एकतारे, आयुर्वेदविशारद वेणीमाधवशास्त्री जोशी अहमदनगर; डॉ. विष्णु महादेव भट बी. ए., एम्. बी. बी. एस्. येवला, वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकर अमरावती, वैद्यराज रानडेशास्त्री सातारा, आयुर्वेदाचार्य नानलशास्त्री, भिषग्रत्न गंगाधरशास्त्री जोशी, वैद्यराज दत्तात्रयशास्त्री पुराणिक, उपाध्यक्ष—निखिल भारतायुर्वेदमहामण्डल, आयुर्वेदविशारद रघुनाथशास्त्री जोशी विद्यापीठपरीक्षक, आयुर्वेदाचार्य पांडुरंगशास्त्री देशपांडे, आयुर्वेदविशारद शंकरशास्त्री नानल, श्री. बाबासाहेब पटवर्धन बी. ए., एल्. एल्. बी., पुण्यपत्तनम्, आयुर्वेदभूषण गुर्जरशास्त्री, वैद्यराज तांबवेकर, अभ्यंकर मोहमयी; तथा अन्ये च बहवः सभ्याः समागता आसन् । एतस्मिन्नेव किल दिनचतुष्टये मोहमय्यां अखिलभारतवर्णाश्रमस्वराज्यसंघस्य विशेषमाधिवेशनमासीत् । एतद्ध-र्मकार्यदत्तचित्ताः वैद्यश्रेष्ठाः ' प्राणाचार्य वासुदेवशास्त्री ऐनापुरे बम्बई ' तथा च ' वैद्यपंचानन कृष्णशास्त्री कवडे बी. ए. प्रधानमंत्री निखिल भारतायुर्वेद-महामण्डल ' इत्येते धर्मकार्यमग्रिमं मन्यमाना एतत्कार्यं त्यक्त्वा त्रिदोषचर्चार्थं नागन्तुमशक्नुवन् । ' वैद्यतीर्थ अप्पाशास्त्री साठे मोहमयी ' इत्येतैरपि कारणां-तरेण आगन्तुमसामर्थ्यं स्वकीयं पत्रद्वारा कथितमासीत् । एतेषां पण्डितवरेण्यानां अनुपस्थितिः सर्वसदस्यैः सभायाः वैगुण्येनैव अनुभूता । प्रचलिते च सभाकार्ये सर्वसदस्यैः सभापतिमुखेन तंत्रीद्वारा ते पुनरपि साग्रहं आमंत्रिताः किंतु धर्मो हि रक्षितो आयुर्वेदं रक्षतीति कृत्वा तेषामागमनं अशक्यं सञ्जातम् । अस्याश्च सभायाः सभापतिस्थाने ये किल सर्वसम्मत्या नियोजितास्ते प्रथितनामधेयाः पुण्यपत्तनस्था 'भिषगाचार्य त्र्यंबकशास्त्री आपटे' इत्येते निखिल भारतायुर्वेद-विद्यापीठमंत्रिण इति सर्वलोकेषु विश्रुता एव ।

तत्र प्रथमदिवसे प्रातः स्वागतपरपद्यगायनेन सभाकार्यं समारब्धम् ।

तदनंतरं च स्वागताध्यक्षैः स्वकीयं मुद्रितं भाषणं पठित्वा सर्वसदस्यानां उपस्थितानां सुस्वागतं अतीव सौहार्दपूर्वकं कृतम् । अनुपस्थितानां वैद्यवर्याणां शुभसंदेशाश्च संप्राप्ताः मंत्रिमहाशयैः कथिताः । अनन्तरं च स्वागताध्यक्षैः श्री. नानासाहेब पुराणिक महाशयैः सभापतिपदे 'भिषगाचार्य त्र्यम्बकशास्त्री आपटे' महाभागानां नियोजना संसूचिता । एतद्विषये च पं. डेग्वेकरशास्त्री, पं. गुणेशास्त्री, पं. गुर्जरशास्त्री तथा च पं. रानडेशास्त्री इत्येवं तत्तमण्डल-प्रतिनिधिभिः स्वानुमतिः प्रदत्ता । पं. त्र्यम्बकशास्त्रिभिः सभापतिस्थानं च स्वीकृत्य गीर्वाणवाणीमाश्रित्य स्वकीयं भाषणं कृतम् । तच्च भाषणं एवम् ।

---

॥ श्रीधन्वन्तरये नमः ॥

महाराष्ट्रे पनवेलनगरे १८५५ शाके पौषशुक्लत्रयोदश्यां तिथौ

## त्रिदोषचर्चापरिषदि सभापतिभाषणम् ।

सभापतिः–**त्र्यम्बकशास्त्री आपटे भिषगाचार्यः, आयुर्वेदविद्यापीठमंत्री ।**

अयि भोः आयुर्वेदोद्धारबद्धपरिकराः महाराष्ट्रविद्वद्वैद्यवरेण्याः सुरगुरु-तुल्यविद्वज्जनाः, वैद्यबांधवाश्च ।

श्रीभगवता धूतपापेश्वरेण अमृतकलशधारिणा धन्वन्तरिणा च कृपा-कटाक्षवीक्षिता वयमद्य अस्मिन् पर्णवल्लीग्रामे सम्मीलिताः । संमेलनस्यास्य प्रयोजनं सर्वेषां श्रुतचरमेव । त्रिदोषचर्चापरिषदियं नासिकवैद्यसंमेलनस्य स्वागतमण्डलेनैव निमंत्रिता । अत्रास्मिन्दिनचतुष्टये यथा त्रिदोषवादस्य सांगो-पांगा समग्रा चर्चा स्यात्तथा प्रयतितव्यमस्माभिः सर्वैः इत्येतदेव संमेलनादस्मा-दपेक्षितम् । वादस्यास्य समुत्पन्नस्य केचन त्रिंशच्चत्वारिंशत्संख्याकाः संवत्सराः संजाताः । त्रिदोषास्तु प्राणिशरीरसंलग्ना उत्पत्तिस्थितिलयात्मिकासु सर्वास्वव-स्थास्वेव । किं बहुना उत्पत्तेः प्रागपि तथा लयस्य पश्चादपि । एतेषां

असंदिग्धामुपपत्तिं कथयितुं यस्य किल ईदृशोऽधिकारो वर्तते यथा ' बहूनि मे व्यतीतानि जन्मानि ' किंच ' तान्यहं वेद सर्वाणि ' एवं यो वक्तुं प्रभवति तादृशस्यैव कस्यचन त्रिकालज्ञस्य महात्मनः अस्मिन् सभापतिस्थाने प्रतिष्ठा कर्तुं योग्यासीत् । तदभावे विषयेस्मिन् येन चरितं किल दुश्चरं तपः एतादृशं कंचन तपस्विनं पदेऽस्मिन् स्थापयितुं उचितमासीत् । अथवा अनेकशास्त्र-पारंगतानां विपुलप्रगल्भबुद्धीनां इहोपस्थितानां पण्डितानां मध्यादेकतमस्य अधिकारेऽस्मिन् नियोजनं वरमासीत् । सर्वमेतद्विहाय विनैव पात्रापात्रविचारं यदिदमासनं भवद्भिर्मह्यं दत्तं तेन दातारः खलु भवन्तः, परंच अपात्रस्य प्रतिगृहीतुर्मे कीदृशी अवस्था सञ्जाता तच्छ्रूयताम् । ' सीदन्ति मम गात्राणि मुखं च परिशुष्यति । वेपथुश्च शरीरे मे रोमहर्षश्च जायते । पत्रकं स्रंसते हस्तात् त्वक्चैव परिदह्यते । न च शक्नोम्यवस्थातुं भ्रमतीवच मे शिरः ' । इमानि तादृशानि लक्षणानि सन्ति येषां खलु वर्णनं ' स्रंसव्यासव्यधस्वापसा-दरुक्तोदभेदनं । संगांगभंगसंकोचवर्तहर्षणतर्षणम् ' एवंप्रकारेण क्रियते । इमानि वातप्रकोपलक्षणानि । किन्तु वातस्योपक्रमः स्नेहः । अतीव स्निग्धाःखलु सर्वेऽत्रभवन्तः । अपरंच । 'स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यंगमर्दनम्' । तदपि सर्वमत्र सुसंपन्नं भवेत् । अतः सञ्जातविश्वासोऽहं 'आज्ञा गुरूणां ह्यविचारणीया' तथा च 'कार्यं कर्म समाचर' इत्येवं मनसि कृत्वा यथाकथंचिदत्र तिष्ठामि ।

मदीयेऽस्मिन्नियोजने को वा हेतुः कस्य वा प्रभावोऽयं इत्येतद्विषये किंचिदनुमीयते मया । एतद्विषये समरसाः एतत्परिषत्संयोजकाः यस्मिन् हि प्रस्तरे सिन्दूरलेपनं कुर्युः स ह्मसोबा यस्मिन् वा पूगीफले अक्षताः प्रक्षिपेयुः स गणोबा भविष्यति । एते हि संयोजकाः अस्मत्सुहृद्वराः श्रीमन्तो दातारशास्त्रिणः ( दातारो नोऽभिवर्धन्ताम् ! ) तथा श्री. हिर्लेकरशास्त्रिणः तथा च श्री. नानलशास्त्रिणः इत्येवं सर्वेषां सुविज्ञातमेव स्यात् । एतेषां एकसूत्रबन्धनमेतन्न काचमणिकाञ्चनानां तुल्यम् । कुतः । सर्वेऽपि वैद्यभूषणाः । एते हि अधिवेशनस्यास्य धारणाद्धातवः । त्रयोऽपि मद्विषये समाः । अतः समधातुरहं । अत्र अन्त्यस्तावत् नानलः—न विद्यते अनलः यस्मिन् । अतीव शीतलः ।

मूर्तिमती हिमसंतानिका । स्निग्धःशीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः खलु । एतयोः पुरुषोत्तमयोरपेक्षया आद्यः यद्यपि किंचिद्वामनरूपेण भासते तथापि स सर्वोत्तमः । कुत इति चेत् स एव प्रमुखस्तन्त्रयन्त्रधरः । प्रवर्तकश्रेष्ठानां उच्चावचानाम् । मध्यमस्य तु तेजस्विता बुद्धिमेधाभिमानिता च सुप्रसिद्धा । इदं च भूषणत्रयं धातुत्रयं वा दोषत्रयस्य सांगोपांगां चर्चां कारयितुं सर्वेषां च विदुषां पुनरैकमत्यं स्थापयितुं कटिबद्धं । अतः सर्वैरपि अत्रभवद्भिर्यथाशक्ति साहाय्यप्रदानं करणीयमिति संप्रार्थ्य सर्वान् भूयोभूयो नमाम्यहम् । ज्ञानसत्रे ऽस्मिन् मयापि किंचित्कार्यं करणीयमिति प्रथममेव मया चिंतितं । किंतु अध्यक्षपदमेव स्वीकर्तुं आज्ञा भवेदिति नासीन्मे मनसि कल्पनालेशः । आज्ञप्ते च मयि प्रत्याख्यानमपि नाभवच्छक्यम् । कुतः । एते हि दोषाः कदाचित् कुप्यन्ति । अकुपितास्तु सर्वेषामस्माकं देहं वर्तयन्ति ।

ईदृशं परिषत्कार्यं कियद्दुष्करमिति विदुषां न कथनीयम् । अतीव प्रमोदास्पदमेतत् यदद्यतनीयाः स्वागताध्यक्षाःश्री. नानासाहेबपुराणिकमहोदयाः सभाकार्यमिदं सम्पादयितुं पुरतः स्थिताः । आयुर्वेदोद्धारकार्यं सर्वदा सन्नद्धैस्तैः आद्यामिमां महाराष्ट्रीयामौषधिनिर्माणशालां प्रतिष्ठाप्य आयुर्वेदस्य आधारो दृढीकृतः । अधुना तु तैरीदृशः प्रचण्डः आयुर्वेदट्रस्टः तथा प्रतिष्ठापितः यथा स कस्मिन्नपि विषमकाले नैव त्रस्तः स्यात् ।

एवमेषा परिषत्संयोजना सुकरा सञ्जाता । अतः सर्वैरप्यस्माभिः अभीप्सितार्थसिद्ध्यर्थं सर्वात्मना प्रयत्नः करणीय इति क्रमप्राप्तमेव । सा च सिद्धिः सर्वेषामत्रभवतां साहाय्येन आवश्यं भवेदेव इति मे दृढो विश्वासः । भवन्तो हि नैकशास्त्रपारंगताः । अतस्तत्तच्छास्त्रदृष्ट्या विषयमिमं सम्यग् विचार्य विषयस्यास्य के के विभागाः शास्त्राणामविरोधेन समर्थनीयाः सन्ति, यदि कुत्राचिद्विरोधः समापद्येत तर्हि स कथं निवारणीय इति श्रीमद्भिः संसूचनीय-मिति साञ्जलिबन्धं प्रार्थये । तथा च न का अपि आपद आपतेयुरिति 'आपदामपहर्तारं दातारं सर्वसंपदां । लोकाभिरामं श्रीरामं भूयोभूयो नमाम्यहम् ।

जानन्त्येव अत्रभवन्तः यदस्य त्रिदोषवादस्य चर्चाविषयीभूतस्य केचन चत्वारिंशत्संख्याकाः संवत्सरा व्यतीता इति । अनादिकालसिद्धश्चायुर्वेदः शरीरस्वास्थ्यरक्षकः । त्रिदोषास्तु शरीरस्य मूलभूताः सन्त आयुर्वेदग्रंथेषु प्रतिपत्रं नैकवारमुल्लिख्यंते । यदि पुनस्तेषां कल्पना अयुक्तिकी स्यात् तर्हि एतावद्दीर्घकालपर्यंतं स्याद्वा आयुर्वेदः एवमप्रतिहतप्रचारः ? यद्यपि मध्ये नैकविधा आपदः संप्राप्तास्तथापि अद्ययावदायुर्वेदो जीवति । न केवलं जीवति अपि तु स्वकीयां तेजस्वितां प्रकटयति । एतद्विषये प्राचीनवैद्यानां न कदापि मनसि संशयः समुत्पन्नः । अथ किमर्थमाधुनिकानां वैद्यानामेव मनः साशंकं भवति । किमथवा अत्रांतरे अतर्क्यघटनाः काश्चित् घटिता याभिरयं विषयः सूर्याचन्द्रमसौ इव ग्रस्तो जातः । एतदेवानुमानं समीचीनं मन्ये । साकमेव पाश्चात्यराजवृत्त्या पाश्चात्यसंस्कृतिस्तथा च पाश्चात्यानामाचारविचारसरणिः अत्र भारतवर्षे संप्रचलिता । गणितभौतिकज्यौतिषादिशास्त्राणां, न केवलमेतेषां अपितु गीर्वाणभाषाया अपि किं बहुना स्वभाषाया अपि अध्ययनं पाश्चात्य-भाषाद्वारैव कर्तुं प्रवृत्ताः स्मः । यथा इतरशास्त्राणां तथैव आयुर्वेदस्यापि पाश्चात्यभाषासु रूपान्तराणि भाषान्तराणि च समभवन् । किन्तु तानि सर्वाणि पारिभाषिकस्य विशेषार्थस्य ज्ञानाभावात् प्रमादप्रचुराणि । कारणादेतस्मात् आयुर्वेदस्योपरि आक्षेपान्वयः समुत्पन्नः । यज्ञार्थं क्रीतमजं स्कन्धे कृत्वा गच्छतो ब्राह्मणस्य ' नाजोऽयं देवदत्त त्वं स्कन्धे वहसि कुक्कुरं ' इति क्रमेण त्रयाणां धूर्तानां वचनं श्रुत्वा यथा श्वा एवायमित्येवं मतिर्बभूव तथा ' आयुर्वेदो मणिर्नास्ति काचः किं बध्यते गले ' इत्येवंविधानि आक्षेपकाणां विधानानि श्रुत्वा केषांचिद् वैद्यानामपि हृदयान्दोले ( कदाचिदर्धशिक्षितानां वैद्यानां स्यात् ) स्थितानि । यदातु आयुर्वेदतत्वानि स्वतन्त्रतया विचार्यन्ते तदा न कोऽपि संभ्रमः समुत्पद्यते न वा व्यवहारे कोऽपि व्यत्ययः संजायते । किंतु आक्षेपकाणां कल्पनाभिः सह आयुर्वेदतत्वानां तुलनां कर्तुं प्रयत्नः क्रियते चेत् तदा एतत्सदृशमिदं, तत्तुल्यमेतत् इत्येवं उभयत्रापि तुल्यगुणानां अपरिपूर्णत्वात् व्याकुलत्वं संजायते । अपरं च, या च परिभाषा आक्षेपकाणां तस्याः

सुतरामज्ञानं आयुर्वेदीयानां । अथ एतेषां च या परिभाषा सा आक्षेपकाणां दुर्बोधा । आक्षेपकास्तु अन्यथा बलवत्तराः सन्ति । तथापि तेषामेव परिभाषां उपयुज्य यद्ययं विषयस्तेषां पुरस्तात् सम्यक्तया प्रतिपाद्येत तदा ते आयुर्वेदं मानयिष्यंतीति वर्तते केषांचिन्मनसि विश्वासः । यदि च आक्षेपः केवलमेवंरूपः स्यात् यद् वैद्याः स्वकीयं त्रिदोषविज्ञानं पाश्चात्यवैद्यान् आधुनिकांश्च सुशिक्षितान् ज्ञापयितुं न समर्था इति, तर्हि वैद्यानां मनो न दूयेत । अपरं च, पाश्चात्यवैद्यकं यथा राजाश्रयपरिपुष्टं न तथा आयुर्वेद इत्येतदवलोक्य यद्यपि वैद्यानां विमनस्कता विद्यते, तथापि राजाश्रयविषये ते अप्रत्याशाः किंबहुना उदासीना एव सन्ति । किन्तु आयुर्वेदीयं तत्वज्ञानं पाश्चात्यवैद्यक-तत्वज्ञानेन न संगच्छते, नच तुलनामर्हति, अतस्तत्सर्वथा अज्ञानमूलकं, शास्त्रमिति संज्ञामपि नार्हति इत्येवंप्रकार आक्षेपो वैद्यानां मनसि शल्यत्वेनैव संस्थितः । किं पाश्चात्यवैद्यकेन सह सर्वथा तुल्यता एव आयुर्वेदस्य शास्त्रीयत्वसिद्धौ परीक्षा ? पाश्चात्यवैद्यकानां सर्वेषामायुर्वेद एव मूलमिति सर्वैः अनुमन्यते । यदि पुनरेतैः सह आयुर्वेदस्य सर्वथा तुल्यता स्यात्तर्हि नवीनानां एतेषां जन्मापि किमर्थं स्यात् ? मदीया तु मतिरीदृशी, यत् शास्त्रस्य कस्यापि अनेकप्रत्ययसंसिद्धस्य स्वातंत्र्येण तत्परिभाषयैव समन्वयबुध्वा विचारं कृत्वा यदि सर्वे विभागाः सुसंबद्धाः भवेयुः, यदि च न कुत्रापि विसंवादः स्यात्तर्हि तत् सुसंघटितं शास्त्रं इति संज्ञामर्हति ।

विदितचरमेव श्रीमतां यत् षोडशवत्सरात्प्राक् अस्य विंशशतकस्य सप्तदशे वर्षे मद्रपुरे राजाज्ञया 'उस्मानकमिटी' इत्याख्या समितिरेका नियोजिता । किमर्थमिति चेत् आयुर्वेदः शास्त्रीयः अशास्त्रीयो वा, राजाश्रयं अर्हति वा न वा, इति परीक्षितुम् । समित्या चानया सर्वप्रान्तस्थानां वैद्यानां यच्च वक्तव्यमासीत् तत् व्याख्यानलेखनसंभाषणप्रश्नोत्तरात्मकैरुपायैः संकलय्य सम्यक् च विचार्य मनसि कृतम् । अनन्तरं अभिप्रायश्च एवंविधो दत्तः यदायुर्वेदः शास्त्रसंज्ञामर्हति तस्मै च राजाश्रयोऽपि देयः । अनन्तरं च राजधान्यामेतस्यां आयुर्वेदमहाविद्यालयस्य, औषधालयस्य, रुग्णालयस्य चापि

संस्थापना संजाता । एतस्मिंश्च महाविद्यालये, निखिलभारतायुर्वेदविद्यापीठस्य आयुर्वेदाचार्यपरीक्षायां समुत्तीर्णा एव वैद्या अध्यापकत्वेन नियोजनीया इति निर्णीतम् । एवं च आयुर्वेदोद्धारविषये अंशतः कार्यं संसिद्धम् । भविष्यति काले अचिरादेव सा राजसंस्था निखिलभारतायुर्वेदविद्यापीठसदृशानां शिक्षण-पीठानां ये स्नातकाः तान् प्रत्यभिज्ञातुं मतिं करिष्यतीति मे दृढो विश्वासः । पाश्चात्यवैद्यकपदवीधराणां ये च सन्ति अधिकाराः, तेषां मध्यात्केचन एतेषामपि स्नातकानां भवेयुः । संयुक्तप्रांतीयराजसंस्थया तु गतसंवत्सर एव एतत्कार्यं कृतम् । एतद्विषये घटिताश्च ये विधिनियमाः ते निखिलभारतायुर्वेदविद्यापीठाय सूचिताः, तेन च पीठेन सम्मेलनपत्रिकायां अन्यासु वार्तापत्रिकासु च उद्घोषिताः । विद्यापीठस्नातकानां च केषांचित् प्रत्यभिज्ञानपत्रकाण्यपि हस्तगतानि । एवमेता राजसंस्था आयुर्वेदस्य शास्त्रीयत्वं स्वीकर्तुं प्रवृत्ताः । सत्वरं च आयुर्वेदः सर्वत्र राजमान्यो भवेदित्याशास्महे । ‘आयुर्वेदीयपद्धत्या उपचारार्थं यश्च धनव्ययो राजाज्ञया भारतवर्षे भवति स सर्वथा अदेशकाले अस्थाने च भवति’ इत्येवंविधाः प्रलापाः केषांचन अज्ञातस्वाधिकाराणां पुरुषाणां मुखात् श्रूयंते । तथापि सामान्यतः आयुर्वेदस्य शास्त्रीयत्वे यच्च मूले कुठारभयं समुत्पन्नमासीत्तन्मंदीभूतमिति मन्यामहे । किन्तु आयुर्वेदस्य आधारभूतं यत् त्रिदोषविज्ञानं तच्च पाश्चात्यवैद्यपंडितान् किंबहुना साधारण्येन सुशिक्षितानपि कथमिव यथावत् ज्ञापयितुं प्रभविष्यामः इत्येवंविधा आकांक्षा या च वैद्यानां मनसि प्रचलिताक्षेपसमुत्पत्तिकारणात्संजाता सा नैव मंदीभूता । आयुर्वेदो न केवलं वैद्यानामेव विषयः । किन्तु सर्वैरपि आयुःकामयमानैः व्याधिपरिमोक्षाय स्वास्थ्यरक्षणाय च आयुर्वेदो यथाशक्ति अध्येतव्यः । आधुनिकैःसुशिक्षितैः एतद्विषयजिज्ञासुभिः परकीया परिभाषा परकीया च विचारसरणिरवलंबिता आत्मसात्कृता वा दृश्यते । आयुर्वेदस्तु तेषां प्राचीन-परंपरया स्वकीयः, अतो यदि एतस्मिन् शास्त्रे तेषां विश्वासः स्थिरीभवेत् तर्हि तत् यथा तेषां तथा आयुर्वेदस्यापि लाभाय भवेत् ।

एतत्कार्यसिध्यर्थं त्रिदोषाणां सप्रमाणं कार्यकारणसंबंधप्रदर्शनपूर्वकं

सविस्तरं वर्णनं कर्तुमावश्यकम् । अत्र यच्च भवति काठिण्यं तदित्थम् । यथा माधवनिदाननामको ग्रंथः निदानविषयप्रधानः तत्र नान्यविषयमधिकृत्य किमपि उल्लिख्यते, तादृशः त्रिदोषविषयप्रधानो ग्रंथः आर्यग्रंथेषु न कोऽपि विद्यते । सर्वेषु ग्रंथेषु त्रिदोषवर्णनं सर्वत्र प्रसृतम् । यथा तण्डुलराशौ सम्मीलितानां कंगुकोद्रवनीवारश्यामाकादीनां परस्परपृथक्करणं कठिनं भवति तथा एतद्विषयक-वचनानां तत्तस्थानास्थितानां प्रथमं तावदेकीकरणं, अनन्तरं च विषयविभाग-वशात्तेषां पुनः पृथक्करणं कठिनतरं कार्यं विद्यते । अद्य यावत् नैकप्रयत्नेषु कृतेषु सत्स्वपि कार्यमिदं यथा सर्वेषां सन्तोषाय भवेत्तथा नैव संसिद्धम् । प्रायः सर्वेष्वेव वैद्यसंमेलनेषु एतद्विषये चर्चा सञ्जाता । बहुभिर्वैद्यवरेण्यैः विषय-मिममधिकृत्य सुविचारपरिप्लुता निबंधा लिखिताः, ग्रंथाश्च रचिताः । नासिक-संमेलनस्वागतमंडलस्य इयं च पारितोषिकार्थं निबंधलेखनयोजना उपरिनिर्दिष्ट-प्रयत्नेषु विशेषा एव । तस्याश्च वृत्तांतः सर्वेषां सुविज्ञात एव । एतेषां ग्रंथ-कर्तॄणां निबंधलेखकानां वा मध्यादेकतमस्य योजना पदेऽस्मिन् योग्यासीत् । किन्तु केचन स्वागतमण्डलेन सह आत्मीयत्वेन संबद्धाः कैश्चन जनैः लिखितैः निबंधैः स्वकीयं मतं पूर्वमेव स्पष्टतया प्रकटीकृतम् । अतः स्वागतसमित्या एतादृशः सभापतिर्निर्मितः यस्य खलु सत्यमेव अध्ययनाभावात् न किमपि स्वकीयं मतं न कोऽपि पूर्वग्रहः न वा स्वाग्रहः । आस्तां नाम । अल्पज्ञोऽहं असमर्थोऽहमपि अत्रभवतां साहाय्येन कार्यमेतत्सम्पादयितुं प्रयतिष्ये । यद् भवद्भिर्मह्यमेतत्पदं दत्तं तदर्थं सर्वेषां उपकारभरान् साञ्जलिबन्धं शिरसा वहामि ।

ननु ज्ञातपूर्वा एव सर्वेषां आवेक्षकाणां नामावलिः । तस्यामेव प्रमुख-मन्त्रिमहाशयेभ्यः श्रीमद्भ्यो दातारशास्त्रिमहोदयेभ्य आसनमेकं कल्पनीयमिति मे सविनया प्रार्थना । येन च ‘ अध्यक्षो मुख्यमंत्री च चत्वारश्चाप्यवेक्षकाः । ऐतेषामधिकारः स्याद्वादस्यास्य नियन्त्रणे । अन्ते च एवमेव प्रार्थये ’ ।

‘ संगच्छध्वम् ’ संवदध्वम् । सं वो मनांसि जानतां । समानो मंत्रः समितिः समानी । समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनः । यथा वः सुसहासति ’ ।

अतोऽनंतरं सार्धो दिवसः त्रिदोषविषयकव्याख्यानार्थं दत्तः । तस्मिंश्च दशैकादशानां वैद्यवर्याणां सविस्तराणि व्याख्यानानि समजायन्त । कान् कान् प्रश्नानुद्दिश्य त्रिदोषचर्चेयं करणीया इति विचार्य काचित् पञ्चपञ्चाशतप्रश्नात्मिका विषयावलिरेका मुद्राप्य सदस्येभ्यः सर्वेभ्यः प्रेषितासीत् । सा च एवम्—

## महाराष्ट्रप्रान्तीयवैद्यानां त्रिदोषचर्चापरिषद् ।

१८५५ शाकीयायाः पौषशुक्लत्रयोदशीमारभ्य दिनचतुष्टयपर्यंतं पनवेलग्रामे श्रीधूतपापेश्वरआयुर्वेदीयौषधिशालाधिपानां निवासस्थाने त्रिदोषचर्चापरिषदः कार्यं सुनिश्चितपद्धत्या निखिलभारतवर्षीयायुर्वेदविद्यापीठमन्त्रिणां त्र्यम्बकशास्त्री आपटे महाशयानां सभापतित्वे भवेदिति पुरुषोत्तम सखाराम हिर्लेकर तथा वामनशास्त्री दातार इति मन्त्रिभ्यां सूचितम् । भविष्यत्यां चर्चापरिषदि समागमिष्यतां विद्वद्वराणां त्रिदोषचर्चासौकर्यार्थं वैद्यभूषण वामनशास्त्री दातारमहाशयैर्दिग्दर्शिताश्चर्चायोग्या विषयांशा निखिलभारतवर्षीयवैद्यानां विचारार्थमत्र प्रकाश्यन्ते ।

### त्रिदोषचर्चापरिषदि चर्चितुं योग्या विषयांशाः ।

१. आयुर्वेदमतः सृष्टयुत्पादनक्रमः कथं वर्तते ?
२. जीवसृष्टेरुत्पादः ।
३. पंचतन्मात्रत्वम् ।
४. इन्द्रियाणां भौतिकत्वम् ।
५. आत्मनां असर्वगतत्त्वम् ।
६. पंचमहाभूतोत्पादः गुणवृद्धिः परे परे ।
७. अतिवाहिकशरीरम्, लिंगशरीरम् ।
८. पंचमहाभूतशरीरीसमवायः पुरुषः चिकित्साधिष्ठानम् ।
९. आयुर्वेदीयाः पदार्थाः सामान्य-विशेष-द्रव्यगुणकर्मसमवायाः ।

१०. सामान्यादीनां निरुक्तिः व्याख्यानं च परस्पराणां संबंधः ।

११. आयुर्वेदीया गुणाः के ?

१२. शक्तेर्लक्षणम् तस्याः पदार्थत्वं वा द्रव्यत्वं वा गुणत्वं तथा आयुर्वेदे सांख्ये वैशेषिके च तस्या गृहणं केन स्वरूपेण कृतम् तस्य विचारः ।

१३. मूर्तत्वामूर्तत्वविचारः ।

१४. भूतसर्जने त्रिदोषाणां उत्पत्तिः कदा कुत्र कथं संभवति वा तेषां स्वतः सिद्धत्वम् ।

१५. पंचतन्मात्रावस्थायां तेषां अस्तित्वं न वा ?

१६. पंचमहाभूतावस्थायां तेषां अस्तित्वं न वा ?

१७. पंचमहाभूतशरीरावस्थायां तेषां अस्तित्वं न वा ?

१८. अतीतवर्तमानागामिनि देहे वातपित्तकफानां संततं अनुस्यूतत्वेन गतागतत्वं वर्तते न वा ?

१९. गर्भावक्रांतौ यानि कारणानि ( मातृजपितृजसात्म्यजरसज आत्मज ) तेषु त्रिदोषाणां कारणत्वं वर्तते न वा ?

२०. शुक्रस्य च रजसः पंचभूतवत्वं वा त्रिदोषवत्वं ?

२१. त्रिदोषवत्वे तयोर्निर्दोष-गर्भजननशीलत्वं वर्तते न वा ?

२२. त्रिदोषाणां स्वरूपनिश्चयः ( तत्र रूक्षेत्यादि, पित्तं-सस्नेहेत्यादि, स्निग्धःशीतेत्यादीनि त्रिदोषाणां व्यस्तत्वेन वा सामस्त्येन वा स्वरूपाणि ?

२३. तेषां स्वरूपतः पंचभूतत्वं वा पंचभूतविकारमयत्वम् ?

२४. त्रिदोषाणां प्रत्यक्षतया निर्धारणवत्वं वा सूक्ष्मतया वा उभाभ्यामपि ?

२५. तेषां त्रयाणामपि अनुमानगम्यत्वशक्तिमत्सूक्ष्मद्रव्यत्वसूचकानि कानि आयुर्वेदीयानि वचनानि ?

२६. तेषां यथावस्थितरूपाणां दोषधातुमलवत्-शरीरवत्सु प्राणिषु

अवस्थितिर्वा तद्रहितेषु अन्येषु प्राणिषु तथा वनस्पत्यादिषु।

२७. जीवितास्थित्यै उपयोक्तव्यस्य द्रव्याश्रितस्य षड्रसस्य नित्यं दोषैः सह मेलनं, तेषां अन्योन्यसन्निपातः भवति न वा ? ( रसदोषसन्निपातः )

२८. उपयुक्तेन षड्रसेन त्रिदोषाणां नित्योत्पादो भवति न वा ?

२९. रसविपाकवीर्यप्रभावाणां दोषै रसैश्च संबंधः कथम् ?

३०. " यदन्नं देहधात्वोजोबलवर्णादिपोषणं । तत्राग्निहेतुराहारा-न्नह्यपक्वाद्रसादयः ॥ " आदौ षड्रसमप्यन्नं मधुरीभूतं सत् फेनीभूतं कफं ईरयेत्, विदाहात् आम्लतां गतं, आमाशयात् च्यवमानं सत् पित्तं कुर्यात्, पुनः च्युतं अग्निना शोषितं, पक्वं, कटु, पिण्डितं, च सत् मारुतं कुर्यात् इत्यनेन दोषाणां नित्योत्पादो विद्यते न वा ?

३१. रसदोषसंनिपातैः कृतसंस्कारेण आहारपरिणामाख्येन रसेन सर्वेषां धातूनां नित्यशः पुनरुत्पादनं भवति न वा ?

३२. ते धातवः रसदोषाणामेव विपरिणाम ( सांख्यपरिभाषायां विकारो वा ) इति वक्तुं युज्यते न वा ?

३३. दोषाणां सर्वदेहव्यापित्वं स्वतंत्रतया वा तद्विपरिणामजनितधा-तुमलरूपेण वा ?

३४. तेषां त्रयाणामपि प्रत्येकशः पंचविधत्वं तद्वास्तवस्वरूपेण वा क्रियातो वा गुणतो वा सर्वैरेव एभिः ?

३५. वास्तवस्वरूपत्वेन चेत् तत् पंचविधत्वं तेषां पूर्णस्वरूपतो वा कियता अंशभूतस्वरूपेण वा ?

३६. स्वतंत्रतया तेषां सर्वदेहव्यापित्वे सति पक्वाशयकटीत्यादि वातस्य, नाभिरामाशयेत्यादि पित्तस्य, उरःकंठशिर इत्यादि कफस्य इति त्रयाणामपि उक्तानां स्थानानां तेषु च पक्वाधानं विशेषतः, नाभिरत्र विशेषतः, कफस्य सुतरां उर इति,

विशेषत्वेन स्थाननिर्देशे को हेतुः ? एभिश्च स्थानैः तेषां त्रयाणामपि स्वतंत्रतया सर्वदेहव्यापित्वं सिद्ध वाऽसिद्ध भवति ?

३७. तेषां त्रयाणामपि पृथक्पंचविधत्वं वास्तवपूर्णस्वरूपत्वेन गृहीतं चेत् 'तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहं । करोति बलदानेन' इति पित्तस्य, "सत्रिकस्य स्ववीर्यतः । हृदयस्यान्नवीर्याच्च तत्स्थ एवांबुकर्मणा । कफधाम्नां च शेषाणां यत्करोत्यवलंबनं" इति कफस्य वर्णनं कथं संगच्छते ?

३८ पंचविधानां त्रिदोषाणां स्वेनैव रूपेण पूर्णतया स्वातंत्र्येण अविकृतत्वेन अवस्थितानां सतां पाचकत्वरंजकत्वसाधकत्व-भ्राजकत्वआलोचकत्वादि विभिन्नं एकमेकमेव कार्यं पित्तं, तथा अवलंबकत्वक्लेदकत्वबोधकत्वतर्पकत्वश्लेषकत्वादिविभिन्नं, एकमेकमेव कार्यं कफः, तथा प्रत्येकशो विभिन्नं च विशिष्टं कार्यं वातः कथं कुर्यात् ?

३९. स्वतंत्रतया स्वेनैव स्वरूपेण तेषां सर्वदेहप्रविसृतत्वं स्वीकृतं चेत् अविकृतावस्थायामपि, " तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः । श्लेष्मा शेषेषु तेनैषां आश्रयाश्रयिणां मिथः । यदेकस्य तदन्यस्य वर्धनक्षपणौषधं " । इत्यस्य कथं संगतिः ?

४०. वाय्वाकाशधातुभ्यां वायुः, आग्नेयं पित्तं, अंभःपृथ्वीभ्यां श्लेष्मा, इत्यनेन त्रिदोषाणां पंचमहाभूतत्वं वा पंचमहाभूत-विकारवत्वं सिध्यति ?

४१. दोषाः कुपिताः शाखाकोष्ठास्थिसंधिषु विविधान् व्याधीन् कुर्वन्ति। तत्र शाखायां मध्यमरोगमार्गे च धातुसंमिश्रत्वं विनैव स्वतंत्रतया दोषाणां रोगजनकत्वं तथा कोष्ठस्थाने तेषां रोगकरणे धातुसंमिश्रणस्य आपेक्षत्वं वर्तते न वा ?

४२. दोषाणां क्षयः स्थानं च वृद्धिश्च, उर्ध्वं चाधश्च तिर्यक्च, कोष्ठशाखामर्मास्थिसंधिषु, इत्यादिरूपा त्रित्रिविधा गतिः किं द्योतयति ?

४३. निजैः कारणैर्दुष्टा दोषा निजान् व्याधीन् कुर्वंति इत्यनेन दोषाणां द्रव्यत्वं उत्पत्तिमत्वं सिध्यति न वा ?

४४. व्याधीनां आगंतुत्वे दोषप्रकोपस्य उपादानकारणत्वं विद्यते न वा ?

४४. " आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः । सामा इत्युपदिश्यंते ये च रोगास्तदुद्भवाः । " इत्यनेन तथा सर्वदेहप्रविसृतान् धातुषु लीनान् अनुत्क्लिष्टान् इत्यनेन तथा व्यायामादित्यारभ्य कोष्ठात् शाखास्थिमर्माणि यान्ति, तथा तेभ्यः स्रोतोमुखविशोधनादित्यारभ्य कोष्ठं, ( यान्ति वायोश्च निग्रहात् इत्यनेन ) तथा प्रायास्तिर्यग्गता दोषा इत्यारभ्य सुखं वा कोष्ठमानयेत्, तथा तेषां कोष्ठप्रपन्नत्वं ज्ञात्वा यथासन्नं विनिर्हरेदित्यनेन दोषाणां स्वरूपं कथं वर्णितं दृश्यते ?

४६. 'दोषा दुष्टा रसैर्धातून् दूषयंत्युभये मलान्। मला मलायनानि, अतस्तेषु यथा स्वं गदाः स्युः ' इत्यस्य विचारः ।

४७. वातपित्तकफसमप्रकृतीनां विचारः ।

४८. शोधनशमनरूपायाश्चिकित्साया विचारः ( पंचकर्मचिकित्साया अपि अत्रैवांतर्भावः )

४९. " वृद्धिः समानैः सर्वेषां " इति नियमात् अनुमानगम्यैः शक्तिमद्भिः सूक्ष्मैर्द्रव्यैः अनुमानगम्यानां शक्तिमतां सूक्ष्माणां द्रव्याणामेव वृद्धिः । नित्योत्पत्तिकृद्भिः प्रत्यक्षसिद्धैर्द्रव्यैः प्रत्यक्षसिद्धानाम् नित्योत्पत्तिमतां द्रव्याणां वृद्धिः । अत्र कथं वैपरीत्यं संगच्छते ?

५०. 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यस्याः श्रुतेर्विचारः?

५१. "अविशेषाद् विशेषारंभः, तस्मात् शरीरस्य, तद्बीजात् संसृतिः, मातापितृजं स्थूलं प्रायशः, इतरं न तथा, सप्तदशैकं लिंगं, अणुपरिमाणं तत्कृतिश्रुतेः, तदन्नमयत्वं श्रुतेश्च, पांचभौतिको-

देहः, चातुर्भौतिक इत्येके, ऐकभौतिक इत्यपरे, ” इत्यादि-सांख्यसूत्राणां विचारः ।

५२. “सामान्यकरणवृत्तिः प्राणाद्या वायवः पंच” इति, “न वायु-क्रिये पृथगुपदेशादिति, ” “ एतस्मात् जायते प्राणो मनः सर्वेंद्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी । ” ( कैवल्योपनिषद् ) इत्यादिसांख्यसूत्रवेदांतसूत्र-श्रुतीनां विचारः

५३. “मज्जमेदावसामूत्रपित्तश्लेष्मशकृत्यसृक् । रसो जलं च देहे-स्मिन्नेकैकांजलिवर्धितम् । समधातोरिदं मानं” इत्यस्य विचारः ।

५४. “ कफः पित्तं मलः खेषु ” इत्यस्य विचारः ।

५५. ये अन्ये केऽपि भवेयुरंशा विज्ञानस्य तेषांमपि विचारः ।

## प्रश्नानां उत्तराणि ।

१. सांख्यगृहीतः क्रमः········सुश्रुत शारीरस्थान अध्याय १ सूत्रं १६ ।

२. ,, ,, चरक शारीरस्थान अध्याय १ श्लोक ६१–६६ ।

४. इंद्रियाणि भौतिकानि········चरक, सुश्रुत, शारीरस्थान ।

५. आत्मनां असर्वगतत्वं········सुश्रुत शा. १ ।

६. पंचतन्मात्रेभ्यः पंचमहाभूतोत्पादः, गुणवृद्धिः परेपरे········ चरक शारीरस्थान ।

८. पंचमहाभूत ( विकार ) शरीरीसमवायः पुरुषः····सुश्रुत, चरक– “ शरीरं नाम चेतनाधिष्ठानभूतं पंचमहाभूत-विकारसमुदायात्मकं समयोगवाही ” ।

९. अभावरहिताः षट्पदार्थाः········चरक सूत्रस्थान अध्याय १

१०. सामान्यादीनां निरुक्तिः········चरक सूत्र अ. १ ।

११. विंशतिः····च. सू. व वाग्भट, परादयोऽपि अमुख्यागुणाः ।

१२. शक्तिः—कारणनिष्ठः कार्योत्पादनयोग्यः कश्चन धर्मविशेषः । सर्वकारणानां कारणत्वनिर्वाहकः अद्रव्यविशेषः शक्तिः । यतींद्रमतदीपिका ।

१३. मूर्तिमंत इति असर्वगतद्रव्यपरिमाणवंतः । "असर्वगतपरिमाणं हि मूर्तिरुच्यते" च. वि. अ. ५ ।
मूर्तत्वं परिच्छिन्नपरिमाणवत्वं क्रियावत्वम् वा ।
अमूर्तत्वं अदृश्यत्वं । च. सू. २१—३१
मूर्तत्वं····दृश्यत्वं····मूर्तानामित्याश्यखाद्यानाम्···· । च.वि.२
अमूर्तत्वं इति···अकठिनत्वं···· । संग्रहे इंदुटीका, शा. ६ ।

१४. पंचमहाभूतविकारशरीरीसमवायप्रारंभावस्थायां, शुक्रशोणित-संयोगे । तेषां स्वतस्सिद्धत्वं न ।

१५. नास्तित्वं ।

१६. ,,

१७. चतुर्दशप्रश्नोत्तरं द्रष्टव्यम् ।

१८. न वर्तते ।

२२. सामस्त्येन एव ।

२३. अष्टमप्रश्नोत्तरं द्रष्टव्यम् ।

२४. क्वचित् प्रत्यक्षतया, क्वचित् अनुमानेनापि । संग्रहसूत्रस्थान-अ. २० चरक सूत्रस्थान अ. १२ ।

२७. भवति एव ।

२८. भवत्येव ।

२९. चयापचयात्मकः ।

३०. विद्यते एव ।

३१. भवत्येव ।

३२. युज्यते एव ।

३३. विपरिणामजनितधातुमलरूपेणैव युज्यते, वा उभयथा ।

३४. सर्वैरपि युज्यते ।

३५. अंशांशेनैव ।

३६. एषे स्थानेषु तेषां उत्पत्तिः प्रत्यक्षतो भवति, अत्र दोषाः आहारपरिणामजन्याः, चिकित्सासौकर्यार्थं च सिद्धमेव ।

३७. आमाशय एव कफस्य मुख्यं स्थानं, उरः दोषोत्पत्तिदृष्ट्या, बलदानेनानुग्रहं कुरुतः ।

३८. स्थलगुणतारतम्यभेदतः ।

४०. पंचमहाभूतविकारवत्वं सिद्धं ।

४१. सर्वत्रैव दोषाः संमिश्रीभूताः संत एव व्याधीन् कुर्वंति ।

४२. सर्वदेहसंचारं प्रदर्शयति ।

४३. सिद्धत्वेव ।

४४. नैव, आगंतु-अवस्थायाम् ।

४५. द्रव्यात्मकं स्वरूपं वर्णितं दृश्यते ।

४६. सेवितैरयुक्तैः षड्सैर्दोषदुष्टिर्भवति । दोषदुष्ट्या धातु-दुष्टिः । धातुदुष्ट्या मलदुष्टिः । मलदुष्ट्या मलायनदुष्टिः । मलायनदुष्ट्या च रोगसंभवः ।

४७. तारतम्येन विचारः करणीयस्तुलनया ।

४८. शोधनचिकित्सैव मुख्या । शमनचिकित्सा अल्पान् दोषान् शमयेत् । आधिक्ये च तेषां कोष्ठमानीय शोधनीयम् । "ये-तु संशोधनैः शुद्धाः, न तेषां पुनरुद्भवः ।

४९. नैव वैपरीत्यं युज्यते । अतो दोषाः सर्वथा न सूक्ष्माः, वा शक्तिस्वरूपा वा अनुमानगम्याः ।

५०. अन्नरसमयः पुरुषः (श्रुतिः) । 'रसजं वपुषो जन्म वृत्तिर्वृद्धिः-' ( आयुर्वेदः ) ।

५१. तज्ज्ञाः प्रष्टव्याः ।

५२. तज्ज्ञाः प्रष्टव्याः ।

५३. निर्दिष्टपरिमाणवत्वात् सर्वेषामेतेषां प्रत्यक्षत्वं ।

५४. अन्नरसस्य पच्यमानस्य मलो वातः, प्रसादो रसः, रसस्य पच्यमानस्य, किट्टं कफः, प्रसादो रक्तं, रक्तस्य पच्यमानस्य, मलः पित्तं, सारः मांसं अतस्तेषां मलसंज्ञा [ संग्रह सू. अ. २० ]

५५. चयः········ प्रकोपः ····प्रसरः···· स्थानसंश्रयः —
अभिव्यक्तिः····भेदः शोथः असाध्यः शोफे त्रिदोषवर्णनं
विद्रधिः····त्रिविधः —
व्रणः····व्रणे, व्रणस्रावे च त्रिविधत्वं-
कोथः

५६. अन्नस्य पक्ता, दोषधातुमलादीनां उष्मेति आत्रेयशासनं । दोषाणां उष्माश्रयत्वात् द्रव्यत्वं ।

५७. आमावस्था, तथाच सामरोगे त्रिविधत्वम् ।

५८. त्रिविधकुक्षीयविमाने दोषाणां कुक्षौ तृतीयभागस्य अवकाशदान वर्णनेन द्रव्यत्वं, आहारविधौ च उत्पत्तिमत्वं स्पष्टं भवति ।

अंशे षड्विंशे चर्चाविषयीभूते वैद्यराजमहाभागैः गोपालशास्त्री-गोडबोले इत्येतैः वृक्षायुर्वेदे वृक्षेष्वपि दोषधातूनां उत्पत्तिर्वृद्धिःक्षयश्चोपवर्णित— इति सोदाहरणं प्रतिपादितम् ।

तथैव ५३ संख्याके अंशे विचार्यमाणे दोषाणां परिमाणं पालकाप्ये-यद्वर्णितं तदपि तैरेव सप्रमाणं प्रदर्शितम् । यथा--

पित्तस्य कुडवं ज्ञेयं कफस्यार्धाढकं तथा ।
वातार्बुदपलं ज्ञेयं पलानि दश मेदसः ।
पलत्रयं महारक्तं मज्जा रक्तात् चतुर्गुणा ।
शुक्रार्धकुडवं ज्ञेयं तदर्धं देहिनां बलं [ ओजः ]—

मांसस्य चैकपिंडेन पलसाहस्रमुच्यते ।
रक्तं पलशतं ज्ञेयं विण्मूत्रंचाप्रमाणतः ।
इति देहगृहं राजन् नित्यमन्वेष्यमात्मनः ।

इति परिषदि सर्वेष्वंशेषु सावधानतयैकमत्येन उत्तरितेषु पश्चात् आवेक्षकैः स्वीयानि मतानि प्रदत्तानि, यथा--

## न्यायरत्न नारायणशास्त्री वाडीकराणां मतम् ।

पर्णवल्लीग्रामे त्रिदोषचर्चापरिषत् समजनि । तस्यां परिषदि आवेक्षकत्वेन योजनाऽभवत्किल । तत्र तावद्दिनचतुष्टयपर्यंतं भिषग्वराणां सहवासेन, व्याख्यानेन, आयुर्वेदीयग्रन्थानां विचारेण च त्रिदोषविषये यन्मदीयं मतं निष्पन्नं तदधो लिख्यते ।

त्रिदोषास्तावद्द्रव्यस्वरूपाः तत्रापि पाञ्चभौतिकाः, मूर्ताः, गुणवन्तः, क्रियावन्तः, वृद्धिक्षयशालिनः, नित्याः, प्रत्यक्षादिप्रमाणगम्याश्च विद्यन्ते। तथाहि

### द्रव्यस्वरूपाः

१. लोके तावच्छरीरं पार्थिवमिति व्यवन्हीयते । श्रुतितः पञ्चीकरणजन्यमिति प्रतीयते । पञ्चीकरणं तु पृथिवीजलतेजोवाय्वाकाशादीनामेव । तेन च पञ्चानामपि द्रव्यस्वरूपत्वं निश्चितम् । एवंच शरीरं द्रव्यस्वरूपमिति सिद्धं । ' दोषधातुमलमूलमिदं शरीरं ' इत्यायुर्वेदीयवचनेन त्रिदोषाणां देहकार्यस्योपादानकारणत्वं ज्ञायते । द्रव्यमेव ह्युपादानकारणं भवितुमर्हति । समवायिकारणं द्रव्यमिति तल्लक्षणात् । त्रिदोषाणां निमित्तकारणत्वं न संभवति, कुत इति चेदुच्यते-निमित्तकारणस्य दण्डस्य कार्ये घटेऽनुप्रवेशो नास्ति,किंतूपादानभूताया मृद एवानुप्रवेशो घटे । त्रिदोषाणां तावद्द्रव्यस्वरूपे कार्यभूते शरीरे [ देहे ] अनुप्रवेशो वर्तते । अतो न निमित्तकारणभूतास्त्रिदोषाः, किंतूपादानकारणभूतास्त्रिदोषाः । त्रिदोषाणामसमवायिकारणत्वमपि न संभवति । कुतः, असमवायि-

कारणत्वं गुणकर्मणोरेव नान्यस्य (द्रव्यस्य)। त्रिदोषाणामुपादानकारणत्वमेव युक्तितः सिद्धं भवति। यदि कार्यभूतं शरीरं द्रव्यस्वरूपं तदा तदुपादानभूतास्त्रिदोषाऽपि द्रव्यस्वरूपा एवाङ्गीकर्तव्याः।

## पाञ्चभौतिकाः

२ "आकाशवायुभ्यां वातः, तेजसः पित्तं, अम्भःपृथिवीभ्यां कफः," इति वचनेन त्रिदोषाणां पाञ्चभौतिकत्वं स्पष्टं भवति। यदि देहस्य पाञ्चभौतिकत्वं, तदा तदुपादानभूतत्रिदोषाणामपि पाञ्चभौतिकत्वं निर्विवादमेव।

## मूर्ताः

३ मूर्तत्वं तु क्रियावत्वं परिच्छिन्नपरिमाणवत्वं वेति शास्त्रे कथितम्। आयुर्वेदीयग्रंथे तावत्त्रिदोषवहा नाड्यः प्रदर्शिताः। तेन त्रिदोषेषु वहनरूपा क्रिया विद्यते इति सिद्धं भवति।

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा॥

इत्यनेन वचनेन धारणरूपा क्रिया त्रिदोषेषु प्रतीयते। 'पित्तं पंगु कफः पंगुः पंगवो मलधातवः। वायुना यत्र नीयंते तत्र गच्छंति मेघवत्।' इत्यनेन गमनरूपा क्रिया प्रतीता भवति। अन्यच्च 'पित्तं प्रस्थं कफस्याढकं' इति वचनेन शरीरे विद्यमानत्रिदोषाणां परिमाणवत्वं स्पष्टं प्रतीयते। तथाच क्रियावत्वात्परिच्छिन्नपरिमाणवत्वाच्चोभयथापि त्रिदोषाणां मूर्तत्वं स्पष्टं भवति। (अतएव ते द्रव्यस्वरूपाः)

## गुणवन्तः

४ 'तत्र रुक्षो लघुः शीतो' इत्यादिवचनेन त्रिदोषाणां गुणवत्ता

प्रतिपाद्यते । यद्धि गुणवत्तद्द्रव्यमिति द्रव्यलक्षणात् । गुणवत्त्वप्रतिपादनेनैव त्रिदोषाणां द्रव्यत्वमर्थापत्त्या सिध्यति । द्रव्यं विहाय गुणा नान्यत्र वर्तन्ते । गुणे गुणानंगीकारात् इति न्यायात् ।

### क्रियावन्तः

५. त्रिदोषवाचका ये वातपित्तश्लेष्मादिशब्दा विद्यन्ते । तेषां प्रकृतिप्रत्ययपूर्वकालोचने कृते सति क्रियावत्त्वं प्रतीतं भवति । अपि चोपरितनमूर्तस्वरूपविचारे क्रिया त्रिदोषे वर्तत इति प्रतिपादितमेव । क्रियापि द्रव्यं विहाय अन्यत्र [ गुणे, कर्माणि, वा ] न विद्यते । अतः क्रियावत्वात् त्रिदोषाणां द्रव्यस्वरूपता सिद्धा भवति ।

### वृद्धिक्षयशालिनः

६. कुर्वते हि रुचिं दोषा विपरीतसमानयोः ।
क्षीणावृद्धाश्च भूयिष्ठं लक्षयन्त्यबुधास्तु न ॥

इति वचनेन 'चयो वृद्धिः स्वधाम्न्येव ' इत्यादिवचनेन च वृद्धिक्षयापरपर्यायावुपचयापचयौ त्रिदोषेषु विद्यते । अपरं च ' रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ' इत्यनेन त्रिदोषविकार एव रोगः । अन्यच्च 'विकृताविकृतादेहं घ्नंति ते वर्तयंति च' इति वचनेन दोषविकार एव [प्रकोपः] व्याधिरिति प्रतिभाति। एवं चोपचयापचयभावः विकार्यविकारीभावश्च त्रिदोषाणां आयुर्वेदीयग्रन्थतो ज्ञायते । द्विविधोऽपि सःत्रिदोषाणां द्रव्यस्वरूपत्वांगिकारं विना न निर्वहति । तदित्थं-यस्य वस्तुनो अवयवा भवेयुः तस्यैव वस्तुनोपचयापचयभावोऽथवा विकार्यविकारीभावः संभवति । नान्यस्य वस्तुनः ।'द्रव्यसमवायिकारणं अवयवा' इति अवयवलक्षणम् । तथाच अवयवाभावे उपचयापचयभावो विकार्यविकारिभावश्च न दृष्यते । अवयवसत्वे एव तयोः स्थितिः, इत्यन्वयव्यतिरेकात् 'यत्र यत्रोपचयापचयभावो, विकार्यविकारिभावो वा तत्र तत्र सावयवत्वं' इति व्याप्तेः सत्वात् त्रिदोषाणां तावदुपचयापचयभावो विकार्यविकारिभावश्च दृष्यते । इत्यतः सावयवास्त्रिदोषा इति सिद्धं भवति । सावयवत्वादेवद्रव्यत्वं सिद्धम् ।

## नित्याः

७. यथा प्रवाहो वर्षर्तौ वृद्धिं गतो भवति, ग्रीष्मकाले कृशो भवति, एवमृतुभेदेनोपचयापचयवानपि प्रवाहो लोकेऽनादीति व्यवह्रीयते । यथा वा वृद्धिक्षयवती, परिणामवती च सांख्यानां प्रकृतिः "प्रकृतिं पुरुषं चैव विध्द्यनादी उभावपि" इत्यनेन वचनेनानादिरित्युच्यते तथैवोपचयापचयवन्तो विकारशालिनस्त्रिदोषा नित्या इति सिध्यति ।

## प्रत्यक्षादिप्रमाणगम्याः

८. त्रिदोषकार्यस्य शरीरस्य प्रत्यक्षप्रमाणवेद्यत्वं सार्वजनिनम् । अत्र प्रत्यक्षत्वं त्विंद्रियार्थसन्निकर्षजन्यज्ञानविषयत्वस्वरूपं । यदि शरीरं प्रत्यक्षं तदा तदुपादानभूतास्त्रिदोषाऽपि प्रत्यक्षादिप्रमाणगम्या एव भवितुमर्हंति, कुतः अदृश्यस्य वस्तुनो दृश्यानुपादानत्वात् । दृश्यत्वमदृश्यत्वं वा न स्वाभाविकं, किंतु महत्परिमाणोभ्दूतरूपादिकारणकलापादिकं यत्र स्यात् तद्वस्तुनः प्रत्यक्षं भवेत् । पूर्वोक्तकारणकलापो यत्र न स्यात् तस्याप्रत्यक्षत्वम् । त्रिदोषे तावत्पूर्व-प्रदर्शितः कारणकलापोऽस्त्येव । अतस्तेऽपि प्रत्यक्षादिप्रमाणगम्या एवेति सिद्धं ।

केषांचिन्मते शक्तिस्वरूपास्त्रिदोषास्संतीति । तदेतदसमीचीनम् । कथमिति चेदित्थं--शक्तिस्तावत् केषांचिन्मते इच्छास्वरूपा, केषांचिन्मते च कारणनिष्ठ--कार्योत्पादनयोग्य-धर्मविशेषस्वरूपा । तथाचेच्छास्वरूपगुणभूता धर्मस्वरूपाऽतै-वामूर्ता शक्तिरिति सिद्धम् । एवंभूतशक्तिस्वरूपेषु त्रिदोषेषु मूर्तत्वाऽसंभवः । मूर्तत्वं-परिच्छिन्नपरिमाणत्वम् । मूर्तत्वं हि द्रव्ये वर्तते, न गुणेऽन्यत्र धर्मे वा । गुणवत्वमपि एवंभूतशक्तिस्वरूपत्रिदोषेषु न संभवति । द्रव्यस्यैव गुणवत्वात् । तथा क्रियावत्वमपि न विद्यते । द्रव्यस्यैव क्रियावत्वात् । उपचयापचयभावो, विकार्यविकारीभावो वा शक्तिस्वरूपेषु त्रिदोषेषु न संभवति । अवयवराहितत्वात् क्रियाहीनत्वाच्च । क्रिया तथाऽवयवाश्च द्रव्यस्यैव संभवन्ति नान्यस्य । एवं च सर्वमेवायुर्वेदशास्त्रमाकुली भवेत् । ग्रंथसंगतिश्च न युज्येदिति सुधियो विभावयंतु ।

पदार्थेति संज्ञापेक्षया द्रव्यस्वरूपेति विशेषसंज्ञया एव निर्देशः समीचीनः । यतः सति विशेषेण नाम्ना निर्देशे सामान्येनाभिधानमनुचितम् । अतो द्रव्यस्वरूपास्त्रिदोषा इति वक्तव्ये नासंबद्धता । तस्मादेवं सिद्धं भवति पाञ्चभौतिकत्वान्मूर्तत्वाद्गुणवत्वात्क्रियावत्वात् वृद्धिक्षयशालित्वाच्च द्रव्यस्वरूपास्त्रिदोषा इति सिद्धम् । इति शम् ।

**नारायणशास्त्री वाडीकर**
अध्यापक, संस्कृत कॉलेज पुणें.

## आयुर्वेदाचार्याणां नानलानां तथा भिषग्वराणां पुराणिकानां मतम् ।

### आवेक्षक-मण्डलेन निर्मितः, त्रिदोषपरिषद्विषयः अभिप्रायः ।

१. अस्यां परिषदि एकादशसंख्याकानि व्याख्यानान्यभूवन् । तथाच वैद्य श्री महेश्वर राम पुराणिक जोशीशास्त्रीणां निबंधस्याऽपि पठनमभवत् ।

२. एतेषां व्याख्यानानां तथा अस्माभिः श्रवणमकारि यथा प्रचलितदोषवादस्य सम्यगेव निर्णयो भवितुमर्हति ।

३. एतेषां मध्ये दोषाः शक्तिस्वरूपा इति मतमंगीकृत्य समभूत् व्याख्यानद्वितयम् ।

४. तथाच इतराणि व्याख्यानानि दोषा द्रव्यत्वविशिष्टा इति न्यायादिशास्त्रघटितं पक्षमंगीकृत्य अभूवन् ।

५. अत एतेषां सर्वेषां समालोचने कृते सति--पं. वेणीमाधव, डेग्वेकर, गुणे प्रभृतिभिर्वैद्यवर्यैः प्रतिपादितस्य युक्तियुक्तस्य, न्यायादिशास्त्र-समुपबृंहितस्य एव पक्षस्य स्वीकारः प्रस्तावरूपेण विधेय इति सादरं सूचयामः ।

६. अपरमस्माभिर्यश्चायं निरदेशी अपरः पक्षः स कथं आयुर्वेदोपकारक इति चेत्--वयमित्थं निवेदयामः—

७. आयुर्वेदप्रमाणभूतः सोयं सुप्रथितः " शरीरदोषसंग्रहः " तर्कादिशास्त्रप्रतिपादितसप्तपदार्थातरितएव आविर्भवति ।

८. एतेषां दोषाणां पाञ्चभौतिकत्वं, उत्पत्तिमत्वं, द्रव्यत्वं, च कथमुपलभ्यते इति चेत्-संक्षेपतो निरूपयामः आदावायुर्वेदशास्त्रे-पदार्थाः अभावरहिताः षडेव गृहीताः ।

९. तद्घटितं च द्रव्यं, तादृशे द्रव्ये पंचपदार्था गुणादयः अवतिष्ठंते । एतादृशद्रव्यस्य लक्षणमितिचेत्—गुणवत्वं कर्मवत्वं च । यथाह भगवान् चरकः--" यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् । तद्द्रव्यं " इत्यनेन चरकसूत्रेण गुणवत्वं कर्मवत्वं च लक्षणं संजातम् च समवायिकारणत्वं अपि गुणकर्मणां निश्चितम् । अध्याय १ सूत्र ५० ।

तथाच " सामान्यं नाम जातिः " सा-समवायेन-अपृथक्भावेन चरकाचार्योदितेन-द्रव्ये संप्रतिष्ठिता विद्यते ।

१०. तथाच विशेषा अपि परमाणुरूपे-नित्यद्रव्ये एव वर्तंते इति षट्पदार्थविवेचनं न्यायचरकमतेन ।

११. तत्तु गुणकर्मादिवत्वं वातादिदोषेषु अनुस्यूतत्वेन दृश्यते, अतएव ते दोषा द्रव्यात्मकाः ।

१२. एते एव दोषा न्यायसंख्यानुरोधेन पाञ्चभौतिकजन्मत्वावच्छिन्नाः, तानिच पृथिवीत्यादिपंचसंख्याकानि महाभूतानि, एतेषु त्रिषु, पाञ्चभौतिकजन्यत्वं, " व्यपदेशस्तु भूयसा " इति नियमेन-वातादिदोषाणां

अवस्थावशेन चक्षुर्जन्यप्रत्यक्षविषयत्वमपि संभवति । वातादिसंज्ञावत्वं निश्चय-विषयं बरीवर्ति ।

अथ च अपरः पक्षः--

१३. प्रथमं यद्भूत् व्याख्यानद्वितयं शक्त्यात्मकं पक्षमधिकृत्य तद्विषये वयमित्थं निवेदयामः, यथा शक्तिपदार्थस्तु पृथक्त्वेन आयुर्वेदानुकुलेषु न्यायसांख्यादिशास्त्रेषु न परिगणितो दृश्यते । यतः "अस्मात् पदात् अयमर्थो बोधव्य इति ईश्वरसंकेतः शक्तिः" इति काणादीयेन वचसा इच्छायामेव शक्तेरंतर्भावः । तथा-क्वचित् गुणे-क्वचित् द्रव्ये-शक्तेरंतर्भावः यथासंभवं समजनि। यथा अग्नौ दाहानुकूला शक्तिः दृश्यते तस्या अंतर्भावोग्न्यारब्धे द्रव्ये । एवमेव न्यायसांख्यादिभिर्यथासंभवं तदात्मकावच्छिन्ना प्रतिपादिता, अतः सोयमपरः पक्षो दोषनिर्णयविधौ असमर्थ एव प्रतिभाति ।

१४. अतोऽनया सभया सोयमस्माकं तत्वनिर्णयः सर्वथा अंगीकृतश्चेत् दोषविज्ञानग्रंथलेखकानां उपकारी भवेदिति द्रढीयान्नो विश्वास इति सादरं निवेद्य विरमावः ।

द. म. पुराणीक.
नानलः पुरुषोत्तम शर्मा.

## चर्चापद्धतिः

प्रथमं कृतैर्व्याख्यानैर्विषयोऽयं सांगप्रत्यंगः तथा सर्वसदस्यानां पुरतः स्थापित आसीद्, यथा चर्चासमये समुद्भूतस्य कस्यापि प्रश्नस्य आशयः, संदर्भः, तद्विषयकाश्च ग्रंथाशाः, सर्वमप्येतत् मुखोद्गतमेव प्राय आसीत् सर्वेषां । अतो व्याख्यानानंतरं सार्धदिवसपर्यंतं एकैकं प्रश्नं गृहीत्वा तदनुरोधेन साधकबाधकचर्चा संजाता । कैश्चन पञ्चभिः सदस्यश्रेष्ठैः प्रतिप्रश्नं यथायोग्यं

उत्तरमपि विलिख्य सभापतिहस्ते पूर्वमेव दत्तमासीत् । अतश्चर्चायां प्रचलितायां उत्तरावल्याः अस्याः प्रतिप्रश्नं तदुत्तरमपि सूचनार्थं सभायाः पुरतः स्थापितं । यत्र तदतीव समीचीनमिति सर्वेषां मतिरभवत् तत्र तदेव स्वीकृतम् । यदा पुनः किंचित् परिवर्तनमपेक्षितमासीत् तदा वाक्यशः, शब्दशः, अक्षरशोऽपि वा परिवर्तनं कृत्वा उत्तरं रचितं । यतो हि प्रश्नावलिरियं सूचनार्थमेव रचितासीत् । तस्मात् प्रश्नानामेतेषां मध्यात् केचन पुनरुक्तिकराः केचन विषयांतरसंलग्ना इति सर्वसम्मत्या निष्कासिताः । ये केचन पूर्त्यर्थं प्रश्नाः पुरतः स्थापितास्तेषामपि चर्चा सञ्जाता । अथ यानि खलु सर्वसम्मतानि प्रतिप्रश्नमुत्तराणि आसन्, तेषां सूची सम्यग् विलिख्य मंत्रिमहाशयानां सकाशे स्थापिता । याश्च प्रश्नावल्यः सदस्येभ्यो दत्ता आसन् तासु यस्य किल प्रश्नस्य सर्वसम्मतं उत्तरं केनापि कारणेन अनुमतं नाभवत्तस्य पुरतः स्वकीयां अमान्यतां विलिख्य अंते च स्वकीयं हस्ताक्षरं कृत्वा एतानि प्रश्नपत्राणि सदस्यैर्मंत्रिमहाशयेभ्यो दत्तानि । अत्र यस्य प्रश्नस्य पुरतो न किमपि लिखितमासीत् तस्य यत्सर्वसंमतं उत्तरं तदेव सदस्यस्यास्य संमतमिति संकेत आसीत् । व्यक्तिशः सदस्यैः दत्तानि पत्राण्येतानि सम्यक् परीक्ष्य सभया अंतिमो निर्णयः कृतः । स च निर्णयः प्रस्तावरूपेण पुरतः स्थापितः, अनुमोदितः, सर्वसंमत्या च मान्य इति उद्घोषितः ।

**प्रथमः प्रस्तावः**—पनवेलत्रिदोषचर्चापरिषदियं दिनत्रयं सांगोपांगं चर्चां कृत्वा एवं निश्चितवती यत् त्रिदोषा नाम प्रत्यक्षादिप्रमाणसिद्धानि, नित्योत्पत्तिमन्ति, स्वभावतश्चापि वृद्धिक्षयशीलानि प्रत्यक्षद्रव्याणि सन्तीति ।

**प्रस्तावकः**—पं. डेग्वेकरशास्त्री एम्. ए. एम्. एस्. सी. एल्एल्. बी.

**अनुमोदकः**—पं. गोपाळशास्त्री गोडबोले वैद्यराज ।

**समर्थकाः**—रानडेशास्त्री सातारा, तांबवेकरशास्त्री, मुंबई । एकतारेशास्त्री अहमदनगर, भिषग्रत्न गंगाधरशास्त्री पूना, वैद्यरत्न केळकरशास्त्री नासिक । प्रस्तावोऽयं प्रचण्डबहुमतेन मान्यः । (द्वे मते प्रतिकूले)

**द्वितीयः प्रस्तावः**—पनवेलत्रिदोषचर्चापरिषदियं अधोनिर्दिष्टनामधेयानां सदस्यानां कार्यकारिमण्डलमेकं नियोजयति, येन च मण्डलेन, दिनत्रयपर्यंतं सांगोपांगां चर्चां कृत्वा या च सामान्येन षष्टिविषयात्मिका निर्णयावलिः परिषदा सर्वसम्मत्या स्वीकृता तामनुसृत्य त्रिदोषविषयकोऽधिकृतो ग्रंथो गीर्वाणभाषायां विरचनीयः। ग्रंथस्यास्य रूपरेखां तत्तद्विद्वद्भ्यः संप्रेष्य तेषामपि आक्षेपसूचनाभिप्रायादिकान् मनसि कृत्वा ग्रन्थोयं निखिलभारतायुर्वेदमहामंडलाय अभिप्रायार्थं प्रेषणीयः। अनन्तरं च प्रकाशनमस्य अंगीकर्तव्यम्। इयं किल मण्डलस्यास्य घटना—

**अध्यक्षः**—श्री. नानासाहेब पुराणिक, त्रिदोषचर्चापरिषत्स्वागताध्यक्षः पनवेल।

**सभासदः**—१ भिषगाचार्य त्र्यंबकशास्त्री आपटे पनवेलत्रिदोषचर्चापरिषदध्यक्षः, पूना। २ पं. भि. वि. डेग्वेकरशास्त्री एम्. ए. एम्. एस्. सी. एल्. एल्. बी. जबलपूर। ३ वैद्यपंचानन गंगाधरशास्त्री गुणे, अहमदनगर। ४ आयुर्वेदाचार्य पुरुषोत्तमशास्त्री नानल, पूना। ५ वैद्यभूषण वामनशास्त्री दातार, १९ वैद्यसंमेलन मंत्री, नासिक।

**सम्मन्त्री**—वे. शा. सं. नारायणशास्त्री वाडीकर, पूना।

**मन्त्री**—वैद्यपंचानन गंगाधरशास्त्री गुणे।

**सहमन्त्री**—आयुर्वेदतीर्थ विनायकशास्त्री एकतारे, अहमदनगर।

द्वावधिकौ सदस्यौ स्वीकर्तुं मण्डलमेतत्प्रभवति। ग्रंथनिर्माणकार्यमेतत् अस्य (१९३४) संवत्सरस्य समाप्तिपर्यंतं संपूर्णं स्यात्। एतदर्थं यश्च द्रव्यनिधिरपेक्षते यानि च साधनान्यनानि, तेषां समवाप्तिविषये मण्डलायास्मै सर्वेधिकाराः परिषदा चानया प्रदीयन्ते।

**प्रस्तावकः**—तपस्वी डॉ. बाबासाहेब परांजपे, यवतमाळ।

**अनुमोदकः**–विष्णू महादेव भट बी. ए. एम्. बी. बी. एस्. येवला ।

**समर्थकाः**–पं. रघुनाथशास्त्री जोशी आयुर्वेदविशारद, पूना ।

श्री. अनंतराव कर्डिले एम्. ए. एस्. टी. सी. नासिक ।

पं. वैद्यराज दत्तात्रयशास्त्री पुराणिक उपसभापतिः निखिलभारतायुर्वेद-महामंडल ।

वैद्यराज पं. अनंत विनायक गुर्जर, मुंबई ।

मान्योऽयं प्रस्तावः सर्वसम्मत्या ।

**तृतीय प्रस्तावः**—–अस्याः परिषदः अधिकृतं समग्र वृत्तांतं प्रकाशयितुं अधोनिर्दिष्टं मण्डलं नियुज्यते ।

पं. त्र्यम्बकशास्त्री त्रिदोषचर्चापरिषदध्यक्षः ।

श्री. नानासाहेब पुराणिक स्वागताध्यक्षः ।

पं. वामनशास्त्री दातार १९ वैद्यसंमेलनप्रधानमन्त्री ।

**प्रस्तावकः**–वै. पं. गुणेशास्त्री ।

**अनुमोदकः**––वै. अभ्यंकरशास्त्री, मुंबई ।

**समर्थकौ**—वै. वेणीमाधवशास्त्री, नगर ।

वै. बापुशास्त्री पराडकर, पनवेल ।

अयमपि प्रस्तावः ऐकमत्येन सम्मानितः ।

**चतुर्थः प्रस्तावः**––वातपित्तकफाः नाम शारीरघटकांतर्गताः अत्यंतसूक्ष्माः सामर्थ्यसंपन्नाः क्रियाकारिणश्च पदार्था द्रव्याणि वा सन्ति । नैते दृष्टिगोचराः किंतु कार्यानुमेयाः ।

**प्रस्तावकः**–वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकर, अमरावती ।

**अनुमोदकः**–आयुर्वेदाचार्य पांडुरंगशास्त्री देशपांडे, पूना ।

**समर्थकः**–न कोऽपि ।

प्रस्तावकानुमोदकयोरेव मतमनुकूलम् । अन्यथा सर्वसम्मत्या असम्मत एव प्रस्तावः ।

# परिषदो विशेषाः ।

१. अस्यां परिषदि यानि व्याख्यानानि संजातानि, प्रश्नान् बहुविधाननुसृत्य या च चर्चा सम्भूता, ये च निर्णयाः कृतास्तेषां सर्वेषां न्यायशास्त्रानुरोधेन सर्वथा सुसम्बद्धत्वं स्यादिति कृत्वा अधोनिर्दिष्टानां पण्डित-वरेण्यानां आवेक्षकत्वेन निर्वाचनं कृतमासीत् । तैश्च स्वकीयोऽभिप्रायः सर्वथा सभाया अनुकूलो विलिख्य प्रदत्तः ।

**आवेक्षकाः**—पं. नारायणशास्त्री वाडीकर न्यायशास्त्राध्यापक आचार्यकुल, पूना ।

पं. दत्तात्रयशास्त्री पुराणिक--उपाध्यक्ष--निखिलभारतायुर्वेदमहामण्डल

पं. पुरुषोत्तमशास्त्री नानल प्रधानाध्यापक आयुर्वेदमहाविद्यालय पूना ।

२. विना हि ग्रन्थवचनप्रमाणान्न किमपि विधानं करणीयमिति आसीत् परिषदो दण्डकः स च सर्वैरनुपालितः ।

३. सर्वाऽपि चर्चा प्रस्तुत एव विषये केन्द्रीभूता । परित्यज्यैनं न कापि चर्चा संजाता ।

४. प्रायशः सर्वैरेव सदस्यैः सर्वथा सहानुभूतिपूर्वकं चर्चा कृता । वयैक्तिकमतभेदस्य कलहे परिणतिर्न कुत्रापि दृष्टा ।

५. प्रस्तुतस्य विषयस्य अन्तिमं निर्णयं कृत्वैव परिषदेषा परिसमापिता ।

६. अस्यां च परिषदि भोजनादिप्रबन्धः सर्वसदस्यानां यथा सर्वथा स्वास्थ्याय च सुखाय च भवेत् तथा दक्षैः स्वागताध्यक्षैर्नियोजितविविधा-धिकारिद्वारा कृतः ।

एवमेषा परिषत्सर्वथा अपूर्वैवाभवत् ।

# त्रिदोषचर्चापरिषदि निमंत्रितानां तथा समुपस्थितानां वैद्यविदुषां नामानि ।

---

| | | | |
|---|---|---|---|
| १ | प्राणाचार्य कृष्णशास्त्री देवधर | नासिक | * |
| २ | ,, वासुदेवशास्त्री ऐनापुरे | मुंबई | * |
| ३ | आयुर्वेदमार्तंड जादवजी त्रिकमजी आचार्य | ,, | * |
| ४ | वैद्यराज अण्णाशास्त्री साठे | ,, | * |
| ५ | ,, दुर्गाशंकर केवळराम | ,, | * |
| ६ | ,, गोपाळशास्त्री गोडबोले | चिंचवड | |
| ७ | ,, विष्णुशास्त्री केळकर | नासिक | |
| ८ | रा. रा. अनंतराव कर्डिले, एम्. ए. बी. एस्. सी. | ,, | |
| ९ | आयुर्वेदाचार्य घाणेकर, एम्. बी. बी. एस्. | बनारस | * |
| १० | वैद्यराज महेश्वर राम पुराणिक | मालवण | * |
| ११ | ,, त्रिंबकशास्त्री धामणकर | मुंबई | |
| १२ | ,, रघुनाथशास्त्री तांबवेकर | ,, | |
| १३ | ,, अनंतशास्त्री गुर्जर | ,, | |
| १४ | ,, रामचंद्र महादेव पुराणिक | ,, | |
| १५ | वे. शा. सं. नारायणशास्त्री वाडीकर | पुणें | |
| १६ | डॉ. बाळकृष्ण चिंतामण लागू | ,, | * |
| १७ | वैद्यराज रामचंद्र विनायक पटवर्धन | ,, | |
| १८ | ,, रघुनाथ वासुदेव जोशी | ,, | |
| १९ | ,, दत्तात्रयशास्त्री पुराणिक | ,, | |
| २० | भिषग्रत्न गंगाधरशास्त्री जोशी | ,, | |
| २१ | वैद्यराज हरीशास्त्री साने | ,, | * |

| | | | |
|---|---|---|---|
| २२ | वैद्यपंचानन कृष्णशास्त्री कवडे, बी. ए | पुणें | * |
| २३ | आयुर्वेदाचार्य पांडुरंगशास्त्री देशपांडे | ,, | |
| २४ | भिषगाचार्य त्रिंबकशास्त्री आपटे | ,, | |
| २५ | आयुर्वेदाचार्य पुरुषोत्तमशास्त्री नानल | ,, | |
| २६ | डॉ. नीळकंठ भालचंद्र भाटवडेकर | मुंबई | * |
| २७ | श्रीमंत गंगाधर विष्णू पुराणिक | पनवेल | |
| २८ | ,, पुंडरीकाक्ष गदाधर पुराणिक | ,, | |
| २९ | वैद्यराज पराडकरशास्त्री | ,, | |
| ३० | ,, दादाशास्त्री शेंडे | ,, | |
| ३१ | ,, साठेशास्त्री | ,, | |
| ३२ | ,, कोनकरशास्त्री | ,, | |
| ३३ | ,, सदाशिव बळवंत कुळकर्णी | कोल्हापूर | * |
| ३४ | ,, सी. ना. रानडे | सातारा | |
| ३५ | ,, गोविंदराव बिनिवाले | सांगली | * |
| ३६ | वैद्यभूषण गणेश त्रिंबक जोशी | पुणें | * |
| ३७ | वे. शा. सं. नृसिंहाचार्य गजेंद्रगडकर | सातारा | * |
| ३८ | डॉक्टर मोरेश्वर नारायण आगाशे | ,, | * |
| ३९ | वैद्यराज वासुदेवशास्त्री कडेगांवकर | ,, | * |
| ४० | वैद्यपंचानन गंगाधरशास्त्री गुणे | अहमदनगर | |
| ४१ | आयुर्वेदतीर्थ विनायकराव एकतारे | ,, | |
| ४२ | आयुर्वेचार्य वेणीमाधव बाळाजी जोशी | नगर | |
| ४३ | वैद्यराज बोरकर ( मुकुंद रामचंद्र ) | ,, | |
| ४४ | वैद्यराज शंकर गणेश नानल | पुणें | |
| ४५ | डॉ. विष्णू महादेव भट बी. ए. एम्. बी. बी. एस्. | येवलें | |
| ४६ | वैद्यराज गोपाळशास्त्री बायीवारु | नगर | * |
| ४७ | म. मो. श्रीधरशास्त्री पाठक | धुळें | * |

४८ वैद्यराज विश्वनाथ श्रीधर पाठक धुळें *
४९ वैद्यभूषण माधवराव हरी गोखले जळगांव *
५० डॉ. नरहर शिवराम ऊर्फ बाबासाहेब परांजपे नागपूर
५१ वैद्यराज लक्ष्मणशास्त्री पणशीकर ,, *
५२ ,, गोवर्धनशर्मा छांगाणी ,, *
५३ ,, हरीशास्त्री पराडकर आकोला *
५४ ,, भिकाजी विनायक डेग्वेकर एम्. ए. एल्. एल्. बी. एम्. एस्. सी. जबलपूर
५५ वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकर उमरावती
५६ वैद्यराज पंढरीनाथ दामोदर मुळे ,, *
५७ ,, दिगंबरजी बक्षी बोरिवली *
५८ ,, परशुराम रघुनाथ गोडबोले पुणें *
५९ ,, गणेश महादेव अभ्यंकर मुंबई
६० वैद्यभूषण वामनशास्त्री दातार नासिक

* येषां नाम्नः पुरतो वर्तते चिन्हं ते अनुपस्थिता इति विज्ञेयम् ।

---

## त्रिदोषचर्चापरिषदि प्रस्थापिते चर्चापत्रके उत्तरपत्रके च यैः स्वसंमतिदर्शिका स्वाक्षरिः कृता तेषां नामानि स्थानसहितानि ।

१ वैद्यपंचानन गंगाधरशास्त्री गुणे अहमदनगर
२ भिषगाचार्य त्रिंबकशास्त्री आपटे पुणें
३ आयुर्वेदाचार्य पुरुषोत्तमशास्त्री नानल ,,
४ वैद्यराज दत्तात्रयशास्त्री पुराणिक ,,

| | |
|---|---|
| ५ भिकाजी विनायक डेग्वेकर, एम्. ए. एल्. एल्. बी. एम्. एस्. सी. | जबलपूर |
| ६ वैद्यरत्न विष्णुशास्त्री केळकर | नासिक |
| ७ वैद्यराज गोपाळशास्त्री गोडबोले | चिंचवड |
| ८ आयुर्वेदाचार्य वेणीमाधव बाळाजी जोशी | नगर |
| ९ वैद्यराज मुकुंद रामचंद्र बोरकर | ,, |
| १० आयुर्वेदतीर्थ विनायकराव एकतारे | अहमदनगर |
| ११ वैद्यराज अनंतशास्त्री गुर्जर | मुंबई |
| १२ ,, रघुनाथशास्त्री तांबवेकर | ,, |
| १३ ,, गणेश महादेव अभ्यंकर | ,, |
| १४ ,, शंकर गणेश नानल | पुणें |
| १५ ,, रघुनाथ वासुदेव जोशी | ,, |
| १६ ,, सी. ना. रानडे | सातारा |
| १७ रा. रा. अनंतराव कर्डिले, एम्. ए. बी. एस्. सी. | नासिक |
| १८ भिषग्रत्न गंगाधरशास्त्री जोशी | पुणें |
| १९ वैद्यराज परशुराम रघुनाथ गोडबोले | ,, |
| २० श्रीमंत गंगाधर विष्णु पुराणिक | पनवेल |
| २१ ,, पुंडरीकाक्ष गदाधर पुराणिक | ,, |
| २२ वैद्यराज पराडकरशास्त्री | ,, |
| २३ वैद्यभूषण वामनशास्त्री दातार | नासिक |

अस्मिन्पत्रके वैद्यानामेव केवलानां स्वाक्षरैर्गृहीता न दक्षतराणां। परिषदि उपस्थितेषु चतुस्त्रिंशत्सु मध्ये द्वौ दक्षतरौ, एकश्च प्राच्यविद्यापंडितः, त्रयश्च मतप्रदानवेलायां सभास्थले अनुपस्थिताः, द्वौ च सुतरां विपक्षौ इति तेषां अगणनया त्रिभिरेव वैद्यैः स्वीयं मतं नैव प्रदत्तम्।

———

# पंचमहाभूत-त्रिदोषचर्चापरिषादितिवृत्तप्रस्तावः ।

## हरिशरणानंदकृत त्रिदोषमीमांसासोराद्धारः ।

इत्येवं पर्णवल्लीग्रामे संजातायां त्रिदोषपरिषदि ये च प्रस्तावाः पुरस्कृताः तेषां सामान्यतः स्वरूपमिदमेव त्रिदोषानैव काल्पनिकाः किंतु प्रत्यक्षसिद्धानि द्रव्याणि, तथा त्रिदोषाः केवलं नैव शक्तिस्वरूपाः परमसूक्ष्मा अनुमानग्राह्याः पदार्थाः, किंतु नित्योत्पत्तिमन्तो वृद्धिक्षयस्थितिशीलाः परिमाणवन्तः स्थूल-सूक्ष्मोभयविधा द्रव्यस्वरूपा एव, इदं शास्त्रवचनप्रामाण्यसिद्धं उपस्थितविद्वत्-श्रेष्ठपारिषदैरनुमोदितं तेषां विद्यते सामान्यस्वरूपम् । नैतेन सामान्यस्वरूप-दिग्दर्शनेन चारितार्थ्यं, परं इमं मतमेव केंद्रत्वेनाङ्गीकृत्य त्रिदोषविषयकः समग्रः शास्त्रपूतः सूक्ष्मातिसूक्ष्मभिन्नभिन्नकक्षागतविषयोपबृंहितः पठनपाठनो-पयुक्तो ग्रंथराजः समित्या विरचय्य प्रकाशयितव्य इत्युद्देशं मनासि निधाय निर्मिता चैका समितिः । यश्च प्रबंधो भारतीयविद्वद्वरेण्यसंमत्यर्थं निखिलभार-तवैद्यसंमेलनसमीपे स्थापितो भविष्यति । यश्च भारतीयवैद्यवरप्रदत्तमतानुकूल्य-मुद्रांकित एव भारतीयस्वरूपं प्राप्नुयात् । यस्य च लेखका अहमदनगरवा-स्तव्यास्सुप्रसिद्धनामधेया वैद्यपंचाननाः श्री गंगाधरशास्त्रीमहाभागा निर्धारिताः सन्ति, यस्मिन् सहायकाः समितिसभास्ताराश्च आयुर्वेदाचार्य पुरुषोत्तमशास्त्री-नानल, भिषगाचार्य त्रिंबकशास्त्री आपटे, वैद्यराज भिकाजी विनायक डेग्वेकर, न्यायरत्न नारायणशास्त्री वाडीकर सदृशा विद्यन्ते । यस्याश्च समित्याः प्रमुखाः पर्णवल्लीग्रामवास्तव्या अपि भारतप्रसिद्धाः श्री धूतपापेश्वरारोग्यमंदीरसंचालकाः श्री गंगाधर विष्णु पुराणिका नियुक्ताः सन्ति ।

सैषा समितिः ग्रंथराजनिर्मित्यर्थं उद्योगभरं कृत्वा प्रयतते, स च प्रबंधोपि संपूर्णप्राय एव विद्यते । शीघ्रमेव प्रकटरूपं स्वीकृत्य बहिर्यास्यति । अस्तु । एतावति प्रयत्ने संजातेऽपि एक उद्योग अस्मिन् विषये आवश्यक एव

उर्वरित आसीत्। यथा त्रिदोषविषयकं मतैक्यं संपादयितुं त्रिदोषपरिषद् महाराष्ट्रे पनवेलग्रामे महतोत्साहभरेण संजाता, तथैव आभारतीयपंडितवरेण्यानां वैद्यानां अपि केवलं त्रिदोषविषयस्यैव विचारोहापोहकरणोद्देशकं संमेलनमावश्यकम्। यच्च नाद्यापि संजातं। येन सम्मेलनेन भारतीयवैद्यवराणामपि प्रश्नेऽस्मिन् सामान्यत्वेन ऐकमत्यं निश्चितस्वरूपप्रदर्शकं दृक्पथमेत्य नैकविधमतानां निरासो भूत्वा महत्कार्यं साधितं भवेदिति। एतादृशं संमेलनं कुत्र, कदा, कैश्च कर्तव्यं इति संदेहाकुलितान्तःकरणे त्रिदोषविषयकचिंतातुरे वैद्यवृन्दे सति एतादृश एकः समुद्भूतः प्रसंगः। येन एतादृशं भारतीयवैद्यसम्मेलनं केवलं त्रिदोषविषयविचारकरणे एव बद्धादरं शीघ्रमेवावश्यं मानयितव्यमेव। केवलं वैद्यविदुषामेव संमेलनेन प्राप्तप्रसंगस्य प्रतिक्रिया समुचितास्यादपितु आभारतीयानां प्राच्यतत्वविद्याप्रवीणानां दार्शनिकानां तथा प्रतीच्यभौतिक-शास्त्रपारदृश्वनामपि यस्मिन् सहकार्यमवश्यमेवाभवत्।

अमृतसरनगरे कृतवास्तव्यानां "पंजाब आयुर्वेदिक फार्मसीति" औषधिसंभारसंस्थाध्यक्षाणां आयुर्वेदविज्ञानमासिकपत्रसंपादकानां 'मंथरज्वरकी-अनुभूतचिकित्सा,' 'क्षारविज्ञान,' 'आसवविज्ञान' इत्याद्यनेकप्रबन्धकर्तृणां प्रथितनामधेयानां स्वामी हरिशरणानंदनामधारकाणां एका कृतिस्त्रिदोषमीमांसा इति अत्रान्तरे प्रादुरभूत्। यया सर्वेपि पंडितप्रकांडा वैद्यवरा दार्शनिका अपि व्यथितान्तःकरणा जागरूका अभवन्।

एतावत्कालं प्रतीच्यविद्याविभूषिता एव नैव त्रिदोषाणां सत्यत्वेन अस्तित्वं केवलं प्राचीनानां सा कल्पनैवेति संगिरन्तिस्म। परं स्वामी हरिशरणानन्दास्तु वैद्यनामधारका भूत्वा केवलं त्रिदोषाणामेव न हि अपितु पंचमहाभूतानामपि पूर्णतया असत्यत्वं प्राचीनर्षीणां मौर्ख्यं काललवमपि शास्त्रीयपरिभाषायां स्थित्यक्षमत्वं उद्घोषयन्तः स्वप्रतिपादितमतखंडनकर्तृभ्यः पंचशतरूप्यकमितं पारितोषकप्रदानशौण्डयं स्वकीयमताखंडनत्वं प्रतिपादय-न्तोऽवनितले प्रादुर्भूताः। एतैश्च यस्त्रिदोषमीमांसाख्यःप्रबंधो व्यलेखि,

तेनायुर्वेदविन्मूर्धन्यमंडले, वृत्तपत्रेषु, मासिकपत्रेषु, खंडनात्मकलेखानां प्रसिद्धीकरणेन, सभासु स्वमतस्थापकव्याख्यानदानेन च किंमपि समारब्धमान्दोलनम्। सोयमवसरः संप्राप्त इति विचार्य अस्माभिरपि पूर्वाभिलषिता आसेतुहिमाचलप्रथितवैद्यविदुषां दार्शनिकानां च त्रिदोषविषये विचारकरणनैमित्तिकी काप्यपूर्वा परिषद् अस्मिन्नववसरे कर्तुं समुद्योगः प्रारब्धः। सोऽयं काकतालीयन्याय एव, बहुकालं मनसि निर्धारितं भारतीयं तत्ववित्सम्मेलनं हरिशरणानन्दनिमित्तं पुरस्कृत्य प्रत्यक्षरूपेण सपन्नं, हरिशरणानन्दानामेव कृते एतत् सम्मेलनं संजातमितितु नैव। एतादृशं व्यक्तिमहात्म्यं, पांडित्यमाहात्म्यं वा नैवावलंबन्ति स्वामिमहाशया यद्यपि ते समुत्साहिन उद्योगनिष्ठाः। पर्णवल्लीग्रामे पूर्वसंजाताया महाराष्ट्रीयत्रिदोषपरिषद एवायं परिपाको यश्च भारतीयत्रिदोषपंचमहाभूतपरिषद्रूपेण परिणतोऽभवद्वाराणश्याम्। कोनाम सामान्यपशुहनने पंचाननमृगयासामग्रीको भवेत्! भवतु। अधुना स्वामीहरिशरणानन्दमहाभागैः स्वकीये त्रिदोषमीमांसानामके प्रबंधावभासे ये च त्रिदोषपंचमहाभूतविषयका गृहीता आक्षेपास्तान् संक्षेपत उद्धरामः।

## आक्षेपाः

१ आयुर्वेदचिकित्सा—तु नैव पृथ्वीलोकचिकित्सा, यतः पुलस्त्यादिमुनिभिः सम्मील्य भारद्वाजः स्वर्गे-देवलोके इंद्रसमीपे प्रेषितः। तेन देवलोकं गत्वा इन्द्रात् समनुप्राप्ता चिकित्सापद्धतिः प्रससार पृथ्वीलोके। अत इयं नैव भारतीया चिकित्सा अन्यदेशादानीता। पृष्ठ ३।

२ प्राचीनैर्ऋषिभिः स्वीयाः सिद्धांतास्तर्कवादेन [ कल्पनया ] एव स्थिरीकृता, अतएव तैः 'एतावद्दृश्यम्'--इत्युक्त्वा दृश्यपदार्थानां निर्देशं कृत्वा 'अतः परं तर्क्यम्' इत्युक्तं, इत्यनेनैव त्रिदोषसिद्धान्तस्तर्कवादेनैव स्थिरीकृतो न प्रत्यक्षत्वेन। पृष्ठ ९।

३ सर्वं जगत् पंचमहाभूतमयं विद्यते। जनन्या रजः, पितुः शुक्रं, चापि पंचभूतात्मकमेव। अद्यापि भारतीयः प्रत्येकः संप्रदायः समामनति

यदयं सर्वोऽपि जीवलोकः पंचतत्वमय इति। त्रिदोषवादस्थापने अयमेव सिद्धान्तः प्रधानं कारणम्। पंचानां भूतानां गुणास्त्रिदोषेषु सम्मील्य त्रिदोषवादः स्थिरीकृतो विद्यते न वास्तविकः। पृष्ठ १०।

४ पंचमहाभूतानां गुणेषु वास्तवत्वं न हि दृश्यते। तथा मृदुत्वं आकाशस्य, तथा जलस्यापि गुणोऽभिहितः। लघुता तु आकाशस्य वायोस्तथा अग्नेरपिगुणः प्रोक्तः। तथा शीतलत्वं वायोर्जलस्य च गुण उक्तः। रूक्षता वायोरग्नेश्च गुणः। खरोगुणस्तु वायोः पृथिव्या अभिप्रोक्तः। अतो भिन्नेषु तत्वेषु सत्स्वपि गुणास्तेषां मिश्रिता इति दृश्यते। शद्वस्पर्शरूपरसगंधास्तु पंचतन्मात्राः स्मृताः। तन्मात्रानाम पंचमहाभूतानां सूक्ष्मावस्था याभिः पंचमहाभूतानां प्रत्यक्षत्वं साध्यते। एतासां तन्मात्राणां ज्ञानं पंचज्ञानेंद्रियैर्भवति। यदि एतेषु ज्ञानेंद्रियेषु मध्ये कतरत् ज्ञानेंद्रियं नष्टं स्यात् तदा तत्वानां ज्ञानं नैव भवेत्। पंचमहाभूततत्वानां आधुनिकलक्षणेन नैव सिध्यति तत्वत्वम्। आधुनिकतत्वलक्षणं यथा—

(अ) तत्वस्य परमं सूक्ष्मस्वरूपं आवश्यकम्।

(आ) तत्वे घनत्वं, आयतनं, भारः, रूपं इति चतुर्णां अस्तित्वं आवश्यकम्।

(इ) तत्वस्य अंतिमं स्वरूपं एतादृशमावश्यकं यस्य कयापि प्रबलया शक्त्या छेदोनैव भवति।

(ई) तत्वेन अन्ये अनेके पदार्था उत्पन्ना भवेयुः, परं तत्वं नैव केनापि संभवितुं शक्यम्। तस्योत्पत्तिस्तु स्वयं सिद्धैवावश्यकी। अपरं च तत्वं तु सृष्टिरचनायां पदार्थैः संमीलितं भवदपि तस्यान्तिमं स्वरूपं यथावदेव स्थायि भवेत्।

(उ) एकं तत्वं अन्यतत्वस्य गुणैः स्वभावेनच सर्वथा भिन्नमेव भवेत्।

(ऊ) सृष्टिरचनायां द्वित्रिचतुराणि तत्वानि परस्परं मिलितानि

भवेयुः, तदा तेषां सम्मेलनं निश्चितानुपातेनैव भवति, तेषु न्यूनत्वं अधिकत्वं केनापि कर्तुं न शक्यं भवति । एतादृश-लक्षणलक्षितं तत्वमिति आधुनिकशास्त्रेषु कथ्यते । अस्माकं आकाशादिपंचतत्वेषु उक्ततत्वलक्षणेषु नैवैकमपि लक्षणं संगच्छते । पृथिव्यां न्यूनेभ्यो न्यूनानि द्वादशतत्वानि उपलब्धानि वर्तन्ते । जले उदजनऊष्मजननामकतत्वद्वयमुपलभ्यते । वायुरपि समीरनऊष्मजनतत्वद्वयसंभूतो दृश्यते । अग्नेस्तु तात्विकं अस्तित्वं नैव सिध्यति, परं शक्तेर्विवर्धितं स्वरूपमेवाग्निरिति-उच्यते । आकाशतत्वं तु एतादृशं आधुनिकतत्वविचिकित्सा-प्रसंगे लज्जितं भूत्वा शून्यत्वं गतं वर्तते नैव तस्यास्तित्वमुप-लभ्यते । सोयं पंचमहाभूतानां तत्ववादस्तु केवलं तर्कतुरंग-माधिष्ठित एव इतस्ततो दशसु दिक्षु मनोवेगेन भ्रमति न वास्तवतामधिरोहति । पृष्ठ २२ ॥ अस्मिन् समये सृष्ट्यां द्विनवति तत्वानि आधुनिकतत्वविद्भिरधिगतानि । यानि नक-दापि छेद्यानि वा भेद्यानि भवन्ति, नैतानि केनापि स्वीयभारा-यतनघनत्वरूपधर्मचतुष्टयेषु न्यूनाधिकत्वं कर्तुं शक्यानि भवन्ति सर्वाण्यपि परस्परतो भिन्नभिन्नगुणस्वभावप्रभावयुतानि विद्यंते । एतेषां संयोगव्यापारस्तु शास्त्रसिद्ध एव निश्चितो दृश्यते । तेषां पारस्परिकं सम्मेलनं नियताणुसंख्यया नियतानु-पातेनैव भवति । नैते कदापि स्वयं नियमात् प्रभ्रश्यन्ति । अस्माकं पंचभूततत्वानां तु नैतादृशी कापि स्थितिर्विद्यते अतस्ते तर्कनिमिताः कल्पनारूढा एव । पृष्ठ २३ ॥ अतः पंचभूतानि तु नैव तत्वानि अपि तु विकारा एव ।

५ पंचतन्मात्राणां विकाराः पंचभूतानि तु नैव तत्वानि इत्येवं ये भाषन्ते तैस्तावत् पंचतन्मात्राणां स्वरूपं दर्शयितव्यं, न हि पंचतन्मात्राणां स्वरूपं शारीरं उपलक्ष्यते, अतः शरीरं विना कथं तेषु गुणानां अस्तित्वं सिद्धं

भवति । " गुणाः शरीरे गुणिनां निर्दिष्टाश्चिन्हमेव च " इति न्यायेन शरीरं गुणिनं विना पंचतन्मात्राणां तेषु गुणाधिष्ठानत्वं कथं संभाव्यते । अत उच्यते कल्पनैवेयं तावत् पंचतन्मात्रत्वं नाम । पृष्ठ ४० ।

६ दोषा धातवो मलाश्चेति मूलपदार्थाः शरीरस्येति शास्त्रकथनस्य आधुनिकप्रयोगविज्ञानेन विचारे कृते नैव सत्यत्वं प्रतीयते ।

७ भारतीया दार्शनिका आत्मानामकं पदार्थं नित्यं, अविनाशिनं, अक्षयं, निर्विकारं, विभुं, व्यापकं, सनातनं, मन्यंते, तथा च सृष्ट्यां आत्मानं विना चेतनत्वं नैव प्रतिभातीति च वदन्ति । सजीवत्वं निर्जीवत्वं च आत्मशक्त्या-मेव निर्भरं विद्यते, अतएव 'खादयश्चेतनाषष्ठाधातवः पुरुषः स्मृतः' इत्युक्तम् । पंचतत्वं तु जडस्वरूपं चेतनारहितं विद्यते । अस्मिन् जडद्रव्ये चेतनाया-आत्मनो यदा प्रवेशो भवति तदैव तद्द्रव्यं सजीवमिति संज्ञायते । प्राणिनां शुक्रशोणिते गर्भाधानकारणद्रव्येऽपि निर्जीवे एव शास्त्रकारैः प्रोक्ते । आत्मा तु "स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मना-त्मानमात्मसंज्ञाहि गर्भे" । चरक शारीर अ. ३ ।

एवं प्रकारेण दार्शनिकैर्निर्जीवतत्वेभ्यो जीवनसत्ताया भिन्नत्वं समामन्य, तैः सह संयोगेन सजीवसंसारस्य रचना प्रदर्शिता वर्तते । परन्तु अस्मिन्काले विज्ञानविदो जीवस्य वा आत्मनः शरीरे बाह्यतः प्रवेशं नैव सत्यत्वेन मन्यन्ते । नैव वा एतादृशस्याऽत्मनः प्रवेशस्याऽवश्यकतापि प्रतीयते । अपितु आधुनिक-विज्ञानविदः प्रयोगैः प्रात्यक्षिकैः शरीरस्यात्मनश्च समवायसंबंधो नित्य एव प्रत्यहं पश्यन्ति यः संबंधः शरीराद्बहिर्वा पृथक्कर्तुं न शक्यः । अतो जीव-नशक्तिर्वा जीवनद्रव्यं केषांचन, द्रव्याणां विशेषसंयोगस्य परिणाम एवाऽद्यतने प्रयोगपरिपूते काले सम्मानितो भवति । अस्य जीवद्रव्यस्य प्रारं-भावस्थातु अत्यन्तसूक्ष्मस्वरूपेण भवति, या चक्षुर्ग्राह्या कदापि नैव भवति । इमे जीवकणा अत्यन्तसूक्ष्मस्वरूपधारिणो विद्यन्ते । एतेषामेव जीवकणानां परमसूक्ष्माणां मेलनेनैव अस्मिन् जगति स्थूलात् स्थूलतरं शरीरं प्रादुर्भूतं ।

मानुषं शरीरमपि एतेषामनन्तानां जीवकणानां समूह एव। अतो गर्भकाले शुक्रशोणितसंयोगे शुक्रशोणितयोर्विद्यमानानां स्वस्थावस्थितानां सजीवजीवाणूनां संयोगो भवति। येन मेलनेन गर्भस्थितिर्भवति। "अतो मातृतः पितृतो आत्मतः सात्म्यतो रसतस्सत्वत इत्येभ्यो भावेभ्यः समुदितेभ्यो गर्भः संभवति"। एतच्चरकवचनमपि सर्वं असिद्धमेव। पृष्ठ ४५॥

सृष्टौ केवलं पदार्थश्च शक्तिश्चेति द्वावेवोपलभ्येते। शक्तिस्तु पदार्थाश्रयिणी विद्यते। पदार्थास्तु द्विनवति, सृष्टयां विद्यन्ते। पदार्थेषु विशेषविधिद्वारा शक्तिर्निर्मिता भवति। एवमेव केषामपि तत्वानां विशेषेण रासायनिकसंघटनेन जीवनाम्नी शक्तिः प्रादुर्भवति। वस्तुतस्तु जीवनमपि भौतिकघटनारूपमेव विद्यते। पृष्ठ ४७॥

१ पोषणं, २ अभिवृद्धिः, ३ गतिमत्वं, ४ संतानजननं इत्येते सजीवत्वावच्छेदका विशेषा विद्यन्ते। इमे विशेषास्तु सर्वस्मिन्नपि सजीवशरीरेषु समाना एव दृश्यन्ते। सूक्ष्मशारीररचना तु सर्वेषां वृक्षकीटपशुमानुषादीनां समानैव। शुक्रं शोणितमपि एतादृशजीवकणसंपन्नं विद्यते। ये जीवकणाः पोषणादिविशेषत्वधारका विद्यन्ते। अतः शुक्रशोणितयोरेव सजीवत्वे विद्यमाने अन्यस्य कस्यापि शरीराद्बहिर्वर्तमानस्यात्मनः सजीवत्वहेतोः शरीरप्रवेशस्यावश्यकतापि नैव प्रतिभाति " अतः गर्भस्तु खलु आंतरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः " इत्येतदपि नैवावश्यकम्। पृष्ठ ५४॥

अत ऊर्ध्वं दोषाणां शरीरे योऽभिसंबंध आयुर्वेदेनोक्तः स कथं अयुक्तस्तदपि प्रयोगवादसाहाय्येन पश्यामः। तत्र वातस्य " रौक्ष्यं, लाघवं, वैशद्यं, शैत्यं, गतिः, अमूर्तत्वं चेति वायोः आत्मरूपाणि "। पित्तस्यः– " औष्ण्यं, तैक्ष्ण्यं, लाघवं, अनतिस्नेहो, वर्णश्च शुक्लारुणवर्ज्यो, गंधश्च विस्रो, रसौ च कटुकाम्लौ, इति पित्तस्य आत्मरूपाणि"। श्लेष्मणः–" स्नेहशैत्यशौक्ल्यगौरवमाधुर्यमान्द्यानि श्लेष्मण आत्मरुपाणि "। तत्र के इमे वातपित्तश्लेष्माण इति नैव ज्ञायते। तथा " बस्तिः, पुरीषाधानं, कटिः सक्थिनी

पादावस्थीनि, वातस्थानानि । स्वेदो, रसो, लसीका, रुधिरमामाशयश्च, पित्त-स्थानानि । उरः, शिरो ग्रीवा, पर्वाण्यामाशयो, मेदश्च, श्लेष्मणः स्थानानि"। तथा हृदयादिस्थानानि प्राणादिपंचप्रकाराणां वायूनां कथितानि विद्यन्ते । अस्मिन् वर्णने प्राणव्यानयोस्स्थानं हृदयमुक्तं । तथा अपानोऽदानयोर्नाभ्युरु-स्थाने दर्शिते । एकैकस्मिंस्थाने द्विप्रकारस्य वायोर्वसातिरेकेकोषे खड्गद्वयवन्नि-र्दिष्टा । सा तथैवायुक्ता अचरितार्था च । "किट्टान्मूत्रस्वेदपुरीषवातश्लेष्माणः" इत्याद्युक्तं तदपि सर्वथा ' आत्मावै जायते पुत्रः ' इत्यादिवदेव दृश्यते, नैव तस्य संगतिरात्रेयेणोक्ता । तथैव पंचमहाभूतेभ्य एव शारीरा वातपित्त-कफा उत्पन्नाः । वायुतत्वात् वातदोषः, अग्नितत्वात् पित्तदोषः यत्र कुत्रापि जलतत्वतोऽपि पित्तस्योत्पत्तिरुक्ता दृश्यते तत्कथं संगच्छते ? जलतत्वं अग्नि-तत्वतो सर्वथा विपरीतं, अतोऽग्न्युद्भवं पित्तं उष्णं, तथैव जलोद्भवं पित्तं शीतलं भाव्यं, परं पित्तं उष्णमेवोक्तं इति वैसदृश्यं दृश्यते । जलतत्वतः श्लेष्मापि संभूतः । इति भूतत्रयात् त्रयाणां दोषाणां उत्पत्तिर्गदिता वर्तते । परं आका-शपृथ्वीभूताभ्यां नैव कस्यापि दोषस्योत्पत्तिरुक्ता । किमर्थं ते भूते निपुत्रिके कृते शास्त्रकारैरिति विचारणीयम् । उपरि यानि दोषाणां आत्मरूपाणि गदितानि तान्येव तेषां गुणाः अन्यत्र कथिताः । अतो द्रव्यं गुणाश्च किं एकमेव वस्तु वर्तते ? सर्वथा शास्त्रविरुद्धं असंगतं चैतत् । शास्त्रेण तु " द्रव्य-कर्मभिन्नत्वे सति सामान्यवान् गुणः " ( वैशेषिकदर्शनं ) इत्युक्तम् । तथा वाताग्निजलानां वातपित्तश्लेष्माणः परिणामितरूपा उत्पद्यन्ते भिन्नस्वरूपाः तदा न हि वायुरूपो वातदोषः, पित्तं अग्निरूपं, कफश्च जलगुणः । तदा कथं तेषां वाय्वाग्निजलानां त एव गुणाः भिन्नरूपेषु वातपित्तकफदोषेषु संक्रामयेयुः । यदि कारणस्थितगुणाः कार्येपि संगता भवेयुस्तदा सृष्ट्यां गुण-वैभिन्न्यं कथं दृश्यते वा ज्ञायते ? गुर्वाद्या ये विंशतिर्गुणाः शरीरस्यायुर्वेदे उक्तास्ते अस्मन्मतेन नैव गुणा भवन्ति । यथा गुरुता, लघुता, च गुणा उक्तास्तथा शीतता, उष्णता, च । न हि एतद्द्वंद्वं पार्थक्येन ग्रहीतुं योग्यं, यथा गुरुताया अभाव एव लघुता, शीतताया अभाव एव उष्णता, अत्र गुणपार्थक्यं निरर्थकम् ।

तथा वायुदोषो रूक्षः शीतलश्च उक्तः । सांप्रतं विज्ञानप्रयोगेण वायौ अन्यद्रव्यस्य संयोगेन उष्णता रूक्षता तथा शीतलता संक्रामितुं शक्यते, अतो वायोर्न हि इमे आत्मरूपा गुणाः । तथा पित्तमपि स्निग्धं, उष्णं, तीक्ष्णं, लघु, इत्यादि गुणयुक्तं आत्मस्वरूपमपि । अतो यदात्मस्वरूपं तत्कथं गुणरूपं भवेत् ? गुणास्तु द्रव्यात्सर्वथा भिन्ना एव । तथा पित्तं स्नेहगुणयुक्तं उक्तं तत्तु नैव युक्तं, नैव पित्तं स्नेहगुणयुक्तं, अपि तु स्निग्धपदार्थपाचकं वर्तते । यदेव स्निग्धं भवेत् तत्कथं स्नेहपाचकं स्यात् ? पित्तं तु यदा स्निग्धपदार्थमिश्रितं भवति तदा तस्मिन् क्षारीयता प्रतीयते न हि माधुर्यं फेनभावश्च । तथा पित्तस्य उष्णता गुणः प्रोक्तः सोपि नैव युक्तः । तथा पित्तेन शरीरोष्णताऽभिरक्षिता भवतीत्युक्तं तदपि नैव संगतं । तथा पित्तं लघु इति कथितं तदपि अयुक्तमेव । तथा श्लेष्मणो यान्यात्मरूपाण्युक्तानि तान्येव गुर्वादिविंशतिद्रव्येषु समाविष्टानि विद्यन्ते, तथा कथं तानि आत्मरूपाणि; कथं नैव ते गुणाः ? । अतः प्रथममिदं वेदितव्यं यत् त्रिदोषाः शरीरस्य कारणमिति नैव सिद्धं भवति । द्वितीयं तु त्रिदोषाणां ये आत्मरूपत्वेन पठितास्त एव अन्यत्र गुणा उक्ताः तथा त एव प्रकुपितलक्षणान्युक्तानि । ( पृष्ठ ५५-७७ ) द्रवता, सूक्ष्मता, लघुता, वायोः, द्रवता, कटुता, अम्लता पित्तस्य, स्निग्धता, शुक्लता, मधुरता, पिच्छिलता कफस्य, स्वरूपबोधका विद्यन्ते । यदि च एते गुणास्तदा कान्येतेषां प्रकोपलक्षणानि ? यदि सूक्ष्मलघ्वादीनां यदा प्रकोपो भवति, किं तदा शरीरं सूक्ष्मं लघु च भवति ? उत्पतनकर्मकारी भवति ? । यदा पित्तस्य द्रवाम्लकटुकादीनां प्रकोपो भवति तदा शरीरं जलमयं भवति ? वा अम्लं कटु च भवति ? एवमेव श्लेष्मणो विज्ञेयम् । आधुनिकसमये उक्तानां दोषाणां शरीरे कोऽपि संबंधो नैव लभ्यते । तथा न हि एते देहाः त्रिदोषजनिताः । शास्त्रे बस्तिः, पुरीषाधानं, कटिः, सक्थिनी, पादावस्थीनि वातस्थानानि इति यदुक्तं, एतेषुस्थानेषु न किमपि स्थानं विद्यते यस्मिन् वातो निवसति, नवा वातनिवासयोग्यमेतेषु एकमपि स्थानम् । पृष्ठ ८३ ॥

पित्तविषयेपि एतदेवयत् यकृति विद्यमानायाः पेश्याः सकाशान्निर्गच्छन् यः पाचकरसः, यस्य रचना यकृदवयवरूपा एव विद्यते, तदेवपित्तं, नैवा-

न्यत्पाचकं, रंजकं, भ्राजकं, आलोचकं, साधकं, पित्तं । वस्तुतस्तु यद्द्रव्यं शरीरे मूलत एव नैव विद्यते तत्कथं दृष्टं भवेत् ?। पृष्ठ ८९ ॥

श्लेष्मणः स्थानं हृदयं, प्राणवायोः स्थानं हृदयं, साधकपित्तस्य स्थानमपि हृदयं, किं हृदयं एतादृशं धर्मनिवासस्थानम् ( धर्मशाला ) 'नूरमहलसरायम्' विद्यते । यस्मिन्नेकैकस्यां हृदयप्रासादकोष्ठयां वा एकस्मिन्नेव हृदयभवने सममेव वसन्ति ? यदि एककालमेकत्र निवासिन एते दोषा भवेयुस्तदा हृदयावयवस्योपरि किमत्यहितमापतिष्यति ?। श्लेष्मणस्तु स्वस्थमानवशरीरे नैवकिमपि किंचिन्मनागपि चिन्हं दृश्यते । अस्वस्थदशायां तु नासामुखगुद-योन्यादिमार्गेभ्यः स्रवन्तं कमपि पदार्थं पश्येयुर्यं मूढाः कफ इति वदेयुः । श्लेष्मणो यः स्रावो वहमानो दृश्यते सतु शरीरस्थायाः श्लेष्मकलाया विकृति-सूचको विद्यते । न शरीरकारणभूतः कोपि कफरूपः पदार्थः । अतः शरीरांगेषु न कफस्य नवा पित्तस्य किमपि स्थानं विद्यते । पृष्ठ ९४ ॥

तथैव रोगा अपि दोषसंभूता इति यदायुर्वेदे प्रोक्तं तदपि सर्वथा असंगतमेव, न हि रोगाणां दोषैस्सह कोपि संबंधः । पृष्ठ १०४ ॥

द्रव्याणां शीतोष्णरुक्षश्लक्ष्णादिभिन्ना गुणाः भिन्नाः प्रभावाश्च भिन्नाः प्रकृतयो विद्यते । प्रतिद्रव्ये प्रकृतिश्च गुणश्चेति विद्येते द्वे शक्ती, प्रभावो गुणेन्तर्भूतो भवति । अतः प्रकृत्याः स्थाने वातपित्तकफानां निवेशनं कृत्वा द्रव्यप्रकृत्याः स्वरूपमेव विकृतं कृतं । अस्माभिस्तु द्रव्यप्रकृत्या शरीरप्रकृतौ विकृतिर्भवतीति सत्यत्वेन ज्ञातव्यम्। शरीरापेक्षया न्यूनोष्णतां शीतमिति अधि-कोष्णतां ऊष्णमित्यभिधातव्यम् न वातपित्तकफा इति मन्तव्यम् । पृष्ठ १०७॥

षड्रसाः—पंचमहाभूतोत्पन्नास्त्रिदोषाः शास्त्रकारैः प्रोक्ताः । तथा षड्रसा अपि पंचमहाभूतोत्पन्ना इति प्रोक्ताः । तथा यैर्यैरसैर्वात पित्तकफानां प्रकोपः शमश्च भवति तदपि शास्त्रकारैर्दर्शितम् । तथा षड्रसा अपि परस्पर-विरुद्धगुणाः सन्तः परस्परशामकाः कथिताः । तथा रसज्ञानं जिव्हास्पर्श

एव ' रसो निपाते द्रव्याणाम् ' ' इत्यनेन उक्तम् । परं केवलं रसास्वाद-ज्ञानं जिव्हानिपातेनैव रसस्य न भवति, अपि तु रसयुक्तद्रव्यं मुखे प्रक्षिप्तं यदा मुखद्रवेण संयुक्तं वा संमिश्रं भवति, तदैव रसास्वादज्ञानं जायते। न केवलं रुक्षं द्रव्यं सुवर्णरजतादि मुखे निपतितेऽपि नैव स्वदयति । अतो ' रसो निपाते द्रव्याणां ' इदमपि परास्तमेव । पृष्ठ १२७ ॥

शास्त्रकारैरूर्ध्वं षड्रसानां अस्तित्वं स्वीकृतं । परंतु मनोविज्ञान-पंडितैस्तु मधुराम्ललवणकटुकाश्चत्वार एव रसा विद्यन्ते इति निर्धारितम् । कषायतिक्तौ रसौ न वास्तवत्वेन । तथा द्रव्याणां ये विंशतिर्गुणा उक्ताः तेऽपि वास्तवत्वेन पदार्थानां भौतिका गुणा एव, न ते पदार्थानां रासायनिका-गुणाः । तथा तेषां शीतोष्णादि, न वीर्यं, अपि तु गुणा एव । तथैव द्रव्याणां, रसानां, वा गुणानां, त्रिदोषैः सह यः संबंधः शास्त्रकारैः प्रोक्तः, स सर्वथा असिद्ध एव प्रतिभाति त्रिदोषाणामसिद्धत्वात् । प्रकृतिरपि वातपित्तक-फैर्युक्ता भवतीति न सत्यं, अतः पूर्वं शास्त्रकारैर्यस्त्रिदोषवादः स्वीकृतः, स तु पूर्वस्मिन्समये साधनानामभावात् पर्याप्त आसीत्, अधुना तु त्रिदोषवादः सर्वथा असिद्धत्वात् अनुपयोगित्वादशास्त्रीयत्वाच्च सर्वथा त्युक्तं योग्य एव।२१६॥

एतावता त्रिदोषमीमांसानाम्नि पुस्तके स्वामीहरिशरणानन्दैः सर्वमपि पौरस्त्यं तत्वज्ञानं अज्ञानजल्पितमिति कथितम् । १ भौतिकतत्वसंयोगोभ्दूतं चैतन्यं, तदन्यथा नैव कश्चिदन्यश्चैतन्यकंदो ईश्वरः, २ न पुनर्भवः, ३ नवा भूतानि पृथिव्यादिपंचसंज्ञकानि, ४ नैवेदं दृश्यमानं भौतिकं पंचभूतोत्पन्नं, ५ नैव त्रिदोषा, वातपित्तकानाम, न वा ते भूतोत्पन्नाः, ६ नैव मधुरादिरसाः षट्, ७ आयुर्वेदोपवर्णिता रसविपाकवीर्यप्रभावा नैव तथा, । इदं सर्वमपि अज्ञानकालप्रोक्तं साधनहीनं ऋषिजल्पितं, सर्वथा असत्कल्पनामयं आधुनिकप्रत्यक्षविज्ञानप्रयोगासिद्धमप्रयोजकमनर्थावहं सर्वथा त्याज्यमेवेति स्वामिकृतग्रंथतात्पर्यम् ।

पौरस्त्यानां सर्वदार्शनिकः सिद्धान्तः पंचमहाभूतोत्पत्तिमत् सर्वं

जगदिति । न तत्र एकोऽपि दार्शनिको व्यभिचरति । अस्तुनाम आस्तिको नास्तिको वा । तथैव चैतन्यं तु नैव भूतसंयोगजनितं, किंतु भूतभौतिकेभ्यस्तथातत्संयोगेभ्यः पृथगेव सनातनमनिर्वचनीयं स्वयंसिद्धं किमपि वस्तु इति चार्वाकदर्शनातिरिक्तान्यदार्शनिकसिद्धान्ते वर्तते । त्रिदोषा अपि सेन्द्रियसृष्ट्युत्पादने चैतन्यसंयोगसंयुक्तानां पंचमहाभूतानां निरिंद्रियाणां अचेतना चेतनासंयोगजः कोऽपि मूलभूतः सेन्द्रियः सचेतनो विपरिणाम इति आयुर्वेदीयं मतम् । अतस्स्वामिमहाभागजल्पितं सर्वदार्शनिकतत्वोच्छेदकमिति सर्वेऽपि भारतीया वैद्या दार्शनिकाश्च तत्प्रबंधखंडने बद्धादरा बभूवुः ।

अस्माभिरपि निमित्तमेतदिति पुरस्कृत्य वाराणस्यां एका अपूर्वा पंचमहाभूतत्रिदोषचर्चापरिषत्समारब्धा ? प्रथममेकं स्वागतमडलं स्थापितम्, यस्य प्रधानमंत्रिणो मान्या विद्वद्वरेण्या जादवजी त्रिकमजी आचार्याः संजाताः । उपमंत्रिणस्तु आयुर्वेदाचार्याः सांख्यन्यायव्याकरणतीर्था दिल्ली आयुर्वेदयुनानीतिब्बीविद्यालयाध्यापकाः प्रथितनामधेया उपेन्द्रनाथदासास्तथा लवपुरस्थदयानन्दायुर्वेदिकविद्यालयप्रमुखाः सुरेन्द्रमोहन बी. ए., तथा एकोऽहमपि एते नियुक्ताः । प्रथमं श्रीमद्भिर्जादवजीमहाभागैर्वाराणस्यां गमनं मयासह कृत्वा स्वागतसभापतिपदार्थे परममान्या विश्वभूषणा महामनसः पंडित मदनमोहन मालवीयाः संप्रार्थिताः । परिषदर्थे हिंदुविश्वविद्यालयीनं स्थानमपि । तैस्तु सानन्दोल्हासं द्वयमपि संप्रश्रितम् । सजातोत्साहभरैर्जादवजीमहाभागैर्वाराणशीस्था दार्शनिकमूर्धन्यास्तथा आयुर्वेदपारदृश्वानो भिषक्श्रेष्ठाः, प्रतीच्यपंडितप्रकांडा अपि परिषत्कार्यसिध्यर्थं सर्वथा सहाय्यदाने सादरं अभ्यर्थिता बभूवुः । वाराणशीस्थैर्विद्वत्प्रकांडमूर्धन्यैः सर्वैरपि परिषत्कार्यं स्वीयमिति मन्वानैस्साश्वमासिता आचार्या अभूवन् । ततश्च मोहमय्यां समागत्य पत्रव्यवहारेण आभारतप्रथितनामधेयास्तत्तत्प्रांतालंकृतयो दार्शनिका, भिषग्वराः प्रतीच्यपंडिता अपि परिषत्कार्यार्थं संप्रार्थिताः समाहूताश्च । तथैव परिषदि चर्चायोग्या विषया अपि प्रथममेव सर्वभारतश्रेष्ठपंडितवरेण्यमतानुकूला एव निर्धारिताः । तथैव पंचमहाभूतपरिषदः सभापतयः

परमविद्वांसस्तपोनिष्ठा वाराणसीहिंदुविश्वविद्यालयस्थप्राच्यविद्यालयप्रधानाधिपतयो वृद्धाः पंडितप्रकांडाः पंचाननतर्करत्ना महता प्रयासभरेण निर्धारितास्तथा त्रिदोषचर्चापरिषदध्यक्षा महामहोपाध्याया भारतभिषङ्मूर्धन्या गणनाथसेन-सरस्वतीमहाभागाश्च । तथैव उभयोरपि परिषदोर्मध्यस्था निरीक्षका अपि भारतभूषणभूता पंडितास्तथा प्रतीच्यभौतिकविद्यापारदृश्वानो, मान्याश्च विद्वत्श्रेष्ठा भिषजस्तथा दक्षतराश्च प्रवीणा नियोजिताः । परिषन्निमित्तं आभारतीयाः प्रथितविद्यावयश्चरिताः पांडित्येन, कीर्त्या, च दुदुंभितदिक्कालाः प्रायशः सर्वेऽपि भिषक्श्रेष्ठाः पंडितगरीयांसो दार्शनिकास्तथा भौतिकविद्या विशारदा अपि निमंत्रिता अभवन् । परिषत्कालोऽपि १९३५ तमांग्लशाकीय-नोव्हेंबरमासस्य द्वितीय ( २ ) तारिकां आरभ्य अष्टम ( ८ ) तारिकापर्यंतं सुनिश्चितः कृत आसीत् । तत्सर्वमपि पुरस्तात् सविस्तरमुपवर्ण्यते । इयं च परिषद् पौर्वात्यप्रतीच्यज्ञानविज्ञानवादिनां सृष्ट्युत्पादनोपादानकारणभूतानां तत्तदभिज्ञातशास्त्रीयतत्वानां समन्वयार्थमेव यदि निमंत्रिताऽभवत् तदा पौर्वात्यज्ञानविज्ञानवादिभ्यः प्रतीच्यभौतिकशास्त्रप्रतिपादितसृष्ट्युत्पादनोपादा-नकारणीभूततत्वानां प्रक्रियाज्ञानमावश्यकमिति मनसि विचार्य प्रथमं आधु-निकपरमाणुवादनामिका कापि ऱ्हस्वा पुस्तिका “ आयुर्वेदाचार्य दत्तात्रेय अनंत कुलकर्णी एम्. एस्. सी. प्रोफेसर आयुर्वेदिक कॉलेज हिन्दू विश्व-विद्यालय काशी ” इत्येतेभ्यः संपाद्य प्रकाशिता । सर्वेभ्यः प्राच्यपंडितवरेभ्यः परिषत्कालात्पूर्वमेवोपायनी कृता ।

## तस्यां अधोनिर्दिष्टाः विषयाः समागता वर्तन्ते ।

### आधुनिकपरमाणुवादतात्पर्यम् ।

अस्यां सृष्टौ ये असंख्यास्सजीवनिर्जीवपदार्थास्सन्ति ते सर्वेऽपि द्विनवतिमूलतत्वसंयोगेनैव समुत्पन्ना इति वैज्ञानिकैराधुनिकैर्निश्चित्य प्रतिपादि-तमस्ति । समस्ताः पदार्था **मूलतत्वे रासायनिकयौगिकैस्तथा भौतिकामिश्र-**

**णेन** त्रिधा विभक्ता दृश्यंते । **तन्मूलतत्त्वं** भवति यस्य पदार्थस्यांतिमविश्लेषणेऽपि अंतिमे अंशे तएव परमाणवो विद्यन्ते ये च स्थूलरूपे तस्मिन् पदार्थे दृश्यन्ते यथा सुवर्णताम्रपारदगंधकादिपदार्थाः । अतश्च एते मूलतत्वानीत्युच्यन्ते । **रासायनिकयौगिकाः** पदार्थास्ते उच्यन्ते ये पूर्वोक्तैर्मूलतत्वैरेकाधिकैरेकाधिक-परमाणुसंयुक्तास्सन्तो उत्पद्यन्ते, तथा येषु अवयवीभूतानि मूलतत्वानि अविच्छिन्ननियमप्रमाणनिष्पन्नानि भवन्ति । **भौतिकं मिश्रणं** तन्निरुच्यते यस्मिन् पदार्थे नैव रासायनिकसंयोगो, नैव वा तदीयावयवेषु विशिष्टा निष्पत्तिर्भवति इत्यादि ।

यथा वालुकाशर्करयोः केनापि प्रमाणेन मिश्रीकृतयोर्मिश्रणमेव भवति न रासायनयौगिकं । परं रासायनिकयौगिकं तु सर्वथा भिन्नमेव । रासायनिक-यौगिकपदार्थनिष्पत्तौ अनुकूलाया परिस्थित्या आवश्यकता विद्यते । अस्मिन्पदार्थे अवयवेषु विशिष्टा निष्पत्तिर्भवति ।

जाते च संयोगे संयुक्तावयवानां पार्थक्यं वालुकाशर्करावत् सारतयैऽव कर्तुं नैव शक्यते । तथैव संयुक्तावयवेषु स्वकीयमूलगुणधर्मनाशो भूत्वाऽन्य-गुणधर्माणां समुद्भुतिः संयोगेन उत्पन्ना भवति । यथा सुधाश्मनस्तोयेन चूर्णरूपभवनं भवति, प्राप्तचूर्णरूपस्य तस्य पुनरपि सुधाश्मत्वरूपप्राप्तिः सारल्येन नैव शक्यते, संपद्यते च सुधाश्मनचूर्णस्य गुणपार्थक्यम् । इयं सुधाश्मनचूर्णरूपापादनक्रिया रासायनिकक्रियेति निरुच्यते । कापि रासा-यनिका क्रिया तापेन, कापि पूर्वं कृतसंयोगेन, पश्चात्तापेन भवति । यथा-पूर्वं रसगंधककज्जलिसंयोगादेव पश्चाद्दत्तत्तापाद् रससिंदूरनिष्पत्तिः । एतेनेदं निष्पन्नं भवति यद्रासायनिकसंयोगे पदार्थानां एकीकरणस्यावश्यकता विद्यते इति । इदमेकीकरणं जलेन कदा कदा निष्पद्यते । यथा [ वाशिंगसोडा ] चिंचाम्ल ( टार्टरिक ॲसिड ) द्रव्ययोः शुष्कयोः कृतमिश्रणेन नैव किमपि निष्पन्नं भवति । परंतु तस्मिन् मिश्रणेन कृतजलाभियोगेन सोडारूपं चिंचा-म्लस्याम्लत्वं नष्टं भूत्वा भिन्नगुणधर्मयुतस्य पदार्थस्य पात्रे निष्पत्तिर्जायते ।

तथा कश्चन वायुः ( ग्यॉस ) वायुमंडले समाविष्टो भवति । भवतु । काऽपि रासायनिका क्रिया सूर्यप्रकाशेन, काऽपि विद्युत्साहाय्येन संपन्ना भवति । कदा कदा इयं रासायनिका क्रिया केवलेनाऽघातेनापि निष्पन्ना भवति । यथा दारुगोलकस्य यंत्रात् ( बंदुक वा तोफ ) विनिर्गतस्य प्रदत्तवेगेनोत्पन्नाघातस्य अग्निरूपतां प्राप्तस्य पश्चात् प्राप्तवायुरूपस्य ( ग्यॉस ) वेगेन निर्गमनं ( केवलेनाघातेनैव संपन्नमेतद्भवति )। एतेन रासायनिकयौगिकपदार्थानां केषामपि अनुकूलायां परिस्थितौ संयोगो भवतीति न वेद्यं, किंतु एतेषु पदार्थेषु पारस्परिकायाः प्रीत्या अपि विद्यते आवश्यकता। [केमिकल एफिनिटी] सा यदि नैव विद्यमाना भवेत्तदा त्रिकालेऽपि एतेषां संयोगो नैव कर्तुं शक्यते । यदि च सा प्रीतिः सुप्तावस्थायां स्थिता स्यात्तदा तस्यां परिस्थितिपरावर्तनेन संपाद्य जागरूकतां पश्चाद्रासायनिका क्रिया कर्तुं शक्यते । प्रीत्याभावे नैव भवति पारस्परिका रासायनिकी क्रिया ।

अन्यदपि, अस्मिन् रासायनिकसंयोगे इदं विशेषेणावधार्यम् । यत् रासानिकसंयोगे पदार्थेषु भारः, आयतनं, आकारमानं, तौलं च नियतमेव पारस्परिकं समुपलभ्यते । यथा जले हैड्रोजनः भागद्वयात्मकः आक्सिजनः षोडशभागात्मक एव विद्यमानो भवेत् । आयतनेन, आकारमानेन च जले भागद्वयात्मको हैड्रोजनग्यॉसः । एकभागात्मकश्च ऑक्सिजननामको ग्यॉसो विद्यमानो भवति । जले विश्लेषिते सति तस्मिन् हैड्रोजन ऑक्सिजन नामवायू निष्पद्येते । तथा निष्पन्नस्याक्सिजननामकवायोः आकारमानं एकमिति सम्मानितं चेत्, संप्राप्तस्य हैड्रोजननामकवायोः आकारमानं द्विगुणं भवेत् । तथा संप्राप्तस्य हैड्रोजननामकवायोस्तौलमेकमिति संज्ञायेत तदा प्राप्तस्य ऑक्सिजनतौलमष्टगुणं भवेत् । आयतनतौलयोरनुपाते स चायं भेदः । हैड्रोजननामकवायोरपेक्षया ऑक्सिजननामको वायुः षोडशगुणात्मको विद्यते इति । अनयोर्वाय्वोर्यदि पुनरपि रासायनिके संयोगे कृते अष्टादशभागात्मकं जलं निष्पन्नं भवेत् । एतन्मानापेक्षया भिन्नपरिमाणेन कृतसंयोगाभ्यां एताभ्यां वायुभ्यां निश्चितप्रमाणोत्पत्तिमत् जलं निष्पन्नं भूत्वा यस्य वायोः परिमाणाद-

धिकामात्रा उर्वरिता भवेत् सा तथैव स्थिता भवेत् । तथा हैड्रोजनाक्सिजननामकौ द्वौ वायू ( ग्यॉस ) स्वकीयान् मूलभूतान् ज्वालाग्राहीज्वलनपोषकादिगुणान्, तथा एतयोर्भौतिकमिश्रणोत्पन्नं स्फोटकगुणं च रासायनिकसंयोगे परित्यज्य जलरूपोद्भवनेन ज्वलननाशकगुणान्तराधानं स्वीकुरुतः, तथैव प्राप्तजलरूपं पुनरपि रासायनिकपृथक्क्रियां विना नैव परित्यजतः । तथा प्राप्तपृथक्करणावस्थायां इमे रासायनिकयौगिकाः अवयवीभूततत्वानां गुणधर्मान् नैव प्रत्यक्षीकुर्वन्ति । उत रासानिकयौगिकोत्पन्नगुणान्नेव धारयन्ति । सर्वेषामेव रासायनिकयौगिकानां इयमेव स्थितिर्भवति । भौतिकमिश्रणे तु अवयवीभूततत्वानां गुणाः प्रत्यक्षा भवन्ति ।

**अणुः**--तथा यस्य द्रव्यस्य ( रासायनिकयौगिकस्य ) कमपि छिन्नमंशं गृहीत्वा तस्य अंशांशीकरणेन या सूक्ष्मतमावस्था प्राप्यते, यस्यां विभाजितपदार्थस्य गुणधर्मास्समुपलब्धा भवन्ति । अतःपरं तस्य विभाजने कृते तद्गुणधर्मनाशो भूत्वा अवयवीभूतमूलतत्वानां गुणधर्माः समुपलभ्यंते । एतादृशपदार्थांशं वैज्ञानिकाः अणु इति भाषन्ते ।

**परमाणुः**—तथा अस्यैव कल्पनागम्यस्य सूक्ष्माणोर्ज्ञापितमूलतत्वगुणस्य रासायनिकविधिना विच्छेदने संपादिते पदार्थगुणा नष्टा भवन्ति तथा संयुक्तरूपस्थितमूलतत्वानां निश्चितसंख्यास्थिता अंशा दृश्यंते, त एव परमाणव उच्यंते । एतेषां स्वरूपं सूक्ष्मदर्शकयंत्रेणापि नैव दृश्यते । नैते परमाणवो विच्छेत्तुं शक्या भवन्ति । अतएव परमाणवो मूलतत्वस्य अंतिमस्वरूपमिति उच्यते । यस्मिन्स्वरूपे स्थिताः संतो रासायनिकक्रियासंयुक्ता भूत्वा यौगिकरूपधारणे ते सिद्धा भवन्ति । परमाणुविषये अन्यदपि अत्रधार्यमाणमेतद् वर्तते यत् परमाणवो न हि स्वतंत्रतयाऽस्तित्वं धारयन्ति । व्यक्तिरूपाः परमाणवो न हि दृष्टा भवन्ति । प्रत्युत ते संयुक्तावस्थावस्थिता यौगिकेषु अणुरूपत्वेनैव विद्यमाना वर्तंते । शुद्धे मूलतत्वे यस्याणौ एकरूपा एकप्रकारकाः परमाणव एव स्थिता भवेयुस्तास्मिन् एकाधिकपरमाणवस्संयुक्ताः

संतस्तस्य तत्वस्य अणुत्वं निर्मापयन्ति । अतस्तत्वं वा यौगिकं वा भवतु तस्यास्तित्वं अणुरूपत्वेनैव स्थितं भवति, न परमाणुरूपत्वेन । यथा ऑक्सिजन-तत्वस्य एकोऽणुस्तस्यैव परमाणुद्वितीयसंयुक्तो भवति । एवमेव सर्वाणि वायवीयमूलतत्वानि तेषां परमाणुद्वयेनैव संयुक्तानि भवन्ति । अतएव तानि तत्वानि परमाणुद्वितयसंयोगसंयुक्तनिदर्शकसूत्रेण सूत्रितानि भवन्ति ।

रासायनिकशास्त्रानुसारेण समस्तोऽयं विश्वसंसारो द्विनवतितत्वैः संभूतो वर्तते । एतेषां तत्वानां वारंवारं शास्त्रव्यवहारार्थं उच्चारणमावश्यकमेवापतति ।

इमानि तत्वानि कुत्र लभ्यंते ? शुद्धावस्थायां इमानि कथं लभ्यंते ? एतेषां स्वाभाविकगुणधर्माः के वर्तन्ते ? तथैव एतेषां व्यावहारिकोपयोगः कथं भवति ? इतरैः भिन्नभिन्नतत्वैः संयुक्ताः संत एते अनेक प्रकारा यौगिकाः कथं भवन्ति ? तथैवेतेषां यौगिकानां कथं वा भवति गुणधर्मः ? इत्येतेषां सर्वेषामेव विचारविवरणं वारंवारं कर्तुं आवश्यकं भवति । अत एतेषां तत्वानां वारंवारं नामोल्लेखस्तथा एतैः प्रादुर्भूतानां यौगिकानामपि वारंवारं नामोल्लेखः शास्त्रावश्यको भवति, अतो लेखने, वा भाषणे, सौकर्यार्थं भिन्नभिन्नानां तत्वानां वैज्ञानिकैर्नामसंकेतस्तेषां नामाद्याक्षरैः, तथा नामस्थितमहत्वपूर्णाक्षरैः कृतोवर्तते । तथैव यौगिकेषु प्रतिष्ठितमूलतत्वानां अणुषु नियतपरमाणुसंख्याज्ञापकानि, उच्चारणे, लेखने, परिज्ञाने च सुलभानि, सूत्राण्यपि संख्यासूचकांकैः संकेताक्षराधस्ताद्दक्षिणभागैः लिखितैः प्रदर्शितानि भवन्ति । तथा च अनेकानां पदार्थानां पृथक्करणे कृते वैज्ञानिकैर्विज्ञातं—यत्, "केपि नियताः परमाणुसमूहाः अनेकेषु पदार्थसूत्रेषु अविच्छिन्नस्वरुपेणोपलब्धा भवंति । ते समूहा वैज्ञानिकैर्**मूलक**संज्ञया संज्ञिताः । रसायनशास्त्रे एतादृशा **अनेके मूलका** विद्यन्ते ये यौगिकौत्पत्तौ परमाणुसदृशाः वर्तनं कुर्वन्ति अतोपि ते मूलका इत्युच्यन्ते ।

परमाणवस्तु अत्यन्तं सूक्ष्मास्तथा अविभाज्यांशा वर्तन्ते । तथा रासायनिकक्रियायां एते एव व्यापारं कुर्वन्तीति प्रोक्तमेव । एते अत्यन्तं सूक्ष्मा यद्यपि तथापि जडपदार्थानामेव अंशा ह्येते इत्यतस्तेषां कोऽपि **भार** आव-

श्यक एव । अयं हि **भार** एतादृशःसूक्ष्मो वर्तते यः कयापि तुलया तुलितुं अशक्य एव । तथापि समस्ततत्वेषु हैड्रोजनतत्वं अत्यन्तं लघु वर्तते । अतोऽस्य किमप्यायतनं स्वीकृत्य यदि तोलनं कृतं तदा तत्समानपरिस्थित्यात्मकस्यान्यतत्वस्य तदेवाऽयतनं गृहीत्वा कृते तोलने तदन्यत्तत्वं हैड्रोजनतत्वस्यापेक्षया कियद्गुरुभारात्मकमिति ज्ञायते। यथा हैड्रोजनापेक्षया ऑक्सिजनद्रव्यं षोडशगुणभारात्मकं वर्तते । अत एव निर्गलितं भवति यत् समाने आयतने द्वयोरपि समानेषु संख्यात्मकेषु परमाणुषु हैड्रोजनपरमाणोर्यदि भार एकसंख्यात्मकोऽनुमानितस्तदा ऑक्सिजनपरमाणुभारः षोडशात्मकः सिध्यति । अनेनैव प्रकारेणाऽन्येषामपि तत्वानां परमाणुभारा वैज्ञानिकैर्निश्चिता विद्यंते ।

एवं तत्वानां परमाणुभारनिश्चये संजाते यौगिकानामपि अणुभारः सरलया पद्धत्या ज्ञातो भवति । केवलं तदर्थं यौगिकसूत्राणां ज्ञानस्यावश्यता विद्यते । अनेन सूत्रेण तस्मिन् यावन्तः परमाणवः स्युस्तेषां सर्वेषां भारस्य गणनया यौगिकस्याऽणुभारज्ञानं भवेत् ।

**परमाणुबन्धनक्षमताः**—भिन्नभिन्नानां परमाणूनां तथा मूलकानां परस्परसंयोगक्षमताऽपि निश्चिता भवति । यथा हैड्रोजनतत्वपरमाणोः इतरतत्वपरमाणुसंयोगे एकाङ्केन क्षमता निर्दिष्टा भवति । अतोऽन्येषां तत्वानामेकः परमाणुः हैड्रोजनतत्वस्य यावद्भिः परमाणुभिस्संयुक्तो भवति सा तस्य तत्वस्य तावत्संख्याका परमाणुबन्धनक्षमतेति निगद्यते । यथा ऑक्सिजनतत्वस्य एकः परमाणुः हैड्रोजनतत्वस्य परमाणुद्वये संयुक्तो भवति । अतोऽस्याक्सिजनतत्वस्य **परमाणुबंधनक्षमता** द्विसंख्यात्मिका गृहीता भवति । यत्तत्वं हैड्रोजनतत्वेन न हि संयुक्तं भवति, तस्य ऑक्सिजनतत्वेन संयोगं कृत्वा तत्त्वस्य परमाणुबन्धनक्षमता ज्ञातुं शक्या भवति ।

एकं तत्वं वा एकोमूलको अन्यतत्वस्य वा मूलकस्य परमाणुबन्धनक्षमतायास्समानत्वेनैव स्थिरयौगिकोत्पादकं भवति । परमाणुबन्धनक्षमतायास्समानतया अभावे नैव भवति यौगिकोत्पादः । यदि वा यौगिकोत्पादो जातश्चेत् सोऽस्थिर एव संपद्यते ।

पूर्वमेवकथितं यद्भूमंडले समस्तानां पदार्थानां द्विनवतितत्वपरमाणूनां संयोगेनैव संजाता उत्पत्तिरिति । तथापि व्यवहारावस्थायां नित्यं उपयुज्यमानानां पदार्थानां संभूतिस्तु त्रिंशत् वा चत्वारिंशत् तत्वानां संयोगेनैवाभवदिति व्यक्तं अवलोक्यते । निम्नलिखिततालिकायां द्विनवतितत्वानां, १ क्रमसंख्या, २ नामानि, ३ संकेताः, ४ परमाणुभारः, ५ परमाणुबन्धनक्षमता, निवेशिता विद्यते । द्विनवतितत्वानां नामानि आंग्लभाषया दत्तानि । तथा संकेतास्तु ग्रीकभाषायुता वा ल्याटिनभाषास्वीकृता एव दत्ताः । अधस्तात्तानि सर्वाणि तालिकायां दीयंते—

## द्विनवतितत्वानि ।

| क्रम संख्या | नाम | संकेत | परमाणु-भार | परमाणु बंधन क्षमता | विशेषता |
|---|---|---|---|---|---|
| १ | हैड्रोजन | H | १ | १ | |
| २ | हीलियम | He | ४ | ० | |
| ३ | लिथियम | Li | ६.९ | १ | |
| ४ | बेरिलियम | Be | ९ | २ | |
| ५ | बोरान | B | १०.८ | ३ | |
| ६ | कार्बन | C | १२ | ४ | |
| ७ | नैट्रोजन | N | १४ | ३,५ | |
| ८ | ऑक्सिजन | O | १६ | २ | |
| ९ | फ्लोरिन | F | १९ | १ | |
| १० | निओन | Ne | २०.२ | ० | |
| ११ | सोडियम | Na | २३ | १ | |
| १२ | मैग्नेसियम | Mg | २४ | २ | |
| १३ | ऐलुमिनियम् | Al | २७ | ३ | |
| १४ | सिलिकान | Si | २८.३ | ४ | |
| १५ | फास्फरस | P | ३१ | ३,५ | |

| क्रम संख्या | नाम | संकेत | परमाणुभार | परमाणुबंधन क्षमता | विशेषता |
|---|---|---|---|---|---|
| १६ | सल्फर | S | ३२ | २ | गंधक |
| १७ | क्लोरिन | Cl | ३५.५ | १ | |
| १८ | आर्गान | A | ३९.९ | ० | |
| १९ | पोटासियम | K | ३९.१ | १ | |
| २० | कैल्सियम् | Ca | ४०.१ | २ | |
| २१ | स्कैंडियम् | Sc | ४५.१ | ३ | |
| २२ | टिटानियम् | Ti | ४८.१ | ४ | |
| २३ | वैनेडियम् | V | ५१.० | ३ | |
| २४ | क्रोमियम् | Cr | ५२.० | २, ६ | |
| २५ | मैंगेनिज | Mn | ५४.९ | २, ४ | |
| २६ | आयर्न ( फेरम् ) | Fe | ५५.८ | २, ३ | लोहा |
| २७ | कोबाल्ट | Co | ५९.० | २ | |
| २८ | निकल | Ni | ५९.७ | २ | |
| २९ | कौपर ( क्यूप्रम् ) | Cu | ६३.६ | १, २ | ताम्र |
| ३० | झिंक | Zn | ६५.४ | २ | जस्ता |
| ३१ | गैलियम् | Ga | ७०.१ | ३ | |
| ३२ | जर्मेनियम् | Ge | ७२.५ | ४ | |
| ३३ | आर्सेनिक | As | ७५.० | ३ | |
| ३४ | सेलेनियम् | Se | ७९.२ | २ | |
| ३५ | ब्रोमिन | Br | ७९.९ | १ | |
| ३६ | क्रिप्टान | Kr | ८२.९ | ० | |
| ३७ | रुबीडियम् | Rb | ८५.४ | १ | |
| ३८ | स्ट्रौन्शियम् | Sr | ८७.६ | २ | |
| ३९ | यार्ट्रियम् | Yt | ८९.३ | ३ | |
| ४० | झिर्कोनिमम् | Zr | ९०.६ | ४ | |
| ४१ | निओबियम् | Nb | ९३.१ | ३, ५ | |

| क्रम संख्या | नाम | संकेत | परमाणुभार | परमाणुबंधन क्षमता | विशेषता |
|---|---|---|---|---|---|
| ४२ | मोलिब्डिनम् | Mo | ९६.० | २ | |
| ४३ | मसूरियम् | अनिश्चित | | १ | |
| ४४ | रुदीनियम् | Ru | १०१.७ | ३ | |
| ४५ | होडियम् | Rh | १०२.९ | २,३,४ | |
| ४६ | पैलेडियम् | Pd | १०६.७ | २,४ | |
| ४७ | सिल्वर (आर्जेंटिनम्) | Ag | १०७.९ | १,३ | चांदी |
| ४८ | कैड्मियम् | Cd | ११२.४ | २ | |
| ४९ | इन्डियम् | In | ११४.८ | ३ | |
| ५० | टिन् ( स्टैनम् ) | Sn | ११८.७ | २,४ | |
| ५१ | ऐंटिमनी ( स्टिबियम् ) | Sb | १२१.८ | ३ | |
| ५२ | टेलुरियम् | Te | १२७.५ | २ | |
| ५३ | आयोडिन | I | १२६.९ | १ | |
| ५४ | झेनान् | Xe | १३०.२ | ० | |
| ५५ | सीझियम् | Cs | १३२.८ | १ | |
| ५६ | बेरियम् | Ba | १३७.४ | २ | |
| ५७ | लैंथनम् | La | १३९.० | ३ | |
| ५८ | सीरियम् | Ce | १४०.२ | ४ | |
| ५९ | प्रेसेडिनियम् | Pr | १४०.९ | अज्ञात | |
| ६० | निओडिमियम् | Nd | १४४.३ | ,, | |
| ६१ | इलिनियम् | अनिश्चित | | ,, | |
| ६२ | सैमेरियम् | Sa | १५०.४ | ,, | |
| ६३ | यूरोपियम् | Eu | १५२.० | ,, | |
| ६४ | गैडोलिनियम् | Gd | १५७.३ | ,, | |
| ६५ | टेर्बियम् | Tb | १५९.२ | ,, | |
| ६६ | डिस्प्रोसियम् | Dy | १६२.५ | ,, | |
| ६७ | होल्मियम् | Ho | १६३.५ | ,, | |

| क्रम संख्या | नाम | संकेत | परमाणु-भार | परमाणु बंधन क्षमता | विशेषता |
|---|---|---|---|---|---|
| ६८ | एर्बियम् | Er | १६७·७ | अज्ञात | |
| ६९ | थूलियम् | Tm | १६८·५ | ,, | |
| ७० | य्टेर्बियम् | Yb | १७३·५ | ३ | |
| ७१ | लुटेसियम् | Lu | १७५·० | ,, | |
| ७२ | हैफ्नियम् | Hf | १७८·६ | ,, | |
| ७३ | टैंटेलम् | Ta | १८१·५ | ५ | |
| ७४ | टंग्स्टेन ( वुल्फ्रम् ) | W | १८४·० | २,६ | |
| ७५ | र्‍हेनियम् | अनिश्चित | | | |
| ७६ | औस्मियम् | Os | १९०·९ | २,३,४,८ | |
| ७७ | इरीडियम् | Ir | १९३·१ | २,३,४ | |
| ७८ | प्लैटिनम् | Pt | १९५·२ | २,४ | |
| ७९ | गोल्ड ( औरम् ) | Au | १९७·२ | १,३ | सुवर्ण |
| ८० | मर्क्यूरि ( हैड्रार्जिरम् ) | Hg | २००·६ | १,२ | |
| ८१ | थैलियम् | Tl | २०४·० | | |
| ८२ | लेड [ प्लंबम् ] | Pb | २०७·२ | १,२ | सीस |
| ८३ | बिस्मथ | Bi | २०९·० | २,३ | |
| ८४ | पोलोनियम् | Po | २१०·० | २ | |
| ८५ | इस तत्वका ज्ञान अभीतक हुवा नहीं है. | | | | |
| ८६ | रैडोन [ निटोन ] | Nt | २२२·४ | ० | |
| ८७ | इस तत्वका ज्ञान अभीतक हुवा नहीं है. | | | | |
| ८८ | रेडियम् | Ra | २२६ | २ | |
| ८९ | ऐक्टिनियम् | अनिश्चित | | ३ | |
| ९० | थोरियम् | Th | २३२·१ | २,४ | |
| ९१ | युरेनियम् एक्स २ | $U_{x_2}$ | २३४·२ | ३ | |
| ९२ | युरेनियम् | U | २३८·२ | २ | |

**परमाणुसिद्धान्तः**—कस्मिन्नपि पदार्थे विभाजिते, प्रथमं, तस्मिन् अणवः समुपलभ्यन्ते। यस्मिन् पदार्थे एकजातीया एव अणवस्समुपलभ्यंते ते **रासायनिकयौगिका** इति विज्ञानवादिभिः कथ्यंते। यस्मिन् पदार्थे भिन्न-जातीया अणवो दृश्यन्ते स पदार्थो भिन्नभिन्नाणुसंपन्नयौगिकानां भौतिकमिश्रण-युतस्संपद्यते। यस्मादस्मिन्मिश्रणे संयुक्तानां यौगिकानां पार्थक्यं सारल्येन कर्तुं शक्यते।

शुद्धयौगिकाणूनां पृथक्करणे कृते एतेषां यौगिकानां अवयवीभूतपरमा-णवः प्राप्ता भवंति। सचायं पदार्थो वैज्ञानिकभाषया यौगिक इत्युच्यते। परं यस्मिन्पदार्थे विश्लेषिते तथाणुषु विच्छिन्नेष्वपि एकजातीया एव परमा-णवो विद्यमाना भवंति एतादृशाः पदार्था द्विनवतिसंख्यावच्छिन्ना विद्यन्ते।

पदार्थानामणुवत्वं तथा परमाणुवत्वं प्राचीनेऽपि काले विज्ञातमासीत्। कणादमहर्षिणा स्वकीयया दिव्यदृशा सचायं सिद्धान्तो ज्ञातएवासीत्। खैस्तीये पंचमे शताद्बकाले डेमाक्रिटस्नाम्ना वैज्ञानिकेनापि विज्ञातप्रायएवायं सिद्धान्तः। ग्रीकैस्तथा रोमनैर्वैज्ञानिकैरपि सिद्धांतोऽयं पूर्वं विदितप्राय एवाभवत्। अतऊर्ध्वं एपीक्यूरस्नामकपंडितेन तथा ल्युक्रेटियस् नाम्ना पंडितश्रेष्ठेन विस्तारितोऽभिवर्धितश्चाभूदयं सिद्धान्तः।

अस्मिन् समये एकोनविंशत्यां शताब्द्यां **डाल्टन**नामकप्रसिद्धेन वैज्ञा-निकवरेण्येन आधुनिकरसायनशास्त्रस्याभिनवोऽत्पत्तिरस्य सिद्धान्तस्य पुनरुज्जी-वनेन कृता वर्तते ‘ **डाल्टननामक पंडितस्य परमाणुसिद्धान्तः** ’—

१ इयं जडा सृष्टिःपरमाणुसमुभ्दूता वर्तते।

२ परमाणवा अविभाज्या वर्तन्ते।

३ भिन्नभिन्नानां तत्वानां परमाणव आकारमानमुज्झित्वा भारे गुण-धर्मादिके च परस्परं [ एकस्मादन्यो ] भिन्ना एव वर्तन्ते।

४ कस्यापि तत्वस्य परमाणवः परस्परं सर्वास्वपि वृत्तिषु एकरूपा एव भवंति।

५ एकस्य तत्वस्य एको वा एकाधिका वा परमाणवो द्वितीयस्य तत्वस्य एकेन वा एकाधिकैः परमाणुभिः पारस्परिकरासायनिकप्रीत्यां सत्यां संयुक्तास्संतो भिन्नभिन्ना यौगिका भवंति ।

६ रासायनिकस्वरूपं धृत्वा तत्वानां परमाणवः स्वकीयान् गुणधर्मान् परित्यजंति तथाच यौगिकावस्थोत्पन्नगुणधर्मान् धारयन्ति । परं पुनरपि यौगिकानां कृते पृथक्करणे तत्वानां परमाणवस्स्वीयान् मूलभूतगुणानभिव्यंजयन्ति । इत्यनेनैतदनुमीयते यत् यौगिकावस्थायां परमाणवो व्यक्तिगतं स्वीयमस्तित्वं नैव परित्यजन्ति । केवलं संयुक्तावस्थायां प्राप्तानपरान् गुणधर्मान् स्वीकुर्वन्ति इति ।

**परमाणूनां विभाज्यत्वम्**:—एकोनविंशस्य शताब्दस्यान्तिमकालपर्यन्तम् सचायं परमाणुसिद्धांतस्तथा तस्याऽविभाज्यत्वं वैज्ञानिकजगत्यां गृहीतप्रायमेवाऽसीत् । परं १८९८ संख्याके ऐशवीयाब्दे **मादामक्यूरीनाम्न्यै** वैज्ञानिकालंकृत्यै स्वीयेन भर्त्रा संशोधनप्रवीणेन साकं संशोधनकार्यतत्परायै रेडीयमनामकधातोस्समुपलब्धिर्जाता । अस्य च धातोर्गुणधर्मान्वेषणावसरे तत्वस्य परमाणवो नैवाऽविभाज्याः किंतु स्वयंविभजनस्वभावास्संतीति तया विज्ञातम् । रेडियम्तत्वस्य परमाणोस्स्वयं विभजनं भूत्वा स्वीयपरमाणुभाराच्चतुर्थभारन्यूनस्याऽन्यस्य तत्वस्य परमाणोःप्राप्तिर्भवति इति दृक्पथमागतम् । तथा परमाणुषु स्वाभाविकत्वेनैव केषामपि किरणानामुत्पादनेन परमाणुविच्छेदनं भूत्वा तेषामन्यप्रकारकपरमाणुभवनं स्वगतक्रिययैव भवति । इतीयं क्रिया रेडियमधर्मिता वा रश्मिक्षेपकता इति संज्ञया सांप्रतं संज्ञायते ।

रेडीयमपरमाणोः स्वयं विभजनशीलस्य सकाशादन्ये दशविधा नवीनाः परमाणवस्संपद्यन्ते । एवमेव थोरियमनामकतत्वमपि स्वयंविभज्य अन्येषां कतिधाप्रकाराणां नवीनानां परमाणूनां उत्पादकं भवति । अस्मिन् स्वयंविभजनप्रकारे कृत्रिमया रीत्या कैरपि वैज्ञानिकैः किमपि परिवर्तनं नैव कृतम् । स्वयंसिद्धप्रकृतिधर्मेण स्वयंविभजनक्रिया यथा जायमाना भवति तथैव दृश्यते ।

परंतु इंग्लंडदेशनिवासिना प्रोफेसररुदरफोर्डनामकवैज्ञानिकप्रवरेण केष्वपि कनिष्ठेषु तत्वेषु कृत्रिमया रीत्या परमाणुविभजनं सम्पादितं । येन वैज्ञानिक-जगति एवं प्रायो विश्वासः समुद्भूतो दृश्यते—यत् यं कमपि परमाणुं विच्छिद्य कमप्यनिर्वचनीयं पदार्थं वयं निष्पादयिष्याम इति । यथा सीसस्य पारदं, पारदस्य च सुवर्णमिति । अनेनाऽविष्कारेण परमाणुसिद्धान्ते किमपि स्वरू-पपरिवर्तनं संभूतं । प्राचीनपरमाणुसिद्धान्तस्यापि समुत्पन्ना हानिः । तथापि तत्वानां द्विनवतित्वस्याद्यापि वैज्ञानिकजगति वर्तते‌ऽस्तित्वं । तथा रेडियम्—थोरियमसदृशोच्चतरतत्वपरमाणूनुज्झित्वाऽन्यतत्वानामविभाज्यपरमाणुवत्वं तथैव मानितं वर्तते । इत्येतदेव सिद्धमभवत्--यत्परमाणुषु इलेक्ट्रान्, प्रोटान्, नामकविद्युत्किरणानां वर्तते‌ऽस्तित्वमिति । प्राचीनतमे कालेऽपि इदं विज्ञातम-भूदेव यत् कस्मिन्नपि काचदण्डे कौशेयेन घर्षिते तस्मिन् काचदण्डे लघुप-दार्थाकर्षणकारी प्रादुर्भवति गुण इति । तथैव लोहदण्डेऽपि कौशेयघर्षिते कोऽपि तत्सदृशो गुणः समुद्भवतीति । अनयोर्द्वयोर्दण्डयोर्विद्युदावेशसम्प-न्नयोस्सतोरेव तथाविधः समायाति पदार्थाकर्षणात्मको धर्मः । अस्मिन् धर्मे शास्त्रतो विश्लेषिते काचदण्डे धननामकविद्युत्प्रवेशस्तथा लोहदण्डे ऋणना-मकविद्युत्प्रवेशो भवतीति तयोर्द्वयोरपि कौषेयघर्षितयोः परिज्ञातमनेनावेशद्वयेन ।

तदुत्पादके द्वे विद्युते वर्तेते इति प्रथमं मतमासीत् । परं वैज्ञानिकानां संशोधनाधिक्यात् " इलेक्ट्रान " नामककिरणानां अल्पसंख्यात्वेन बाऽधि-कसत्वेन विद्यमानानामियमेकैव विद्युच्छक्तिर्वर्तते इति परिज्ञानमभवत् । पदार्थेषु घर्षितेषु एकस्य वस्तुनः परमाणुगता इलेक्ट्राननामककिरणा निर्मुक्ता भूत्वाऽन्य-स्मिन्वस्तुनि समायान्ति । यस्मिन् वस्तुनि समायान्ति तद्वस्तु ऋणनामकविद्युच्छ-क्तिसमाविष्टं भवति । इलेक्ट्रान् ऋणविद्युत्कणा विद्यन्ते । प्रत्येकस्मिन् तत्वे पर-माणौ यावन्तो ऋणविद्युद्धर्माणो इलेक्ट्रानकणा विद्यमानाः संख्यया भवेयुस्तावन्त एव संख्यायुता धनविद्युत्कणा अपि विद्यमाना भवन्ति । धन-विद्युत्कणाः प्रोटान् इति संज्ञासंज्ञिता भवन्ति । प्रोटानकणाः इलेक्ट्रानकणे-भ्यो १८४५ संख्याधिका भारेण विद्यन्ते । परंत्वेतेषु कणेषु विद्युत आवेशः

परिमाणेन समानस्तथा गुणेन विपरीतस्तिष्ठति । अत एव कस्मिन्नपि परमाणौ प्रोटानानां तथा इलेक्ट्रॉनानां संख्यासाम्येन विद्युद्गुणावेशः परस्परं बाधित्वा ( न्यूट्रलायझेशन् ) स्फुटो न भवति । तथा एतद्धनऋणविद्युत्कणसम्पन्नपरमाणुप्रादुर्भूतपदार्थेऽपि विद्युदावेशगुणो नैवात्रतिष्ठति । घर्षिते पदार्थे तद्गतपरमाणुस्थइलेक्ट्राननामककणाः स्वतंत्रा भवंति । परिस्थित्यानुकूल्येन कस्मिनपि पदार्थे भवति तेषामाधिक्यम् तथैवान्यस्मिन्पदार्थे भवति तेषां न्यूनत्वम् । यस्मिन्तेषां इलेक्ट्राननामककणानां भवत्याधिक्यम् स पदार्थो ऋणविद्युदावेशाविष्टो भवति । यतो विद्यन्ते हि इलेक्ट्राननामककणा ऋणविद्युत्कणाः । यस्मिन्पदार्थे इलेक्ट्रानानां संख्यान्यूनत्वं संजायते स पदार्थो धनविद्युत्समाविष्टो भवति । साधारणायामवस्थायां कस्मिन्नपि पदार्थे संख्यासाम्येन द्वयोरपि विद्युदावेशयोर्निराकरणं ( न्यूट्रलायझेशन ) भूत्वा नैव प्रादुर्भवति तदाऽवेशगुणानां प्रत्यक्षता ।

भिन्नविभिन्नानां तत्वानां परमाणुषु इलेक्ट्रानानां तथा प्रोटानानां विद्यमानसंख्यासंबंधेऽपि वैज्ञानिकैः कोऽपि समयः परिज्ञातो वर्तते । एतेषां वैज्ञानिकानां विद्यते अनुमानं यत् तत्वानां या तालिकायां प्रथमे रेखांकितविभागे प्रदर्शिता विद्यते क्रमसंख्या तावन्त एव तत्वानां प्रतिपरिमाणुषु स्वतंत्राणां इलेक्ट्रानानां स्थितिर्विद्यते । तथा यावन्त एव इलेक्ट्राना विद्यमाना भवेयुस्तावन्त एव तस्मिन्परमाणौ प्रोटाना अपि भवन्ति । यथा हैड्रोजनपरमाणौ एको इलेक्ट्रानस्तथा एक एव प्रोटानो विद्यते । ऑक्सिजनपरमाणौ अष्ट इलेक्ट्रानास्तथा अष्ट प्रोटाना विद्यन्ते । तथैव रेडीयमपरमाणौ अष्टाशीति ( ८८ ) इलेक्ट्रानास्तावन्त एव प्रोटाना विद्यमानास्संति । परमाणौ प्रोटाना परमाणुमध्ये पुंजीभूत्वा स्थिता भवन्ति । तथा स्वतन्त्रा इलेक्ट्रानास्तावत् स्वसंख्यानुसारेण एकानेकवलयरूपेण प्रोटानपुंजेषु समन्तात् परिभ्रमणशीला भवन्ति । परमाणोर्बाह्यवलये यावतां इलेक्ट्रानानां स्थितिस्स्यात् तावत्या संख्यया एव तस्य तत्वस्य परमाणुबंधनक्षमता विद्यमाना प्रतीयते । इदं परमाणुस्थइलेक्ट्रानप्रोटानपरिभ्रमणदृश्यं सूर्यमालावत् दृश्यते यथा—पृथ्व्या-

द्याग्रहाः स्वयंपरिभ्रमणशीलाः संतः सूर्यपरिभ्रमणं कुर्वन्ति । सूर्योऽपि स्वयं अस्थिर एव, तथैव इलेक्ट्रानाः प्रोटानपुंजानामभितः परिभ्रमणशीला वर्तन्ते । पृथिव्यादिग्रहैस्सूर्यमालायां स्वल्पावकाश एव व्याप्तो वर्तते । अवांतरावकाश-बाहुल्यं सूर्यमालायां अतिरिक्तमेव वर्तते । एतादृश एव परमाणावकाशभागोऽपि स्वल्पएव इलेक्ट्रानकणैरभिव्याप्तो वर्तते । विद्यतेच परमाणौ अन्योपि रिक्तानंत-गुणाऽवकाशो यो इलेक्ट्रानकणैरव्याप्त एव तिष्ठति । एतेन यत् पिंडे तद्ब्रह्माण्डे इत्ययं सिद्धान्तः प्रचीनर्षीणां सत्यपूर्ण एवेति प्रतिभाति । योयं उर्ध्वं निर्दिष्टः परमाणुषु विद्यमानानां इलेक्ट्रानप्रोटानानां संख्याक्रमः तस्मिन् सिद्धांन्ते नाद्यापि परिपूर्णता समागता विद्यते । विद्यते कापि तस्मिन्नद्यापि त्रुटिः । अत एव कैरपि वैज्ञानिकैस्तदर्थं अन्येषां न्यूट्रान, पाझिट्रान नामककणानामपि अस्तित्वं गृहीतं वर्तते ।

तथैव प्रोटानानां इलेक्ट्रानानामपि किमात्मकं सत्यं स्वरूपमित्यस्मि-न्विषयेऽपि रहस्योद्घाटनमपि नैवाभवदद्यापि । परमाणुविषयकज्ञानं सांप्रतं अल्पतरमेव विज्ञानजगति वर्तते । वैज्ञानिकाः संततं प्रयतमाना अस्मिन्विषये दृश्यन्ते अतस्ते सफला भविष्यन्तीति महती विद्यते आशा ।

**को विद्यते ईथरः**—केषांचन वैज्ञानिकानां विद्यते मतं अयं हि सर्वोऽपि विश्वसंसारो अत्यंतेन सूक्ष्मेण तरलतमेन पदार्थेन परिपूर्णो वर्तते । यत् स्थानं जनाः शून्यमिति मन्यंते तस्मिन्नपि सोयं पदार्थः परिपूर्णो विद्यते । आकाशं गृहीत्वा कठिनात् कठिनतरपदार्थाऽणुष्वपि अन्तः स्थितोऽयं पदार्थो वर्तते । परमाणोरभ्यन्तरेऽपि विद्यमानो भवति । किमपि स्थानमनेन पदार्थे-नाऽशून्यं न हि वर्तते । सोऽयं पदार्थ एव ईथर इति अनुमानितः कल्पना-सृष्टो विद्यते । वयं सर्वेऽपि ईथरार्णव एव तिष्ठामः ।

ईथरपदार्थस्यास्तित्वे गृहीते प्रकाशचुंबकविद्युदित्यादिशास्त्रगतात्यन्त-कठिनानां प्रश्नानामपि भवति सौकर्यम् । केऽपि वैज्ञानिका एवं मन्यंते अस्मिन्नाकाशे एवं एतादृशा गुणा विद्यन्ते यैरेवोपरिनिर्दिष्टप्रकाशविद्युदादि-घटनानां प्रादुर्भूतिः संभवतीति ।

॥ समाप्तं आधुनिकपरमाणुवादतात्पर्यम् ॥

# विद्वद्वरेण्यदार्शनिकवैज्ञानिकवैद्यादिसेवायां सविनयप्रणति परमावश्यकं निवेदनम् ।

सर्वेष्वपि भारतीयदर्शनेषु ( सांख्यवैशेषिकादिषु वैदिकदर्शनेषु, बौद्ध-जैनादिषु तदितरदर्शनेषु च ) सर्वमपि दृश्यमिदं जगत् पञ्चभूतविकारमयमेवेति, पञ्चभूतान्येव सर्वेषां दृश्यपदार्थानामुपादानभूतानीति सिद्धान्तः सर्वसंमतः प्रस्थापितो दृश्यते; तथा आयुर्वेदस्यापि तदभिमतानां त्रिदोषाणां पञ्चभूतान्येवोपादानानीति विद्यते सिद्धान्तः । परमाधुनिका वैज्ञानिकास्तन्मतानुयायिनः पाश्चात्यचिकित्सकाश्च पञ्चभूतेषु केषांचिद्यौगिकत्वं कस्यचिच्छक्तिरूपत्वं च मन्यमाना न तानि सृष्ट्युपादानानि मूलभूतानि द्रव्याणि, किन्तु ' एलिमेन्ट ' संज्ञकानि द्विनवति तत्त्वान्येव सर्वेषां दृश्यपदार्थानामुपादानभूतानीति प्रभाषन्ते, आयुर्वेदस्तम्भभूतास्त्रिदोषा अपि काल्पनिका एव, न प्रत्यक्षप्रमाणसिद्धा इति च संगिरन्ते । तदेवं पंचभूतानाममूलभूतत्वे वातादीनां च काल्पनिकत्वे दर्शनशास्त्रकाराणामायुर्वेदप्रणेतॄणां च महर्षीणां भ्रान्तत्वं, पंचभूतत्रिदोषसिद्धान्तयोश्चावैज्ञानिकत्वं समापद्यते । पाश्चात्यविज्ञानेऽपि प्रतिदिनमाविर्भवन्ति नवनवानि मतानि, त्यज्यन्ते च प्राचीनानि । दक्षतरैः खण्ड्यमानं त्रिदोषसिद्धान्तं पाश्चात्यविज्ञानेन सह समन्वयं विधाय नानारूपेण समर्थयत्सु वैद्येष्वपि दृश्यन्ते विभिन्नानि मतानि । एवं विभिन्नवादिभिराकुलितं त्रिदोषसिद्धान्तमैकमत्येन पुनः प्रस्थापयितुं नासिकक्षेत्रे १९८५ तमे विक्रमाब्दे संपन्नस्य १९ तमवैद्यसंमेलनस्य स्वागतकारिसमित्या त्रिदोषविषये सर्वोत्तमनिबन्धलेखनार्थं पंचशतरूप्यकमितं पारितोषिकमुद्घोषितं, तदनन्तरं पनवेलग्रामे महाराष्ट्रीयवैद्यानां त्रिदोषचर्चापरिषदपि १९९० तमे विक्रमाब्दे संपादिता । तथाऽपि नायं विषयः केवलं महाराष्ट्रीयवैद्यानामेव, अपि च त्रिदोषयाथातथ्यनिर्णयात् पूर्वं तदुपादानभूतपंचभूतनिर्णयोऽपि परमावश्यक इति

पंचभूतत्रिदोषचर्चा, तथा आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारं,नवाविर्भूतानां रोगाणां भेषजद्रव्याणां चायुर्वेदे संग्रहं चाधिकृत्य सर्वेषामपि भारतीयविदुषामेका परिषत् श्रीकाशीक्षेत्रे संपादनीयेति सर्वभारतीयवैद्यानां मतमभिलक्ष्य १९ तमवैद्यसंमेलनस्वागतकारिण्या सभया तथा कर्तुं निश्चयो व्यधायि । तदनुसारमागामिनि ऑगष्टमासे भगवतो धन्वन्तरेर्जन्मभूमौ संस्कृतविद्यायाः पीठभूते च श्रीकाशीक्षेत्रे श्रीहिन्दुविश्वविद्यालये पंचभूतत्रिदोषादीनां संधायसंभाषया तत्त्वविनिर्णयार्थमष्टाहव्यापि विद्वत्परिषदधिवेशनं भविष्यतीति सानन्दं विज्ञाप्यते । नायं वैद्यानामेव विचार्यो विषय इति अत्र दार्शनिका, वैज्ञानिकाः, प्राच्यपाश्चात्यचिकित्साशास्त्रनिष्णाताश्च निमंत्रिताः सन्ति, ते च संमिलिताः सन्तः संधायसंभाषया तत्त्वनिर्णयं विधास्यन्तीत्याशास्यते । अस्याः परिषदो द्वौ विभागौ भविष्यतः—एका पंचभूतचर्चापरिषद्, द्वितीया त्रिदोषादिचर्चापरिषदिति । तत्र प्रथमायाः पंचभूतपरिषदः अध्यक्षस्थानं काशीहिन्दुविश्वविद्यालये प्राच्यमहाविद्यालय ( Oriental College ) प्रधाना महामहोपाध्यायाः **श्रीप्रमथनाथतर्कभूषण**महोदया अलङ्करिष्यन्ति, द्वितीयायास्त्रिदोषादिचर्चापरिषदश्चाध्यक्षस्थानं प्रथितयशसः महामहोपाध्यायाः **कविराज श्रीगणनाथसेन**सरस्वती एम्. ए.; एल्. एम्. एस्. महोदया मण्डयिष्यन्ति । अस्यां परिषदि वादिप्रतिवादिद्वारा जायमानस्य वादस्य निरीक्षका अपि भारतप्रथिताः स्वस्वविषयपारदश्वानः केचन दार्शनिकाः केचन वैज्ञानिकाः केचन वैद्याः केचन दक्षतराश्च भविष्यन्ति ।

श्रीमन्तोऽप्यस्यां परिषदि यथावसरं समागत्य तत्त्वनिर्णयसाहाय्यं कुर्वन्तु, स्थापनापक्षं खण्डनपक्षं वा ग्रहीष्यन्तीति च विज्ञापयन्तु मंत्रिण इति च सादरं विधीयते सर्वविधविद्वत्सु प्रार्थना ।

निमंत्रणपत्रेणानेन सहैव प्रेष्यमाणां विचार्यविषयसूचीं समवलोक्य, प्रतिविषयमग्रे स्वाभिमतं विलिख्य एकमासादर्वाक् सा प्रतिप्रेषणीया मंत्रिणः समीपे । अस्यां परिषदि कं कं विषयं भवन्तः स्थापयिष्यन्ति, प्रतिषेधयिष्यन्ति वेत्यपि निवेदयितव्यः सहैव मंत्री ।

परिषत्समये विवदिषुभिर्यावच्छक्यं स्वाभिमतं सप्रमाणं नातिसंक्षेपविस्तरं लिखित्वैव समानेतव्यम् ।

अस्याः परिषदः कार्यनिर्वाहार्थमेका कार्यकारिणी ( स्वागतकारिणी ) समितिरपि अधोलिखितनामधेयानां महोदयानां संस्थापिताऽस्ति ।

**अध्यक्षः**--परममाननीयो महामनाः पण्डितः श्रीमदनमोहनमालवीय-महोदयः ।

**उपाध्यक्षः**--कविराज श्रीप्रतापसिंहः रसायनाचार्यः ( काशी ) ।

,, भिषङ्मान्यः--कविराज श्रीधर्मदासः चरकाचार्यः (काशी)

**प्रधानमंत्री**--वैद्य यादवजी त्रिकमजी आचार्यः ( कालबादेवीरोड, बंबई ) ।

**सहायकमंत्रिणः**--कविराज श्री उपेन्द्रनाथदासः काव्य-व्याकरण सांख्यतीर्थः ( सदरबाजार, पहाडीधीरज, दिल्ली )

,, वैद्यभूषण वामनशास्त्री दातारः ( नासिक )

,, दुर्गादत्तशास्त्री आयुर्वेदाचार्यः [मारवाडी हिन्दुहोस्पिटल काशी ) ।

,, कविराज श्री सुरेन्द्रमोहनः B. A. ( दयानंद आयुर्वेदिक कॉलेज, लाहोर ) ।

**सभासदः**--पं. श्रीहरिनाथशर्माशास्त्री दर्शनाचार्यः ।

,, डॉ. भास्कर गोविंद घाणेकरः आयुर्वेदाचार्यः B.Sc. M. B., B. S.

,, वैद्य दत्तात्रेय अनंत कुलकर्णी आयुर्वेदाचार्यः M. Sc. प्रभृतयः ।

## विद्वत्परिषदो नियमाः ।

१ अस्यां परिषदि निमंत्रितानां संधायसंभाषया तत्त्वनिर्णयार्थमुपस्थितानां विदुषामेव प्रवेशो भविष्यति, नान्येषां दर्शकानां संवाददातॄणां वा ।

२ अस्याः परिषदः कार्यविवरणं [ रिपोर्ट ] मंत्रिण एव निरीक्षकाणामध्यक्षाणां च स्वाक्षरसहसंमत्या प्रकाशयिष्यन्ति, अन्यैस्तु सभ्यैः स्वतंत्रतया न किञ्चिदपि कार्यविवरणं संवादपत्रादिषु पुस्तिकारूपेण वा प्रकाशनीयम् ।

३ अस्यां परिषदि वादसमये विगृह्यसंभाषायां प्रवृत्तायां तां निरोद्धुं सभापतिमहोदयाः समर्थाः स्युः ।

४ अस्यां परिषदि संधायसंभाषया जातं वादं निरीक्षकमहोदयाः सिद्धान्तं प्रस्तावरूपेण स्थापयिष्यन्ति । स एव सिद्धान्तः सर्वसंमत्या बहुसंमत्या वा स्वीकृतो भविष्यति ।

५ पूर्वं कमप्यात्मविषयं वादी स्थापयिष्यति, ततः प्रतिवादी तं खण्डयिष्यति, वादी तमेव दूषणोद्धारपूर्वकं द्रढयिष्यति, वादिनः प्रतिवादिनश्च सभापतिनिरीक्षकानुरोधावध्येव खण्डनप्रतिखण्डने प्रभविष्यन्ति न ततः परम् ।

निवेदकौ

**पं. मदनमोहनमालवीयः ।**

**वै. यादवजी त्रिकमजी आचार्यः ।**

## अयि माननीया विद्वद्वर्याः !

विदितमेव स्यात्तत्रभवतां भवतां यत् १९३५ खिस्ताब्दस्य आगस्टमासे श्रीवाराणसीक्षेत्रे पञ्चमहाभूतत्रिदोषादिविषयाणां संधायसंभाषया तत्त्वनिर्णयार्थमेका विद्वत्परिषद्भवितेति । अस्यां परिषदि समुपस्थातुं सादरं निवेदिता एव तत्रभवन्तो भवन्तो महाभागा मासचतुष्टयात् पूर्वं प्रेषितनिमंत्रणपत्रद्वारा । प्रेषिता च निमंत्रणपत्रेण सहैव तस्यां संसदि समुपस्थापयितुं योग्यानां विषयाणां सूचिकाऽपि । आशास्यते च तांस्तान् सूचीनिबद्धविषयान् यथावदालोच्य तत्र तत्र विषये स्वमतं नातिसंक्षेपविस्तरतो विलिख्य पूर्वप्रकाशितसूचनानुसारमागस्टमासात् पूर्वमेव मंत्रिणां समीपे भवद्भिः प्रेषितं स्यात् । येनैतत् परिज्ञातं भवेत् यत् कं कं विषयं भवन्तः स्थापयिष्यन्ति कं कं वा प्रतिसेत्स्यन्तीति । अधिवेशनं चोभयोरपि परिषदोरस्मिन् आगस्टमासे भवितेति पूर्वमुद्घोषितेऽपि निरीक्षकमहोदयानामन्येषां च विदुषां संमतिमनुसृत्य आगामिनो नवम्बरमासस्य २ तारिकात आरभ्य ८ तारिकापर्यंतं स्यादिति निश्चितम् ।

अध्यक्षपदं त्वनयोर्यथाक्रमं प्रथितनामधेयाः पण्डितप्रवरा महामहोपाध्यायश्रीप्रमथनाथतर्कभूषणमहाभागास्तथा महामहोपाध्यायकविराजश्रीगणनाथसेनसरस्वती एम्. ए. एल्. एम्. एस्. महाशया अलङ्करिष्यन्तीति पूर्वपत्रद्वारैव सूचितम् । निरीक्षणकार्यसंपादनार्थमपि चेमे विख्यातकीर्तयस्तत्तच्छास्त्रनिष्णाता विद्वद्वराः प्रार्थिताः सन्ति; येषां नामानि चेमानि—

१ महामहोपाध्याय डॉ. **श्रीगङ्गानाथ झा** एम्. ए. डी. लिट्. महाभागाः प्रयागस्थाः ।

२ महामहोपाध्यायकविराज **श्रीगोपीनाथ** एम्. ए. महाशया वाराणसीस्था ।

३ पंडितप्रकांडाः **श्रीमधुसूदनसरस्वती**विद्यावाचस्पतयो जयपुरस्थाः।

४ चरकाचार्याः **श्रीधर्मदास**कविराजमहाशया वाराणसीस्थाः ।
५ पंडितवरेण्याः पंडितराज**श्रीराजेश्वर**शास्त्रिणो द्रविडा वाराणसीस्थाः
६ माननीयाः कॅप्टन **जी. श्रीनिवासमूर्ति** B. A., B. L.. M. B. & C. M. महाभागा मद्रासस्थाः ।
७ आयुर्वेदमार्तंडाः **श्रीलक्ष्मीरामस्वामीन** आयुर्वेदाचार्या जयपुरस्थाः
८ प्रसिद्धवैज्ञानिकाः डॉ **ए. बी. मिश्राः** D. Sc., Ph. D. काशीस्थाः ।
९ वैज्ञानिकवर्याः डॉ. **एस्. एस्. जोशी** महाभागाः M. Sc. D. Sc. ( London ) काशीस्थाः ।
१० प्रथिताभिधेयाः डॉ. **बालकृष्ण अमरजी पाठक** महाभागा अहमदाबादस्थाः ।

अस्याः परिषदः प्रमाणनिर्णयो वादनियमाश्च अध्यक्षमहोदयानां निरीक्षकमहोदयानां च संमत्या विचारारम्भात् प्राङ्निर्णीता भवेयुः ।

आशास्यते विद्वद्रत्नेष्वेषु येषां स्वीकृतिसूचनाऽद्यावधि न समागता तेषामपि शीघ्रमेव समायास्यतीति । परिषत्कार्यनिमित्तमायास्यतां निमंत्रितविदुषां स्थानासनभोजनादिव्यवस्थां स्वागतसमितिः स्वव्ययेनैव सम्पादयिष्यति, नैतदर्थं समागतसभ्यैः किंचिदपि देयं भवेत् । वाराणसीस्थधूमशकटावतरणस्थाने ( बनारस कैंट स्टेशन ) परिषत्सभासदां स्वागतार्थं स्वयंसेवकाः स्थास्यन्ति । आगमनतिथेः सप्ताहात् प्रागेव समागमनसमयादिसूचनापत्रं " कविराज प्रतापसिंह रसायनाचार्य, उपसभापतिः स्वागतसमितिः पञ्चभूतत्रिदोषादिचर्चा-परिषद्, काशीहिंदुविश्वविद्यालय, बनारस " इत्येतेन संकेतेन प्रेषणीयम् । तंत्रीसंवादश्च ( टेलिग्रामश्च ) ' कविराज प्रतापसिंहजी, बनारसहिंदुयुनिवर्सिटी ' इत्यनेन स्थानसंकेतेन प्रेषणीयः ।

भवन्तो यथावसरं समागत्य संधायसंभाषया तत्त्वनिर्णयं विधायास्माननुग्रहिष्यन्तीति सानुनयं निवेदनम्—

**मदनमोहनमालवीयस्य**

ता. १०।८।३५. **आचार्योपाह्ववैद्ययादवशर्मणश्च ।**

## पंचभूतचर्चापरिषदि विचारार्हा विषयाः ।

१ पञ्चमहाभूतविचारप्रयोजनम् ।

२ भूतलक्षणं [ किं नाम भूतत्वम् ? ] ।

३ भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा ?

४ भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

५ भूतसंख्याविमर्शः ।

६ भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा ? सादित्वं चेत्तदुत्पत्तिः सक्रमा अक्रमा वा ?

७ गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ?

८ भूतानामितरेतरव्यवकीर्णत्वं कथं संपद्यते ?

९ भूतानां सृष्टिकारणत्वं कीदृक् ?

१० परिणामारम्भक्रिययोर्विशेषः ।

११ दृश्यानां पृथिव्यादीनां भूतत्वं न वा ?

१२ एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकैर्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा ?

१३ इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ?

१४ परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा, अभेदो वा ?

१५ द्रव्यस्य गुणाश्रयत्वम् गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ?

१६ तेजसो द्रव्यत्वं न वा ?

१७ आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भावत्वेपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ?

१८ पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ?

१९ ईथराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे, तेजसि, वायौ वा ? कथं च सः ?

२० मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेषजन्यं वा ?

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ त्रिदोषविचारप्रयोजनम् ।

२ वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ?

३ दोषसंज्ञायां हेतुः ।

४ कथं त्रय एव दोषाः ?

५ वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ?

६ वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ?

७ किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ?

८ वातादीनां गुणाः कर्माणि च ।

९ वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ?

१० वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ?

## अन्ये विचारार्हा विषयाः ।

१ नवाविर्भूतानां रोगाणामायुर्वेदे संग्रहप्रयोजनविचारः ।

२ नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे संग्रहप्रयोजनविचारः ।

३ आयुर्वेदीयशारीरानिदानादिप्रतिसंस्कारप्रयोजनविचारः ।

४ उभयोरपि परिषदोरन्येऽपि ये केचन विषयाः सभापतिमहोदयानां अनुमत्या समुपस्थापिता भवेयुः ।

## पंचभूत त्रिदोषचर्चा परिषदोः कार्यकारि-समित्या स्वीकृता शास्त्रार्थ विचार नियमावली ।

उद्देश्यम्—

१ अनयोः परिषदोर्भारतीय-तत्त्वज्ञानान्तर्गतपञ्चमहाभूतानां तथा त्रिदोषाणां च सत्स्वरूपप्रकाशनम् ।

### २ संभाषापद्धतिः

२ इमे परिषदौ संधाय—संभाषा--पद्धत्यैव प्रचलिष्यतो न विगृह्य-संभाषापद्धत्या ।

### ३ सभापतयः ।

३ काशी हिंदुविश्वविद्यालयान्तर्गत प्राच्यमहाविद्यालय-प्रधानाः श्री प्रमथनाथ तर्कभूषण भट्टाचार्याः, तथा महामहोपाध्यायाः कविराज गणनाथसेन सरस्वती महोदयाः यथाक्रमं सभापतिपदमलङ्करिष्यन्ति।

### ४ निरीक्षकाः ।

४ ये च पूर्वं निर्वाचिताः पंडितवरेण्यास्ते द्वयोरपि परिषदोर्निरीक्षका भविष्यन्ति ।

### ५ कथा-पद्धतिः ।

५ प्रश्नोत्तरप्रणाल्येव स्वीकृता भवेन्न व्याख्यानप्रणाली ।

### ६ प्रश्नोत्तर संकलम ।

६ प्रश्नोत्तरयोरुभयोरपि लेखबद्धयोः प्रश्नसमाधात्रोर्हस्ताक्षरेण साकं संकलनं भविष्यति ।

## वादि-प्रतिवादि-संख्या ।

७ वादि-प्रतिवादी-संख्यायाश्च तत्तन्मतावलम्बिनां मध्यादेव साम्येन [ समसंख्यया ] निर्वाचनं भवेत् ।

८ निर्वाचितवादिप्रतिवादि-व्यतिरेकेण कस्यापि भाषणे नाधिकारः । सर्वेऽपि सहायका भविष्यन्ति ।

९ वादिप्रतिवादिनां मध्ये एकस्यैव यस्य कस्याऽपि भाषणेऽधिकारः । अनेन साकमस्यैवेति तु न व्यवस्था ।

१० निर्वाचितवादिप्रतिवादिव्यतिरेकेण तत्तन्मतावलम्बिनां प्रतिनिधी-नामपि सतां, स्वस्वमतावलंबिनां निर्दिष्टस्थाने दर्शकरूपेणैवोपवेशः समुचितः ।

## प्रामाण्यम् ।

११ प्रत्यक्षानुमानप्रमाणाभ्यामेवेयं कथा [ वादः ] प्रचलिष्यति । प्राचीनसिद्धान्तविषये मतद्वैधे तु श्रुति-श्रुत्युपजीवि-दर्शनशास्त्रादीनां, चरक-सुश्रुताद्यार्षग्रन्थानां तन्मतानुयायिनां च वचनान्येव प्रमा-णतया गृहीतानि भवेयुः ।

## विषय विचारः ।

१२ प्रकाशितविचरांशप्रक्रमानुक्रममनुसृत्यैव क्रमशो भवेद्विचारः ।

१३ एकस्मिन्समये एकस्यैव भाषणेऽधिकारो न बहूनाम् ।

## वाद-भाषा ।

१४ सभाकार्यं गीर्वाणवाण्यैव पारितं भवेत् । हिन्दीभाषया कथयितॄणां तु कथनं सभानिर्दिष्टप्रतिनिधिना संस्कृतभाषायां वादकथारीत्यैवो-पन्यस्येत ।

## परिषत्क्रमः ।

प्रथमं पंचभूतविचारपरिषत्कार्यं त्रिभिर्दिवसैः संपादितं भवेत्, पश्चात् त्रिभिर्दिनैस्त्रिदोषविचारपरिषत्कार्यम् ।

अन्तिमे च दिने सभापतिमहोदयानां निरीक्षकमहोदयानां च संमत्या निर्णयः प्रकाशितः स्यात् ।

### परिषत्कार्य-समयः ।

१६ सभाकार्यं प्रतिदिनं-मध्यान्हवेलायां एकवादनादारभ्य पंचवादन-समयपर्यन्तं नियतवेलायामेव भवेत् ।

### दर्शक व्यवस्था ।

१७ दर्शकाणां पृथक् स्थानप्रबन्धो व्यवस्थाप्येत । न तेषां चर्चा-परिषदि सदस्यत्वेन कोऽपि अधिकारः ।

## निरीक्षकमहोदयानां अधिकाराः कार्याणि च ।

१ विचारविषयस्य, कथाविषयस्य, वादिप्रतिवादिनोश्च नियमनम् ।

२ वादिप्रतिवादिनोर्भाषणे औचित्यानौचित्यावधारणम् ।

३ वक्तुः स्वविषयमुत्सृत्य अप्रासंगिकविषयप्रतिपादने नियमनम् ।

४ सति प्रयोजने निरीक्षकाणामेव वादिप्रतिवादिनोर्मतानुवादाधिकारः ।

५ संधायसंभाषया जातस्य वादस्य निर्णयरूपेण निरूपणम् ।

## श्री सभापतिमहोदयानां कार्याधिकारः ।

१ परिषन्नियन्त्रणम् ।

२ परिषदि अस्वीकृताया विगृह्यसंभाषयाः केनाऽपि प्रवर्तिताया निग्रहः ।

३ परिषदः सर्वमपि कार्यं पर्यालोच्य निरीक्षकाणां मन्तव्यमपि समाकलय्य निरीक्षकैः कृतस्य निर्णयस्य सभायामुद्घोषणम् ।

### इतिवृत्त-प्रकाशनाधिकारः ।

४ परिषत्प्रधानमन्त्रिण एव सहकारिमंत्रिसाहाय्येन निरीक्षकाणां सभापतिमहोदयानां च संमत्या परिषदोरितिवृत्तं विलिख्य प्रकाशयिष्यन्ति ।

आचार्योपाह्व यादव शर्मा
मन्त्री.

## पंचभूतात्रिदोषचर्चापरिषदि समाहूतानां सभ्यानां नामानि ।

१. डॉ. के. एस्. ह्मसकर, एम्. ए. बी. एस्. सी.
डी. पी. एच्. डी. आय्. एम्. ॲन्ड एच्. — मुंबई.

२. वैद्य के. जी. नटेशशास्त्री. — मैलापूर ( मद्रास )

३. डॉ. वाय्. लक्ष्मीनरसिंहशास्त्री सुपरिन्टेंडेंट
आयुर्वेदिक हास्पिटल ॲन्ड फॉर्मसी. — ह्मैसूर.

४. वैद्यराज पंडित हरिप्रपन्नजी. — मुंबई.

५. कविराज धरमदासजी चरकाचार्य. — बनारस.

६. वैद्य स्वामी हरिशरणानन्द पंजाब आयुर्वेदिक
फॉर्मसी. — अमृतसर.

७. वैद्यराज पंडित के. शेषशास्त्री आयुर्वेद विद्वान् — शृंगेरी.

८. महामहोपाध्याय डॉक्टर गंगानाथजी झा एम्. ए.
डी. लिट्. — आलाहाबाद.

९. पंडित जियालालजी वैद्य प्रभात आयुर्वेदिक
फॉर्मसी. — श्रीनगर (काश्मीर)

१०. राजवैद्य जिवराम कालिदास रसशाळा. — गोंडल (काठियावाड)

११. वैद्यरत्न डॉ. पी. सुभारंगारू, बी. एस्. सी.
प्रेसिडेन्ट आन्ध्र विश्वविद्यालय, — कोकोनाडा.

१२. आयुर्वेदभूषण कॅप्टन पन्नीकर, एल्. आर.
सी. पी. ॲन्ड एम्. आर. सी. एस्. प्रिन्सिपॉल
आयुर्वेदिक कॉलेज. — कोलंबो.

१३. डॉ. ए. लक्ष्मीपति बी. ए. एम्. बी. सी. एम्.
प्रोप्रायटर आन्ध्र आयुर्वेदिक फॉर्मसी माउन्टरोड, मद्रास.

| | | |
|---|---|---|
| १४ | पंडित दामोदरजी रथ षड्दर्शनतीर्थ. | लाहोर. |
| १५ | वैद्यराज पंडित घनानंदजीपंत, सिताराम बाजार | दिल्ली. |
| १६ | वैद्यराज पंडित मनोहरलालजी, मनवारीलाल-<br>आयुर्वेदविद्यालय, सिताराम बाजार, | दिल्ली. |
| १७ | कविराज हरिरंजन मजमुदार एम्. ए. प्रिन्सिपॉल<br>आयुर्वेदिक ॲन्ड युनानी टिब्बी कॉलेज. | नवी दिल्ली. |
| १८ | प्रिन्सिपॉल ललितहारी आयुर्वेदिक कॉलेज | पो. पिलभिट (यू. पी.) |
| १९ | पंडित सुखलालजी प्रोफेसर जैनदर्शन ओरि-<br>एन्टल कॉलेज, हिंदुयुनिव्हर्सिटी, | पो. बनारस. |
| २० | पंडित भगवानशास्त्री धारूरकर. | पंढरपूर. |
| २१ | श्री जगद्गुरु भारतीकृष्णतीर्थस्वामी शंकराचार्य | पुरी ( ओरिसा ) |
| २२ | महामहोपाध्याय श्रीधरशास्त्री पाठक. | धुळें (प. खान्देश) |
| २३ | पंडित भट्टाचार्य, एम्. ए. पी. एच्. डी.<br>लायब्ररेरियन् ओरिएन्टल इन्स्टिटयुट. | बडोदा. |
| २४ | महामहोपाध्याय सुरेन्द्रनाथदास गुप्त एम्. ए.<br>पी. एच्. डी. प्रिन्सिपॉल संस्कृत कॉलेज. | कलकत्ता. |
| २५ | पं. हरिनाथजीशास्त्री दर्शनाचार्य ब्रह्मविद्या संस्कृत-<br>पाठशाळा कालिकाघाट, | बनारस सिटी. |
| २६ | डॉ. गिरीन्द्रनाथ मुकरजी बी. ए. एम्. डी.<br>एडिटर, जर्नल ऑफ आयुर्वेद. कार्पोरेशन-<br>स्ट्रीट ई. हीरोकुमार टागोर स्केअर. | कलकत्ता. |
| २७ | कविराज भूदेव मुकर्जी एम्. ए.<br>रसायनाचार्य, ४१ ए. ग्रे स्ट्रीट | कलकत्ता. |
| २८ | वैद्य गोपाळशास्त्री गोडबोले | पो. चिंचवड जि. पुणें. |
| २९ | आचार्य श्रीकुमारस्वामी, जंगम बारीघाट | बनारस. |
| ३० | पंडित जगन्नाथ प्रसाद वाजपेयी आयुर्वेदा-<br>चार्य | अस्सि. पो. बनारस. |

३१ पंडित सत्यनारायणशास्त्री आयुर्वेदाचार्य
आयुर्वेदिक कॉलेज बनारस हिंदुयुनिव्हर्सिटी बनारस.

३२ कविराज प्रतापसिंह, आयुर्वेद कॉलेज बनारस
हिंदुयुनिव्हर्सिटी बनारस.

३३ दी प्रिन्सिपॉल गव्हर्नमेंट आयुर्वेदिक कॉलेज पो. त्रिवेंद्रम.
[ साऊथ इंडिया ]

३४ वैद्यमणी एम्. निलकंठ पिल्लाई, हेड आयु-
र्वेदिक डिपार्टमेन्ट पो. त्रिवेंद्रम.

३५ वैद्यशास्त्री कविराज ठाकुरदत्तजी मुलतानी,
गुमटीबाजार लाहोर.

३६ वैद्यरत्न श्रीकांतशर्मा काव्यतीर्थ कदमकुवा बांकीपुरा (पाटणा)

३७ आयुर्वेदभूषण के. सुब्रणिशास्त्री, चिंताद्रिपेठ, मद्रास.

३८ एन्. बी. नटराजशास्त्री, आयुर्वेदिक पंडित पो. त्रिचनापल्ली.

३९ वैद्यराज पंडित चंद्रशेखरजी बिकानेर.
( राजपुताना )

४० दुर्गाशंकर केवळरामशास्त्री C/o झंडू
फारम्यास्युटिकलवर्कस्, सयानीरोड मुंबई ( १४ )

४१ डॉ. भास्कर गोविंद घाणेकर बी.एस्.सी, एम्.-
बी.बी.एस्. आयुर्वेद कॉलेज हिंदुयुनिव्हर्सिटी बनारस.

४२ प्रोफेसर आनंद शंकर ध्रुव एम्. ए.
प्रो. व्हाईस चॅन्सेलर हिंदुयुनिव्हर्सिटी बनारस.

४३ वैद्य पंडित श्रीनिवासशास्त्री, नारायण दिक्षीत लेन बनारस.

४४ वैद्यरत्न पंडित त्र्यंबकशास्त्री, नारायण दिक्षीत लेन बनारस.

४५ प्रोफेसर दत्तात्रय अनंत कुळकर्णी एम्. एस्.-
सी. आयुर्वेद कॉलेज हिंदुयुनिव्हर्सिटी बरनास.

४६ पंडित राजराजेश्वरशास्त्री द्रविड,
नारायण दिक्षीत लेन बनारस.

४७ पंडित बाळकृष्ण मिश्र न्यायाचार्य ओरिएन्टल कॉलेज, हिंदुयुनिव्हर्सिटी — बनारस.

४८ महामहोपाध्याय कविराज गोपीनाथजी एम्. ए. प्रिन्सिपाल, किंग्ज कॉलेज — बनारस.

४९ महामहोपाध्याय पंडित प्रमथनाथ तर्कभूषण प्रिन्सिपॉल, ओरिएन्टल कॉलेज, हिंदुयुनिव्हर्सिटी बनारस.

५० वैद्यरत्न वासुदेवशास्त्री कडेगांवकर — सातारा.

५१ डॉ. मोरेश्वर नारायण आगाशे एल्. एम्. एस्. पो. सातारा.

५२ वैद्य गंगाधर विष्णु पुराणीक — पो. पनवेल जि.कुलाबा

५३ वैद्य प्राणाचार्य कृष्णशास्त्री देवधर, गंधीआळी आदितवार — नासिक.

५४ वैद्यभूषण गणेशशास्त्री जोशी, शुक्रवार पेठ — पुणें शहर

५५ न्यायरत्न नारायणशास्त्री वाडीकर संस्कृत-माहाविद्यालय, सदाशिव पेठ — पुणें

५६ महामहोपाध्याय वासुदेवशास्त्री अभ्यंकर सदाशिव पेठ — पुणें शहर

५७ वैद्य वासुदेवशास्त्री ऐनापुरे, डॉक्टर देशमुख गल्ली गिरगांव मुंबई

५८ वैद्य आप्पाशास्त्री साठे, काकडवाडी, गिरगांव — मुंबई

५९ वैद्य पंडित हरनारायण चतुर्वेदी गव्हर्नमेंट, आयुर्वेदिक स्कूल — बांकिपूर [पाटणा]

६० वैद्यराज पी. एस्. वारिअर — पो. कोट्टाकल[मलबार]

६१ पंडित टी. रुद्र पाराशव राजवैद्य ऑफ माहाराजा — कोचीन (मलबार)

६२ हिज हॉयनेस श्रीमान् माहाराजा रविवर्मा — कोचीन [मलबार]

६३ वैद्यराज पंडित नौरीरामशास्त्री — पो. बेझवाडा

६४ डॉ. हनमंत व्यंकटेश सावनूर — पो. बेळगांव

६५ स्वामी कुवलयानन्द कैवल्यधाम — पो. लोणावळा जि.पुणें

६६ तर्कतीर्थ रघुनाथशास्त्री कोगजे — पो. लोणावळा जि.पुणें
६७ तर्कतीर्थ लक्ष्मणशास्त्री जोशी — पो. वाई [सातारा]
६८ वैद्य महेश्वर राम पुराणीक — पो. मालवण (रत्नागिरी)
६९ डॉ. मुकुंदसरूप वर्मा बी. एस्. सी.
एम्. बी. बी. एस्. हिंदुयुनिव्हार्सिटी. — बनारस
७० प्रो. पंडित भगवृतदत्तजी बी. ए. — लाहोर (पंजाब)
७१ वैद्यराज हरीशास्त्री पराडकर — अकोला (वऱ्हाड)
७२ डॉ. बाबासाहेब परांजपे — नागपूर
७३ वैद्य त्रिंबकशास्त्री आपटे, सदाशिव पेठ — पुणें
७४ वैद्य नागरलाल मोहनलाल पाठक — पो. पाटण (गुजराथ)
७५ राजवैद्य पंडित रामेश्वरजी शुक्ल आयुर्वेदाचार्य — ग्वाल्हेर
७६ पंडित श्रीपादशास्त्री हसूरकर प्रिन्सिपाल रा.सं.वि. इन्दोर
७७ पंडित गणेश दत्तजी सारस्वत बी. ए. — हरिद्वार (यू. पी.)
७८ वैद्यशास्त्री पंडित रामेश्वर मिश्र नयागंज — कानपूर
७९ कविराज ज्ञानेंद्रनाथ सेन बी. ए. — हरिद्वार
८० स्वामी दयानन्दजी आयुर्वेदाचार्य हृषीकेश जि. डेहराडून (यू. पी.)
८१ कविराज ललितमोहन कविसागर — पो. बारिसाल [ बेंगाल ]
८२ महामहोपाध्याय पंचानन तर्करत्न — भाटपारा ( बेंगाल )
८३ कविराज विमलानन्द तर्कतीर्थ ग्रे स्ट्रीट — कलकत्ता
८४ कविराज हराणचंद्र चक्रवर्ती ग्रे स्ट्रीट — कलकत्ता
८५ वैद्यराज भिकाजी विनायक डेग्वेकर एम्. ए.-
एम्. एस्. सी. एल्. एल्. बी. — जबलपूर
८६ वैद्यभूषण गोवर्धन शर्मा छांगाणी सितावर्डी — नागपूर
८७ वैद्यभूषण पुरुषोत्तमशास्त्री हिर्लेकर — अमरावती(वऱ्हाड)
८८ आयुर्वेदाचार्य वैद्य पुरुषोत्तम गणेश नानल
आयुर्वेद माहाविद्यालय — पुणें

| | | |
|---|---|---|
| ८९ | महामहोपाध्याय पंडित गिरधर शर्मा चतुर्वेदी | जयपूर(राजपुताना) |
| ९० | राजवैद्य पंडित नंदकिशोरजी आयुर्वेदाचार्य | जयपूर[राजपुताना] |
| ९१ | आयुर्वेदमार्तंड पंडित लक्ष्मीरामजास्वामी आयुर्वेदाचार्य | जयपूर |
| ९२ | राजवैद्य हरिबक्षजी जोशी, मारवाडी दवाखाना | कलकत्ता |
| ९३ | वैद्य पंडित हरिदत्तजीशास्त्री, एडिटर अश्विनीकुमार | लाहोर |
| ९४ | डॉ. आशानंद पंचरत्न एम्. बी. बी. एस्. | लाहोर |
| ९५ | एडिटर धन्वंतरी | पो. विजयगड [ जि. अलीगड ] |
| ९६ | वैद्यरत्न कॅप्टन् जी. श्रीनिवासमूर्ती बी. ए. बी. एल्. एम्. बी. ॲन्ड सी. एम्. | मद्रास |
| ९७ | डॉ. व्ही. एम्. भट बी. ए., एम्. बी. बी. एस्. | येवला |
| ९८ | राजवैद्य पंडित किशोरीदत्तशास्त्री, नवाबगंज | कानपूर |
| ९९ | वैद्य पंचानन पंडित जगन्नाथप्रसाद शुक्ल दारागंज | आलाहाबाद |
| १०० | वैद्यरत्न पंडित रामप्रसादजी | पो. पतियाला[पंजाब] |
| १०१ | आयुर्वेद महामहोपाध्यायजी पं. भागीरथजीस्वामी | कलकत्ता |
| १०२ | कविराज नरेंद्रनाथ मित्र | लाहोर |
| १०३ | वैद्यपंचानन गंगाधरशास्त्री गुणे | अहमदनगर |
| १०४ | महामहोपाध्याय हाथीभाईशास्त्री | जामनगर (काठियावाड) |
| १०५ | डॉ. बाळकृष्ण ए. पाठक एम्. बी. बी. एस्. टॉकसाल रोड | अहमदाबाद |
| १०६ | वैद्य नारायणशंकर देवशंकर, स्वामीनारायण मंदिराजवळ | अहमदाबाद |
| १०७ | राजवैद्य पंडित मस्तरामजीशास्त्री, पुराणा किल्ला | रावळपिंडी (पंजाब) |
| १०८ | डॉ. जी. डी. आपटे एम्. बी. बी. एस्. | पुणें |
| १०९ | राजगुरु पंडित हेमराजजी धोकातोल | नेपाळ |

११० राजवैद्य पंडित शालिग्रामजीशास्त्री, आब्रटरोड लखनौ
१११ पंडित नंदलाल कौल खारियर श्रीनगर ( काश्मीर )
११२ वैद्यपंचानन कृष्णशास्त्री कवडे बी. ए. पुणें
११३ पंडित नित्यानंद शर्मा जोशी आयुर्वेदाचार्य थोकतोल नेपाळ
११४ महामना पं. मदनमोहन मालवीय हिंदुयुनिव्हर्सिटी बनारस
११५ राजवैद्य अमृतलाल प्राणशंकर पट्टणी पो.लिमडी(काठियावाड)
११६ वैद्य लक्ष्मीशंकर रामकृष्णशास्त्री, रिचीरोड अहमदाबाद
११७ वैद्य रविशंकर जटाशंकर त्रिवेदी, रिचीरोड अहमदाबाद
११८ वैद्य पंडित दुर्गादत्तजीशास्त्री बनारस
११९ कविराज उपेंद्रनाथदास, सदरबाजार दिल्ली
१२० पंडित बनशीधरजी जोशी आयुर्वेदाचार्य ग्वाल्हेर
१२१ पं. कृष्णम्माचार्यशास्त्री, संस्कृत पाठशाळा पो. वद्धताल व्हाया आनंद
१२२ वैद्यराज पंडित रामनारायणजी आयुर्वेद-
शिरोमणी चोक पाटणा (बिहार)
१२३ वैद्यराज पंढरिनाथ दामोदर मुळे, अंबादरबाजा अमरावती [ वऱ्हाड ]
१२४ आयुर्वेदरत्नाकर पंडित ब्रिजबिहारी चतुर्वेदी मुरादपूर
पो. बांकीपूर पाटणा
१२५ आयुर्वेदाचार्य पं. रामदेवशर्मा शाहारियागंज पो. मुजफरपूर (बिहार)
१२६ पं. श्रीदत्तजीशर्मा वैद्यराज ऑनररी म्याजिस्ट्रेट
पो. भिवानी जि. हिसार
१२७ वैद्य पांडुरंग हरी देशपांडे आयुर्वेदाचार्य
३७२ शुक्रवार पेठ पुणें
१२८ कविराज ललितमोहन शर्मा, २१ विवेकानंद रोड कलकत्ता
१२९ पं. रवींद्रनाथशास्त्री एडिटर "रॉकेश" बरालोकपूर इटावा (यू. पी.)
१३० वैद्यरत्न हरदत्तजी पांड्ये पो. पिलभिट (यू. पी.)
१३१ लक्ष्मीनाथ बद्रिनाथशास्त्री बी. ए. राजकीय
संस्कृत पाठशाळा बडोदें

सौकर्याय तस्याङ्गीकारः । अवकाश एव विशिष्टगुणवत्वाङ्गीकारादेव उपपत्तौ अतिरिक्त ईथरे प्रमाणाभावः इति केचिद् वैज्ञानिका अभिप्रयन्ति । ईथर शद्बः ग्रीकभाषायामवकाशे प्रसिद्धः स एवैष इति ।

**प्रतिवादी**--गिरधरशर्मा--शद्बगुणकमाकाशम् इति तस्य द्रव्यत्वे न विवादः । अभावरूपावकाशत्वे गुणाधारत्वानुपपत्तिः, विशिष्टगुणवत्त्वे तु स्वीकृतं अवकाशस्य द्रव्यत्वमेव सिद्धमिति सोऽयं नाममात्रे विवादोऽवशिष्टो वैज्ञानिकानाम् । ईथरपदेन वोच्यताम्, स्पेसपदेन वा, तत्तादृशगुणविशिष्ट-पदार्थसत्ता तूभयेषां सिद्धैव । बौद्धनिराकरणप्रसङ्गे आकाशस्याभावरूपता तु श्रीशंकरभगवत्पादैः शारीरकभाष्ये सम्यक् प्रतिक्षिप्ता । अभाव एव यद्याकाशः स्यात्, तर्हि एकः पक्षी यदोत्पतति, तदा परोनोत्पतितुं प्रभवेत्, तत्र पक्ष्य-भावाभावात् । 'यत्र पक्षीनास्ति, तत्रोत्पतीष्यति' इतिचेत्, यत्पदेन यदुच्यते स एवास्माकमाकाश इति हि आचार्यपादानां युक्तिः । शद्बोपादानं च पृथग्द्रव्यमवश्यमाश्रयणीयमेवेति तार्किकैः साधितम् । ग्रीकभाषायाम् ईथरशद्बो ऽयं वैदिकेन्द्रशद्बस्यापभ्रंशरूपः स्यात् इति संभाव्यते । चतुर्दशेन्द्राः श्रुतौ निरूप्यन्ते, तत्र सरस्वानयमिन्द्रः, यः शद्बस्योपादानं । अतएव तत्र प्रवृत्तेयं शद्बलहरी–यास्माऽकं श्रोत्रग्राह्या भवति, सा सरस्वतीत्युच्यते । सरस्वानेवाकाशः किंच प्रकाशोपादानतापि श्रुताविंद्रस्यैव स्वीकृता । वैज्ञानिका अपि प्रकाश-किरणानामीथराधारत्वमेव मन्वन्त इतींद्रस्यैवेथरपदवाच्यता श्रुत्यनुगृहीता भवति । तस्मादिंद्रापरनामा ईथर आकाश एवेति स्पष्टं प्रतिभाति ।

**वादी**:–हरिशरणजी–वायुशून्ये देशे आघातेऽपि शद्बानुपलब्धेः वायु-गुणः शद्बः । यथा वायुना सर्वथा रिक्तीकृते सर्वतोऽपिनद्धे भांडे घण्टावादनेऽपि शद्बाश्रवणं प्रयोगसिद्धम् ।

**प्रतिवादी**:–गिरिधरशर्माजी–इदं वैज्ञानिकानां प्राचीनं मतमासीदिति श्रुतम् । अधुना तु तैरेव निराकृतमिति कथमनेन कारणेन शद्बस्य वायुगुणत्वं ? । अत्र विषये वदन्तु वैज्ञानिकमहाभागा अत्रोपस्थिताः ।

**निरीक्षकः**–डॉ. जोशी--शद्बमाध्यमाः (वाहकाः) घन-द्रव-वायुरूपा

भवंति। तेष्वन्यतममपि विहाय शब्दस्य देशाद्देशान्तरप्राप्तिर्नसंभवतीति आधुनिक-वैज्ञानिकानां मतम्। वायुगुणत्वं त्विदानीं निरस्तम्। रैडियोद्वारा यथा शीघ्रं शब्दः सहस्राधिकानि योजनानि गच्छति, न तावती गतिर्वायौ विद्यते।

**प्रो. कुलकर्णी**:—कंपसापेक्षः शब्द इत्येव मन्वते आधुनिकाः।

**गिरिधरजी**:—शब्दस्योपादानं यद्यप्याकाशः, अथापि शब्दस्य वीचीतरंगन्यायेन श्रवणदेशप्राप्तिः, तत्र च तरंगपरंपरायां निमित्तं वायुरिति वायुशून्यदेशे शब्दोत्पत्तावपि तरंगाभावादस्माभिः शब्दो न श्रूयते। शब्देभ्यः शब्दनिष्पत्तिरिति भगवता कणादेनोक्तं। निर्वाते संयोगविभागाभ्यां शब्दोत्पत्ति-रस्ति, परं शब्दजशब्दस्तरंगरूपो नोत्पद्यते, निमित्तस्य वायोरभावात्। उपादानापेक्षयोपादेयस्य स्थूलत्वनियमात्, शब्दस्य वाय्वपेक्षया सूक्ष्मत्वात्, आकाशगुणः शब्द इति युज्यते, न वायूपादानकः। वायुवेगापेक्षया अत्यधिक-वेगवत्त्या वितन्त्रीविद्युता शब्दगतिः वायूपादानकत्वे तु न सम्भवति। शब्दो यदि वायूपादानकः स्यात् परदेशस्थशब्दस्य तत्रत्यवायोरप्राप्तावपि तन्त्रीद्वारा स्वल्पकालेन दूरदेशे प्रत्यक्षं नस्यादिति। यत्वत्र हरिशरणानन्दमहाशयैरुक्तम्= तत्रत्यः शब्दो नात्रागच्छति, इहाभिनव उत्पद्यत इति, तदेतन्न समञ्जसं प्रतीयते। इह तादृशशब्दस्योत्पादकाभावात्। दूरस्थगायकशब्दश्रवणाय रैडियोयन्त्र शतशो रूप्यकाणि व्ययी कुर्वन्ति अत्रत्या धनिकाः, नत्विहाभिनवशब्दोत्पादनाय। तस्मादाकाशगुण एव शब्दः। सांख्यादिरीत्या शब्दगुण आकाशः, स नित्यः। तद्गुणस्तु तरंगरूपोऽयं श्रूयमाणो अनित्य इति सर्वं समञ्जसम्।

**वादी**:—रामदासः—दूरतारासु स्फोटशब्दस्तु किं न श्रूयते ?

**प्रतिवादी**:—गिरिधरशर्माजीः—अभिव्यक्तस्य शब्दस्य वीचीतरंगन्यायेन शब्दान्तरोत्पादकशक्तेः परिमितत्वान्न श्रूयते।

**निरीक्षकः**—डॉ. जोशीः—शब्दः तद्गतिश्च सोसंकारणं [ उपादानं ] मेंन्निकलकारणं ( निमित्तं ) चापेक्षते। विद्युतो निमित्तत्वं शब्दगतौ दूरतर-तरंगवृद्धिद्वारा। अन्यथा नियतास्तरंगाः। वाय्वभावे तरंगाभावः। तस्मात् वायुशून्येपि शब्दोत्पत्तिर्भवेदेव। अश्रवणं तु वाहकाभावात्। इत्येवाधुनिक-वैज्ञानिकमतम्।

इति पञ्चमहाभूतपरिषदि संजातविचारः समाप्तिमगमत् । तदनंतरं गिरिधरशर्मणा एतादृशपरिषत्संघटनाय विश्वविद्यालयपरिचालकेभ्यो धन्यवादाः समर्प्यंत । प्रार्थिताश्च तेन तत्रोपस्थिता माननीयश्रीमालवीयमहाभागाः, यत्प्रत्यब्दमेतादृशी परिषद् भवतु, अनया प्राचीनदार्शनिकानामाधुनिक-वैज्ञानिकानां च विचारविनिमयेन मतभेदो दूरी-भविष्यति । महानुपकारश्च विद्याविषये लोकस्य सेत्स्यतीति । श्रीमालवीयमहाभागैश्चोपस्थितानां विदुषां कृतज्ञतां प्रकटयद्भिः प्रत्यब्दं परिषत्संघटनं स्वीकृतम् । उपस्थातुं च विद्वांसोऽभ्यर्थिताः । परस्परप्रेम्णा महाभूतपरिषदियं पूर्तिं गता ।

## सर्वारम्भे
## श्री. म. म. गिरिधरशर्मणाम्—
### स्थापनायाः प्रथमा वक्तृता ।

इह खलु जगति प्रत्येकं पदार्थानां परिगणयितुमशक्यत्वात्, पृथगेकैकशो ज्ञातुमशक्यत्वाच्च व्यवहारकौशलसम्पत्तये वर्गीकरणप्रक्रियां सर्व एव विपश्चितो रोचयन्ते । न हि वर्गीकरणं विहाय काचिदन्या रीतिः पदार्थविज्ञानस्याद्यावधि निर्णीता, आधुनिकं विज्ञानमपि द्विनवतिं तत्त्वानां परिगणयद्वर्गीकरणपक्ष एव पतति, न हि द्विनवतिर्जगति व्यक्तयः, किन्तु तावन्तो वर्गा इत्येव वक्तव्यं भवेत् । वर्गीकरणे च लाघवपक्षपातः प्रकृतिसिद्धः । तस्माल्लाघवमेवानुसृत्यास्माकं दर्शनप्रवक्तृभिः सर्वेषामिन्द्रियसम्बद्धानां द्रव्याणां पञ्चवर्गाः प्रक्लृप्ताः, त एव पञ्चभूतशब्देन व्यवह्रियन्ते । पञ्चवर्गकल्पनञ्चेदं प्राकृतिकम्, यतो हि मनुष्याणां पञ्चैव ज्ञानेन्द्रियाणि, तैर्ग्राह्याश्चविषया अपि शब्दस्पर्शरूपरसगंन्धाः पञ्चैव, तत एवैषां गुणभूतानामाश्रया अपि पञ्चैव निर्धारिताः, येषु क्रमेणैकैकस्य प्राधान्येन स्थितिर्गुणस्य । इममेव विभागमूलं लक्ष्यीकृत्य ‘ बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्’ इत्येव भूतलक्षणमुररीक्रियते लक्षणविचक्षणैः । न हि पृथिव्याद्याः पञ्चाऽनादय इति इतराऽसंमिश्रितानि मौलिकानि तत्त्वानि वेत्यस्माकं दर्शनानामभिप्रायः । एषां सृष्टेः परस्यऽपूर्वविष्ट-

तायाश्च श्रुतत्वात्, किंतु यदिन्द्रियैर्गृह्यते किञ्चित्, तदिन्द्रियपञ्चकानुरोधेन पञ्चधा विभाज्यमित्येवास्माकं दार्शनिकानां लक्ष्यम्। पंचेन्द्रियैः सूक्ष्मत्वान्नगृह्यते, तत्रापि तद्ग्रहणयोग्यतामनुसंधाय ग्राह्यत्वलक्षणं समन्वेतीति स्फुटीकृतं लक्षण-विचारकैः। तस्मादिदमेव भूतलक्षणं लक्ष्यप्रापकं निर्दोषञ्च स्वीकर्तुमुचितम्।

## द्वितीया वक्तृता।

अहमत्र तथा विवृणोमि, यथा पुरस्ताद्विचारितानामपि बहूनां प्रश्नानां स्फुटतरमुत्तरं लभ्येत, अस्याः परिषदो मूलभूतः सिद्धान्तविरोधश्चापि बहुतरं परिहियेत। अस्माकं दार्शनिकाः खलु भूतानां पञ्चाऽवस्था अभ्यनुजानते--गुणाः, अणव, रेणवः, स्कन्धाः, सत्त्वानि चेति। तत्र शद्बस्पर्शरूपरसगंधाख्यानि परस्परासंकीर्णस्वरूपाणि–अतएव मौलिकानि तन्मात्रासंज्ञानि गुणभूतानि। एषामुत्तरोत्तरमनुप्रवेशेन क्रमेणैकद्वित्रिचतुःपंचगुणानि तु आकाशवायुतेजो-जलपृथ्व्याख्यानि पंचाणुभूतानि। इमे द्वे विधे " विशेषाविशेषलिङ्गमात्रालि-ङ्गानि गुणपर्वाणि " इति योगदर्शन–[२।१८]–सूत्रे अविशेषविशेषपदाभ्यां क्रमेण व्यवह्रते। अथ भूतानां पंचीकरणेन लब्धस्वरूपाणि च स्फुटं यौगि-कानि पंचमहाभूतानि, सैषा पञ्चीकरणप्रक्रिया प्रस्फुटा वेदान्तग्रंथेषु। एषां यौगिकानां महाभूतानां पुनस्तिस्रो विधाः, रासायनिकप्रक्रियामन्तरेणावयव-विभागक्रमेणाविभाज्या अणवो रेणवः, तैरारब्धा अवयविनः स्कन्धाः, अवयविभिरपि क्रमेणारभ्यमाणानि च शरीरेन्द्रियविषयपदाभिलप्यानि सत्त्वानि। अत्र स्कन्धपर्यन्ता अवस्था भूतशद्बेन महाभूतशद्बेनवोच्यन्ते, सत्त्वानि तु भौतिकपदेनाभिलप्यन्ते। अनया प्रक्रियया विचारे क्रियमाणे सर्वमिदं दृश्यं भूतभौतिकेष्वन्तर्भवति। आधुनिकैर्वैज्ञानिकैरभ्युपगम्यमानानि द्विनवतिमितानि तत्त्वान्यपि कस्यचिद्भूतस्य कस्याञ्चिदवस्थायामन्तर्भवन्तीति तद्विशेषपरीक्षणेन सेत्स्यति। यदि नाम स्वाभिमतानां तत्वानां स्वरूपाणि लक्ष-णानि च वादिभिर्विव्रियेरन्, तर्हि कुत्र कस्यान्तर्भाव इत्यस्माभिः स्फुटीक्रियेत। यत्तु वैज्ञानिकाः स्वीयया यन्त्रादिप्रक्रियया दृश्यमानानां पृथ्वीजलादीनां यौगिकत्वं प्रसाध्य पञ्चभूतसिद्धान्तं प्रतिक्षिपन्ति, तदिदं सिद्धसाधनाय प्रयतनं तेषां व्यर्थप्रायम्। दृश्यमानानां महाभूतानां यौगिकताया अस्माकं दर्शनेष्वपि

सुस्पष्टं निरूपितत्वात् । “ आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी ” इत्याद्याः श्रुतयः, ताः प्रमाणयन्ति तदनुरोधेन प्रवर्तमानानि दर्शनानि च भूतानां जन्यत्वं परस्परानुप्रवेशं च वैशद्येन व्याचक्षते । दार्शनिकं विषयमारम्भ एव शिक्षमाणानां विनेयानां सौकर्याय परमाणुवादः प्रथमभूमिकायां काणादैरुपक्षिप्तः । सांख्ययोगादौ तु परमाणोर्यौगिकत्वं स्फुटं व्याख्यातम् । तदेतद् दृश्यताम्--“ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ” इति ( पा. ३ सूत्र ४४ ) योगसूत्रस्य व्यासभाष्ये “ तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाऽकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः, एतद्भूतानां प्रथमं रूपम्, द्वितीयं रूपं स्वसामान्यम्...........अथ किमेषां सूक्ष्मरूपं—तन्मात्रं भूतकारणम्, तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वतन्मात्राणि, एतत्तृतीयं । अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलाः गुणाः,..........अथैषां पञ्चमं रूपं अर्थवत्त्वम् ” इत्यादि । अत्र गुणभूतपरमाणोरपि समुदायरूपत्वं स्पष्टमुद्घुष्टमिति का कथा महाभूतरेणोः । अयन्तु विशेषः – यन्महाभूतसूक्ष्मावयवस्य रेणोर्विभज्यानेकतत्वात्मकताप्रसाधनं रासायनिकप्रक्रियया सुगममेव, विभाज्यमानास्तदवयवा अपि च भूतलक्षणं न जहति, महाभूतानां भूतसंयोगजत्वात् । यानि त्वणुभूतान्युक्तानि, तत्र भूतानां योगो न शक्यते दर्शयितुम् । गुणानां तु तन्मात्राख्यानां योगस्तत्राप्यस्त्येव । अथ गुणेषु वैज्ञानिकानां रासायनिकप्रक्रियया न संभवति विशकलनम् । किन्त्वस्मद्दृष्ट्या तत्राप्यनुस्यूते ततोऽपि सूक्ष्मतरे द्वे अवस्थे लिङ्गमात्रम्, अलिंगं चेत्युक्ते प्रागुपदर्शिते योगदर्शनसूत्रे । अथ येयं प्रागुपदर्शिते भाष्ये भूतानां पञ्चमावस्था अर्थवत्वमितिपदेन पुरुषभोगापवर्गार्थता नामाख्याता, तेन पुरुषस्याप्यत्रानुगतत्वं ध्वनितं । पुरुषनिरूपणं च वेदांतेषु, तत्रापि क्षरे अक्षरस्य, तस्मिन्नव्ययस्य, तत्रापि च परात्परस्यानुप्रवेशः, षोडश च कलाः पुरुषत्रयस्य निरूप्यन्ते परस्परानुषक्ता इत्येवं सूक्ष्मतमपर्यंतमनुधावने क वराकाणि द्विनवति तत्वानि ? तेषां त्वतियौगिकत्वम्, सर्वथा मौलिकत्वं तु ज्ञायमानेषु क्वापि वस्तुन्यसंभवि । वैज्ञानिका अपि यथा यथान्वेषणे

प्रवर्तन्ते, तथा तथा द्विनवतावनुस्यूतमेकमेव तत्वं पश्यन्ति, यथाद्य वादिपक्षे स्थितैः श्री रामदासगौड महाशयैरेव स्वीये वैज्ञानिकाऽद्वैतवादे निबन्धे प्रतिपादितम् । आस्तामप्रकृतविस्तरः, यादृशींतु मौलिकतां तत्वेषु व्युत्पादयन्ति वैज्ञानिकाः, सा भूतानामपि सूक्ष्मावस्थायामस्त्येव । तथाहि जलस्य 'अम्भः, मरीचिः, मरः, आपः—इति चतस्रोऽवस्थाः श्रूयन्ते । तत्र स्थूलानामपां यौगिकत्वं वैज्ञानिकैरस्मदिष्टमेव साध्यते । सूक्ष्मस्याम्भसस्तु यौगिकत्वं न तैरुपदर्शयितुं शक्यम् । तदित्थं भूतत्वं सर्वानुगतम्, भौतिकत्वं तु चतुर्थपंचम्योरवस्थयोः—इति दृश्यानां पृथिव्यादीनां भूतत्वं भौतिकत्वं चेत्युभयमपियुज्यते ।

**वादीः**—श्री देवनायकाचार्यः —अणुभूतानि यानि भवद्भिरुक्तानि, तेषां यः सूक्ष्मतमोंऽशः परमाणुः, तस्य लक्षणमुच्यताम् ।

**प्रतिवादी**ः—गिरधरशर्मा,--तज्जातीयसूक्ष्मतमावयवत्वमेव तल्लक्षणम् । यावद्धि जलजातीयं द्रव्यं रक्ष्यते, तावत्तस्य जलपरमाणोर्विभागो न शक्यते कर्तुम्, यदि तु वैज्ञानिक्या प्रक्रियया तदपि विभज्येत, तदा तत्वान्तरं तद्भविष्यति, जलजातीयं द्रव्यं तिरोभविष्यति । एतदेववैशेषिकप्रक्रियाखण्डनावसरे श्रीशंकरभगवत्पादैः शारीरकभाष्ये व्यक्तीकृतम् ।

**वादी**ः—श्री देवनायकाचार्यः—तदा कस्यापि भूतस्य नित्यत्वं भवन्मते न सिध्यति ।

**प्रतिवादी**ः--गिरधरशर्मा—एकरूपावस्थायित्वं नाम कूटस्थनित्यत्वं भूतेषु नेष्यत एव । अवस्थानां प्रतिक्षणं तत्र परिवर्तनाबलोकनात् । निरुक्तेषु भूतानां रूपेषु येन केन चिद्रूपेणावस्थितिस्तु सर्वेषामप्रत्याख्येया, "नाभावो विद्यते सतः" इति सिद्धान्तात् । न्यायनिरूपित आरम्भवाद एव नास्मद्दर्शनानां चरमं लक्ष्यम्, सातु सौकर्येण बोधनाय प्राथमिकी प्रक्रिया । परिणामवादे कृपया दीयतां मनाग् दृष्टिः । तत्र वादे विभिन्ना भूतानामवस्था अभ्युपगम्यन्ते, परस्परं च ताः परिवर्तन्ते । यथा जलस्य चतस्रोऽवस्था मयोपदर्शिताः । तासु भूतावस्थास्वेव भवतां तत्वान्यन्तर्भवन्तीत्युक्तं मया ।

**वादी**ः—श्री देवनायकाचार्यः—जलस्य चतस्रोऽवस्थाः स्पष्टीक्रियताम् । अस्माभिर्जलोत्पादकत्वेनाभिमतयोः 'हैद्रोजन, ऑक्सिजनपदार्थयोः कुत्रांतर्भाव

इति च स्पष्टमुच्यताम् ।

**प्रतिवादी**:—गिरिधरशर्मा:—सर्वं स्पष्टीकरिष्यामि । किंतु भवन्तः किं केवलं पृच्छका एव ? भवद्भिः स्वाभिमतानां तत्वानां लक्षणादिकमेतत्कालपर्यंतं किमपि नोक्तम् । तेषां लक्षणान्यपरिज्ञायान्तर्भावः कथमस्माभिः साध्यताम् ? नेयं वादस्य गौतमाभिमता प्रक्रिया । वादे ह्युभाभ्यामपि स्व-स्व-पक्षः स्थापनीयो भवति, न तु एकस्य पक्षस्य प्रश्नमात्रं कर्तव्यम् । न च वितण्डाऽत्रेष्यते । तस्मात् स्वाभिमततत्वानां लक्षणानि पूर्वमुच्यताम् ।

**प्रतिवादी**:—गिरिधरशर्मा चतुर्वेदी—इदानीं भवतां तत्वविवरणं श्रुतम् । अथेदं मनागालोच्यते । एवं सूक्ष्मावान्तरभेदेन पदार्थभेदे गण्यमाने न पदार्थेऽयत्ता कदापि निष्पतितुमर्हेत्, अवान्तरभेदानां कथंचित् प्रतिव्यक्त्येव जागरूकत्वात् । यत्र यदाभेददृष्टिः पतेत्, तदैव स भिन्नतया परिगण्येतेति न वर्गीकरणं स्थैर्यमासादयेत् । तत एव चानुदिनं वर्द्धत एव वैज्ञानिकानां तत्वगणना, श्रूयत इदानीं द्विनवतिगणनापि पुराणत्वमापेदे, इदानींतु शतादप्यधिका संख्या विराजते, नेयं संख्या सहस्रमप्यतिक्रामेदिति कः प्रतिजानीते । नायमनुगमस्य पन्थाः । किंच गुरुत्वमेवाधारीकृत्य सर्वेयं भवतां तत्वगणना, गुरुत्वतारतम्येनैव पदार्थभेदस्य भवद्भिः प्रकल्पित्वात् । इदानीं तु ताम्रादीनामपि सुवर्णभावे परिणमनं चिराद्भारतीयेषु प्रसिद्धं वैज्ञानिकैरप्यभ्युपगतप्रायमिति गुरुत्वस्य भिन्नभिन्नावस्थासूत्पाद्यत्वे सिद्धे मूलमेव तत्वगणनाया विशीर्णप्रायम् । अपि च द्रव्यगुणपरिभाषा भवद्दर्शने नास्तीति तत्वधर्मा भवद्भिरुच्यमानाः क्वान्तर्भवन्तीति दुःसमाधेयोऽयं प्रश्नः । हैड्रोजनप्रभृतयो यथा तत्वेषु गण्यन्ते, तथा गुरुत्व-द्रवत्वाद्या अपि कुतो न गण्यन्ते ? तेषां पृथगुपलब्धिर्नास्तीति चेत्, द्रवत्वात्तु गुरुत्वस्य पृथगुपलब्धिरस्ति ? गुरुत्वादिमिश्रणेनैव कदाचिदेषां तत्वानामुत्पत्ति स्यात्, तत्पृथक्करणप्रक्रिया चाद्यावधि न भवद्भिर्ज्ञातास्यादित्यपि संभवति । अथेदमप्याकलनीयम्—तत्वानां घनत्वद्रवत्वबाष्पावस्था या उच्यन्ते, ता अवस्थास्तत्वेभ्यो भिन्ना अभिन्ना वा ? अभिन्नाश्चेत्, घनावस्थस्य द्रुतावस्थस्य च तत्वस्य कथमैक्यम् ? अवस्थाभेदे तदभिन्नस्य तत्वस्यापि भेदसिद्धेः । भिन्नाश्चेत्, कुत्र ता अन्तर्भवति, तासामपि पृथक् परिगणनं प्रसक्तम् ? पृथक्स्थानानवरोधिका इति न तास्तत्वभूता इति चेत्, अतत्वभूता एव तत्वानि

व्यवस्थापयन्तीति महदिन्द्रजालम् ? एवं तर्हि यथा मूलतरतत्वानि, मूलतत्वानि, संयुक्ततत्वानीति, त्रैविध्यं गण्यते, तथा नित्यमपराऽश्रिततत्वरूपाचतुर्थ्यपि विधा गण्यताम्, द्रव्यगुणादिपरिभाषा वा स्वीक्रियतामिति । नाद्ययावदियं वैज्ञानिक-पद्धतिर्निरूपणार्हतां प्राप्ता । अस्ताम्-अस्माकन्तु भूतानामवस्था भेदा एते, न पृथक् तत्वानि । सुवर्णताम्रपारदाद्याः खलु तेजांसि गण्यन्त एव न्यायादि-ग्रंथेषु । बहवश्च भवदभिमतेषु वायुविशेषा अग्निविशेषाश्च । अवस्थाभेदाहीमे द्विनवतितोऽप्यत्यधिकास्तत्र तत्र निरूपिताः सन्ति । यथाऽग्नेरेकस्यैवोनपञ्चा-शद्भेदा विवृता वायुपुराणे, एवं वायुरप्यूनपंचाशद्विधः, ऊनपंचाशन्मरुतः सर्वत्र पुराणेषु निरूपिताः । तदवान्तरभेदास्तु न शक्यन्त एव संख्यातुम् । अथ जलस्य प्रथमतश्चतस्रोऽवस्था या मया उक्ताः, तद्विवरणं संक्षिप्योच्यते । श्रूयतेहि " आत्मा वा इदमेक एवाग्र आसीत्, स इमान् लोकानसृजत— अम्भोमरीचीर्मर आपः । अदोम्भः परेण दिवः, द्यौः प्रतिष्ठा । अन्तरिक्षं मरीचयः । पृथिवींमरः, या अधस्तात् ता आपः " इति । अत्र हि श्रुतौ जलस्य सर्वतः प्रथममुत्पत्तिः श्रूयते, याह्यन्यत्रापि श्रुतिस्मृतिषु सुस्पष्टं विवृ-तास्ति ' अप एव ससर्जादौ तासु बीजमवासृजद् ' ( मनुः ) इत्याद्यासु । तस्य च जलस्यावस्थाचतुष्टयं लोकचतुष्टयव्यापि लोकोत्पत्तिहेतुभूतं च लोक-शब्देन निर्दिष्टम् । पृथिव्यन्तरिक्षंद्यौश्चेतिभूः, भुवः, स्वरित्याख्यातं लोकत्रयम् । एतन्मर्त्यमित्युच्यते श्रुतिषु । दिवः परं तु महः, जनः तपः, सत्यमिति अमृत-मित्युच्यते । मध्ये सूर्यमण्डलम् [द्यौः] सत्यामृतोभयात्मकममृतमृत्युनियामकम् । ' आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतंमर्त्यंच ' इति भगवान् सूर्यःस्तूयते । अस्माकं हीयं पृथिवी सूर्येण संबद्धा, सूर्यवशगा । इहामृततत्वमपि यत्प्राप्यते, तत्सूर्यमेव द्वारीकृत्य, नतु स्वातंत्र्येण, एतदेवाभिप्रेत्य सूर्यमण्डलादप्युपरिष्टात् स्थितस्याम्भसः सूर्यमेव प्रतिष्ठां श्रुतिराह । तेनेदं सिद्धम्, सूर्यात्परतः परमे-ष्ठिमण्डलसंबद्धाः सोमरूपा या आपः, ता ' अम्भः ' इत्युच्यन्ते । इयमेव-जलस्य प्रथमा सूक्ष्मतमाऽवस्था । एतद् 'अम्भः' एव आधुनिका वैज्ञानिकाः ' हैद्रोजनस्य ' पदेन परिचिन्वन्तीति संभाव्यते, गुणधर्माणां प्रत्यभिज्ञायमान-

त्वात् । हैद्रोजनतत्त्वं हि सर्वतत्वापेक्षया लघुभूतमुच्यते भवद्भिः, तदेतत् सूर्यमण्डलादुपरितनेऽस्मिन् सुतरामुपपन्नम्, पृथिवीसन्निकर्षस्य, पृथिव्याकर्षणबन्धस्य गुरुत्वप्रयोजनत्वात्, अम्भसिदवीयसि गुरुत्वाल्पतायाः सुस्पष्ट सिद्धेः । हैद्रोजनतत्वमग्निसंबंधाज्ज्वलतीत्यपि सोमरूपे तस्मिन् सूपपन्नं, सोमस्यैवाग्निसंबंधाज्ज्वलनस्य श्रुतिषु निरूपितत्वात् “ आदित् प्रत्नस्य रेतसो ज्योतिष् पश्यन्ति वासरम् ” इत्यादिषु मंत्रेषु सूर्यरश्मिसम्पर्कात् सोमाभिज्वलनमूलक एवायं दिवाप्रकाश इति स्फुटमाख्यातम् । “ त्वमिमा औषधीः सोम सर्वाः, त्वमपो अजनयस्त्वंगाः, त्वमातनो सर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्ध ” इत्यादिषु मन्त्रेष्वपि प्रकाशजनकत्वं सोमस्यातिस्फुटम् । जलस्य चेदमुपादानमिति जलसूक्ष्मावस्थात्वं तत्रानाख्यातमपि सिद्धं, सूक्ष्मावस्थात एव स्थूलोत्पत्तेः उपगमात् । अथ “ आक्सिजन ” पद वाच्यस्तु श्रौतः पवमानाग्निरिति संभाव्यते, पवमानो ह्याग्नेयः सोमः श्रुतिषु सिध्यति । ‘ कंस्विद्गर्भं प्रथमं दध्रआपः ’ इति प्रश्नमुत्थाप्य ‘ अग्निं गर्भं प्रथमं दध्रआपः ” इति स्वयं मंत्र उत्तरमाह । “ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा, अग्निं च विश्वशंभुवं ” इति च मन्त्रः स्पष्टमग्नीषोमसंबन्धाज्जातं जलमुद्घुष्यति । ‘ अग्नीषोमात्मकं-जगत् ’ ‘ सर्वमापोमयंजगत् ’ । आस्ताम्, ततश्च आक्सिजनपदेन भवतां परिचितं पवमानाग्निं गर्भीकृत्याम्भ इदं यौगिकजलरूपेण परिणमते, द्रवत्वं चात्राग्निसंबन्धादेव प्रस्फुटीभवतीत्यस्माकं प्रक्रिययाऽपिसिद्धम् । इदमपि प्रसंगादुच्यते—इतरलोकासंपृक्तं विशुद्धमिदमम्भो मेरोरुपरि घनीभूय गङ्गाजलरूपेण परिणमते, तत एव गंगाया दिव्यनदीत्वं व्यवहरामः । गङ्गायाः स्फुटमभिलक्ष्यमाणः कोऽपि महिमा चैतन्मूलक एव । अथ जलस्य द्वितीयावस्था श्रुतौ “ मरीचिः ” इत्युक्ता, तदिदं सूर्यकिरणसंसक्तं जलम् । एतत्संबंधादेव किरणा अपि मरीचय उच्यन्ते । क्वचन किरणसंघर्षाद् घनीभावमापन्नाश्चेमे मरीचय एव यमुनाजलरूपेण परिणमन्ते—इत्यार्याणां दृष्टिः । तत एव सूर्यकिरणेभ्य उत्पन्ना यमुना सूर्यपुत्रीत्याख्यायते । अथ तृतीया जलस्यावस्था ‘मर’ इत्युक्ता, या पृथिव्या उपादानभावमुपयाति । पृथिवीयं जलादेवोत्पद्यत इति श्रुतिस्मृति-

पुराणान्येकमुखेन जोघुष्यन्ते । आपः, फेनः, मृत्स्ना, सिकता, शर्करा, अश्मा, अयः, हिरण्यम्, इत्यष्टाववस्थाः शतपथब्राह्मणस्य पञ्चमशाष्ठयोः काण्डयोः स्फुटतमं विवृता, अष्टाक्षराहीयं गायत्री । अथ पृथिव्यां खन्यमानायां यदिदं जलं प्राप्यते, यज्जलत्वेन व्यवहरामः, सेयमाप इति चतुर्थावस्था श्रुतौ वर्णिता। "या दिव्या आपः पयसा संबभुवुर्या आन्तरिक्ष्या उत पार्थिवीर्याः" इत्यादिष्वपि मन्त्रेषु जलस्य दिव्याद्या अवस्था वर्णिताः सन्ति । तदयं निर्गलितोऽर्थः – भूतानां स्थूला अवस्था यौगिक्य इति अस्माकमपि शास्त्राणि स्फुटं प्रमाणयन्ति, तस्यैतस्य सिद्धस्य साधनाय न वैज्ञानिकैः प्रयत्न आस्थेयः । सूक्ष्मास्तु भूतानामवस्था भवद्भिरेलिमेंटनाम्ना व्यवह्रियन्त इति नामभेदमन्तरेण किमपि वैषम्यमुभयत्र नोपलभ्यते । भवतां प्रक्रियाऽद्य यावत् स्थैर्यं न गतेति निरूपणभरं न क्षमते, अस्मद्दर्शनानान्तु प्रक्रिया चिरादाघातान् सहमाना सुस्थैर्यमासादितवती न विप्लावयितुं शक्या । ईश्वराज्ञासिद्धा चेयं न मनुष्यबुद्धिप्रसूता, ततो न मनुष्यैर्विपरीततां नेतुं शक्येत्यस्माकं विश्वासः । इतस्ततः परिभ्रम्य विज्ञानमिहैवायास्यतीत्यन्ततो जयोऽस्याः सुनिश्चितः प्रक्रियायाः ।

---

## कविराज उपेंद्रनाथदासानां-पंचभूतपरिषदि वक्तृता

१ क्षित्यप्तेजो मरुद्व्योमनामभिः प्रसिद्धानां कैश्चित् प्राचीनाचार्यैरपि 'भूत' 'महाभूतनाम्नाऽभिवर्णितानां मध्ये क्षित्यबनिलाख्यानि द्रव्याणि विजातीयद्रव्यसंयोगजानि, तेजस्तु शक्तिमात्रम्, आकाशं चावस्तु' इति वैज्ञानिकैः प्रमाणीकृतम् तस्मान्नैतानि भूतानीति वक्तुं युज्यते । स्थूलपृथिव्यादीनां विश्लेषणाल्लब्धानां एलिमेंटसंज्ञकानामपि यौगिकत्वं तैरेव प्रमाणीकृतमेव । नाद्यापि वैज्ञानिकैरपि मूलभूताविष्कार आविष्कृतः । वैज्ञानिकपरिकल्पनानां अतिचंचलत्वात्तत्राविश्वासोऽपि विचारशीलानां, अतो मूलभूतस्वरूपगुणादिनिर्णयायास्त्येव पंचभूतविचारस्य महत्प्रयोजनं । यत्तु पंडितवर्या राजेश्वरशास्त्रिमहाभागा आयुर्वेदशास्त्रज्ञानां पंचभूतविचारे किं प्रयोजनमिति पृच्छंति, परं

नेयं केवलमायुर्वेदज्ञानां परिषत्, किन्तु सर्वशास्त्रज्ञा एव विचारार्थमुपस्थिताः तस्मात्साधारणमेव प्रयोजनं युक्तं प्रतीयते।

२ वैज्ञानिकपक्षसमर्थनोद्यतेन श्रीमता देवनायकाचार्येण चिकित्साशास्त्रे पंचभूतपरीक्षणं काकदन्तपरीक्षणवन्निरर्थकमिति स्थापितम्। तदुत्तरत्वेन— 'पंचमहाभूतशरीरीसमवायः पुरुष इति लक्षणादायुर्वेदवर्णितः पुरुषोऽपि भौतिक एव। भौतिकानि चेन्द्रियाणि आयुर्वेदे वर्ण्यंते तथैवेंद्रियार्थाः। "भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते" इति सुश्रुतवचनाद् भूतज्ञानद्वारैव चिकित्साशास्त्रवर्णितविषयोपदेशात् चिकित्साशास्त्रजिज्ञासुभिरादौ भूतपरीक्षणमेव कार्यमिति।

३ येन भूतेन विशेषाद्यदिन्द्रियमारभ्यते तेनेंद्रियेण तद्भूतस्यैव विशेषगुणो ज्ञातुं शक्यते, यदुक्तं चरकाचार्येण— "यद्यदात्मकमिन्द्रियं तत्तदात्मकमेवार्थमनुधावती"त्यादि, श्री सुश्रुताचार्येणाप्युक्त"मिंद्रियेणेंद्रियार्थं हि स्वं स्वं गृण्हाति मानवः। नियतं तुल्ययोनित्वादित्यादि"। तत्र कस्यचिद् भूतस्याऽनेकेंद्रियार्थत्वे तदारब्धेंद्रियेण तद्भूतगुणाः सर्वे एव ज्ञातुं शक्यन्ते। दृश्यते चेंद्रियेण नियमेनैकैकेंद्रियार्थगृहणम्। तस्मादनुमीयते यदेकैकेंद्रियाधिष्ठानानि भूतानि।

४ भूतानि परमाणुस्वरूपाणि नित्यानि, नियमेनैकैकेंद्रियार्थाधिष्ठानानि।

५ नियमेन पंचैवेंद्रियाणि, पंच चेंद्रियार्था इति सर्वेषां नः प्रत्यक्षमेव। तस्मात् पंचेंद्रियप्रधानोपादानत्वेन, पंचेंद्रियार्थगुणाश्रयत्वेन, पंचैवभूतान्यनुमीयन्ते। पंचेतरभूतजन्यानामिंद्रियाणां तदर्थानां, च नियमेन पंचता न संगच्छते इति पंचैव भूतानि।

६ महाभूतादिसंज्ञकानां जन्यानामनित्यत्वेऽपि सर्वादिकारणानां परमाणुस्वरूपाणां भूतानां नित्यत्वमत अनादित्वमिति।

८ सर्गादावीश्वरेच्छया परमाणुस्वरूपेभ्यो भूतेभ्यो द्व्यणुकादिक्रमेण महाभूतान्युत्पद्यन्ते, सृष्टिकाले तु महाभूतेभ्यो भौतिकेभ्यो वा भौतिकान्युत्पद्यन्ते, महाप्रलये च पुनरीश्वरेच्छया भौतिकां महाभूतानां च परमाणवो विश्लिष्यन्ते।

सृष्टिकाले परमाणुपर्यंतं विश्लेषस्य प्रमाणं नोपलभ्यते । परमाणूनां पृथक्करणे नाद्यापि कश्चित्समर्थः ।

९ भूतान्येव कारणव्यापारात् कार्यरूपेण परिणमन्ते, कार्यस्य स्थितिकाले तत्रानुस्यूतानि तिष्ठन्ति, कार्यनाशेऽपि भूतस्वरूपं न नश्यतीति तस्मादुपादानकारणान्येव भूतानि ।

११ " पृथिव्यप्तेजोवाय्वाकाशानां समुदयाद् द्रव्याभिनिर्वृत्तिः उत्कर्षस्त्वभिव्यंजको भवतीदं पार्थिवमिदमाप्यमित्यादि " सुश्रुतवचनात्, ' सर्वं खलु पांचभौतिक'मित्यादि चरकवचनात् तथा ' अन्योन्यानुप्रविष्टानि सर्वाण्यैतानि निर्दिशेत् ' इत्यादि सुश्रुतवचनात् तथा दृश्येषु पृथिव्यादिषु सर्वेषामेव भूतानां गुणदर्शनाद् दृश्यानि पृथिव्यादीनि पांचभौतिकानि ।

१२ वैज्ञानिकवर्णितं हैड्रोजनतत्वस्य गुणादिकमाकर्ण्य सूक्ष्मं जलतत्वमेतत् भवितुमर्हतीति श्री. पंडित गिरिधरशर्मभिः कथितं, तथापि ज्वलनसमये सशद्बमेतद्दह्यते स्पर्शः रूपं चास्मिन् द्रवीभूते घनीभूते वा स्पष्टमेवोपलभ्यते, रसानामुपादानमेतदित्यपि परीक्षासिद्धं, बहूनां गन्धवतामप्येतदुपादानमिति तत्वेऽस्मिन् पंचैवेंद्रियार्था उपलभ्यंते, तस्मात् पांचभौतिकमेतत्तत्वमिति मन्ये । अन्येष्वपि तत्वेषु एलिमेंटसंज्ञकेषु पंचभूतगुणाः पंचेंद्रियार्था उपलभ्यंते तस्मात् पांचभौतिकान्येव तत्वानि, न वा मूलतत्वानीति ।

१३ विद्युदेव जगत्कारणमिति वैज्ञानिकपक्षीयैरुक्तं, तत्र एकैवविद्युद्धारा श्रोत्रसंलग्ना शद्बानुभूतिं जनयति, त्वक्संलग्ना स्पर्शानुभूतिं, नेत्रसंलग्ना रूपानुभूतिं, रसनासंलग्ना रसानुभूतिं, घ्राणसंलग्ना च गन्धानुभूतिमिति परीक्षासिद्धमभवत् ततोऽनुमीयते विद्युद्धारायामेव शद्बादयः पंचेंद्रियार्था विद्यन्ते इति । तस्माद्विद्युद्धाराऽपि पांचभौतिकीति । अत्र श्रीमता गणनाथेनाशंकितं यद्विद्युद्धारायां सन्ति शद्बादयोगुणाः किन्तु सा इंद्रियाणामुत्तेजिनीति वैज्ञानिकानामभिप्रायः तत्र मयोक्तम्—विषयसन्निकर्षमन्तरेण केवलेन्द्रियोपादानभूतानां भूतानां गुणा नोपलभ्यन्ते, किन्तु विषयसन्निकर्षाद्यदेंद्रियोपादनभूतगुणेषु विभुता संजायते तदैव विषयग्रहणं संभवति । एतदर्थं श्रीमता चरकेणाप्युक्तं " तत्स्वभावात् विभुत्वाच्चेति " ।

१४ परमाणुतन्मात्रयोरभेद एवास्माभिर्मन्यते ।

---

विचारांशविषयाणां संख्याका ह्येते ।

# पंचभूत–सम्भाषापरिषदि
# एलिमेन्टसंज्ञकमूलतत्वविचारः

वक्ताः—वीरमणी प्रसादोपाध्यायः
[एम्. ए., साहित्याचार्यः न्यायशास्त्री]

## एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतिच्यरासायनिकै-मूलतत्वतयाऽङ्गीकृतानां ।
## भूतत्वं न वेति विचारे ।

तत्र प्रथमं हैड्रोजन-अक्सिजनपदार्थयोः स्वरूपविवेचनपुरस्सरं भूतेष्वन्तर्भावः संक्षेपेणोपपाद्यते––

नवीनवैज्ञानिकैरुभयत्र गुरुत्वं न्यूनाधिकभावेनाभ्युपेयते, न केवलं गुरुत्वमपि तु वैज्ञानिकविश्लेषणप्रक्रियापर्यालोचनेन समुपनिबद्धसूत्रसमीक्षया च संख्यापरिमाणपृथक्त्वसंयोगादयोऽप्यभ्युपगताः प्रतीयन्ते, द्रवत्वमप्युभयगतमधिकतापक्रमापेक्षमल्पतापनिबन्धनं वा स्वीक्रियते । इयांश्चात्र विशेषोऽपि विनिर्दिश्यते यत्—हैड्रोजनपदवाच्यः प्रज्वलितशलाकापाते प्रकाशनाशकः अक्सिजनपदवाच्यस्तु दीप्तशलाकानिक्षेपे विशेषज्वलनशीलः ।

अत्रेदं विचारणीयम्—यत् द्रवत्वादेः रूपव्याप्यतया—द्रवत्वादिगुणोपलम्भकं रूपमेव । ‘ संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगद्रवत्व-कर्मणां प्रत्यक्षद्रव्यसमवायात् चक्षुःस्पर्शनाभ्यां ग्रहणादि’त्यादि वाक्यानुसारेण—तत्समानाधिकरणेन व्यापकेन च रूपेणाप्यवश्यम्भाव्यम्, तदाश्रयद्रव्यं च साधारणतः प्रत्यक्षतोऽनुपलभ्यमानमपि नूनमेव ग्रहणस्वरूपयोग्यं—तथाचोक्तं—‘ **संख्यादीनां द्रव्यग्रहणयोग्यताऽन्तर्भूतयोग्यतानां** द्रव्यवद्भ्यामिंद्रियाभ्यामुपलब्धिः ’ । तद्गतरूपस्योपलम्भोऽभिभवादिहेतुभिः प्रतिबद्ध इति कल्पनीयम् । अनभिभवोद्भवरूपरूपविशेषे सत्येव कस्यापि पदार्थस्य कारणान्तरसहकृतेनेंद्रियेण प्रत्यक्षम् । तत्रोद्भवात्मकरूपविशेषो यत्कृतार्थे चिद्विषये रूपोपलब्धिर्यदभावाच्च महदनेकद्रव्याश्रयस्याप्यनुपलब्धिः स उद्भवसमा-

**ख्यातो रूपधर्मसहकारिविशेषः** । दृष्टञ्च रूपविशेषाभावात् वारिस्थिते तेजसि महदनेकद्रव्यत्वस्याप्यग्रहणमनुद्भूतरूपस्य ।

बलवत्सजातीयग्रहणकृताग्रहणरूपस्वाभिभवस्याप्यभावः सजातीयद्रव्यांतरग्रहणविरहेण नाशङ्कनीयः, अन्धकारे सुवर्णरूपग्रहापत्तिवारणाय **बलवत्सजातीयसम्बन्धमात्रस्यैवाभिभवपदार्थत्वेनाभ्युपगमनीयत्वात्**-तथाचोक्तं ' भूसंसर्गवशाच्चान्यरूपं न प्रकाशते । तस्मादुभयत्रानुद्भवाभ्दूसंसर्गवशाद्वा रूपग्रहणहानिरितिकल्पने न काऽपि क्षतिः । भूभागस्योभयत्र समानत्वेऽपि प्रतिपादितवैषम्यन्नानुपपद्यमानतया विरुध्यते । यतो भूभागो द्विविधः सर्वैरप्यनुभूयते—एकस्तेजोविरोधीतरश्च तेजःसहकारीति, यथा पार्थिवः कर्पूरः पावकप्रक्षिप्तस्तत्प्रदीपकः पांसुप्रचयश्च प्रक्षिप्तस्तदुपशामकस्तस्मात्पार्थिवभागसंसर्गाद्रूपं चक्षुषा न प्रकाशते किंतु तत्र **बहिरिन्द्रियग्रहणयोग्यत्वविशिष्टविशेषगुणत्वरूपभूतत्वसद्भवाभ्दूतत्त्वम**व्याहतमेव तयोः ।

इदं तावदत्र विचारयितुमवशिष्यते यत्पञ्चसु भूतेषु कतमाविमौ इति, तत्र रूपवत्तया युगुलमेवैतत्पृथिवीप्रभृतित्रयेऽन्तर्भूतमेव [ पृथिवी-जल-तेजासि ] तथाचोक्तं–' **त्रयाणां प्रत्यक्षत्वरूपवत्वद्रवत्वानि** ' । तत्रापि सांसिद्धिकद्रवत्वशैत्याऽभावात् स्नेहाविनाभूतद्रव्यान्तरसंग्रहानुपपत्तेश्च न जलम् । अनयोः हि न्यूनाधिकतापसंयोगजन्यमेव द्रवत्वं न तु स्नेहसहितद्रवत्वरूपं सांसिद्धिकद्रवत्वं । तथाचोक्तं–' सांसिद्धिकद्रवत्वस्याग्निसंयोगाज्जायमानत्वेन बाधितत्वात् '। अथवा सांसिद्धिकत्वम् पाकाप्रयोज्यद्रवत्वगतो जातिविशेषः, शैत्यसमानाधिकरणद्रवत्वत्वं वा ।

तत्रापि ' सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम्, ' तथा च ' त्रपुसीसलौहजतुसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् '— इत्यनयोर्वैशेषिकसूत्रयोः क्रमशः पार्थिवतैजसगतद्रवत्वनिरूपणपरयोर्व्याख्यायां वार्तिककृता विवेचितमस्ति **यत्पूर्वत्रसूत्रेऽग्निपदमौष्ण्यप्रकर्षवत्तेजः परमपरत्र सूत्रे तु वन्हिपरम्** । तथाच पार्थिवद्रवत्वं प्रकृष्टतापवत्तेजःसंपर्कसाध्यम्, तैजसं तु द्रवत्वं सामान्यवन्हिसंसर्गजन्यम् ।

अत्रैवायमपरोऽपि विवेको यत् पार्थिवरूपमसति विरोधिनि परावर्तते सति तु नेति नियमः, किन्तु तैजसं सुवर्णादि निरन्तरं ध्मायमानमपि न पूर्वरूपं जहाति न च रूपान्तरमापद्यते—एवञ्चात्यन्ताग्निसंयोगेऽपि द्रवत्वानुच्छेदः पूर्वरूपान्यरूपानुत्पादश्च विशेषः, तथा च न्यायप्रयोगः सुवर्णादि न पार्थिवमत्यन्तानलसंयोगेऽप्यपरावर्तमानरूपत्वात् जलवत्; सुवर्णं तैजसं प्रहरपर्यन्तमग्निसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकारणत्वात्; अथवा पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः प्रहरपर्यन्तमनलसंयोगेऽपि पीतरूपभिन्नरूपानाश्रयत्वात् इत्यादि। तस्मादेतत्सिद्धमेवावसेयं यत्प्रभूतपावकसम्पर्के परावर्तमानरूपवत् पार्थिवम्, अनुवृत्तरूपवत्पार्थिवसविशेषधर्मविधुरञ्च द्रव्यं तैजसमेवेति।

वर्णितविचारतुलामधिरूढौ उपर्युक्तपदार्थौ कुत्रान्तर्भवत इति विचारणीयम्—तत्राधिकतापक्रमापेक्षितया अक्सीजननामके पदार्थे पार्थिवं द्रवत्वमापतति, पार्थिवभागसम्मिश्रणादेव वन्हिसंयोगेन प्रतिबन्धकापनये तत्रेषन्नीलरूपाविर्भावदर्शनात् रूपपरावर्तनमपि संगच्छते समुपपद्यते चात एवात्र हैड्रोजनपदार्थापेक्षया गुरुत्वातिशयोऽपि।

हैड्रोजनपदार्थस्तु रूपान्तराग्रहणात्, अधिककालं यावदग्निसंयोगेऽपि द्रवत्वोच्छेदवैधुर्याच्च तैजस एव प्रतिभाति। अत्र द्वयोर्गुरुत्वं रसवत्त्वञ्चेति सूत्रानुसारेण तेजसि गुरुत्वाभावे सिद्धे गुरुत्वोपलम्भानुपपत्तिर्नाशङ्कनीया, यतो गुरुत्वं पार्थिवभागगतमेव तत्र निर्णेतुं शक्यते, अत एव तत्र तेजोविरोधिपार्थिवभागसम्मिश्रणासादिता रूपानुपलब्धिरपि संगन्तुं शक्यते। तयोः पार्थिवतैजसत्वव्यपदेशश्च भूयस्त्वहेतुकः। इत्थं च यदैतानि मूलतत्वानि भूतसम्मिश्रणजन्यानि नैकभूतगतधर्माश्रयत्वात् तदा कथं शुद्धभूतकोटिं तन्मात्राकोटिं वा समारोढुं प्रभवन्ति, प्रत्युत भौतिककोटिप्रविष्टान्येवेति व्यवस्थितिः समीचीना प्रतिभाति।

इदानीन्तनाः वैज्ञानिकाः वदन्ति यत्प्रत्येकाणुषु शर्करायाः कार्बन तत्वस्य द्वादश, हैड्रोजनतत्वस्य द्वाविंशतिः, अक्सीजनतत्वस्यैकादश परमाणवो

भवन्ति तत्रावयवभूतपरमाणवः कथं स्वयमेव द्व्यणुकादिक्रममुत्क्रम्य शर्करा-त्मकमहत्कार्यमुत्पादयितुम्पारयन्ते । इत्थमत्र न्यायप्रयोगः-परमाणवो **नाहत्य** स्थूलारम्भकाः परमाणुत्वे सति बहुत्वात् घटोपगृहीतपरमाणुवत्, अनेनानुमानेन द्व्यणुकमारम्भपरमाणोस्त्रसरेण्वनारम्भकत्वसिद्धेः का कथा महत्तरारम्भकत्वस्य, द्व्यणुकादिपरम्परया घटाद्यारम्भकत्वानङ्गीकारे भग्ने घटादौ कपालादिर्नोपलभ्येत तस्य घटाद्यानारम्भकत्वात् । वैज्ञानिकैरभ्युपगता अणवस्तु न द्व्यणुककक्षीयाः यतस्तेषु मानसिद्धाऽयतनभारस्वीकारेण मानयोग्यगुरुत्वस्योदकपरमाणुद्व्यणुकयोः पार्थिवपरमाणुद्व्यणुकयोश्च तैजसपरमाणुप्रभृतौ च सर्वथा गुरुत्वस्यासिद्धत्वात् ।

'अतो विपरीतमणु, इति सूत्रेणाणौ वैपरीत्यम्प्रतिपाद्यते तच्च वैपरीत्यम् लौकिकप्रत्यक्षाविषयत्वं कारणबहुत्वाद्यजन्यत्वञ्च—एवं द्व्यणुकपरिमाणस्य परमाणुगतद्वित्वसंख्याजन्यत्वेनोभयं समुपपन्नम्भवति । अत्र तु न तथा द्व्यधिकसंख्याकपरमाणुजन्यत्वाभ्युपगमात् । तस्मात् द्व्यणुककोटितोऽप्यधस्तना आधुनिकवैज्ञानिकसम्मता अणव इति कथन्तदवयवानाम्परमाणुत्वमिति सर्वेऽपि वैज्ञानिककृताः परमाण्वादिव्यपदेशा अविचारितरमणीयाः प्रतिभान्ति । अनयैव दिशा सर्वेषामपि सांप्रतिकवैज्ञानिकैर्मूलतत्वतयाऽङ्गीकृतानां एलिमेंटसंज्ञकानां भूतेष्वेवान्तर्भावो भवितुमर्हतीति प्रकृतिभूतभूतविश्लेषणं कर्तुमपारयंतो वैज्ञानिकाः भ्रांत्यैव द्विनवतिसंख्याकानि मूलतत्वानि साधयन्ति ।

---

॥ श्री ॥

## पंडित श्रीरुद्रदेवशास्त्री ( बनारस ) इत्येषां वक्तृता ।

प्रतीच्यवैज्ञानिकैरुररीकृतानां " इलेक्ट्रान्-प्रोटॉन्-ईथराख्यानां तत्वानां पौरस्त्यदार्शनिकैरङ्गीकृतेषु पदार्थेषु कुत्रान्तर्भावः कथञ्च " ? " किन्नाम चैतन्यम् " ?

ॐम् । पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

मान्यवरपरिषत्पते ! मान्याः सदस्याश्च !

अखिलायां अम्भोजयोनिसृष्टौ यावती सुषमा प्रसृता सम्प्रति दृश्यते, या पूर्वञ्च कदापि आसीत्, उत्तरकाले च या कदापि भविष्यति, सा किम्मूला ? किमाधारा ? कुत आजाता ? इतीमे सन्ति प्रश्नाः येषां समुचितं समाधानं वाञ्छति गुणज्ञः सर्वो जनः ।

भगवति वेदे सन्ति बहवो मन्त्राः येषु एतादृशानां प्रश्नानामस्ति समुल्लेखः । तथा हि—

किंस्विदासीत् अधिष्ठानमारम्भणं कतमस्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥

— यजुः १७ अ० १८ म०

किंस्विद्वनं क उ स वृत्त आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्य तिष्ठद् भुवनानि धारयन् ॥

— यजुः १७।२०

यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यर्पिताः ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥

— अथर्व १०।४।७।१२

यत्रादित्यश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ।

— अथर्ववेदे ।

ऋग्वेदस्य नासदीयं सूक्तन्तु विषयेऽस्मिन्नतिविख्यातमेव । नासीदीये सूक्ते अस्य सर्गस्य यादृशः समुत्पत्तिप्रकारः सन्दर्शितः प्रायस्तथाभूत एवास्ति राद्धान्तः पाश्चात्यदेशीयानां वैज्ञानिकानां दार्शनिकानाञ्च ।

नासदीयसूक्तस्य ( ऋ० १० म० १२९ सू० ) अस्तीयं प्रथमा ऋक्--

" नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीत् गहनं गभीरम् " ॥

अस्याः ऋचः सरलं व्याख्यानं श्रीसायनाचार्येण वेदार्थप्रकाशे यत् कृतं तत्तु विद्वज्जनमनोहरम् । तथाहि---

" तपसस्तन्महिना जायतैकमित्यादिना " अग्रे सृष्टिः प्रतिपादयिष्यते । अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते । तदानीं प्रलयदशायां अवस्थितं यदस्य जगतो मूलकारणं तन्नासत् शशविषाणवन्निरुपाख्यं नासीत्, न हि तादृशात् कारणात् अस्य सतो जगत् उत्पत्तिः संभवति । तथा नोसत् नैव सत् आत्मवत्, सत्त्वेन निर्वाच्यमासीत् । यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति, तथापि भावाभावयोः सहवस्थानमपि न सम्भवति । कुतस्तयोस्तादात्म्यम् ? इति उभयविलक्षणानिर्वाच्यमेवासिदित्यर्थः । ननु नोसदिति पारमार्थिकसत्त्वस्य निषेधः । तर्हि आत्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः । अथोच्यते, न आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते । परिशेषान्मायाया एवात्र सत्वं निषिध्यते इति । एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि तस्याः पारमार्थिकसत्वाभावात् । अथ व्यावहारिकसत्वस्य तदापि व्यावहारिकसत्ता, पृथिव्यादीनां भावानां तदापि विद्यमानत्वात्, कथं नो सादिति निषेधः ? तत्राह नासीद्रज इत्यादि । ' लोका रजांस्युच्यन्ते ' इति यास्कः । अत्र च सामान्यापेक्षया एकवचनं व्योम्नो वक्ष्यमाणत्वात् तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन् इत्यर्थः । तथा व्योमांतरिक्षं तदपि नो नैवासीत् । पर इति सकारान्तं परस्तादित्यर्थे वर्त्तते । परशब्दाच्छान्दसस्तासेरर्थे असिप्रत्ययः । परव्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृति सत्यलोकांतं यदस्ति तदपि नासीदित्यर्थः । अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डरूपेण निषिद्धं भवति । अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति । किमावरीवरिति किमावरणीयं तत्वं आवरकभूतजातं आवरीवः अत्यंतमावृणुयात् ;

आवार्याभावात्तदावरकमपि नासीदित्यर्थः वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत् । यद्वा किमिति प्रथमैव । किंतत्वमावरकमावृणुयात् आवार्याभावात् आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः । आवृण्वत्तत्त्वं कुह कुत्र देशे अवस्थायावृणोति, आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः । किं शब्दात् सप्तम्यर्थे ' ह ' प्रत्ययः । कुतिहोरिति प्रकृतेः कु आदेशः । कस्य शर्मन् कस्य वा भोक्तुः जीवस्य शर्मणि सुखे सुखदुःखसाक्षात्कारलक्षणे वा निमित्तभूते सति तदावरकं तत्वमावृणुयात् । जीवानामुपभोगार्था हि सृष्टिः । तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणम् । प्रलयदशायां च भोक्तारो जीवाः उपाधिविलयात् प्रविलीना इति । कस्य कश्चिदपि भोक्ता न सम्भवति, इत्यावरणस्य निमित्त-त्वाभावादपि तन्न घटत इत्यर्थः । एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति । किं शब्दादुत्तरस्य ङसः सावेकाच इति प्राप्तस्योदात्तस्य न गोश्वन्त्सावर्णेति निषेधः । सुपां सुलुगिती शर्मणः सप्तम्या लुक् । यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधन तदन्तर्गतं अप्सत्वमपि निराकृतम्, तथापि ' आपो वा इदमग्रे सलिलमासीत् ' इत्यादि श्रुत्या कश्चिदपां सद्भावमाशङ्केत तं प्रत्याचष्टे अम्भः किमासीदिति । गहनं दुःप्रवेशं गभीरं दुरवस्थानं अल्प-गाधं ईदृशमम्भः किमासीत्तदपि नैवासीदित्यर्थः । श्रुतिस्त्ववान्तरप्रलयविषया ।

सृष्टि-उत्पत्ति-विषयको यो राद्धान्तः भगवता ब्राह्मणा प्रदर्शितः तमेव राद्धान्तं पाश्चात्याः वैज्ञानिकाः सम्प्रति अङ्गीकुर्वन्ति । पाश्चात्यदेशीयेषु विद्वत्सु फ्रान्सदेशोत्पन्नस्य गणितज्ञमौलिरत्नस्य ' लाप्लास ' महोदयस्य " नेबुलर-थियरी " नाम्ना प्रसिद्धो ' नीहारिकावादः ' अतितरां प्रसिद्धो वर्तते । शार्मण्यदेशोत्पन्नेन एमेनुएल काण्ट ( Immanuel Kant ) दार्शनिकेनापि अस्यैव नीहारिकावादस्य समर्थनं कृतमस्ति ।

अनयोः काण्टलाप्लासविदुषोरयं सिद्धान्तः, यत्–

प्रपञ्चात्मकसृष्टिदशातः प्राक् सर्वत्र प्रसृत आसीन्नीहारिकामहौघः । नीहारिकापर्यायवाचकस्य 'नेबुला' शब्दस्यार्थः लैटिनभाषायामम्बुभृदित्यस्ति । लैटिनभाषायाः नेबुलाशब्दः (Nebula) आंग्लभाषायां नेबुली ( Nebulæ )

रूपेण परिणतः । अस्य शब्दस्य व्याख्यानभूतं समस्तं पदं ' फायर-मिस्ट ' ( Fire-mist ) इति वर्तते । 'फायर-मिस्ट' पदस्य संस्कृत-भाषायामयमर्थः भवितुमर्हति यत्--" जाज्वल्यमानो बाष्पसमूहः " ।

अस्मिन् बाष्पसमूहे केनापि कारणेन महती गतिरुत्पन्ना । अस्य बाष्पसमूहस्य विविधा अंशाः विभिन्नया गत्या विविधासु दिक्षु महता वेगेन चक्रवत् भ्राम्यन्तिस्म । कियता कालेन चक्रवत्परिवर्तिनि अस्मिन् बाष्पसमूहमध्ये एका महती गतिः पश्चिमतः पूर्वदिग्गामिनी समजनिष्ट, एषा गतिः बाष्प-समूहमक्षेप्सीत् , अक्राक्षीत् , अभाक्षीच्च ।

शनैः शनैः बाष्पसमूहस्याकृतिस्तथा सञ्जाता यथा अस्य केचन भागाः प्रधानं पिण्डमुज्झाञ्चक्रुः । महौघस्याय मुख्यो भागः दिवस्पतिरूपेण अम्बरतलमुम्भाञ्चकार । अपरे च भागाः ग्रहरूपेण परिणताः सन्तः नभोमण्डलं जुगुम्फुः । सम्प्रति यथा हि अम्बरमणिः स्फुरति, एवमेव पूर्वं हि क्षितीरप्येषा सुषोर । अन्येपि ग्रहाः सूर्यवदेव सुषुरुः। यत्र हि सम्प्रति प्रशान्तमहासागरस्यास्त्यवस्थितिः तत्रासीद्धिमांशोः पदम् । ऋतुकोटिसमाः पूर्वं तत्रत्याया रत्नगर्भायाः कश्चिदंशः तुत्रोट, शीर्णश्च नभस्तलं प्रतिपस्फार, तदारभ्य व्योम्नः कश्चिद्भागं सुधासूतिरपि उवोभ । अस्ति विष्णुपदस्थ एष सुधासूतिरिलायारुपग्रहः । प्रो. पिकरिङ्गमहोदयेन नानाविधैरुपायैरस्य साम्प्रतं तु पञ्चत्वं गतस्य निशाप्राणेश्वरस्यातीतमुदन्ततत्वमधिगतमिति, केषांचिन्मतम् ।

सर्गारम्भे निखिलमपि सौरमण्डलं सूर्य्यस्तत्वाच, अस्त्येष राधान्तः फ्रान्सविषयवास्तव्यस्य प्रसिद्धविदुषः श्रीरेने दकार्तमहोदयस्य ( Rene Descartes ) । व्योमवर्तिनः सर्वेऽपि पिण्डकाः शनैः शनैः बहुकालानन्तरं नैजं-नैजं रूपं अस्पार्क्षुः । उष्णत्वन्तु प्रत्यहमेतान् विनक्ति, तेजप्रभा च रिणक्ति परिस्थितिरेतान् पूर्वं चच्छर्द तदनु अक्षौत्सीच्च ।

प्रो. हक्सलेप्रभृतिभिः भूविद्या-जीवविद्येत्युभयविद्याकोविदैः विपश्चिद्भिः, लार्डकेल्विनप्रभृतिभिर्दैवज्ञैः, अन्यैश्च रेडियमतत्वसर्वस्वानिष्णातैः वैज्ञानिकैः सर्गारम्भस्य यो यः समयः स्वीकृतः अस्ति तत्र भूयान्भेदः ।

रेडियमशक्तिपरीक्षकैः सर्गारम्भस्य यः समयः स्वीक्रियते, स समयः सनातनवैदिक-पौराणिकधर्मानुयायिषु भारतीयेषु चिराय प्रसिद्ध एव ।

क्षितिजन्मतः समारभ्य अद्यावधि अस्य भुवस्तलस्य चित्रं एकविधमेव न वर्तते । पूर्वं यादृशी अवस्थास्य भूतलस्यासीन्न तादृशी सम्प्रत्यस्ति; नात्रास्ति विचिकित्सालेशोऽपि । भूगर्भशास्त्रज्ञानामस्ति, मतं यत् क्षितिजन्मतः समारभ्य अद्यावधिपर्यंतं यावन्ति सौरवर्षाणि व्यतीतानि, तेषामर्द्धे भागे तु अस्यां भुवि न केऽपि प्राणिनोत्प्राणिरे ।

यथाकथञ्चित्तु तदनु सूक्ष्मवीक्षणयन्त्रसहायदृश्याः ( Microscope ) सुसूक्ष्माः ओषधयः संजज्ञिरे । आसु ओषधिषु प्रथमोत्पन्नाया निरवयवायाः ओषधेः नाम 'प्रोटोफाइटीज्' ( Protophytes ) इत्यस्ति । केचित् प्रोटोकोकसः ( Protococcus ) इमां सरणिं प्रारभन्ते । सुसूक्ष्माभिराभि-रोषधिभिः सागरोपान्तवर्तिनस्तुषारस्य मध्ये हरिदरुणपीताभाः नानाविधाः वर्णाः सञ्जायन्ते । प्रच्छन्नस्यास्य तत्वस्य ज्ञानन्तु महता प्रयत्नेन विद्वद्भिः यथाकथञ्चिदुपलब्धम् ।

ओषधियुगानन्तरं सुसूक्ष्मा निरवयवाः ' प्रोटोजोआसंज्ञकाः ' ( Protozoa ) अणिष्ठाः कीटाः संजज्ञिरे ।

कोविदाः केचिदेवमुट्टङ्कयन्ति, यद् 'प्रोटोजोआतः' अतिसूक्ष्मं चैतन्यं विद्यते । अस्य परमसूक्ष्मस्य ऋजुतमस्य चैतन्यकललस्य ' प्रोटोबिआन ' ( Protobion ) इति नाम त उदीरयामासुः ।

भूगर्भशास्त्रविदां नयमनुसृत्य जे० डब्ल्यू० ग्रेगरी-महोपाध्यायेन, एफ० आर० एस०, डी० एस-सी० प्रभृत्युपाधिविभूषितेन स्वीये ' दि मेकिङ्ग आफ दि अर्थ ' नामके ' पृथिव्याः निर्माण-प्रकार-विवेचनपरे प्रबन्धे ' क्षितिस्तर-निर्माणपरम्परया सहौषधिजातप्राणिजातजन्मसरणिरेवं संसूचिता—

| ( अ ) भौगर्भिककल्पनामानि (Geological Eras. ) | ( ब ) भौगर्भिकयुगनामानि ( Geological Periods. ) |
|---|---|

| | |
|---|---|
| Kainozoic<br>४--केनोजोइक<br>(=ग्री० Kainos, recent; zoe-life )<br>नवजीवनकालः | १६–प्लाइस्टोसीन<br>( Newer Pleistocene )<br>१५ आइओसीन<br>(Gr. Pleion, more; kainos new )<br>१४ मायोसीन ( Miocene )<br>( Less recent )<br>१३–ओलिगोसीन<br>Oligocene<br>१२–इओसीन ( Eocene ) |
| Mesozoic.<br>३–मेसोजोइक<br>(=Middle-life ) | ११–क्रीटेशियस<br>( Cretaceous. )<br>१०–जुरेसिक<br>( Jurassic. )<br>९–ट्राइजिक<br>( Triassic ) |
| Palæozoic<br>२–पोलिओजोइक | ८–पर्मिअन ( Permian )<br>७–कार्बोनिफेरस् ( Carboniferous<br>६–डेओनिअन ( Devonian )<br>५–साइलूरिअन ( Silurian )<br>४-ओर्डोविसिअन[Ordovician]<br>३ - केम्ब्रिअन[=Cambrian ] |
| Archæozoic or Eozoic.<br>१–आकओजोइक अथवा इओजोइक | २–टोरिडोनिअन [ ब्रिटिश ]<br>[ Torridonian ] [ British ]<br>१–आर्किअन<br>=Archæan. |

प्राक्तनाः बहवः सरीसृपाः पाक्षिणोऽन्ये प्राणिनश्च सर्वथा विनष्टाः ।

१ डिनैसौरस्, २ डिप्लोडोकस्, ३ ब्रोण्टोसौरस्, प्रभृतयः सरीसृपाः

४ आर्किओप्टेरिक्स, ५ टेरोडक्टील प्रभृतयः खगाश्च सम्प्रति अस्यां वसुंधरायां न क्वापि जीवितास्तिष्ठन्ति । मैमथ मेस्टोडोन प्रभृतयः प्राणिनोऽपि निर्वंशाः सञ्जाताः ।

वैज्ञानिकैः पेलेआंटोलाजी ( Palæontology = Gr. Palaios, ancient; onta, beings; logas, a discourse. ) संज्ञकशास्त्रसाहाय्येन चत्वारिंशत्सहस्रसंख्यातोऽप्यधिकानामेवंविधानां प्राणिनां ज्ञानमासादितमित्यस्ति प्रो० हक्सलेमहोदयस्योक्तिः । सर्वेषु जीवेषु यत् सुसूक्ष्मं जीवनीयं बीजं वर्तते, तस्य नाम ' प्रोटोप्लाज्म ' इति संगिरन्ते वैज्ञानिकाः । प्रोटोप्लाज्मवस्तुनः प्राचीनं नाम 'कलल' इति यास्कीये निरुक्ते पठितं वर्तते। कार्बन, ऑक्सिजन, हैड्रोजन प्रभृतिभिरष्टसंख्याकैर्मूलतत्वैर्भवत्यस्योत्पात्तिः प्रायशः ।

यथा हि खलु प्रोटोकोकस्, प्रोटोजोआ प्रभृतिषु इदं चैतन्यबीजं वर्तते तथैवेदं चैतन्यबीजं महत्स्वपि जन्तुषु समवलोक्यते ।

महोपाध्याय राफेल मेल्डोला ( Raphael Meldola : The chemical synthesis of vital products; Vol. I, 1904, P. VI) महोपाध्याय एफ० आर० जैप ( F. R. Japp, in his presidential address to the chemical section of the British Association at Bristol in 1898. ) प्रभृतयः वैज्ञानिकाः खनिजद्रव्येष्वपि एकां विशिष्टां शक्तिं स्वीकुर्वन्ति । अस्याः शक्तेः प्रोटोप्लाज्मतोऽप्यस्ति कश्चिद्भेदः । प्रोटोप्लाज्मतुल्याया अस्याः खनिजशक्तेर्नाम 'पेट्रोप्लाज्म' ( Petroplasm ) इति संरक्षितं वैज्ञानिकैः ।

एवमिदमायातं यत्-निखिलस्यापि जडचेतनभेदभिन्नस्य प्रपञ्चात्मकस्य सर्गस्य मूलं कारणमेकमेव ।

किमात्मकमिदम्मूलम् ? अत्र दार्शनिकानां वैज्ञानिकानाञ्च सन्ति बहूनि मतानि ।

---

1—Dinosaurus. 2—Displodocus. 3—Brontosaurus. 4—Archæopteryx. 5—Pterodactyl. [ —Gr. Pteron, a wing; daktylos, a digit. ]

ब्रह्माद्वैतवादप्रधानाद्वैतवादयोर्मध्ये सर्वेषां वादानां भवति संग्रहः। केचिच्छाङ्करं नयमनुसृत्योचुर्यद् एकं चेतनं ब्रह्म जगतः कारणम्। शाङ्करस्य वादस्यापरन्नाम 'विवर्तवाद' सुप्रसिद्धमेव। एष ब्रह्माद्वैतवादः पाश्चात्यानां दार्शनिकानां पैन्थीज्मसंज्ञकेन ( Pantheism ) वादेन सुतरां मिलति। प्रधानाद्वैतवादस्य वैज्ञानिकं नाम हाइलोजोइज्म [ Hylozoism ] इत्यस्ति। एष वादः विकासवादप्रवणानखिलान् वादान् स्वगर्भे विलति, कापिलदर्शनं 'परिणामवादं' पुरस्कृत्य स्वराद्धान्तमित्थं मुणति—

"सत्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहंकारः, अहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियमित्यादि" परिणामवादस्याहैास्विद् गुणपरिणामवादस्येदं निदर्शनम्—

एकस्मिन् केदारे बहूनि मृदूनि तृणानि सन्ति। काचित् सौरभेयी तृणानि चचार। भक्षितानि तृणानि तस्याः जठरे गत्वा जाठराग्निना ववल्छिरे। जाठराग्निव्यापारेण धेनौ तृणैरेव रसोत्पत्तिः संजाता। तत्रैव रसाद्रक्तं, ततो मांसं, मांसान्मेदः, मेदसोऽस्थीनि क्रमशः प्रजायन्ते। सम्पिण्डितैरेभिरर्जुनी तायते स्थायते च। एषैव प्रक्रिया धेनुं द्राघयति, मदयति, मादयति, ग्लेपयति च।

भक्षितानां तृणानामेकोंऽशः माहेय्याः कुक्षितो गोमयादिरूपेण बहिः स्खलति। इत्थं मूत्रपुरीषादिरूपेण तूलितोंऽशः मनुष्यादीनां चरणाद्याघातैः फलति दलति वा, भुवि कुडति सलिले वा भृडति। शुष्कं सन्तमेनं वायुः किरति, कदाचिच्च प्रभञ्जनवेगैरितस्ततः प्लवते रेवते च। कदाचिच्चामुमेवांशं केचन पुरीषादाः प्राणिनो गिलन्ति। कदाचिच्चैशोंऽशः कन्दलिनीं धरित्रीमनुप्राप्य सलिलसेकवशादात्मानं भूयश्छदयन् शाद्वलस्य जीवनांशं त्रायते। इयमेव प्रक्रिया भवति साम्रेडम्। इत्थं क्रियासमभिहारेण जगतः सर्वे पदार्थाः प्रणिमयन्ते। एतद्धि गुणपरिणामवादस्य रूपम्। कणभुग्दर्शनेऽक्षपाददर्शने च यद्यपि 'आरम्भवादः' उररीकृतो वर्तते तथापि तयोरारम्भवादः 'पीलुपाकवादपिठरपाकवादपाकजगुणोत्पत्तिमुखेन' गुणपरिणामवादमेवास्प्राक्षीत् वैज्ञा-

निकानां केमिकल-ॲक्शन ( Chemical--Action ) नामधेयः सुप्रथितः संयोग एष एव ।

इदं सर्वं तत्वं ज्ञानचक्षुषा निध्याय निध्याय तैत्तिरियोपनिषदि वर्तमाना भगवती श्रुतिरकुविष्ट—तस्माद्वा एतस्मादात्मनः आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, आन्नाद्रेतः, रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः ।

तैत्तिरीयोपनिषदि, ब्रह्मानन्दवल्ल्यन्तर्गते प्रथमेऽनुवाके । मुण्डकोपनिषदि "यथोर्णनाभिः सृजते गृह्णते च....तथाक्षरात्संभवतीह विश्वम्" इत्येषा श्रुतिरस्ति । श्रुतिरेषाऽभिन्ननिमित्तकारणञ्जगतः ब्रह्मेति समामनति । अन्यास्वपि तावदुपनिषत्सु प्रोच्यमानार्थोपोद्बलनपराः श्रुतयः लषन्ति ।

प्रश्नोपनिषदि तु समुपदिष्टं यत्–' प्रजाकामो वै प्रजापतिः स तपस्तप्त्वा मिथुनं उत्पादयते । रयिञ्च प्राणञ्चेत्येताः मे बहुधा प्रजाः करिष्यत इति [ प्र. १।४ ] ।

पुनरग्रे प्रजापतेर्द्वे अयने समुपदिष्टे । तत्र एकन्तु उत्तरमयनमपरन्तु दक्षिणमयनम् ।

सामवेदीयछान्दोग्योपनिषदि "अस्य लोकस्य का गतिरित्याकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं अन्त्याकाशो ह्येभ्यो ज्यायानाकाशः परायणम्" [ १ प्र. ९ ख १ क ] इति तत्वं प्रदर्शितम् ।

सामवेदीयछान्दोग्योपनिषदि ' वायुर्वाव संवर्गः ' [ ४ प्र. ३।१ ] इत्यादिना या संवर्गविद्योपदिष्टा ततः वायुमाहात्म्यं सुतरामवगम्यते । अभ्रं भूत्वा मेघो भवति····तद्भूय एव भवति [ छा. ५ प्र. ९ ख. ६ ] इत्यनया श्रुत्या जन्मनः स्वरूपं स्फुटं प्रदर्शितम् ।

' आकाशो वा नामरूपयोर्निर्वहिता ' [छा. ८ प्र. १४।१] इत्यनेन पुनरपि छान्दोग्योपनिषदि आकाशविद्या समुपदिष्टा ।

'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्च' इत्यादिवाक्यजातेन ब्रह्मणः द्वैविध्यं प्रदर्शितं भवति [ बृ. ४।२ ब्रा. १ ] पुनश्च बृहदारण्यकोपनिषदि समुपदिष्टम्-" विद्युद्ब्रह्मेति आहुः " [ ७।७ ब्रा. ]

एतैः सर्वैः श्रुतिसमूहैर्मयानुमीयते यत् [ १ ] रयिः, [ २ ] प्राणः, [ ३ ] आकाशश्च इतीमे त्रयः शब्दाः क्रमशः [१] इलेक्ट्रान [ २ ] प्रोटॉन [३] ईथर-शब्दवाचकाः सन्ति । ईथरस्वरूपविषये रूसदेशवास्तव्यस्य मण्डेली-एफाभिधस्य वैज्ञानिकस्य यः सिद्धान्त आसीत्, स एव विषयः 'वायुर्वाव संवर्ग' इत्यनया श्रुत्या प्राक्तनेनैकेनर्षिणा प्रदर्शितः । परं नायं सिद्धान्तपक्षः ।

मुण्डकोपनिषदि-" यदर्चिमद्यदणुभ्योऽणु यस्मिंल्लोकाः निहिता लोकिनश्च ", " तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विधि " इत्यनया श्रुत्या 'अर्चिमत्' इत्यनेन विशेषणेन 'प्राणस्य' विद्युद्रूपत्वं प्रतिपादितं भवति।

'इलेक्ट्रान' इत्यस्यापि परिभाषा एकेन विदुषा इयमेव कृता; यत् 'इलेक्ट्रान इज ऐन ऐटम ऑफ इलेक्ट्रिसिटी' [ An electron is an atom of electricity ] प्रायः श्रुत्याप्ययमेवार्थउपदिश्यते ।

'इलेक्ट्रानप्रोटॉनीथरादीनां विषये प्रतीच्यानां वैज्ञानिकानां ये राद्धान्ताः सन्ति; यथा च ते प्रतिष्ठिताः सन्ति; तेषां निरूपणं विषयवैशद्यार्थमावश्यकमत्र प्रतिभाति ।

हालैण्डदेशाभिजननेन दार्शनिकेन ह्यु जेन्स ( Huygens ) महोदयेन खीष्टीयसप्तदशशतकान्तिमे चरणे सर्वतः प्रागीथरस्य वैज्ञानिकी व्याख्या कृता । वस्तुतस्तु ईथरस्य वास्तविकं विशुद्धं ज्ञानमनेनैव विदुषा वैज्ञानिकेभ्यः प्रदत्तम् । 'दि एडिनबरा रिव्यू' [ Vol. V. p. 97, 1804 ] पत्रस्य सन्दर्शनेन प्रतीयते यद्यदा टामस यङ्ग [ Thomas Young ] महोदयेन ईथरविषयप्रवणं स्वीयं लघुपुस्तकं प्रकाशितं तदा जनानामस्मिन्नूतने सिद्धान्ते नासीत् प्रत्ययः । डॉ. टामस यङ्ग महोदयः सावज्ञमवहासास्पदीभूतः समभूत् । यदा तेन स्वावक्षेपस्योत्तरं प्रकाशितं तदा तस्योत्तरस्य केवलमेकमेव पुस्तकं क्रीतं जनैः । अधुना तु जनानामीथरविषयेऽस्ति दृढमूलः प्रत्ययः ।

केचिद् वदन्ति—ईथरः सर्वत्र व्याप्तोऽस्ति । असौ मित्रबृहस्पति-प्रमुखानां पिण्डानां प्रकाशमितस्ततो नयति । इयन्नः पृथिवी अन्ये च ग्रहादिपदार्थाः अस्यैवेथरस्याभ्यन्तरे डीनावडीनं कुर्वन्तस्त्वेषन्ते । यथा तरन्ते काचित्तरन्ती तरति तथैव तरणिधरणिप्रभृतयः सर्वे पदार्थाः विष्णौ, श्लक्ष्णे कृत्स्नस्थलव्याप्तेऽस्मिन्नीथररत्नाकूपारे निर्बाधं तरन्तः सन्ति ।

रूसदेशाभिजनस्य मेण्डेलीएफ ( Mendelieff ) नाम्नो महावैज्ञानिकस्यासीन्मतं यत् ईथररत्नः सुसूक्ष्मवाततुल्योऽस्ति ।

एष वातः ' क्षिपणु ' संज्ञको भवितुमर्हति, इत्यस्ति मे मतम् ।

मेण्डेलीएफमहोदयस्यासीदिदमपि मतं यत् परमसूक्ष्मेषु ' ऐटम ' संज्ञकेषु परमाणुषु सुतरामस्त्यस्यावस्थानम् । ईथरकृते सर्वेऽपि परमाणवः सभूका एव । इदानीन्तनानां वैज्ञानिकानान्तु नेदम्मतम् । तेषां नये तु मेण्डेलीएफमहोदयस्य 'ईथर'द्रव्यं सतूस्तम् ; वस्तुतस्त्विदमितोऽप्यतीववर्जुतमम् ।

केम्ब्रिजविश्वविद्यालयस्थकेवेण्डिशप्रयोगशालाध्यक्षेण श्री जे० जे० टामसनमहोदयेन तच्छिष्येण मेञ्चेस्टरप्रयोगशालाध्यक्षेण प्रो. रुदरफोर्डमहोदयेन रेडियमपोलोनियमतत्वयोः सवर्खं, कालवशाच्च पोलोनियमत एव त्रपुधातोरुत्पत्तिमध्यक्षीकृताभ्यां मेडमकुरीपैरीकुरीमहोदयाभ्याञ्च मूलतत्वपरकस्य वादस्यामूलं प्रत्याख्यानं कृतमिति । एतेषां परीक्षणैः परीक्षकाणां मनसि सम्प्रति सुस्थिरोऽयं सिद्धान्तः संभ्याशते यन्मूलतत्वपरकं सिद्धान्तं ये केऽपि वेत्तुः न ते तत्साधनाय पुप्रथुः । येऽपि पूर्वं मूलतत्वविषयकं वादं रेटन्ते स्म तेऽपि सम्प्रति तं सिद्धान्तं खनन्त्येव ।

सम्प्रति तु वैज्ञानिकानामस्त्येष विश्वासः यत्सर्वेऽपि पदार्थाः सर्वाणि चापि मूलतत्वानि अभिन्नकारणानि । जगति यावन्तः सन्ति पदार्थास्ते सर्वे विद्युद्रूपा एव । तथा चोपनिषदि " स एष वैश्वानरो विश्वरूपः " [ प्रश्नोप० १-७८ ] ।

विद्युति च द्विविधा शक्तिर्वर्तते । एका ऋणात्मिका=रयिरूपा इलेक्ट्रान-पद-संकेतिता, अपरा धनात्मिका=प्राणरूपा प्रोटॉनपद-संकेतिता । प्रोटॉन्

इलेक्ट्रानयोरपि स्वरूपं स्थिरीकृतं विपश्चिद्भिः । प्रोटॉनस्य भारः इलेक्ट्रानस्य भाराच्चत्वारिंशदुत्तराष्टादशशतगुणाधिकः । प्रोटॉनिलेक्ट्रानयोः संख्याभेदाज्जगति पदार्थानां भवति भेदः । यथा हि वैशेषिकनये संख्यायाः महत्वं दरीदृश्यते तथैवात्रापि । हैड्रोजनसंज्ञकस्य सुसूक्ष्मस्य क्षिपणोरेकः परमाणुः द्वाभ्यां परमाणुभ्यां संजायते । तत्रैकः प्रोटॉनपरमाणुर्भवति, एकश्चेलेक्ट्रानपरमाणुः । प्रोटॉनसंज्ञकाः परमाणवः कैश्चिदिलेक्ट्रानसंज्ञकैः परमाणुभिः सह मध्ये तिष्ठन्ति, केचन इलेक्ट्रानसंज्ञकाः परमाणवस्तेषामितस्ततो भ्राम्यन्ति । अक्षपाददर्शने द्व्यणुकाद्युत्पत्तिप्रकारश्च एष एव ।

अनयोरुभयोः सम्पिण्डिता संख्या भवति तुल्या । एषां संख्याभेद एव पदार्थभेदहेतुः । मध्यवर्तिनः प्रोटॉनस्य भ्रान्तिमतः इलेक्ट्रानस्य मध्ये यद्भवति व्यवधानं तद्व्यवधानं द्वयङ्गुलमितादिञ्च संज्ञकात्परिमाणात् अशीतिकोट्यंशात्मना न्यूनम् ।

अमेरिकादेशवास्तव्येन प्रो० मिलिकनमहोदयेन कास्मिककिरणविषयेऽनुसन्धानं कृतमस्ति । द्युलोकस्य सूर्यस्य चाभिन्नमेकं नाम ' पृश्निः ' इति समायाति वैदिके साहित्ये । भगवता यास्केन पृश्निशब्दस्येदं निर्वचनं कृतमस्ति—

" प्राश्नुत एनं वर्णः " इत्यनेन प्रतीयते यत् ' पृश्निः ' इत्यपि ' ईथरस्य ' सार्थकं नाम, मिलिकनवादश्चात्र सङ्गच्छते । उणादिकोषे आष्ट्रवैष्ट्रसरिमाप्रभृति नामसु किञ्चिद्वैलक्षण्यं प्रतिभाति । ' वातस्य सर्गोऽभवत्सरीमाणि ' [ सि० ५३४ पृष्ठे ] इत्यनेन प्रतीयते यत् ' सरीमाणि '—ईथरे वातस्य सर्गोऽभवत् । ईथरस्य भारविषये [ H. P. S. भागे १ पृ. ४५९ ] अस्ति जे० जे० टामसनमहोदयस्य मतं यत् ' एकस्यां कणिकायां यावानीथरोऽस्ति सोऽपि त्रपुधातोः परमाणुतः नियुतद्वयगुणोऽस्ति भारे । नायं लघुः । '

केवेण्डिशप्रयोगशालायाः प्रथमेन केवेण्डिश-महोपाध्यायेन क्लार्कमैक्सवेलनाम्ना विदुषा प्रतिपादितं यत्—ईथरकल्लोलमालाभिः विविधात्मकाः प्रकाशाः सञ्जायन्ते । तस्यैवाकुञ्चनप्रसारणाभ्यां समुत्पद्यते तडित् । आवर्तेभ्यश्च

तत एव मित्रावरुणसंज्ञकौ उत्तरदक्षिणप्रदेशस्थितौ द्वावपि चुम्बकस्य भेदौ जायेते ।

एष ईथर एव आकाशः । एष एव हि प्रजापतिः । एष एव हि हिरण्यगर्भः । ऋणात्मिका विद्युद्रयिरूपा । धनात्मिका विद्युत् प्राणरूपा । अनयोरेव च प्रोटॉनिलेक्ट्रॉनेतीमे नाम्नी ।

अल्फा, बीटा, गामा संज्ञकानां किरणानां नामानि महासरस्वतीमहाकालीमहालक्ष्मीति ज्ञेयानि ।

ईथरस्यैव शक्तिविषये योगवासिष्ठस्येयमुक्तिश्चरितार्था भवति—

सर्वत्र सर्वथा सर्वं सर्वदा सर्वरूपिणी ।
अहो नु विषमा माया मनोमोहविधायिनी ।

—योगवासिष्ठे, निर्वाणप्र०, उ० १५९-४१ ।

उक्तञ्चर्षिणा सामवेदीयछान्दोग्योपनिषदि—

अस्य लोकस्य का गतिरित्याकाश इति होवाच ।

सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम् ।

--छा०, ९५ पृ० ।

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥

—प्रश्नोपनिषदि ।

ॐम् पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐम् शम् ।

॥ श्री ॥

# संकलितोवृत्तान्तः ।

[ ले. चक्षुर्वैसत्यम् ]

ख्रैस्तीये १९३५ शके नव्हेंबरमासस्य ता. २ प्रारभ्य ९ पर्यन्तम् पंचमहाभूतत्रिदोषादिपरिषदौ वाराणस्यां हिंदू विश्वविद्यालयस्य भव्ये भवने-समभूताम्। तत्र ता.२ तो ता. ५ पर्यन्तम् पंचमहाभूतादिपरिषत्कार्यम्, तदनु ता. ६ तो ता. ९ सायंकालपर्यन्तम् त्रिदोषादिपरिषत्कार्यम् संवृत्तम्। स्वागत-सभापतिपरिषत्सभापतिभाषणानन्तरम् तथा च परिषदर्थं समागतानां शुभ-संदेशवाचनानन्तरम्—परिषन्निमित्तं विचारार्हविषयाणां चर्चाकरणार्थं प्रथमं महामहोपाध्याय श्री गिरधरशर्माचतुर्वेदीभिः स्थापनापक्षप्रामुख्यं स्वीकृत्य विषयाणां स्थापनाकरं भाषणम् कृतम् ।

स्थापना तु प्रथमं पंचमहाभूतविचारप्रयोजनम् इत्यस्मिन् विषयांशे एवाऽभवत्। प्रो. फुलदेवसहायवर्मभिस्तु विपक्षीयं भाषणं कृत्वा पंचमहाभूतानां विचारे निःष्प्रयोजनता प्रतिपादिताऽधुनिकपद्धतीमनुसृत्य सुचिरम्। स्थापना-पक्षे तद्दिने पं. महामहोपाध्यायगिरधरशर्माचतुर्वेदी, पं. उपेंद्रनाथदास, पं. धर्म-दत्तजी, पं. रुद्रदेवजी, पं. नारायणशास्त्री वाडीकर, पं. नारायणदत्तजी, पं. हरिनाथशास्त्रीजी, पं. वीरमणिशास्त्रीजी, पं. दामोदरशास्त्रीजीत्येते आसन्। विपक्षे तु प्रो. फुलदेवसहायवर्मा, प्रो. द. अ. कुळकर्णी, डॉ. घाणेकर, पं. हरिरामशास्त्रीजी, पं. हरिशरणानंदजीत्येते अवर्तन्त। स्थापनापक्षीयैः स्वानि स्थापनाकराणि भाषणानि गीर्वाणवाण्यैव कृतानि, परंतु सर्वेऽपि समा-गताः प्रतीच्यशास्त्रज्ञा, दक्षतराश्चनैवाऽबुध्यन् गीर्वाणवाणीपरिचयाऽभावात्। अतःसर्वानुमत्या हिंदीभाषयैव परिषद्विवादव्यवहारः कार्य इति निश्चित्य प्रथम-दिनकार्यं समाप्तमासीत्। स्वामी हरिशरणानंदैः किंनामभूतत्वमित्यस्मिन् विषये भाषणं कर्तुं समुद्यतैर्या स्वकीया संस्कृतभाषाप्रभुता, याच विचारपटुता, येचाऽ-विर्भावाः प्रकटीकृताःतैस्सर्वोऽपिविद्वत्समाजो तेषां वैदूष्येणाश्चर्यावहो बभूव, नैकाऽपि वाक्यपंक्तिः शुद्धा, सरला पूर्णा विचारप्लुता उच्चारयितुं ते समर्था

बभुवुः । सर्वमप्यंगं 'सस्वेदवेपथु' स्वरश्च कंपितो, नेत्रेच भयचकिते, अन्तः-करणं च व्याकुलमिव तेषां ददृशे। एते महाभागाः प्राचीनदर्शनानि, शास्त्राणि, दर्शनकारा, ऋषयश्च तत्प्रतिपादिततत्वानि, सर्वमप्यस्मदीयं मूर्खप्रलपितमिति दुंदुभिस्वनेनाऽद्यावधि प्रजगर्जुः ते वसंतसमये प्राप्ते काकस्वरमपि यथावत् कर्तुं नाशक्नुवंतीत्यहोधृष्टता महाभागानां इत्येव शब्दः समुत्थितोऽभवत् तदानीम् । एवमेवाऽपरिषत्समाप्तिपर्यन्तम् दृश्यं दृश्यमानमभवत् । हिंदीभाषयैव तैस्तदनंतरम् स्वीयं भाषणं कृतम् ।

द्वितीये दिवसे द्विनवतिमूलतत्वानां पाश्चात्यनये वर्णितानां पौर्वात्यपद्धत्या शास्त्रीयभाषया परिज्ञानार्थं तथा च तदुत्पन्नानां पञ्चमहाभूतविषयकाक्षेपादीनां च स्पष्टीकरणार्थं स्वकीयं निरीक्षकपदं विद्वत्संमत्या कंचित्कालं परित्यज्य पंडित**प्रवरैर्देवनायकाचार्यै**र्विपक्षत्वमंगीकृत्य खंडनापक्षीयं सर्वमपि भाषणादिकं अन्यखंडनापक्षीयवैज्ञानिकवर्यसाहाय्येन तत्संमत्या च कृतम् । **श्रीमद्भी रामदासगौडमहाशयैः** पञ्चमहाभूतानां वैज्ञानिकदृष्टयाऽप्यन्यथारीत्याऽस्तित्वं प्रतिपादितम् । सर्वेषामपि पदार्थानां 'सालिड् लिक्विड् गेशस्' इति तिस्रो अवस्था भवंत्येव, अन्ये अपि अवस्थे द्वे सर्वेषां भवत इति पञ्चभूतावस्था प्रत्येकपदार्थानां भवतीत्यनया रीत्या पञ्चमहाभूतानां अस्तित्वं वर्तते एव । न तु द्विनवतितत्ववत् पञ्चमहाभूतानि पंचैवतत्वानि । **श्रीमाद्भिः पंडितप्रकाण्डैराजेश्वरशास्त्रीद्रविडमहाशयैः** स्वीयया विद्वत्वप्रचुरया वाण्या न केवलं जडस्थूलपदार्थबुध्यैव पंचमहाभूतानां विचारोऽस्माभिः कर्तुं युक्तः । सर्वेषां दर्शनानां अद्वैतदर्शने पर्यवसानं भवति । अद्वैतदर्शने तु अन्नमय, प्राणमय, मनोमय विज्ञानमयाऽनंदमय पंचकोषाणां सविस्तरम् वास्तविकमनुभवगोचरं कृतमस्ति वर्णनम् । पंचसु कोषेषु स्थूलात्सूक्ष्मसूक्ष्मतरसूक्ष्मतमस्वरूपेण पंचमहाभूतानां भिन्नभिन्नावस्थासु अवस्थानं, मूलसच्चिदानंदविज्ञानघनापरपर्यायादेव तेषां निर्गमावस्थाऽत्र अनुसंधेया, न केवलं द्विनवतितत्वसमालोचनया पंचमहाभूतानां साम्यवैषम्यविचारो भवितुमर्हति, द्विनवतितत्वानि तु सर्वाण्यपि पंचमहाभूतमयान्येव, न स्वातंत्र्येण मूलतत्वानि इति विस्तरशः प्रतिपादितम् ।

जयपुरराज्यपंडितैः परमवृद्धैर्वेदविद्यापारावारपारीणैर्विद्यावाचस्पतिभिर्**मधुसूदन सरस्वतीमहाभागैस्तु** स्वकीयवैदिकवाङ्मयवैदुष्येण आधुनिकरसायनपदार्थविज्ञानादिशास्त्रसिद्धान्ता, प्रमेयाणि, तथैव तेभ्यो नवनवीनआकाशयानादिसाधनसमूहाः वैदिकमन्त्रतन्त्रस्य परिभाषायाथार्थ्यज्ञानेन अवलोकनेन च न नाविन्यपदवीं समारोहन्ति, किन्तु सर्वमपि पुनरावृत्तमिव प्रतिभाति, वैदिककाले तु सर्वेषामपि निष्पत्तिभूतपूर्वैव प्रतिभाति, तत्र क वराकाणि द्विनवतितत्वानि, का वा तेषां प्रौढीति वैदिकमन्त्रपरिभाषार्थस्य भौतिकरासायनिकतत्वार्थसादृश्यदर्शनेन नैकवारं प्रदर्शितम्। एतेषां महाभागानां परिषदः कालादन्यस्मिन् काले प्रत्यहं महामनामालवीयमहाभागविज्ञप्त्या व्याख्यानानि अस्मिन्नेव विषये प्रचुरविद्वत्वयुतानि समभवन् तत्र सर्वेऽपि पंडिता दार्शनिका अन्ये च श्रोतारः प्रचुरया संख्यया समुपस्थिता अभवन्।

**प्रो. एस्. एस्. जोशी महोदयैः** पंडितमालवीयमहाभागाज्ञया "इलेक्ट्रान प्रोटान् पॉझिट्रान् न्यूट्रान्" इत्यस्मिन् विषये अतीव सुबोधं प्रत्ननूत्नदार्शनिकवैज्ञानिकपंडिताऽपंडितावबोधसुखं सहजसुंदरं तद्विषयसत्स्वरूपप्रदर्शकं व्याख्यानं पूर्वं प्रदत्तं, तदनन्तरम् तस्मिन्विषये परिषदि विचारः समजनि।

पंडितप्रवरा महामहोपाध्याया **गिरिधरशर्माचतुर्वेदिनस्तु** अस्मिन् पंचभूतविचारपरिषदि स्थापनापक्षीयाः प्रमुखा एवाऽसन्, तेषां विशालवक्षःपरिणद्धकंधरं पीनोन्नतं सहजसुंदरं वपुः, प्रसन्नगंभीरा ओघवती निनादवती च वाणि, अतीवाऽकर्षकं साभिनयं स्वाभिप्रायनिदर्शकं च वक्तृत्वं, सर्वविषयस्पर्शिनी, खंडनपक्षीयोध्दृताक्षेपनिरासिनी, नैकशास्त्रवचनसंबद्धा, तर्कयुक्तिसुविचारपरा, स्वसिद्धान्तस्थापिनी, च विद्वत्ता इत्येतेभिर्नितान्तरमणीयैर्गुणैस्सर्वापि परिषद् सर्वे च पंडिताः प्रत्नानूत्नाश्च अमोघाऽनंदकल्लोलोल्लसितान्तकरणाः प्रतिदिनं बभूवुः। म. म. गणनाथसेनमहाभागाः, पंडितवर हरिनाथशास्त्रिणो, वीरमणिमहोपाध्याया, पं. रुद्रदेवशर्माणो, पं. उपेंद्रनाथदासाः, पं. नारायणशास्त्रीवाडीकराः इत्यादयोनैके दार्शनिकाः पंडिताश्च स्वस्वविचारांश-

विषये स्थापनापक्षे वैदूष्येण वक्तृत्वेन, युक्तिसिद्धकोटिक्रमेण सहायवन्तो बभूवुः। विज्ञानपक्षीयास्तु प्रो. कुळकर्णी, डॉ. घाणेकर, स्वामी हरिशरणानन्द प्रभृतयः स्वपक्षं खंडनापक्षापरनामधेयं यथावत् प्रस्थापयामासुः तेष्वपि प्रो. एस्. एस्. जोशी पं. देवनाथकाचार्याणां तु सुतरां सहाय्यमभवत्। तैस्तु स्वीयो विषयोऽतीव सुमनोहरत्वेन, सौलभ्येन, वैशद्येन पांडित्येन यथावत् प्रतिष्ठापितो येन विषयस्वरूपं याथार्थ्येनाकलितुं शक्यमभवत्।

पंचमहाभूतविचारपरिषदि विंशति विचारांशेषु प्रत्ननूत्नपंडितानां विदुषां, १ पंचमहाभूतविचारप्रयोजनम्, २ किं नाम भूतत्वं, ११ दृश्यानां पृथिव्यादीनां भूतत्वं न वा, १२ एलिमेन्टसंज्ञकानां द्विनवतितत्वानां भूतत्वं न वा ? १६ तेजसो द्रव्यत्वं न वा ? १७ आकाशस्वरूपविमर्शः, १९ ईथराख्यस्य कुत्रान्तर्भावः,२० मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं वा पंचभूतादिसंयोगजन्यं वा ? एतेषु विषयेष्वेव विशेषेण विचारविनिमयः पारिस्परिकः संवृत्तः। दृश्याणि पंचमहाभूतानि न मूलतत्वानि किंतु संयुक्तानि, तथैव द्विनवतितत्वान्यपि भौतिकानि संयुक्तानि पंचमहाभूतमयान्येव। अणुपरमाणुविषयेऽपि प्राचीनानां आणुर्वा परमाणुर्वा अविभाज्य एव। "जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठतमो वा त्रिंशत्तमो वा षष्टितमो वा भागो परमाणुः स उच्यते" इति परमाणुव्याख्या तु स्थूला न तु वास्तविकीति स्पष्टतां यातम्। द्विनवतितत्वानि सांप्रतं विभाज्यानीति सिद्धं अतस्तानि संयुक्तान्येव। तथैव प्राचीनभूतत्वव्याख्यया तु द्विनवतितत्वानि किं अपि तु विद्युत्–इलेक्ट्रान् प्रोटान् इत्यादयोऽपि पंचमहाभूतगुणयुक्ता अतस्संयुक्ता एव इति प्राचीनैः प्रतिपादितम्। नवीनानां तु तत्शास्त्रप्रतिपादितपद्धत्या इमानि पंचमहाभूतानि संयुक्तान्येव न मूलतत्वानि, द्विनवतितत्वानि यद्यपि सांप्रतं विभाज्यानि तथापि तेषां मूलतत्वत्वं नैव विच्छिनत्तिः, प्राचीनानां विचारसरणिस्त्वस्मदीयशास्त्रदृष्ट्या व्यवहारानुपयुक्ता, भौतिकरासायनिकशास्त्रज्ञानोद्भूतनवनवीनानेकगुणसंपद्युक्तपदार्थोत्पत्त्यननुकूला, चेति प्रतिपादनतात्पर्यमासीत्, तथापि प्राचीनविचारसरणिः केवलं कल्पनात्मिका, असत्यमयी सर्वथा त्याज्या अज्ञा-

नमर्याति न केऽपि वक्तुं शेकुः। प्राचीनानां इयं पांचभौतिकी पद्धतिस्तु स्थूला, सर्वपदार्थानां स्थूलत्वेन पंचभूतेषु समावेशिनी न गुणवैशिष्ट्येन प्रत्येक-पदार्थस्य पार्थक्येन संपूर्णतया स्वरूपाविर्भाविनी, अतएव तत्तत्पदार्थस्थित-गुणधर्माप्रकाशनेन तज्जन्यकर्मफललाभाऽप्रापिणीति नवीनानां मतम्। प्राचीनास्तु, यदि साधनसौकर्यं, बुद्धिस्वातंत्र्यं युष्मदिव अस्माभिः सर्वथा सर्वानुकूल्येन लभ्येत चेत् पांचभौतिकपरिभाषयाऽपि साम्नन्यया तद्गतानेक-पदार्थानां वैशिष्ट्येन गुणधर्मज्ञानं कृत्वा तदुत्पन्नकर्मफलादयोऽपि यथा सर्व-जनलाभाय भवेयुस्तथा वयमपि दर्शयिष्यामः। पूर्वमपि अस्माभिरेव अनयैव परिभाषया नैकभौतिकशास्त्राविष्कारः कृत आसीत, संपादितानि आविष्कृतानि नवनवीनानि तत्तत्पदार्थगुणकर्मजन्यविमानादिसाधनानीति, नकाऽपि हानि-रासीत्तदानीं अनया परिभाषयाऽस्माकमिति जगर्जुः। नैव वयमप्यर्वाचीन-नूत्नशास्त्रोत्पन्नानेकाश्चर्यावहसुखसाधनानां, शोधानां शोधकानां वा त्रिप्रतिगा-मिनः। सर्वथा तेऽप्यस्मन्मान्या एव। तथैवास्माकमपि सांस्कृतिकी, शास्त्रीया, आध्यात्मिकभूतपदार्थज्ञानदायिनी सरणिरपि श्रीमद्भिस्सर्वथाऽज्ञानयुक्तेति वक्तुं नैव समुचितमिति नो विचार इति। अन्तत अनयोः प्रत्ननूत्नपद्धत्योर्विचा-रसरणिस्तु सर्वथा परस्परं भिन्ना, दृष्टिकोनस्तु तथैव। तथापि वारंवारं एवमेव प्रत्ननूत्नदार्शनिकाः पंडिताश्च वैज्ञानिका यदि संमील्य विचारविनिमयं करिष्यंति तदा उभयोरपि संशयभ्रमासद्ग्रहादयो निरासं प्राप्नुयुस्तथा सर्वेऽपि वयं शास्त्री-यविचारांशे ऐकमत्यप्रदर्शकं मार्गं लब्ध्वा निकटवर्तित्वं गंतारो भवेयुरिति निष्कर्षः संतोषपुरस्सरोऽन्तिमो निर्जगाम।

विंशे विचारांशे स्वामीहरिशरणानन्दैः प्रतिपादितं यथा सुराऽसवेषु आसुत्तेषु किण्वं वा सुराबीजं प्रादुर्भवति तथैव भौतिकेषु पदार्थेषु मिलितेषु जीवप्रादुर्भावः स्वयमेव भवति, नान्यस्य कस्याऽपि ईश्वरांशस्य गर्भाशये बाह्यतः प्रवेशस्याऽवश्यकता विद्यते, सुराबीजवत् संयुक्तानां भौतिकानां पदार्थानां अयं स्वभाव एव यत् जीवप्रादुर्भावः। आधुनिकाः शास्त्रज्ञास्तु 'प्रोटोप्लाझम' नामकः 'सेल' नामकजीवाणुगतः पदार्थोऽपि निर्मातुं प्रभवंति यः पदार्थस्तस्य

जीवाणोः पोषकत्वेनातीवोपयुक्तः स च प्रोटोप्लाझम् पदार्थः भौतिकपदार्थोत्पन्न एव, अतः नान्यः कोपि ईश्वरो वा जीवांशो वा स्वतंत्रं चैतन्यं, वा नास्ति तस्यावश्यकताऽपि इति । अस्य पूर्वपक्षस्य खंडनं चतुर्थे दिवसे स्वयं महामनापंडितमालवीयमहाभागैरतीव सुमनोहारि, सुविचारपरिप्लुतं, श्रीमद्-भागवताद्यनेकप्राचीनग्रंथगतवचनैरनेकैः प्रमाणैश्च सुललितया, मधुरया प्रसादार्थगौरवयुतया, सुलभया प्रसन्नगभीरया गिरा सुचिरं कृतं, येन वक्तृत्वेन सर्वाऽपि परिषद् चित्रलिखिता इव स्तंभिता अभवत्, पंडितवरैर्मालवीयमहाभागैः स्वामीहरिशरणानन्दोत्थापितमेकमेकं विषयं गृहीत्वा चैतन्यं न भौतिकपदार्थानां संयोगजन्यं अपि तु स्वतः सिद्धं न केनाऽपि कदापि निर्मातुं शक्यं, प्रोटोप्लाझमवस्तुनिर्माणवार्ताऽस्माभिर्नैव श्रुता, नैव तस्य निर्माणशाला कुत्रापि प्रस्थापिता, तथापि गृहीतमपि तद्वस्तु ' सेल ' नामकजीवत्शारीराणुपोषकं संयुक्तभौतिकवस्तुप्रभवमेव, यदि तदेव केवलं बहिराकृष्टं चेत् तच्छुष्यति, अतो न तस्मिन् चैतन्यस्यांश इति सिद्धमेव। चैतन्यं वस्तु अनिर्वचनीयमेवेति श्रीमद्भागवते एकादशस्कंधे वर्णितम्—

स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ।
देहेंद्रियासु हृदयानि चरंति येन संजीवितानि तदवेहि परं नरेंद्र ॥३५॥
नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेंद्रियाणि च यथाऽनलमर्चिषः स्वाः ।
शब्दोऽपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥३६॥
सत्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदंति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥३७॥
नात्मा जजान न मरिष्यति नैधतेऽसौ नक्षीयते सवनविद् व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥३८॥
अंडेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ।
सन्ने यदिंद्रियगणेहमिच प्रसुप्ते कूटस्थ आशयमृते तदनु स्मृतिर्नः ॥३९॥
यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेग्दुणकर्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः॥४०॥

श्रीभागवत एकादशस्कंध तृतीयोऽध्यायः ॥

तथा—भूतैर्यदा पंचभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवापनारायण आदिदेवः ॥ ३ ॥
यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानं स्वतः श्वसनतो बलमोजईहा सत्वादिभिः स्थितिलयोद्भवआदिकर्ता ॥४॥
श्रीमद्भागवत एकादशस्कंध चतुर्थोऽध्यायः ॥

इत्याद्यनेकग्रंथस्थश्लोकानां अतीव मधुरया गिरा तैश्चैतन्यं न भौतिकमुत-स्वतंत्रं स्वयंसिद्धं सनातनमिति प्रतिपाद्य विंशतितमविचारांशस्य साकल्येन विचारः कृतः । अनंतरम् तस्मिन्नेव चतुर्थेदिने निरीक्षकैः पंचभूतचर्चापरिषदो निर्णय ऐकमत्येन एकान्तस्थले संमील्य विचार्य च लिखित्वा स्वाक्षरीःप्रदाय परिषदि समर्पितः । तदनंतरं परस्पराभिनंदनं कृत्वा इयं परिषद् समाप्ता ।

## निरीक्षकाणां अभिप्रायः ।

निरीक्षकेषु वैज्ञानिकानां प्रो. एस्. एस्. जोशी महाभागानां स्वतंत्रो अभिप्रायः आंग्लभाषायां प्रदत्तस्सचाग्रे दीयते एव । तस्यानुवादः— ' द्रव्याणां वर्गीकरणविषये आधुनिकशास्त्राणां अंतिमो हेतुस्तथा वर्गीकरणपद्धतिरिति द्वयं पंचमहाभूततत्वानां पुरस्कारकर्तृभिस्तज्ज्ञैस्स्वीकृताद्धेतोः पद्धत्याश्च मूलत एव भिन्नम् वर्तते । परिषदः प्रारंभकाले वा अवसरे परस्परेषां शास्त्रीयदृष्टिकोनस्य परस्परेभ्यो बहुतरः परिचयो यद्यपि संजातस्तथापि द्वयोरपि पद्धत्योर्मध्ये केऽपि स्पर्शबिंदवो विद्यन्ते न वेति अन्वेषणे अनयैवदिशा अधिकप्रयत्नानामावश्यकता विद्यते ।

परिषदोऽग्रिमाधिवेशने एतादृशः प्रयत्नो यदि भवेत् चेत् स प्रयत्नो मुख्यानां विवादास्पदानां प्रश्नानां निर्णयकरणे हितावहो अवश्यं भवेत् ।

अनयोर्द्वयोः पद्धत्योर्मध्ये पदार्थविज्ञानशास्त्रेण तथा प्रत्यक्षप्रयोगाणां निदर्शनेन कतमा पद्धतिः प्रमाणभूतेति निश्चयोऽस्यां घटिकायां कर्तुमशक्य प्राय एव । ”

ता. ७-११-३५. **एस्. एस्. जोशी.**

सर्वैर्निरीक्षकैर्मिलित्वा यश्च निर्णयः प्रदत्तस्स हिंदीभाषायां अधो दीयते तस्याप्यनुवादः प्रथमं लिख्यतेः—

श्री काशी, ता. ७-११-३५.

दिनचतुष्कपर्यन्तम् पंचमहाभूतपरिषदि पंचमहाभूतसिद्धान्तविषये प्राच्यप्रतीच्यविज्ञानदृष्ट्या यावान् संजातो विचारविनिमयः तेन वयं निरीक्षका यस्मिन्निर्णये समागतास्स एवं विधो विद्यते—

प्रतीच्यवैज्ञानिकानां पदार्थवर्गीकरणस्य दृष्टिकोनः अथवा मुख्यं लक्ष्यं प्राचीनऋषीणां दृष्टिकोनात् अथवा मुख्याल्लक्ष्यादत्यन्तं भिन्नमेव विद्यते। इति सत्यमपि वयं परिषदि संजातेन संधायसंभाषापद्धत्या विवादेन एकामेतादृशीं भूमिकां अनुभवामो यया भविष्यत्कालीनेषु एतादृशेषु संमेलनेषु विचारविनिमये अग्रे गछन्तो वयं कमप्येकमुपादेयं निर्णयं प्राप्नुयाम। तथा च प्रत्यक्षानुभावात्मकतर्के च स्थिरा भविष्यामः।

अस्मिन्समये प्रतीच्यवैज्ञानिकद्वारा प्रतिपादितद्विनवतिमूलतत्वानां तथा तन्मूलानां विद्युत्कणानां वर्गीकरणदृष्ट्या पंचमहाभूतवर्गीकरणसिद्धान्तस्य विचारकरणे परिषदियं निश्चिते मते समागछति यदस्मिन् वर्गीकरणे न कोऽपि पारस्परिको विरोधः।

| | |
|---|---|
| श्री प्रमथनाथशर्मा [महामहोपाध्यायः] | श्री मधुसूदन विद्यावाचस्पतिः |
| फणिभूषणतर्कवागीश ( महामहोपाध्यायः ) | श्री गणनाथसेन शर्मा [ महामहोपाध्यायः ] |
| सत्यनारायणशास्त्री वैद्य. | लक्ष्मीरामस्वामी. |
| श्री शंकर तर्करत्न. | श्रीधर सर्वोत्तम जोशी. |
| जी. श्रीनिवासमूर्तिः | श्री राजेश्वरशास्त्री द्राविड. |
| बालकृष्ण अमरजी पाठक. | श्री देवनायकाचार्य. |

The ultimate objects and methods of the analysis of matter by modern science are fundamentally different from those adopted by the ancient seers in evolving the पंचभूत theory. While a considerable understanding of mutual view points has come about as a result of the discussion during the early stage of the conference, further thought along these lines is necessary in order to enplore in more detail the points of contract, if any, between the two schools of thoughts. These, if arranged, at further sessions of the conference would be of distinct advantage in presenting the chief

issues in adequate relief. A dicision as to the validity of one of the two systeems in relation to the other, on the basis of demonstrable and physical data, is, at the present stage premature.

Date 7-11-35. Sd/. S. S. Joshi.

॥ श्री ॥ काशी, ता. ७-११-३५.

तीन दिनपर्यंत पञ्चमहाभूत परिषदूके पञ्चमहाभूतसिद्धान्तके संबंधमे प्राच्यप्रतीच्यविज्ञानकी दृष्टीसे जहांतक विचारविनिमय हुवा है उससे हमलोग जिस निर्णयपर पहुचे है वह यह है कि,—

[ क ] प्रतीच्य वैज्ञानिकोंके पदार्थवर्गीकरणका दृष्टीकोन एवं मुख्य लक्ष प्राचीन ऋषियोंके दृष्टीकोन एवं मुख्य ध्येयसे अत्यंत भिन्न है। ऐसा होते हुवेभी परिषदूमे होनेवाले वादविवादसे हमलोग एक ऐसी भूमिकाकी अनुभव कररहे हैं कि, आगे चलकर हमलोग ऐसें और सम्मेलनके द्वारा किसी एक उपादेय निर्णयकों प्राप्त करसकेंगे जोकि, प्रत्यक्ष तथा अनुभवात्मकतर्कपर स्थित होसकेगा।

[ ख ] इस समयके प्रतीच्य वैज्ञानिकोंके द्वारा किये हुवे बान्वे मूलतत्वों एवं तन्मूलभूत विद्युत्कणोंके वर्गीकरणकी दृष्टिसे पंचमहाभूत वर्गीकरण सिद्धान्तका विचार करनेसे परिषद् इस निश्चित मतपर पहुंच चुकी है कि, इन वर्गीकरणोंका परस्पर कोई विरोध नहीं है।

श्री प्रमथनाथ शर्मा [महामहोपाध्यायः]
फणिशभूषण तर्कवागीश [ महामहोपाध्यायः ]
सत्यनारायणशास्त्री वैद्य
श्री शंकर तर्करत्न
जी. श्रीनिवासमूर्ती
बाळकृष्ण अमरजी पाठक

श्री मधुसूदन विद्यावाचस्पतिः
श्री गणनाथसेन शर्मा [ महामहोपाध्यायः ]
लक्ष्मीरामस्वामी
श्रीधर सर्वोत्तम जोशी
राजेश्वरशास्त्री द्रवीड
श्री देवनायकाचार्यः

॥ इति पंचमहाभूतपरिषद् ॥

॥ श्री ॥

# त्रिदोषचर्चापरिषदि संजातो विचारः

ता. ७।११।३५ तमे दिवसे वाराणस्यां हिंदूविश्वविद्यालयसंस्थायाः विस्तीर्णे भवने पंचभूतचर्चापरिषदूकार्यसमाप्त्यनंतरं पूर्वनिर्धारितायाः त्रिदोष-परिषदः कार्यारंभो म. म. गणनाथसेनसरस्वतीमहाभागानां अध्यक्षत्वे प्रारब्धः । प्रथमं पंचमहाभूतचर्चापरिषत्सभापतिभिरेव म. म. प्रमथनाथतर्क-भूषणैर्विज्ञापिता अन्यैश्च पंडितप्रवरैरनुमोदिता म. म. श्री. गणनाथसेन-सरस्वतीमहाशयाः सभापतिपदं अलंकृतवन्तः । तैस्तु स्वस्याः प्रकृतेरस्वास्थात् सुदीर्घं भाषणं नैवकृतम् । केवलं परिषदो महत्वं, विषयाणां गांभीर्यं, चर्चापद्ध-त्याः संधायसंभाषात्वं प्रदर्श्य,त्रिदोषाणां विषये स्वीयं मतं पूर्वमेव स्वीये सिद्धान्त-निदानग्रंथे प्रदर्शितं वर्तते इतिच निर्दिश्य परिषद्कार्यारंभः कृतः ।

## [ वृत्तलेखकेन लिखितम्. ]

### त्रिदोषचर्चापरिषदो विचारः ।

कार्तिक शुद्ध १० बुधवासरः

८ **विषयः**—वातादीनां स्वरूपं गुणाः कर्माणि च ।

**वादी हरिशरणानन्दजीः**—शास्त्रे वर्णनमनुसृत्य कफपित्तयोः क्वचि-दुपलब्धावपि वातस्य यथावर्णनमनुपलब्धेः, पित्तस्य चाहारेणसह संयोगानन्तर-मनुपलब्धेः, कफस्यापि स्वस्थावस्थायां पृथगनुपलब्धेः, नैतानि त्रीणि आयु-र्वेदे यथोपदिष्टं तथा स्वरूपवन्तीति वक्तुं युक्तम् ।

**प्रतिवादी घाणेकरजीः**—पाश्चात्यप्रयोगेण दोषस्वरूपं यादृशमुपगतं तादृशमेव आयुर्वेदवर्णितं दोषस्वरूपं शरीरे उपलभ्यते ।

**प्रतापसिंहजीः**—शरीरे काचन विद्युत् तस्या वातत्वम् ।

**देशपांडेः**—पित्तस्य द्रवस्वरूपत्वं, अधिकद्रवं अल्पवाष्पादियुक्तं वस्तु श्लेष्मा । अचिन्त्यशक्तिर्वायुर्नाम । वायुस्तन्त्रयन्त्रधरः संयामकः चेष्टावहः ।

धातुदोषयोराधाराधेयभावः सम्बन्धः । गुणसमुदाय एव द्रव्यम् । वातादीनां पंचरूपत्वम् ।

**मस्तरामजीः**—वातस्य अमूर्तरूपत्वं, पित्तकफयोः उभयस्वरूपत्वम् ।

२ **विषयः**—वातादीनां दोषत्वं धातुत्वं मलत्वं वा ? ।

**सभापतिजीः**—धारकत्वं दूषकत्वं मलिनीकारकत्वं च वातादीनां केन रूपेणेति प्रश्नाशयः ।

**प्रतिवादी**—वातादीनां स्वास्थ्यप्रयोजकपरिमाणाधिकन्यूनावस्थायां दोषत्वं, शरीरस्य मलिनीकरणान्मलत्वं, इति किंचिन्निरूपितं दोषत्वं मलत्वं च । स्वास्थ्यकरणाद्धारकत्वम् । विकारकरणाद्दोषत्वम् । दोषकरणाभावदशायां वातादीनां दोषत्वव्यपदेशः कथं ? पाचकव्यपदेशवत् । प्रकृत्यारम्भकत्वे सति दुष्टिकर्तृत्वं दोषत्वम् ।

४ **विषयः**—कथं त्रय एव दोषाः ? ।

**सभापतिजीः**—दोषत्रयातिरिक्तदोषसत्वे संभाविते तस्य निषेधः कर्तव्यः, तर्हि अतिरिक्तो दोषः प्रथमं सहेतुकः प्रतिपादनीयः । सुश्रुते शोणितस्यापि दोषत्वमुक्तं तत्समीचीनं न वा ? ।

**प्रतिवादी उपेंद्रनाथजीः**—"अग्निः पित्तान्तर्गतः शुभाशुभानि करोति; इति वचनात्तत्र पित्तस्य शुभाशुभकारणत्वं, वायोः कफस्यापि एवमेव विज्ञेयम्, शोणितस्य तु दूष्यत्वं न तु दोषत्वम् तस्मात् त्रय एव दोषाः

**दातारशास्त्रीजीः**—वातादीनामेव स्वास्थ्यरोगकारणत्वम् । अतस्त्रय एव दोषाः । वातस्य शीतोष्मणोः आवश्यकत्वं रोगकारणतायै । तत्र शीतत्वं कफात् औष्ण्यं पित्तात् ।

कार्तिक शुद्ध ११ गुरुवासरः

५ **विषयः**—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

**देशपांडेजीः**—"यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्, तद्द्रव्यं" इति वातादीनां द्रव्यरूपत्वं गुणवत्वात् घटवत् । दोषधातूनां परस्परमाधाराधेयभावसम्बन्धः समवायसम्बन्धश्च ।

**गङ्गाधरशास्त्री गुणेजीः**—वातादीनां समावस्थायां धातुरूपत्वं, मीमांसकैरग्नौ दाहानुकूला शक्तिरङ्गीकृतापि तदाश्रयद्रव्यं वह्निः स्वीक्रियते

तद्वत् वातादीनां धारकत्वानुकूलशक्तिमत्वेपि भिन्नभिन्नावस्थायां यत्स्वरूपं तद्द्रव्यरूपमेव गुणक्रियाशालित्वात् इति चरकसुश्रुतादिसम्मतं मतमिदमेव ।

**डेग्वेकरजी**——वातादीनां द्रव्यरूपत्वमेव, गुणक्रियाशालित्वात् । शक्तिमत्वादिविशेषणस्य कुत्राप्यावश्यकता नास्ति ।

६ **विषयः**——वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

**बृजमोहनजीः**—वातादीनामुभयत्वं, आमवातादीरूपः स्थूलः, प्राणादिरूपः सूक्ष्मः, । एवं पित्तस्यापि पाचकस्य स्थूलत्वं, आलोचकस्य सूक्ष्मत्वं, कफस्य वमनादिरूपेण स्थूलत्वं, पोषकादिरूपेण सूक्ष्मत्वम् इति । अतो वातादीनामुभयरूपत्वम् ।

**बद्रीनाथजीः**——पित्तकफयोरुभयरूपत्वेपि वायोः सूक्ष्मत्वमेव, कार्यानुमेयो वायुः । मलरूपत्वेऽपि तस्य वायुकार्यत्वमेव न वायुरूपत्वं तस्य ततोऽनुमानात्, दृक्समालोचकं पित्तं सूक्ष्मम् । अन्यत्स्थूलं, एवं श्लेष्मापि ।

**बृजमोहनजी**——ननु आध्माननिःसृतो वायुः सूक्ष्मो वा स्थूलो वा ?।

**बद्रीनाथजी**—नासौ वायुः प्राकृतः येनैतादृशी विप्रतिपत्तिःस्यादिति ।

**वाजपेयीजी**——तत्र सूक्ष्मेत्यादिना वायुविषय एव सूक्ष्मो व्यवहार आयुर्वेदेषूपदिश्यते । अतः तस्यैव सूक्ष्मत्वम । पित्तकफयोस्तूभयरूपत्वम् ।

**उपेंद्रनाथजी**——वातादीनां गुणस्य प्रत्यक्षत्वेन तेषां सूक्ष्मत्वं न युक्तम् । पारिभाषिकसूक्ष्मत्वे तु मेरोरपि सूक्ष्मत्वमिष्यत एव । वायुनीयमानस्य कस्तूर्याद्यवयवस्य दूरदर्शियन्त्रेणाप्यदृश्यस्य घ्राणग्राह्यगुणवत्वाद्यथा महत्वं तथा वातादीनाम् । प्रत्यक्षगुणत्वात् ।

**गणेशदत्तजी**—कार्यानुमेयो वायुः । रूपाभावादप्रत्यक्षत्वेन सूक्ष्मत्वात् । चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वं सूक्ष्मत्वम् । स्रोतोऽनुसारित्वं, रूपरहितत्वं सूक्ष्मत्वमिति फलितोऽर्थः । एवं च सूक्ष्मत्वं वायोः देवत्वेनअरूपेण । रूपसत्वे तस्य प्रत्यक्षत्वापत्तेः । अप्रत्यक्षत्वं सूक्ष्मत्वमस्त्येव ।

**देशपांडेजी**—कस्तूर्याः सूक्ष्मत्वेऽपि स्थूलशक्तिमत्वं, पाषाणादीनां तद्विपरीतं, एवं धात्वपेक्षया सूक्ष्मा दोषा अधिकशक्तिमन्तः । वातगुणप्रत्यक्षावस्थायां स्थूलरूपत्वमपि, वातस्य स्थूलस्य शरीरे नोपयोगः ।

**गङ्गाधरशास्त्रीजी**--वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयरूपत्वं च । उभयरूपेण शरीरे कार्यकारित्वं, आन्त्रे आमाशये च वायोर्नीयमानत्वात् । नौलीद्वारा आन्त्रान्तर्जलादानविसर्गः योगिप्रयोगसिद्धः । एवं पित्तस्यापि विज्ञेयम् । तदन्यत्सूक्ष्मम् । तस्माद्वातादीनामुभयरूपत्वं सिद्धम् ।

**डेग्वेकरजी**–शरीरस्य पाञ्चभौतिकत्वेन तदन्तर्गतमन आद्यतिरिक्तं सर्वं स्थूलमेव ।

**दुर्गादत्तजी**---पित्तादीनां स्थूलत्वं सूक्ष्मत्वं च । वायोः सूक्ष्मत्वमेव । स्पर्शानुमेयो वायुः ।

**उपेंद्रनाथजी**---सर्वं खलु पांचभौतिकं प्रत्यक्षं प्रति कारणत्वं ' रूप-मत्रापि कारणमित्यनेन प्रतिपादितम् । स्पर्शस्यकारणत्वमते । त्वगिन्द्रियेण वायोः प्रत्यक्षं भवति । परन्तु तत्र वायुः सदा सूक्ष्मः इति वचनाद्वायोः सूक्ष्मत्वमेवायुर्वेदसम्मतम् ।

७ **विषयः**--वातादीनां किं उपादानम्, तेषामुत्पत्तिक्रमश्च कीदृशः ?

**कविराजप्रतापसिंहजी**–वातादीनां शरीरघटकत्वम् । शरीरस्य च पाञ्चभौतिकत्वात् वातादीनां पाञ्चभौतिकत्वम् ।

**सुगृहीतनामधेयः**---शब्दस्पर्शतन्मात्रासहितादाकाशाद्वायुः । शब्द-स्पर्शरूपतन्मात्रासहिताद्वायोः पित्तम् । शब्दस्पर्शरूपरसतन्मात्रासहितात्पित्ता-त्कफः । तस्माद्वातादीनां पाञ्चभौतिकत्वम् । इति ( केचित् ) ।

९ **विषयः**–तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? ।

**प्रतिवादी**–वायुः पञ्चविधः कार्यभेदात् । अपानः स्थूलतमः ततः क्रमेण उदानः, व्यानः, समानः, प्राणश्च सूक्ष्मतरः उत्तरोत्तरम् । एवं पित्तमपि पञ्चविधम् पाचकत्वादिकार्यभेदात् । कफोपि क्लेदकत्वादिभेदात् पञ्चविधः इति वास्तविका एषु भेदाः । एषां स्वरूपतोऽपि भेदः । अवलम्बक--कफस्य तु स्वरूपं न ग्राह्यं तर्पकस्य तु ग्राह्यं इति स्वरूपतः कार्यतश्च भेदः ।

१० **विषयः**---वातादीनां रोगकारणत्वं कीदृशं ? तेषामेव रोगकारणत्वं, उतान्येषामपि कीटाण्वादीनां ।

दोषप्रकोपः धातुप्रकोपः मलप्रकोपः मलायनप्रकोपः इति सर्वेऽपि 'रोगस्तु दोषवैषम्यं' इति दोषस्यैव रोगं प्रति समवायिकारणत्वम्।

**निरीक्षकाः**—'दुःखसंयोगो व्याधिः, तस्य मनोनिष्ठत्वेन तत्र दोषस्य दूष्यस्य वा समवायिकारणत्वं कथं ? कार्याधिकरणस्य समवायिकारणत्वात्।

**सभापतिजीः**—दुःखसंयोग इत्यत्र दुःखाय संयोग इति लक्षणा कर्तव्या आयुर्वैघृतमितिवत्। दुःखजनकत्वं व्याधित्वं, दोषस्य स्वातन्त्र्येण यदा रोगजनकत्वं तदा समवायिकारणत्वं, रुधिरद्वारा यदा जनकत्वं तदा निमित्तकारणत्वम्।

**गंगाधरशास्त्रीजीः**—व्याधिर्द्विविधः शारीरको मानसिकश्च तत्र दोषदूष्ययोः समवायिकारणत्वं, दोषदूष्यसंयोगस्य असमवायिकारणत्वं, तदन्यन्निमित्तकारणम्। एवं च कीटाण्वादीनां तदन्यत्वान्निमित्तकारणत्वम्।

**घाणेकरजी**—कीटाण्वादीनां रोगं प्रतिनिमित्तकारणत्वं घटं प्रति दण्डचक्रादिवत्।

---

## श्री पं. रुद्रदेव विद्यामहार्णवानां भणितिः।

### किन्तावद्दोषस्वरूपम् ?

'सूर्य आत्मा जगतस्तस्थुषश्च' [यजुर्वेदः] मन्त्रेणानेन स्फुटं प्रतीयते यत्-विश्वस्य सर्वेषां जटिलानां कार्यप्रपंचानां केन्द्रभूतः सूर्य एव। सर्वेषां जीवानां जीवनास्तित्वमपि सूर्याश्रितमेव। जीवनरक्षाव्यापारस्तु नितरां जटिलः। भक्ष्यचोष्यलेह्यपेयान् विविधान्पदार्थान् वयं खादामः। आहारेण अर्थात् सर्वतः आकृष्टेन पदार्थसमूहेन अस्माकं कायेषु रसोत्पत्तिर्भवति। यदा वयमाहारं स्वस्थं कुर्मस्तदा तेन आहारेण स्वास्थ्यं वर्द्धते। स्वास्थ्यशब्दस्येदमेव निर्वचनं यत् स्वस्थस्य भावः स्वास्थ्यम्। शरीरस्य

जीर्णानां शीर्णानामङ्गानामाप्यायं संवर्धनं संरक्षणञ्च भवत्येतस्मात्स्वस्थी-भूतादाहारादेव । आहारादेव जीवनशक्तिकेंद्रभूतस्य प्रोटोप्लाज्माभिधस्य ( Protoplasm ) पदार्थस्य भवत्युत्पत्तिः ।

कललरूपस्य प्रोटोप्लाज्मसंज्ञकस्य महाद्भुतस्य वस्तुनः जन्म प्रधान-तश्चतुर्भ्यस्तत्वेभ्यो भवति । तानीमानि तत्वानि कार्बनाक्सीजन-नाईट्रोजन हाईड्रोजन-संज्ञकानि सन्ति । आनुषङ्गिकरूपेण तु गन्धकस्फुरक [फास्फोरस] चूर्णक [ लाइम ] शैलेयक [ सिलिकान ] संज्ञकानां तत्वानामपि स्थितिरा-वश्यकी । आहारादेवेमानि तत्वानि नः शरीरं समायान्ति । कार्बनसंज्ञकं तत्वं अन्नफलकुसुमादयः पदार्था वायुमण्डलतो गृह्णन्ति । वातावरणे कार्ब-निकाम्लगैसरूपेण कार्बनस्यास्ति प्रभूतं परिमाणम् । कार्बनिकाम्लगैसमध्या-त्कार्बनं तत्वं स्थावरा वृक्षादयः सूर्यप्रकाशवशादेवादातुं प्रभवो भवन्ति । वयमन्नं भुञ्ज्महे । अत अन्नादिमार्गेण तेभ्य एव वयमिदं तत्वं प्रणुचिन्मः ।

अनन्तेऽस्मिन्ब्रह्माण्डे विविधाः पदार्था वाय्वात्मना स्थिताः सन्ति । सूर्यादिषु पदार्थेषु एका विशिष्टाऽकर्षणानुकर्षणात्मिका शक्तिर्वर्तते । विवि-धानां पिण्डानां विविधो भारः, विविधानां पिण्डानाञ्च विविधं दैशिकं व्यव-धानम् । अत एव आइजेक न्यूटननियमानुसारेणैषां विविधा आकर्षणानुक-र्षणात्मिका शक्तिः । शक्त्यनुसारेणैव वातावरणदशापि भिन्नैव । प्रो. अल्फ्रेड रसेल वैलेस महोदयस्यासीद्विचारः यत्—यदि अस्याः पृथिव्या व्याससंज्ञकं परिमाणं अष्टसहस्रकोशार्ध ( ८ सहस्र मील ) स्थाने रिपुशताधिकनवसह-स्रक्रोशार्धमभविष्यत् चेत्तर्हि नात्र कश्चिदपि जीवोऽजीविष्यत्, । तदानीं प्रबलयाऽकर्षणशक्त्याऽकृष्टेन हाईड्रोजनपवनेन सहमिलितोऽऽक्सीजनवायुः प्रचुरं जलं समुत्पादयितुं शक्तः सन् निखिलमिपीमां भूमिं क्रोशाद्वयमितेन गभीरेण तोयेन कुम्बितुमकल्प्स्यत । अन्तरिक्षमण्डलञ्च नानाविधैःबाष्पसमूहैः पूरितं दुर्दिनादपि दुर्दिनतममवर्त्तिष्यत । तदानीं शनिशुक्रप्लुटोनेप्च्यूनादिवत् अत्रापि जीवनसत्ता नावर्त्स्यत् ।

प्रो. अल्फ्रेड रसेल वैलेस, प्रो. पिकरिंग, प्रो. पर्सिबल लोवेल महोदयैः विविधानां ग्रहोपग्रहादीनां वातावरणादिविषये विचारं कुर्वद्भिः प्रति-

पादितं यत् ब्रह्माण्डमध्ये जीवसमष्टिरक्षायै येषां वस्तूनामस्त्यावश्यकता तेषु वस्तुषु सन्तीमानि प्रधानानि—

( १ ) वातावरणौचित्यम्,
( २ ) तापप्रकाशयोरौचित्यम्,
( ३ ) जलबाष्पयोरौचित्यम्।

एषां मध्ये यदा कस्मिन्नपि कापि त्रुटिर्भविष्यति यद्वा कश्चिद्दोषो (deficiency) भविष्यति—भवतु नाम स दोषः केनापि प्रत्यक्षेण कारणेन परोक्षेण वा-तदानीमेव सदोषा जीवसमष्टिसत्ता भविष्यति सामया; दोषाधिक्येन च जीवसमष्टिसत्ताया भविष्यति लोपः। एवं हि श्रूयते डिनैासैारस्मैमथमेस्टोडानशार्दूल- [ Sober toothed tiger ] शरभादीनामात्यन्तिको लोपः समभवत्। पूर्वं प्राण्यधिष्ठिताः केचित् ग्रहोपग्रहा विविधैर्दोषैः प्राणिविरहिताश्च संजाताः। अत्र तु पृथिव्युपग्रहस्य सुधाकरस्य प्रो. पिकरिंगमहोदयैरध्यक्षीकृतमुदन्ततत्वं परमं प्रमाणम्। किं बहुना प्रपञ्चितेन। अस्ति च दार्शनिकानां विचारः ‘ यद्वर्गे तदेकस्मिन् ’ डिक्टम् डेओम्नी एट् नुलो [ Dictum deomne et nullo ] अपरंच सिद्धान्तः ‘ यथा अण्डे तथा पिण्डे ’ [ ॲज अबव् सो बिलो ] [ as above so below ]। पिण्डवाचकः शद्व आँग्लभाषायां माइक्रोकाज्म-वर्तते। [ Microcosm ] माइक्रोकाज्मशद्वस्यार्थ आँग्लभाषायां लिटिल्कास्मास अर्थात् अल्पो ब्रह्माण्ड इत्यस्ति। ब्रह्माण्डवाचकः शद्वः आँग्लभाषायां मैक्रोकाज्म वर्तते। [ Macrocosm ] मैक्रोकाज्मशद्वस्यार्थः आँग्लभाषायां ग्रेटकास्मास अर्थात् ‘ महाब्रह्माण्ड ’ इत्यस्ति। आभ्यां शद्वाभ्यां पिण्डब्रह्माण्डशद्वाभ्याञ्च प्रतीयते निखिलेऽपि विश्वे नियमानां व्यवस्थितिः समानैव।

यथा हि तापप्रकाशयोर्जलबाष्पयोर्वातावरणस्यावश्यकता जीवसमष्टिरक्षायै नितरां मृग्या तथैव कायावच्छिन्नजीवरक्षायै वातबाष्पतापादीनामावश्यकताऽपरिहर्तव्या। एत एव वातादयः पूर्वं शरीरनिर्माणोपयुक्तां सामाग्रीमदुः। सर्वदा दधति तस्मादिमे धातवः। कुपिताः सन्तः शरीरे दोषमुत्पादयन्ति तस्माद्दोषाः। मलिनीकरणान्मला वातपित्तकफाः। ‘ अनिलानलसोमा-

त्रयस्तपन्ति पृथिवीमनूपाः द्वा बृबूकं वहतः पुरीषम्' इति श्रुतिसिद्धमेषां धातुत्वम्। पाश्चात्यवैज्ञानिकानां डिनैमिकथर्मलहाइड्रास्टेटिक्सशक्तिस्थानीया अपीमे। अन्याश्शक्तयास्तिसृष्वासु शक्तिष्वेव समाहिताः सन्ति। तत्र वातस्तु वातात्मकः, पित्तं तापात्मकं कफस्तोयात्मकश्च। इमे त्रयश्शक्तिरूपाः शक्तिमन्तश्च। द्रव्यगुणयोरभेदोपचारात्। इमे स्थूलसूक्ष्ममध्यमस्वरूपाः। अत्र विषये तु छान्दोग्योपनिषदि, भावप्रकाशे च बहुप्रपञ्चितम्।

सर्वेषां रोगाणां कुपिता मला एव निदानम्। विविधाहितसेवनेन भवत्येषां कोपः। तथाहि—

सर्वेषामेव रोगाणां निदानं कुपिता मलाः।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्॥

—माधवनिदाने (सर्वरोगनिदानपञ्चककथने)।

उक्तञ्च चरके—

नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः।
अनुक्तमपि दोषाणां लिंगैर्व्याधिमुपाचरेत्॥
दोषविशेषेणानधिष्ठितमव्यक्तं निदानं पूर्वरूपमित्यभिधीयते।
तथाहि--उत्पित्सुरामयो दोषविशेषेणाऽनधिष्ठितः।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम्॥

अर्थात् येन उत्पित्सू आमयो लक्ष्यते ज्ञायते तत्प्रागूरुपम्। किंभूतो आमयो दोषविशेषेणानधिष्ठितः। यस्य व्याधेर्यद्रूपं तदेवाव्यक्तं पूर्वरूपम्।

शरीरेऽस्मिन् आहारमुखेन विविधानि तत्वानि गच्छन्ति। शरीरस्य विविधेषु भागेषु अवस्थितानां संयोगानां रचनाऽपि सर्वथा नैकप्रकारा। कुत्रचित् एकस्य तत्वस्य प्राधान्यमपरत्रान्यस्य, इतरत्र च कस्यापीतरस्य। एतेषामुपयुक्ते संघटने यदा भवति लेशतोपि भेदस्तदानीमेव व्याधेः पूर्वरूपं लक्ष्यते। तदेव व्यक्ततां यातं रूपमित्यभिधीयते। तदानीम्—

हेतुव्याधिविपर्य्यस्तविपर्यस्तार्थकारिणाम्।
औषधान्नविहाराणामुपयोगं सुखावहम्॥

विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्यमिति स्मृतः ॥

शरीरस्य उपचयापचयौ प्रत्येकस्मिन्क्षणे भवत एव । चेष्टया, गत्या, भाषणेन अथवा अन्येनापि केनापि व्यापारेण भवत्येव शरीरस्यापचयः, आहारादिना भवति पुनरप्युपचयः । तावेतौ चयोपचयौ मितेन बलेन वर्तमानौ मेटॉबालिज्मसंज्ञकौ ( Metabolism ) पृथक् पृथक् यथासङ्ख्यमनुबलनप्रतिबलनहेतुकौ अनॉबालिज्म ( Anabolism ) कॉटाबलिज्म ( Katabolism ) संज्ञकौ भवतः । अनेन भवति शरीरस्याकारपरिवर्तनमस्यैव नाम ' मेटामार्फोसिस् ' इत्यपि भवितुमर्हति ।

यदा शरीरद्रव्याणां शक्तेश्च व्यय अधिको भवति आयश्चाल्पः, तदा क्षयरोगेण ग्रस्तं भवति शरीरम् । अस्य निवारणोपायस्तु भोजनाच्छादनादिना आयप्रवर्द्धनं व्ययनिरोधनञ्च । एवमेव गन्धकस्फुरकलवणादिपदार्थानामपि न्यूनतया भवन्ति केचन रोगाः । तेषां निवारणार्थं एषामेव द्रव्याणां शरीरे सञ्चयो भवत्यावश्यकः । येषु द्रव्येषु एतेषामुपस्थितिः सुनिश्चिता तेषामेव द्रव्याणामाहारमुखेनौषधमुखेन वा सेवनं रोगविनाशकम् । यदा दोषा रक्तादिधातुमनुप्रविष्टाः सन्तः तत्र विकारं जनयन्ति तदा भवति रोगस्य तीव्रावस्था । दुश्चिकित्स्यश्च भवति स रोगः । तथा चोक्तम्—

अभ्यङ्गस्नेहस्वेदाद्यैर्गतदोषो न शाम्यति ।
विकारस्तत्र विज्ञेयो दुष्टमत्रास्ति शोणितम् ॥ इत्यादि ।

शरीरे कललाभिधं प्रोटोप्लाज्मसंज्ञकमस्ति शक्तिबीजभूतं द्रव्यम् । ' सेल ' अभिधाः [ cell ] सन्ति बह्व्यः कलाः । शोणितादीन्यपि सन्ति । एषु सर्वेष्वपि भवति आकर्षणानुकर्षणव्यापारः । यदा कदाचित् कस्यापि शक्तिः केनापि कारणेन क्षीणा भवति तदा शोथशोषश्वयथुप्रभृतयो रोगाः संजायन्ते ।

लोहिते च लौहस्य लवणानि प्रभूतानि सन्ति । मस्तिष्के प्रस्फुरकस्य

अस्थिमध्ये तु चूर्णकशैलेयके ( lime and silica ) द्रव्ये प्रभूते स्तः। एवमेवान्यत्रापि यत्र-तत्र विविधद्रव्याणामस्ति प्राचुर्यं न्यूनता वा।

बून [ Bunge ] प्रभृतिभिः विपश्चिद्भिः 'टेक्स्ट बुक ऑफ् फिजिआलाजिकल् अॅन्ड पैथालाजिकल् केमिस्ट्री' प्रभृतिषु ग्रन्थेषु विषयस्यास्य विचारः कृतोऽस्ति। बूनमहोदयस्य सिद्धान्तेन रक्तस्य सहस्रग्राममिते परिमाणे विविधानां पदार्थानामस्ति एषा व्यवस्थितिः—

| | | |
|---|---|---|
| लौहस्य Iron | ०· | ९९८ |
| कालि सल्फ द्रव्यस्य | ०· | १३२ |
| कालि मर ,, | ३· | ०७९ |
| कालि फास ,, | २· | ३४३ |
| नैट्रम फास ,, | ०· | ६३३ |
| नैट्रम ,, | ०· | ३४४ |
| कैल्क फास ,, | ०· | ०९४ |
| मैग्नीज फास ,, | ०· | ●६० |

कलावन्तर्वर्तिनि सहस्रग्राममिते कलले ( Plasm ) तु विविधानां पदार्थानामस्ति एषा व्यवस्थितिः—

| | | |
|---|---|---|
| कालि सल्फ द्रव्यस्य | ०· | २८१ |
| कालि मर ,, | ०· | ३५९ |
| नैट्रम मर ,, | ५· | ५४५ |
| नैट्रम फास ,, | ०· | २७१ |
| नैट्रम ,, | १· | ५३२ |
| कैल्कर फास ,, | ०· | २९८ |
| मैग्नीज फास ,, | ०· | २१८ |

नैट्रम सल्फ, फ्लोर तथा सिलिकसंज्ञक-शैलेयकपदार्थानां किंचित्परिमाणं च। सहस्रग्राममिते दुग्धे तु एषा व्यवस्थितिः—

| | | |
|---|---|---|
| कालि द्रव्यस्य | ०· | ७८० |

| | | | |
|---|---|---|---|
| नैट्रम | द्रव्यस्य | ०· | २३० |
| कैल्करिआ | ,, | ०· | २३० |
| मैग्नेसिआ | ,, | ०· | ०६० |
| लौह | ,, | ०· | ००४ |
| फास्फोरिक ॲसिड | ,, | ०· | ४७० |
| क्लोर | ,, | ०· | ४४० |

क्लोर तथा शैलेयकयोः किंचित्परिमाणं च ।

'दि ट्वैल्व टिश्यू रेमेडीज आफ शुस्लर' ( the Twelve Tissue Remedies of Schutsler ) ग्रन्थे तु उक्तैव प्रक्रियानुसृता । परं भवतु तस्मिन् चिकित्साप्रयोगे विवादो न वा भवतु । इदं तत्वन्तु तस्यां सरणौ अपि स्फुटमेव यद् "रोगस्तु दोषवैषम्यम्" "दोषसाम्यमरोगता"।

आयुर्वेदानुसारेण तण्डुलेषु, गोधूमेषु, तिलेषु, माषेषु, शर्करायां, मधुनि, दधिनि, तक्रे, लवणे, श्रृंगवेरे, रामठे, रसोने, धात्रीफले, रसाले, जम्बीरे, नारिकेले, वंगे, नागे, शतमल्ले, महारसे पारदे च अन्येषु च सर्वेषु रसोपरसादिषु पदार्थेषु सन्ति विशिष्टा गुणाः । शरीरे यदा कस्यापि रोगस्य प्रादुर्भावो भवति तदा निदानपुरःसरमुचितौषधोपचारेण तस्य प्रतीकारो भवितुमर्हति । परमिदमत्रानुसन्धेयम्—"न वैद्यः प्रभुरायूषः"।

यदि शरीरे पाण्डुरोगलक्षणानि सन्ति तदा रक्तस्थेषु रक्तवर्णकेषु, 'ग्लोबुलीज' संज्ञकेषु परमाणुषु ज्ञेयः कश्चिद्दोषः । अत्र लौहद्रव्यस्य न्यूनतैव प्रधानं कारणं भवति । अतो मण्डूरभस्मलौहभस्मादिना निम्बमूलकेक्षुरसादिभिर्लौहयुक्तैर्द्रव्यैश्च भवत्येष रोगश्चिकित्स्यः । यदि कश्चिदुन्मादरोगग्रस्तोऽस्ति तदानीं फास्फोरसायोडीनद्रव्ययोर्न्यूनता तस्य रोगस्य प्रधानं कारणं भविष्यति । अस्मिन् रोगे फास्फोरसायोडीनप्रधानानां पदार्थानां ब्राह्मीशंखपुष्पीसर्पगन्धादीनामुपयोगः सुखावहः । थाइराइडग्लैण्डविकारेणापि भवत्युन्मादरोगस्तत्रापि फास्फोरसायोडीनद्रव्ये हितावहे । कारणभेदेनैव भवति कार्यभेदः । बलवर्णादिवैषम्यस्याप्याहारभेद एव प्रधानकारणम् ।

जगति लिंगभेदस्यापि कारणमाहारोपचारभेद एव। वृक्षेषु यथा भवति लिंगजननं न तथा जन्तुषु। जन्तुषु प्रथमो नीरूपः क्षुद्रतमो जन्तुः 'प्रोटोजोआ' [ Protozoa ] विद्यते। केचित् 'प्रोटोविआन'संज्ञकं कीटाणुं क्षुद्रतमं मन्यन्ते। अनयोः शरीरे न भवति लिंगभेदः। बाल्टजेरमहोदयेन बोनेलियासंज्ञकस्य जीवस्य जीवनं सम्यक् परीक्षितम्। बाल्टजेर ( Baltzer ) महोदयेन निरीक्षणानन्तरं ज्ञातं यद् बोनेलिया ( Bonellia ) संज्ञको जीवो जननानन्तरं लिंगनिर्धारणं करोति। अण्डेभ्यो निर्गताः शावकाः यदि समुद्रतलमवलम्ब्य स्थिता भवन्ति तदा तेषां काये प्रमदालिंगानि संजायन्ते। यदीतरथा ते कामपि स्ववर्गीयां तरुणीमासाद्य स्थिता भवन्ति तदा तेषु नरत्वमुदेति। परिस्थितिवशाद्भवति तेषु लिंगभेदः। डॉक्टर एफ्. उण्टेरबेर्गेरमहोदयेन ( Dr. F. Unterberger ) द्वात्रिंशदुत्तरएकोनविंशतिशताब्द्या अगस्तसंज्ञके मासि घोषणा कृतासीत् यत्स जनानां लिंगपरिवर्तनं कर्तुमीष्टे। सोडियमबाइकार्बोनेट चूर्णेन लिंगयोनिप्रदेशयोः प्रक्षालनेन बीजाणुशुक्राण्वोः तथाभूता भवति दशा यथा पुत्रप्रजननमेव भवति न कन्याप्रजननम्। किर्श ( Kirsch ) ब्लूम ( Bluhm ) प्रभृतिभिः प्रयोगस्यास्य परीक्षणं शशमूषकवराहप्रभृतिषु कृतं परं ते सफलमनोरथा न बभुवुः। अस्तु।

आयुर्वेदग्रन्थेषु 'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु' इत्येष राद्धान्तः प्रतिपादितोऽस्ति। गृह्यकर्मसु परमावश्यकः पुंसवनसंस्कारोऽस्ति। तस्य संस्कारस्यायमेवाशयः। संस्कारविधिविनियुक्तेषु मन्त्रेषु चोपदिष्टं यत्– 'पुमान् पुत्रो जायते', पुंसवनसंस्कारे विनियुक्ताः सन्ति काश्चनौषधयः। न्यग्रोधशुंगरसस्य नासापुटेषु सेकश्च कर्तव्यत्वेनोपदिष्टः। यदि नाम मन्त्रोक्तविधानेन यथाविधि गर्भाधानपुंसवनसंस्कारौ भवेतां तर्हि "पुमान् पुत्रो जायते" इति वेदवचनमवितथं भविष्यति।

माध्यन्दिनीये शतपथब्राम्हणे तदन्तर्गतायाञ्च बृहदारण्यकोपनिषदि साधु भूयोभूयः समुपदिष्टम्–

" अथ य इच्छेत्पुत्रो मे कपिलः पिंगलो जायेत "
" अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत "
" अथ य इच्छेद्दुहिता मे पण्डिता जायेत "
सः प्रकृतं कर्म कुर्यात् ।

तत्र यासामौषधीनां नामानि समागतानि सन्ति तासां स्वरूपविषये भवितुमर्हति भूयान् वादः पाठभेदेऽपि भविष्यन्ति भिन्नानि मतानि ।

वेदमन्त्रोक्तविधानपुरस्सरं संस्कारकरणेन तत्रोल्लिखितानामौषधीनां सेवनेन, यथोक्ताचारविहारेण च द्वौ पुरुषौ पुत्रवन्तौ संजातौ, इति मया स्वयमेवाध्यक्षीकृतम् । तयोर्मध्ये एकस्तु षण्ढकल्प आसीत् । षण्ढकल्पस्य चिकित्सा तु मदीयैः स्वर्गतैः पूज्यपादैः पितृचरणैः श्री पण्डितरामनारायण-वैद्याचार्यमहोदयैः कृतासीत् । आयुर्वेदोक्तस्यैकस्य तैलस्याभ्यङ्गमर्दनं तुलसी-वृन्दाबीजानाञ्च पयसा सह भक्षणमपि चिकित्साङ्गभूतमेवासीत् । अपरस्तु पुरुष आसीद् वृद्धः । आसीत् तस्यैका कन्यका । काश्चन कन्यकाः कतिपये पुत्राश्च बाल्य एव पितरौ शोकसागरनिमग्नौ कृत्वा भुवं विरहय्य परेतभर्तुरा-तिथेयमङ्गीकर्तुं द्यां गता आसन् । भार्या तस्य तरुण्यासीत् । सोऽपि तस्यां अभिरूपं मनोजमनोज्ञं सुकुमारं कुमारं लेभे ।

अतोऽस्ति मे वैदिकोपदेशे परः प्रत्ययः । जंगिडदाक्षायणप्रयोगेषु अपि प्रत्ययो विधातव्यः । विचिकित्साऽस्पृष्टा स्वसंवेद्या श्रद्धा च साम्रेडं स्फुरति समाम्नायनोदनेषु ।

केचित् पुरुषा रोगोत्पादकहेतून् विविधान् कीटाणून् संगिरन्ते । तथाहि स्पाइराकीटापैलेडाकीटतः फिरंगरोगोत्पत्तिर्भवति, हैंसियनबैसिलीकीटतः कुष्टरोगोत्पत्तिर्भवति, गौनोकोकस्कीटतः उष्णवातौपसर्गिकमेहरोगोत्पत्तिर्भवति, अनाफलीजसंज्ञकमशकदंशनैश्च–इटलीदेशी--भाषाप्रथितस्य–मलेरियासंज्ञकस्य दुष्टवायुजनितस्य ज्वरस्योत्पत्तिर्भवति; एवमेव प्रजागरविषूचिकाप्रभृतीनां बहूनां रोगाणां निदानभूताः सन्ति विविधाः कीटाणव इत्यस्ति तेषां विचारः ।

भवन्तु नाम कीटाः । नात्र काचिद्विचिकित्सा । कीटाः काये सद्यो दोषमुत्पाद्य दोषमुखेनैव रोगं जनयन्ति इत्यस्ति अस्माकं मतम् । अदुष्टकाये तु कीटाः स्वयमेव पञ्चत्वमायान्ति । कीटा वातपित्तकफादीन् कुपितान् कुर्वन्ति; तदनु कुपितेभ्यो वातादिभ्यो भवति विविधरोगोत्पत्तिः । तथा ह्युक्तम्--

निदानार्थकरो रोगो रोगस्याप्युपजायते ।
तद्यथा ज्वरसंतापाद्रक्तपित्तमुदीर्यते ॥ १६ ॥
रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते ।
प्लीहाभिवृध्या जठरं जठराच्छोफ एव च ॥ १७ ॥
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ॥ १८ ॥
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ।
न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च ॥ २० ॥
एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः ।

--माधवनिदाने ।

एकस्मिन्नेव सोपसर्गे फिरंगरोगे जगतः सर्वेषामपि रोगाणां यथाकथञ्चिच्चिह्नानि व्यक्ततामायान्ति । निखिलानां रोगाणां वातपित्तकफकोप एव कारणमत एव सकलरोगनिदानानि दृश्यन्ते एकस्मिन्नेव फिरंगरोगे । अनेनापि इदमेवायाति--

" सर्वेषामेव रोगाणां निदानं कुपिता मलाः " । अस्तु ।

ऋग्वेदीयौषधिसूक्ते ( १० म० ९७ ) यजुर्वेदस्य द्वादशाध्याये च ' अमीबा ', ' निहाका ', ' मध्यमशीः ' प्रभृतयः शब्दाः समायान्ति तेषां शब्दानां भाष्यकारैर्येऽर्था कृतास्तेऽपि स्तुत्या एव । परं यदि कश्चिदेषामर्थान् कीटाणुपरान् कुर्यात् तदानीमपि न भविष्यति कश्चिद्दोषः । सूर्यचिकित्सया च कीटाणूनां नाशोपायस्तु अथर्ववेदेऽपि प्रतिपादितः ।

कीटाणुवादे सत्यपि रोगनिदानभूतास्तु दोषा एव । दोषस्वरूपन्तु समुचिततत्त्वविषयको व्यत्यास एव । आँग्लभाषायां डिफिशियन्सीशब्दस्य योऽर्थः स एव दोषशब्दार्थः । स चासौ दोषस्त्रिविधः । प्रधानतस्त्रिभिरेव कारणैर्जगतः

शरीरस्य च स्थितिः, यैरेव कारणैः स्थितिः तेष्वेव व्यत्यासो वस्तुतो दोषपदार्थः। ते च दोषा वातपित्तकफरूपाः। जगति मरुतो जुनन्ति तत्र प्रधानहेतुरादित्यः। शरीरे वातश्चलति तत्र प्रधानहेतुरात्मा। जगति वायुसञ्चरणादिना तापबाष्पादीनां समुचिता व्यवस्था सञ्जायते। शरीरेऽपि वातश्चलति वातेनैव पित्तकफौ इतस्ततो नीयेते। तथा चोक्तम्—

"पित्तं पंगु कफः पंगुः पङ्गवो मलधातवः।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्॥"

—भावप्रकाशे—

शरीरस्थरसोपरसधातूनां संरक्षणात्संभरणाच्चास्ति पारदादीनामपि रसत्वादिकं रसप्रदानाद्रसायनत्वञ्च।

महारसपारदसहितानि रसोपरसधातुरत्नानीमानि शरीररक्षां कुर्वन्ति—

अभ्रवैक्रान्तमाक्षीकविमलाद्रिजसस्यकम्।
चपलो रसकश्चेति ज्ञात्वाऽष्टौ संग्रहेद्रसान्॥
गन्धाश्मगैरिकासीसकांक्षीतालशिलाञ्जनम्।
कंकुष्ठं चेत्युपरसा अष्टौ पारदकर्मणि॥
कम्पिल्लश्चापरो गौरीपाषाणो नवसादरः।
कपर्दो वह्निजारश्च गिरिसिन्दूरहिंगुलौ।
मृद्दारश्रृंगमित्यष्टौ साधारणरसाः स्मृताः॥
शुद्धं लौहं कनकरजतं भानुलोहाश्मसारम्।
पूतीलौहं द्वितयमुदितं नागवंगाभिधानम्॥

माणिक्यमुक्ताफलविद्रुमाणि तार्क्ष्यञ्च पुष्पं भिदुरञ्च नीलम्।
गोमेदकं चाथ विदूरकं च क्रमेण रत्नानि नवग्रहाणां॥

इतीमे रसोपरसादिसंग्राहकाः श्लोकाः।

इमे रसादयो दोषान्धयन्ति।

विविधासु ओषधीषु अपि अस्ति दोषशमनशक्तिः। ओषधिशब्दस्येदमपि निर्वचनं यदिमा ओषं अर्थात् दोषं धयन्ति। दोषस्वरूपं तु व्यक्तीकृतमेव।

अथोषधिसूक्तोक्तेन ब्रह्मणा ब्रह्मणा विरमाम्यहम्—

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षो हामीव चातनः ॥

ऋ. १०-९७-६

इति विद्यामहार्णवस्य श्री रुद्रदेवशास्त्रिणः सर्वशास्त्रमहोपाध्यायस्य भणितिः ।

---

## आयुर्वेदाचार्य पंडित जगन्नाथशर्मा वाजपेयी एम्. ए. इत्येषां त्रिदोषचर्चापरिषदि वक्तृता ।

त्रिदोषस्यायुर्वेदीयचिकित्सापद्धत्याः प्रधानाधारत्वेऽपि कैश्चिद्वैज्ञानिकम्मन्यैर्वैद्यैरपि तस्यास्वीकृत्युद्घोषणेन जायमानस्य सन्देहस्य निराकरणमेव प्रयोजनं । शरीरदूषणाद्दोषत्वं, देहधारणाद्धातुत्वं मलिनीकरणान्मलत्वं त्रिविधत्वमप्यविरुद्धं कर्मवैशेष्येण संज्ञावैशिष्ट्यस्य स्वीकारात् पाचकपाठकादिवत् । किंच देहधारकत्वदशायामपि दोषसंज्ञा निराबाधैव यथा च चरकादिवचनादवधीयते ।

" य एव देहस्य समा विवृध्द्यै, त एव दोषा विषमा वधाय ।
यस्मादतस्ते हितचर्ययैव, क्षयाद्विवृद्धेरिव रक्षणीयाः ॥

इति " दुष्टिकर्तृत्वमेव दोषसंज्ञायां हेतुः । यस्मान्नान्ये--उपलभ्यन्तेऽतस्त्रय एव । यतो हि शारीरा रोगानान्तरेण वातपित्तकफात् जायन्ते । यत् उक्तम्—

स्वधातुवैषम्यनिमित्तजा ये विकारसंघा बहवः शरीरे ।
न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः ॥

किञ्चास्मदादीनां शरीरं पाञ्चभौतिकम् तत्राकाशस्य सर्वव्यापकत्वेन पृथिव्याश्च व्यापारशून्यत्वेन न तयोर्दुष्टिकर्तृत्वसंभावना । इत्थं चावशिष्टास्त्रयो वायुजलरूपा धातवो वर्तते । एतेषामेव दुष्टिकर्तृत्वं सम्भवति । त एव शरीरस्था वातपित्तकफशब्देन व्यवह्रीयन्ते । किञ्च—

वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥

इत्यादि श्लोकेषु समाससंग्रहादिशब्दैराचार्यैरयमपि संकेतः कृतः। यत्संक्षेपतस्त्रय एव विस्तरशस्तु बहवो भवितुं शक्यन्ते। यथा दोषभेदाः प्रोक्ता द्विषष्ठिसंख्याकाः ते बहवोप्येतेष्वेव त्रिष्वन्तर्भवन्ति। यदुक्तं वाग्भटेन

यथा पक्षी परिपतन् सर्वदा सर्वमप्यहः। छायामत्येति..................

तथा स्वधातु वैषम्यनिमित्तमपि सर्वदा विकारजातं त्रीन् दोषान्..........

तथा चरकेऽपि-दृष्टांतरूपेण"षट्त्वन्तु नातिवर्तते त्रित्वं वातादयो यथा" तथा च मधुकोषव्याख्याकारेण "प्रकृत्यारंभकत्वे सति दुष्टिकर्तृत्वन्दोषत्वमिति" निर्दुष्टं लक्षणं कृतं दोषस्य, तच्च वातादिष्वेव संघटतेऽतस्त्रय एव ते।

## शक्तिरूपत्वं द्रव्यरूत्वं वा।

न निराधारा शक्नोति स्थातुं शक्तिः। वातादीनाञ्च गुणाः प्रोक्ताः। गुणाद्रव्याश्रया एव। अतएव द्रव्यरूपत्वमेव वातादीनां न शक्तिरूपत्वं। शक्तिविशिष्टद्रव्यत्वं तु तेषां वक्तुं शक्यते। अपरिच्छिन्नपरिमाणवत्वं सूक्ष्मत्वं, परिच्छिन्नपरिमाणवत्वं स्थूलत्वमित्येतल्लक्षणं यदि स्वीक्रियते सर्वेषामप्युभयत्वं। यदि च चक्षुरिंद्रियाग्राह्यत्वमेव सूक्ष्मत्वं स्वीक्रियते तदा पित्तकफयोरुभयत्वं वातस्य सूक्ष्मत्वमेव।

वातादीनां स्वरूपमित्यत्र स्वरूपमित्यस्य यदि केवलं तन्मात्रधीविषयत्वमिति लक्षणं स्वीक्रियते तर्हि शरीरवर्तित्वे सति गतिकारकत्वमुष्णताजनकत्वं स्निग्धताजनकत्वमित्यादिलक्षणं। शरीरवर्तित्वेसतीति विशेषणं बाह्यवातादिनिरसनार्थम्।

यदीदं तु परिचायकलक्षणं न भवति केवलं तटस्थलक्षणमित्युच्यते। तर्हि तादृक् लक्षणं चरकोक्तं—वायो रौक्ष्यं लाघवं वैशद्यं शैत्यं गतिरमूर्तत्वञ्चेति वायोरात्मरूपाणि तथैव पित्तस्यौष्ण्यन्तैक्ष्ण्यं कफस्य स्नेहशैत्यानीति।

वातादीनां पञ्चविधत्वं काल्पनिकं तच्च स्थानकार्यभेदोत्पन्नमेव न स्वरूपभेदोत्पन्नं। वातादीनां रोगान् प्रति क्वचित् समवायिकारणत्वं क्वचिन्निमित्तकारणत्वं। वातादीनां स्थितिस्तु सर्वेष्वेव शारीरेषु रोगेषु। कीटादीनां तु आगंतुकेषु भवति रोगेषु कारणत्वं। इत्थं च तेषां क्वचिदेव केवलन्निमित्तकारणत्वम्।

---

# कविराज उपेंद्रनाथदासानां भाषणम् ।

**विषय २ :**—वातादयो यावत्स्वस्थानस्थाः स्वमानस्थाश्च स्वस्वकार्यं संपाद्य शरीरधारकास्तावत् ' धातु ' संज्ञां लभन्ते । तएव यदा विकृताः सन्तो दुष्टिकारका भवन्ति तदा ' दोष ' संज्ञां लभन्ते । यदात्यर्थं दुष्टा इतरमलवन्निर्हरणीया भवन्ति तदा ' मल ' संज्ञां भजन्ते । विभिन्नां परिस्थितिमासाद्य विभिन्नं कार्यं कुर्वन्तस्सर्व एव विभिन्नां संज्ञां लभ्यन्ते नात्र कश्चिद्विरोध इति । वातादीनां चरकवर्णितं स्वरूपमपि सभापतेरनुज्ञयाऽत्रैव वर्णितं ।

**विषय ३:**—वातादयः प्रायशो वैषम्यमापन्ना शरीरे नानाविधां दुष्टिं जनयन्ति । यद्यपि दोषदूष्ययोर्विशिष्टमिलनादेवरोगप्राप्तिः, दोषवद्दूष्यस्यापि रोगकारणता वाच्यैव, तथापि दूष्याः कदाचिद्दोषान्न विकुर्वन्ति, किन्तु दोषा एव दूष्यान् विकुर्वन्ति, ततो दुष्टिकर्तृत्वादेषां दोषसंज्ञा संजाता । यथा अपचन् अपि सूपकारः पचनयोग्यतया पाचकसंज्ञां लभते, तथा दुष्टिमकुर्वन्नपि दोषा दुष्टिकारणयोग्यतयाऽपि दोषसंज्ञां लभन्ते इति ।

**विषय ४:**—एते खलु वातादयः शरीरस्य निखिलकार्येषु कर्तृभूतास्ते विकृताः स्वकार्यं यथाभूतमकुर्वन्तो दुष्टिजनकाः संपद्यन्ते, ये खलु रसरक्तादयो धातवस्तेऽपि वातादिसहायेनैव स्वकार्यसंपादका भवितुमर्हन्ति । रसरक्तादीनां विकृतौ स्वकार्यसंपादने वा वातादीनां त्रयाणामेव कर्तृत्वमिति वातादयस्त्रय एव दोषसंज्ञां लभंते, रसादयो दूष्यसंज्ञां, पुरीषादयश्च मलसंज्ञामिति शास्त्रीया परिभाषा ।

**विषय ६:**—द्रव्येषु त्रिविधमेव परिमाणं संभवति; १ अणुपरिमाण मेतत् परमाणौद्व्यणुकेच स्वीक्रियते, २ परममहत् परिमाणमेतदात्मादौ जायते, ३ मध्यमपरिमाणमेतत् व्यणुकवर्गेषु सर्वेषु अन्येषु स्वीक्रियते न्यायविद्भिः । तत्र मध्यमपरिमाणानां सूक्ष्मसंज्ञा शास्त्रेषु प्रसिद्धा दृश्यते, तयैव परिभाषया सूक्ष्मत्वस्थूलत्वावधारणं कार्यम् । ततो वातादीनां त्रयाणामेव पांचभौतिकत्वात्

प्रत्यक्षयोग्यगुणवत्वाच्च स्थूलत्वमेव वाच्यं । आपेक्षिकस्थूलत्वसूक्ष्मत्वकल्पनायां मनुष्यवृक्षादीनामपि स्थूलत्वं सूक्ष्मत्वं वा कल्पयितुं शक्यते, तादृशी कल्पना तु शास्त्रेषु न शोभते इति वातादीनां त्रयाणामेव स्थूलत्वमिति । शास्त्रे वायोः सौक्ष्म्यमुक्तं तत्र सूक्ष्मातिसूक्ष्मस्रोतस्सु गमनसामर्थ्यमेव मन्तव्यम् । अव्यक्तोऽव्यक्तकर्मेति वायुविशेषणं यदुक्तं तत्रापि वायुर्न व्यज्यते चक्षुषा न दृश्यते इति ज्ञातव्यमन्यथा परमाणुवत् सूक्ष्मश्चेद्वायुः कथं व्यक्तकर्मा भवितुमर्हति, न हि परमाणुर्द्व्यणुको वा कदाचित् व्यक्तकर्मा भवितीति वायोरपि स्थूलत्वमेव केवलं रुपाभावान्नासौ चक्षुषा दृश्यते इति ।

**विषय १०:**——अन्ये विचारार्हविषयेषु—

नवाविर्भूतानां रोगाणां दोषदूष्यादिनिर्णयपुरःसरमायुर्वेदानुकूलां संप्राप्तिं विनिश्चित्यायुर्वेदानुसारिणीं च चिकित्सामायुर्वेदे तेषां समावेशः कार्य एव । प्रागपि श्रीमता भावमिश्रेण तथैव कृतमिति नात्र कश्चिद्दोषलेश इति ।

---

## श्री. पंडित नागरलाल मोहनलाल पाठक

### [ प्रधानाध्यापक पाटण आ. महाविद्यालय ] इत्येतेषां वक्तृत्वम् ।

**विषय ३:**—दोष संज्ञायां हेतुः—

अस्मिन् विषये रावळपिंडीस्थ पं. मस्तराममहाभागानां वक्तृत्वानंतरम् पं. पाठकमहाभागैः कथितम्—

वातादिधातूनां भिन्नभिन्नधर्मान्वयत्वेन धातुदोषमल इति संज्ञा समाप्नोति । शरीरधारकधर्मेण धातुसंज्ञा, शरीरदूषकत्वधर्मेण दोषसंज्ञा समागच्छति । स्वस्थे शरीरे समप्रमाणानां वातादीनामपि शास्त्रे दोषसंज्ञया व्यवहारो भवति, अस्य तात्पर्यं एतदेव यत् समप्रमाणेषु वातादिषु दूषकधर्मस्यान्वयो यद्यपि नैव तथापि स्वरूपयोग्यतया एतेपि दोषसंज्ञया संबोधिताश्चेन्नकाऽपि हानिः । पचनकर्माणि अप्रवृत्तोऽपि सूदकः पाचकसंज्ञया संज्ञितो यथा भवति तद्वत् अस्मिन् वातादौ, दोषसंज्ञा व्यवहारे युक्त एव । तात्पर्यम्-एकास्मिन्नपि पदार्थे धर्मान्तरान्वयात् संज्ञाभेदः यथा एकस्यैव पितृत्वं पुत्रत्वं पतित्वमित्यादि ।

अस्यान्तरे सभापतिभिः प्रश्नः कृतः श्रीमतामुदाहरणे पितृत्वपुत्रत्वात्मके व्यक्तेस्स्वरूपहानिर्नैव भवति परंतु अस्मिन् वातादीनां धातुत्वदोषत्वमलत्वादि संज्ञाविषये तु भिन्नसंज्ञा प्राप्तौ वातादीनां स्वरूपहानिर्भवति वा न ? पंडितनागरलालैः कथितं अस्माकमुदाहरणं एकदेशीयं वर्तते उदाहरणकोटिप्रविष्टव्यक्तेः पितृपुत्रसंज्ञया नैव भवति स्वरूपहानिः । परं साध्यकोटिप्रविष्टवातादीनां संज्ञान्तरप्राप्तिसमये भवति स्वरूपहानिः । यतो वातादीनां न्यूनाधिकत्वेनैवाऽस्मदीयायुर्वेदे दुष्टिर्विकृतिः समाम्नाता । न हि समानस्थो दोषो विकारं जनयति--' रोगस्तु दोषवैषम्यम् ' अस्य वाक्यस्य तात्पर्यमिदमेव, अतो धातुसंज्ञितेषु तथा दोषसंज्ञितेषु वातादिषु परिमाणे अवश्यमेव भवति परिवर्तनम् ।

**विषय ४:**—कथं त्रय एव दोषाः—

अस्मिन् सभापतिमहोदयैः कति प्रकारकाः प्रश्ना उत्थापिताः १ कथं त्रय एव दोषाः, २ न्यूनाधिकसंख्या कथं तेषां नैव भवति, ३ सुश्रुतस्तु रक्तमपि दोषसंज्ञया व्यवहरति ? इत्यादि—

पंडित नागरलालैः कथितम्—दोषाः कथं त्रय एव कस्मान्न न्यूना वा अधिका वा ? अस्योत्तरं दोषलक्षणविमर्शेणैव प्राप्येत, ' यावत् दोषाणां किं वास्तविकं लक्षणं इति नैव कृते विचारे तावत् कथं अवान्तरप्रश्नानां उत्तरं मिलिष्यति ' अतो दोषलक्षणविमर्श एवावश्यकः । ' प्रकृत्यारंभकत्वे सति दुष्टिकर्तृत्वं दोषत्वं ' वा ' स्वातंत्र्येण दुष्टिकर्तृत्वं दोषत्वं ' इदं दोषलक्षणम् विद्यते । अस्मिन्नेव दत्ता धर्मा १ प्रकृत्याऽरंभकत्वम् २ स्वातंत्र्येण दुष्टिकर्तृत्वं इति द्वौ धर्मौ यस्मिन् तत्वे विद्यमानौ भवतः त एव दोषा इति इदं लक्षणं अव्याप्त्यतिव्याप्त्यादिदोषरहितं वर्तते, अतएव शुद्धम्, सुश्रुतोक्ते रक्तदोषे अस्य लक्षणस्य अव्याप्त्या न शोणितं दोषः । वातपित्तकफेष्वेव प्रकृत्यारंभकत्व, तथा स्वातंत्र्येण दुष्टिकर्तृत्वं, यस्माद्विद्यते अतएव वातपित्तकफास्त्रय एव दोषाः । नातो न्यूना संख्याऽतिरिक्ता संख्या वा दोषाणां वर्तते । यतो अस्य लक्षणस्य वातादीन् विहायान्ये तत्वे नैव व्याप्तिः । अस्य भाषणस्य समर्थनम् पंडित दुर्गादत्तशास्त्रिभिः कृतम् ।

---

वैद्य गोपालशास्त्री गोडबोले
आयुर्वेदाध्यापक–महाराष्ट्र आयुर्वेद विद्यालय, मुंबई.

## त्रिदोषचर्चापरिषदि विचारार्हो विषयः ।

अस्यां त्रिदोषचर्चापरिषदि विचारार्हविषयत्वेन संकल्पितानां विषयाणाम् अन्यतमो विषयो " वातादीनां दोषसंज्ञायां हेतुः " इति । मन्यामहे वयं प्रस्तुतोऽयं विषयो विचारार्ह एव खलु, तस्मात् तद्विषये यथावत् निरुच्यतेऽस्माभिः । वातादीनां ' धातु ' संज्ञया ' मल ' संज्ञया च निर्देशो यथा आयुर्वेदशास्त्रकारैः कृतः समर्थितश्च आयुर्वेदे, तथैव वातादीनाम् ' दोष ' संज्ञयापि निर्देशो आयुर्वेदशास्त्रकारैः आयुर्वेदे कृतः समर्थितश्च । यथा त्रैलोक्यसंभवहेतुर्ब्रह्मा मनीषिभिः पुराणादिषु अनेकाभिः सार्थसंज्ञाभिर्व्यवह्रियते, तथैव देहसंभवहेतुत्रयं वातादिवैद्यागमे वैद्यशास्त्रकारैः अनेकैः साभिप्रायैरभिधानैर्व्यवह्रियते । कस्यापि वस्तुनः अनेकनाम्ना व्यवहारो हि तस्य गुणगौरवादेव संभवति । यस्मिन् वस्तुनि गुणगौरवं नोपलक्ष्यते तत्र नामप्राचुर्यप्रयोजनम् नैव आवश्यकं भवति । अयम् अनुभवसिद्धो व्यवहारः स एव आयुर्वेदाचार्यैः अस्मिन् वातादिविषये स्वीकृतोऽस्ति । स्वीकृतेन तेनात्र किम् निष्पन्नम् ? इदं निष्पन्नम्-- यथा ' धातु ' संज्ञया ' मल ' संज्ञया च वातादीनां कश्चित् गुणविशेष एव चिंत्यते तथा ' दोष ' संज्ञयापि । इह तावत् अयमेव विचारार्हो विषयः अस्याः परिषदः पुरस्तात् प्राधान्येन उपस्थितोऽस्ति यत् को गुणविशेषो वातादीनाम् ' दोष ' संज्ञया अभिव्यज्यते, अथवा कस्मै गुणप्रदर्शनहेतवे वातादीनां कृते 'दोष' संज्ञा आयुर्वेदाचार्यैः आयुर्वेदे तत्र तत्र निर्वाचिता परिभाषात्वेन प्रयुक्ता च । यस्याः प्राणप्रतिष्ठा शास्त्रे असकृत् अनेकस्थलेषु अवलोक्यते । सुविदितचरमेव आयुर्वेदपठनपाठनसमुद्यतानाम् सद्वैद्यानां यत् अनेन वातादीनां दोषनामकरणेन

दोषाभिधानेन वा ' प्रकृत्यारंभकत्वम ' रोगरूपदुष्टिकर्तृत्वं च इदं गुणद्वयमेव विशेषतः संसूच्यते आयुर्वेदतंत्रकारैः । अत्र प्रकृत्यारंभकत्वम् नाम सप्तविध-शरीरप्रकृत्यारंभकत्वम् । रोगरूपदुष्टिकर्तृत्वम् नाम विविधरोगरूपपीडाजनकत्वं इत्येव अर्थतः स्वीक्रियते । कस्मात् तथा शास्त्राभिप्रायात् तथा शास्त्रोपदेशाच्च शास्त्राभिप्रायो यथा ( १ ) चक्रदत्तः—शुक्रशोणितमेलनकाले यो दोषः उत्कटो भवति स प्रकृतिम् आरभते । [ २ ] इन्दुः—शुक्रादिषु अधिको य एव दोषो भवति पृथक् संयुक्तो वा तेनैव पुरुषस्य प्रकृतिः संपद्यते । वातादिभिः प्रकृतयो भवन्ति । प्रकृतिः शरीरस्वरूपम् । [ ३ ] श्री विजयरक्षितो मधुकोशटीकाकारः—प्रकृत्यारंभकत्वे सति दुष्टिकर्तृत्वम् । शास्त्रोपदेशश्च यथा [ १ ] चरकः—एतानि [ शुक्रादीनि ] तु येन येन दोषेण अधिकतमेन एकेन अनेकेन वा समनुबध्यंते ततः सा सा दोषप्रकृतिः उच्यते मनुष्याणाम् गर्भादिप्रवृत्ता [ २ ] सुश्रुतः—शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः । प्रकृतिर्जायते तेन इत्यादि । [ ३ ] वृद्धवाग्भटः—दूषणस्वभावात् दोषाः । एवम् उपरिनिर्दिष्टस्य आयुर्वेदाभिप्रेतस्य आयुर्वेदोपदिष्टस्य वा गुणद्वयस्य संसूचनार्थमेव कैश्चित् आयुर्वेदाचार्यैः आयुर्वेददर्शने उक्तविशिष्टगुणद्वयाधाराणाम् वातादीनाम् कृते ' दोष ' शब्दो निर्वाचितः परिभाषात्वेन प्रयुक्तश्च । किंच ' दोष ' संज्ञया यथा वातादीनाम् निग्रहानुग्रहकारित्वम् नाम निग्रहानुग्रहसामर्थ्यसंपन्नवत्त्वम् अभिव्यज्येत न तथा ' धातु ' संज्ञया । ' धातु ' संज्ञया हि वातादीनाम् केवलम् अनुग्राहकत्वमेव अभिव्यज्यते, परंतु ' दोष ' संज्ञया वातादीनाम् निग्रहानुग्रहसामर्थ्यसंपन्नवत्वम् उपकारकापकारकशक्तिमत्त्वं वा अभिव्यज्यते,न हि निग्रहेण विना अनुग्रहो हृदयस्पर्शी भवति । अत एव वाग्भटाचार्यः स्वतंत्रे " वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः । विकृताऽविकृता देहम् घ्नंति ते वर्तयन्तिच " इत्युपदिशति । अनेनोपदेशद्वारा वाग्भटाचार्येणापि वातादीनाम् ' दोष ' संज्ञया निग्रहानुग्रहसामर्थ्यसंपन्नवत्त्वमेव प्रदर्श्यते । वातादीनाम् कृते या ' दोष ' संज्ञा सा यथा स्वशास्त्रसंमता भवति तथैव सा परशास्त्रसंमतापि वर्तते । यतो धन्वन्तरिप्रभृतयः आयुर्वेदाचार्याः यथा शरीरप्रकृत्यारंभकपदार्थानाम् निर्देशम् दोषाभिधानेन

कुर्वन्ति तथा गोतमप्रभृतयो न्यायाचार्याः पापपुण्यप्रवृत्त्यारंभकपदार्थानाम् निर्देशम् ' दोष ' संज्ञयैव कुर्वन्ति । इत्येतत् एतावत् वैद्यकवैद्यकेतरदर्शनयोर्दोषशब्दप्रयोगविषये साम्यं वर्तते । साम्यम् पुनश्च तत् उभयदर्शनयोरपि- आरंभकपदार्थानां निर्देशे कर्तव्ये तत्र ' दोष ' शब्दप्रयोगमात्रम् न सर्वथा विषयभेदात् दर्शनभेदाच्च । यतः आयुर्वेददर्शने ' दोष ' शब्देन ' वातपित्त-श्लेष्माण ' इति शरीरप्रकृत्यारंभकद्रव्याणि संगृहीतानि भवन्ति । न्यायदर्शने च पुनः ' दोष ' शब्देन ' रागद्वेषमोहा ' इति पापपुण्यप्रवृत्त्यारंभकगुणा एव संगृहीता भवन्ति । तत्र ' दोष ' शब्दप्रयोगवैषयिकाणि आयुर्वेददर्शनगतानि प्रमाणवचनानि इतः प्रागेव तावत् अस्माभिरुपस्थापितानि । इदानीं ' दोष ' शब्दप्रयोगवैषयिकाणि न्यायदर्शनगतानि प्रमाणवचनानि अत्रोपस्थितानाम् सदस्यानाम् पुरस्तात् उपस्थाप्यन्ते, येन उभयदर्शनगतप्रमाणवचनपरिचयेन वातादीनां ' दोष ' संज्ञाहेतुनिर्णये अल्पम् किंचित् साहाय्यम् भवेत् इति नो विश्वासः । तस्मात् न्यायदर्शनगतप्रमाणवचनानि यथा (१) गोतमप्रणीतन्यायसूत्रम्– " प्रवर्तनालक्षणा दोषाः " ॥ ( २ ) वात्स्यायनभाष्यम्– " प्रवर्तना प्रवृत्तिहेतुत्वम् " । (३) वात्स्यायनभाष्यं "दोषाः रागद्वेषमोहाः" । (४) गोतमप्रणीतन्यायसूत्रं–" प्रवृत्तिर्वाग्बुद्धिशरीरारंभः " (५) वात्स्यायनभाष्यम्–" अयं आरंभः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः " । ( ६ ) गोतमप्रणीतन्यायसूत्रं–" प्रवृत्तिदोषजनितः अर्थः फलम् " । एतावन्ति एतानि उभयदर्शनगतानि उक्तप्रमाणानि विचिंत्य अस्यां समज्यायां ये उपस्थिता भवन्तो मनीषिणः सन्ति तेषां युष्माकं अन्तर्हृदये को विचारः समुद्भवेत् । मन्मत्या अयमेव विचारप्रवाह उद्भवेत् यत् " आरंभकपदार्थानां ' दोष ' शब्दप्रयोगेणैव निर्देशकरणे उभयोरपि न्यायवैद्यकदर्शनयोरैकमत्यम् वर्तते " इति । अस्तु नोऽभिप्रायस्य भवतामग्रे अन्ते निष्कर्षम् उपस्थाप्य विरम्यतेऽस्माभिः । निष्कर्षो यथा--( १ ) आयुर्वेदाचार्याः केचित् वातादीनां निर्देशम् ' धातु ' संज्ञया कुर्वन्ति । केचित् ' मल ' संज्ञया कुर्वन्ति । तथा केचित् ' दोष ' संज्ञयापि कुर्वन्ति । ( २ ) ' दोष ' संज्ञा वातादीनां

प्रकृत्यारंभकत्वं रोगरूपदुष्टिकर्तृत्वं च एवं विशिष्टगुणद्वयसंसूचिका अनेनैव हेतुना निग्रहानुग्रहसामर्थ्यप्रदर्शिनी वर्तते । ( ३ ) आयुर्वेददर्शनन्यायदर्शनयो ' दोष ' शब्द आरंभकपदार्थमात्रनिर्देशकरणाय प्रयुक्तोऽस्ति । आयुर्वेददर्शने आरंभकपदार्थाः " वातपित्तश्लेष्माण " इति न्यायदर्शने च ते " रागद्वेषमोहाः " इति सुप्रसिद्धाः सन्ति । एतावत्कालपर्यंतं वातादीनां ' दोष ' संज्ञाहेतुविषये शास्त्रप्रामाण्योपबृंहितो योऽस्माकम् अभिप्रायो वर्तते सोऽभिप्रायोऽत्र संमीलितानां समस्तसदस्यानां पुरस्तात् अद्य उपस्थापितोऽस्ति। तत्र " यत् रोचते तत् ग्राह्यम् यन्न रोचते तत् त्याज्यं " इति भवतः समस्तदोषज्ञान् सविनयं संप्रार्थ्य विरम्यतेऽस्माभिः ।

---

## आयुर्वेदाचार्य पांडुरंग हरी देशपांडे [ पुणें ]
## इत्येषां भाषणम् ।

**पंचम प्रश्नेः**--वाय्वादीनां शक्तिरूपत्वं द्रव्यरूपत्वं वा ? । तथा च **षष्ठे प्रश्नेः**—वातादीनां स्थूलत्वं सूक्ष्मत्वं उभयत्वं वा इत्येतयोर्द्वयोर्विषययोर्विचारः क्रियते—

आयुर्वेदेन सर्वस्य शरीरस्य महान्तः कार्यकारिणो घटका ' वातपित्तकफा ' इति निश्चित्य ते अविकृता समस्थितिमन्तः शरीरं वर्तयंति ' वायुः पित्तं कफश्चेति त्रयो दोषाः ' । अविकृता देहं वर्तयन्ति । वा. सु. १-६ ' वातपित्तश्लेष्माण एव देहसंभवहेतवः । तैरेवाव्यापन्नैः शरीरमिदंधार्यते ' सु. सू. २१।३ इत्यादिषु श्लोकेषु स्पष्टतया वर्णनं विद्यते । शरीरस्य उत्पत्तिर्नाम शरीरान्तर्गतधातुघटकानामुत्पत्तिः, तथा शरीरवर्तनं अथवा धारणं नाम सर्जीवस्य तस्य क्रियानिर्वतनम्, एतद्द्वयमपि वातपित्तकफास्त्रयो दोषाः कुर्वन्ति। शरीरे घटकोत्पत्तिरिति कार्यं "स्वस्मिन् तेषां प्रथमं समावेशः,"पश्चात् तस्मिन तस्मिन् धातौ तेषां घटकानां समर्पणकरणमित्येतत्प्रकारकं यस्माद्विद्यते तस्माद्दोषा एव शारीरघटका इत्यस्मिन्विषये न कोऽपि संदेहो विद्यते।

अतएव दोषा द्रव्याणि इति अकथितमपि सुज्ञातमेव। तथापि केवलं तेषां द्रव्यत्वेनैव तत्कार्यकारित्वस्य नैव भवति बोधः। यस्माद्दोषधातुमलमूले शरीरे दोषवद्धातुमला अपि द्रव्याण्येव। तथापि दोषाभावे न किमपि महत्वं धातुमलानाम्।

कफस्य श्लेषणात्मकं नाम धातुघटकानां तत्तधातुषु समावेशनं कार्यं, तथा च धातुषु घटकानां समावेशनप्रसंगे यद्यदावश्यकं तस्य स्थितिर्यद्यदना-वश्यकं तस्य तथा च कृतकार्यत्वाद्यन्निस्सारं तस्य दूरीकरणात्मकं पित्तस्य कार्यं, तथा अस्य संपन्नस्य कार्यस्य व्यक्तत्वकरणेन सजातीयेषु सजातीयस्य वहनं अनावश्यकस्य दूरीकृतस्य बहिः क्षेपणमिति वातकार्यम् यदा भवति तदैव शरीरोत्पत्तिस्थिती चलतः। अतएव धातुमलापेक्षया दोषा अधिककार्यकारणात् शक्तिमन्तो इति माननं नैवायुक्तम्। एतासां क्रियाणां बोधकमेव वातादीना-मायुर्वेदे शक्तिरूपत्वेन वर्णनं "तत्र रुक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः"। वा. सू. १।११ "रुक्षः शीतो लघुः सूक्ष्मश्चलोऽथविशदः खरः। मारुतः"। च. सू. १।५८ वर्तते। चरके तु गुणस्वरूपमेव दोषस्वरूपमिति स्पष्टं कथितम्, "रौक्ष्यं लाघवं वैशद्यं शैत्यं गतिरमूर्तत्वं चेति वायोरात्मरूपाणि"। च. सू. २१।१३ आत्मरूपं स्वरूपमिति चक्रपाणिः स्वकीयटीकायां व्याख्या-नयति। अतो वातपित्तकफाः शक्तिस्वरूपद्रव्याणि इति तु कथितुमेव सांप्रतं शास्त्रशुद्धम्।

वस्तुतस्तु वयं यद्द्रव्यं कार्यकारीति कथयामस्तद्द्रव्यं तस्य कार्यकारि-गुणेभ्यो भिन्नं नैव वर्तते, "यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्"। (च. सू. १।५०) इदमायुर्वेदीयं सूत्रं, तथा "क्रियावत् गुणवत् समवायिकारणं द्रव्यं"। इदं नैय्यायिकाणां सूत्रम्। अनयोर्द्वयोरपि सूत्रयोर्गुणाः कर्माणि (कार्यकर्तारो गुणाः) द्रव्येषु समवायसंबंधेन तिष्ठंतीति वर्णितम्। तंतवो यथा पटे समवायसंबंधेन तिष्ठंति, तंतूनां विस्तारे पटविस्तारः तंतूनां संकोचेन न्यूनत्वे पटसंकोचो वा पटह्रस्वत्वं। तथैव गुणानां वृद्धौ द्रव्यवृद्धिः गुणानां संकोचे, न्यूनत्वे द्रव्यसंकोचः इत्येव अस्यार्थो भवति। अतो गुणत्वमेव

द्रव्यत्वमिति वक्तुं का विप्रतिपत्तिः ? द्रव्यस्याकारसंपादका गुणा अर्थात् भिन्ना एव विद्यन्ते, तथापि ते न कार्यकर्तारः ते साकारस्वरूपावबोधकाः। गुणास्तु रूपसंख्यापरिमाणपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषधर्माऽधर्मा इमे संति। एभिर्द्रव्यस्य कार्यकारत्वावबोधो नैव भवति। यथा शुंठी शुभ्रा वक्रा समीपस्था दूरस्था इत्यादिभिस्तस्याः पाचकत्वादिकार्यस्य नैव भवति बोधः। किंतु गंधरसादयो गुणा एव कार्यकर्तारो विद्यन्ते। तेषां गुणानामपि बोधो कार्येणैव भवति। तथा घ्राणग्राह्यो गुणो गंधः। रसनग्राह्यो गुणो रसः। आद्य-पतनसमवायिकारणत्वं गुरुत्वं। तर्कसंग्रहः। अतः कार्यकारिगुणाश्च तेषां कार्याणि तत्वतोऽभेदत्वेनैव समानितुं युक्तं। सांराशस्तु कर्मस्वरूपिणो गुणा एव सत्यत्वेन द्रव्याणीति सिद्धं। द्रव्यत्वस्य कार्यकारिगुणवत्वहान्या केवलं साकरस्वरूपमेव शिष्यति। वातादिदोषाणां गुणा यस्मात् कार्यकारिणो वर्तन्ते, अतएव दोषाः द्रव्याणि इति ते कार्यकारीणि शक्तिस्वरूपात्मकानि द्रव्याणि इत्येव मनसि निधाय संबोधितुं शास्त्रस्य सूक्ष्माभिप्राययोग्यं भवेत्। साकारस्वरूपात्मका गुणाः द्रव्यस्य दृश्यं स्थूलस्वरूपमेव। तत्तु कार्यकारि-द्रव्यस्याऽधिष्ठानमेव। धातवो दोषाणामेवाऽधिष्ठानं वर्तन्ते, दोषहीना धातुवस्तु दृश्यं निर्जीवं स्वरूपं विद्यते।

कार्यकारिगुणाः स्वरूपात्मकेभ्यो गुणेभ्यः कालान्तरात् वा संस्कारेण भिन्ना जाताश्चेत्तदा तेषामधिष्ठानं केवलं निर्जीवमसदृशं ( बोजड ) द्रव्य-मेवोर्वरितं भवति। तथापि भिन्ना भविष्यन्तो गुणा अपि भिन्नभवनकालेऽपि कार्यं कुर्वन्त्येव। यथा गच्छत्यपि पुष्पगंधो सुगंधं घ्रापयत्येव। तथापि गच्छन् साकं पुष्पस्यसूक्ष्मरजः कणान् नयत्येव। इदमेव गुणैरभेदत्वेनैकरूपभूतं कार्यकारिद्रव्यं तथा गुणा इत्येतेषु तत्वतो भेदो नैव। तथापि तयो-र्द्रव्यमदृश्यमनुमानगम्यं च। दोषाणामपि एवमेव विद्यते अवस्था। तेषामधि-ष्ठानभूतं द्रव्यमतिसूक्ष्ममनुमानगम्यं विद्यते। दोषा यथा पुष्पेषु गंधस्तिष्ठति तथैव धातुषु वर्तंते। यथा " तत्राऽस्थानि स्थितो वायुः पित्तं तु स्वेदरक्तयोः। श्लेष्मा शेषेषु " [ वा. सू. ११।२६ अस्मिन्श्लोके वाग्भटेन स्पष्टं कृतं। अग्रे

तु ' तेनैषामाश्रयाश्रयिणामिथः। यदेकस्य तदन्यस्य वर्धनक्षपणौषधं ' इत्युक्त्वा दोषधातूनां समवायसंबंधस्य आश्रयाश्रयिभावोऽपि वर्णितोऽस्ति । अस्य तात्पर्यं तु दोषाणां वृद्धिऱ्हासाभ्यां धातूनां वृद्धिह्रासौ भवतः। तथा चेमं वृद्धिऱ्हासं तु दोषा धातुस्थिता एव कुर्वन्ति । अयं द्रव्यगुणसंबंधवत् दोष-धातुसंबंधो विद्यते। द्रव्यस्थितकार्यकारिगुणानां विषये यत्पूर्वमुक्तं तदेव धातुस्थदोषाणामपि लगति । ' अस्थिमारुतयोर्नैवं अयमपवादस्तु अस्थि-गतवातस्याऽधिष्ठानविषय एव । अस्थ्नां वृद्धिः कफादेव भवति । धातूनां सर्वे पोषका घटकाः कफादेवोत्पद्यन्ते । दोषेभ्यो धातुवृद्धिः, दोषहानौ धातुहानि-रिति नियमस्तु निराबाध एवोर्वरति । तथा च ' प्रायो वृद्धिर्हि तर्पणाच्छ्लेष्म-णानुगता '। संक्षयस्तद्विपर्ययाद्वायुनाऽनुगतः। वा. सू. ११।२८ इत्यग्रिमे श्लोके स्पष्टं कृतमेव। धात्वंतर्गता दोषा धातुभ्यः सूक्ष्मा इति सिध्यति। अतो वायुपित्तकफा दोषास्सूक्ष्माः शक्तिस्वरूपिणो इति सिद्धान्तः प्रस्थापितो भवति ।

---

॥ श्री ॥

## निरीक्षकाणां सभापतेश्च निर्णयः।

[ १ ] सर्वायुर्वेदकार्यमूलभूतत्वात् त्रिदोषज्ञानं सप्रयोजनं ।

[ २ ] वातादीनां धातुत्वं दोषत्वं मलत्वं च अवस्थाविशेषणाभिव्य-ज्यते। तच्च परस्पराविरुद्धं ।

[ ३-४ ] सर्व प्राकृतकर्मसु सकर्तृत्वनियामकत्वे सति स्वातंत्र्येण दूषणशीलत्वं। तच्च वातादिषु त्रिष्वेव नान्यत्र। तस्मात् त्रय एव दोषाः ।

[ ५ ] शक्तेर्द्रव्याधिष्ठितत्वेन स्वतंत्रावस्थित्यभावात् वातादीनाम् न शक्तित्वं किन्तु द्रव्यत्वं एव ।

[ ६ ] पित्तकफयोरवस्थाभेदेन स्थूलत्वं ( चक्षुरिन्द्रियग्राह्यत्वम् ) वायोस्तु पित्तकफापेक्षया सूक्ष्मत्वं ( चक्षुरिन्द्रियाग्राह्यत्वं ) अव्यक्तो व्यक्तकर्मा च इत्यभिधानात्। उपाधिनिष्ठस्य तु वायोर्बहिरिन्द्रियग्राह्यत्वमपि नीलं नभ इतिवत्।

[ ७ ] अदृष्टोपगृहीतानि पंचमहाभूतान्येव वातादीनामुपादानानि । तदुत्पत्तिक्रमस्तु चरके शारीरस्थाने ४ अध्याये निर्दिष्टः । यथा—" तत्र पूर्वं चेतनाधातुः सत्वकरणो गुणग्रहणाय प्रवर्तते ।...... ...... ...... स गुणोपादानकाले आन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते प्रलयात्यये सिसृक्षुः भूतान्यक्षरभूतो आत्मा सत्वोपादानः पूर्वतरमाकाशं सृजति; ततः क्रमेण अव्यक्तान् धातून् वायव्वादिकांश्चतुरः; तथा देहग्रहणेऽपि प्रवर्तमानः पूर्वतरमाकाशमेवोपादत्ते; ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः, सर्वमपि तु खल्वेतद् गुणोपादानमणुना कालेन भवति ।

[ ८ ] वातादीनाम् स्वरूपं ( तन्मात्रविषयकधीविषयः ) चरकोक्त वायोः " रौक्ष्यम् लाघवं वैशद्यम् शैत्यं गतिः अमूर्तत्वं चेति " वायोरात्मरूपाणि । पित्तस्य " औष्ण्यं तैक्ष्ण्यं लाघवं अनतिस्नेहो वर्णश्च शुक्लारुणवर्ज्यो गंधश्च विस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाणि"। श्लेष्मणस्तु "स्नेहशैत्यशौक्ल्यगौरवमाधूर्यमात्स्न्र्यानि श्लेष्मण आत्मरूपाणि " भवन्ति । गुणाः कर्माणि च ग्रन्थोक्तान्येव ।

[ ९ ] वातादीनाम् प्रत्येकं पंचविधत्वं वास्तविकम्; तच्च स्थानकार्यभेदोत्पन्नं; कार्यस्वरूपभेदस्तु तन्निबंधन एव ।

[ १० ] रोगान् प्रति सदूष्यानाम् वातादीनाम् समावायिकारणत्वम् । सूक्ष्मरूपाणां तु निमित्तकारणत्वम् । रोगविशेषान् प्रति कीटादीनान्तु निमित्तकारणत्वम् । दोषदूष्यसम्मूर्छनायाश्च असमवायिकारणत्वम् ।

श्री मधुसूदन विद्यावाचस्पतिः जयपुरम्
बालकृष्ण अमरजी पाठक.
लक्ष्मीरामस्वामी.
श्री राजेश्वरशास्त्री द्राविड.

श्री गणनाथसेन शर्मा
जी. श्रीनिवासमूर्तिः
सत्यनारायणशास्त्री वैद्य.
श्री देवनायकाचार्य.

---

**१० प्रश्नस्योत्तरम्**:—विशिष्टजातीयजीवाणुजनितत्वेऽपि त्रिदोषजत्वम् , कुष्ठवत् , यथा सर्वाणि कुष्ठाणि, सवातानि, सपित्तानि, सकफानि, सकृमीणि, उत्सन्नतस्तु दोषग्रहणमभिभवति, इतिसुश्रुतोक्तेः ।

**घनानन्दपन्त देहली ।**

## त्रिदोषादिचर्चापरिषद् वृत्तम् ।

**[ लेखक चक्षुर्वैसत्यम् ]**

श्रीमाद्भिर्महामहोपाध्यायैर्डाक्टरगणनाथसेनमहाभागैस्सभापतिपदाङ्गीकरणादनन्तरं- स्वामी हरिशरणानन्दैस्त्रिदोषाणां विषये भाषणं कृतम्, तैस्तु आयुर्वेदे वर्णितानां त्रिदोषाणां न वास्तवत्वम्, न तु सत्यत्वम्, तेषां प्रत्येकं पंचविधत्वं तु सर्वथा काल्पनिकमेव, पाश्चात्यनये द्विनवतितत्वोपरि सर्वस्याऽपि स्थावरजंगमात्मकस्यास्तित्वं वरीवर्ति,तेष्वेव तत्वेषु मध्ये केषांचन मूलतत्वानां मेलनादेव मानुषशारीराविर्भावः, शरीररक्षणम्, शरीरयापनं, आरोग्यम् इत्यादि-सर्वं प्रादुर्भवतीति, तेषामेव केषांचन मूलतत्वानां मेलकन्यूनाधिक्याच्छरीरनाशः, अनारोग्यम्, रोगप्रादुर्भावः, दुःखम् प्रादुर्भवतीति प्रत्यक्षतस्सिद्धम् तत्र का वार्ता अस्तित्वशून्यानां प्रत्यक्षादिप्रयोगाऽसिद्धानां काल्पनिकानां त्रिदोषाणामित्युक्तम्। तदनंतरम् सभापतिभिरेव कृतेषु प्रश्नेषु स्वामी हरिशरणानन्दैः श्लेष्मणो बोधक, क्लेदक, श्लेषक कफाणां, तथा पाचकरंजकपित्तयोरस्तित्वं स्वीकृत्य अन्यप्रकारककफपित्तानामदृश्याणां तथा पंचविधवायोश्चास्तित्वमस्वीकृतं। सभापतिभिस्स्थूलसूक्ष्मस्वरूपेण अन्येषामपि कफपित्तप्रकाराणामस्तित्वं स्वीकर्तव्यमेवेत्युक्तम्। वायोस्तु पंचविधस्यापि सूक्ष्मरूपेणाऽस्तित्वं वर्तत एवेति प्रतिपाद्य भेडसंहिताकारैस्तथा योगशास्त्रग्रंथेषु पंचविधवायोर्योगशास्त्रपरिभाषया कथमङ्गीकारः कृतस्तत्तु प्रत्यक्षशारीरग्रंथस्य त्रितीये भागेऽस्माभिस्स्पष्टतया प्रदर्शितमेव, सच भागः शीघ्रमेव प्रसिद्धिं यास्यतीति प्रतिपादितम् ।

पंडितमस्तरामशास्त्रीभिर्वातादीनां स्थूलत्वसूक्ष्मत्वविषये, तथा द्रव्यत्वविषये च पांडित्यपूर्णं विवेचनं कृत्वा कफपित्तदोषौ स्थूलसूक्ष्मस्वरूपौ,

वायुस्तु सर्वदा सूक्ष्म एव, एते त्रयो दोषा द्रव्याण्येव न केवलं पदार्था वा न शक्तय इति स्वकीयं मतं प्रदत्तम् । अस्यां परिषदि प्रामुख्येन कविराज उपेन्द्रनाथदासा एव प्रतिवादिनो अभवन् । तेषां साहाय्यका विषये विषये भिन्ना भिन्ना वैद्यवरा आसन् । अस्यां परिषदि त्रिदोषाणां सिद्धिरित्यासीदेको यथा मुख्यो विषयस्तथा त्रिदोषाणां द्रव्यत्वं वा पदार्थत्वं, तेषां केवलं शक्तिरूपत्वं वा द्रव्यरूपत्वं, तथा तेषां सूक्ष्मत्वं, स्थूलत्वं वा उभयविधत्वं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं वा काल्पनिकं, तेषां प्रत्यक्षत्वमुतानुमेयत्वमित्यादयो विषया अपि महत्वपूर्णा विचारकक्षायामवतीर्णा अवर्न्तत । एतेषु विषयेषु विचारपूर्णारभवत् चर्चा ।

शक्तिपक्षस्य स्थापना आयुर्वेदाचार्य देशपांडे इत्येतैः कृता परं सा दृढमूला नैवाभवत्, सा पंडितप्रवरैरनेकैर्वैद्यवरैस्तथा सभापतिभिरपि युक्तिशास्त्रवचनैस्सप्रमाणं खंडिता आसीत् । न शेकुः पंडितवरदेशपांडेमहाभागाः स्वपक्षसमर्थने । दोषाणां केवलं सूक्ष्मत्वानुमेयत्वविषयेऽप्येषैव गतिरासीत् ।

अनेकैः कविराजैः स्वकीये विवेचने शास्त्रसरणीमनुसृत्य दोषाणां विशेषतः कफपित्तयोः स्थूलत्वं सूक्ष्मत्वं तथा प्रत्यक्षत्वमेव प्रतिपादितम् । वातस्याऽपि सूक्ष्मत्वं मूर्तत्वं प्रत्यक्षत्वं प्रतिपादितम् । [ इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षस्य व्याख्यया ] द्रव्यत्वं सर्वैरपि त्रयाणामंगीकृतमेव ।

त्रयाणां दोषाणां प्रत्येकशः पंचविधत्वं स्थानकार्यभेदभिन्नं न वास्तविकमित्येकः पक्ष आसीत्, अन्यस्तु तेषां पंचविधत्वं स्वरूपतो, वास्तविकतो भिन्नमेवेत्यासीत् पक्षः । परं वास्तविकस्वरूपभेदपक्षे एव बह्वी संख्या आसीत् । निर्णयोऽपि वास्तविकभेदपर एव संवृत्तः । एतेषु विषयेषु संधायपद्धत्या, कविराज उपेन्द्रनाथदास, पंडित मस्तरामशास्त्री, पंडित डेग्वेकरशास्त्री, पं. गंगाधरशास्त्री गुणे, पंडित व्रजमोहन दीक्षित, पंडित नागरदास, पंडित महादेवशास्त्री, पंडित गणेशदत्तशास्त्री सारस्वत, पंडित नारायणदत्तशास्त्री, पंडित धर्मदत्त, पंडित देशपांडे, पंडित गोडबोले, पंडित घनानन्दपंत, पंडित गोवर्धनशर्मा छांगाणीप्रभृतिभिः स्वीयानि भाषणानि स्वमतप्रतिपादनार्थं

सुचारुतया कृतानि । स्वामी हरिशरणानन्द, प्रोफेसर कुळकर्णी, डॉ. घाणेकर, कविराज प्रतापसिंह, पंडित वामनशास्त्री, पंडित जादवजी आचार्य प्रभृतिभिरन्यैश्चापि अनेकैर्वैद्यप्रवरैरस्मिन्विवादावसरे गृहीतो भागः। सभापतिमहाभागैस्तु प्रतिविषये वा प्रश्नांशे कदा प्रश्नस्य स्फुटताविषये, कदा च पूर्वपक्षोत्थापनेन, कदा च उत्तरपक्षविवरणे, कदा च शंकासमाधाननिमित्तम्, कदा च शास्त्रवचनस्मारणेन, कदाचान्यशास्त्राशयकथनेन, तथा साहाय्यं प्रदत्तम् येन विवाद्यविषयः परिस्फुटतामगात्, अथवा वृथाविवादो नाशमगच्छत्, अथवा प्रश्नरहस्यं चक्षुर्विषयतां प्राप, अथ च नवनवीनज्ञानबोधोऽभवत्। सर्वथा चर्चापरिषद् सुशीघ्रं मूलतत्वग्रहणसुलभा, कालातिपातनिरोधिनी संवृत्ता । निरीक्षकैरायुर्वेदमार्तण्डलक्ष्मीरामस्वामी महाभागैस्तथा पंडितप्रवर सत्यनारायणशास्त्री महाशयैरन्यैश्चापि महाभागैस्सुमहत्साहाय्यं प्रदत्तम्। परिषदपि शोभनस्वरूपेण परिसमाप्तिमवाप्ता, सर्वैरपि निरीक्षकैस्सभापतिभिः साकं परिषद्गतविवादचर्चासारमुध्दृत्य स्वीयो निर्णयोऽन्ते श्रावितः। अन्ततो श्री. जादवजी महाभागैः पंडित घनानन्दपंतैस्तथा पं. गोवर्धनशर्मा छांगाणी महाशयैः स्वागताध्यक्षाणां, सभापतीनां निरीक्षकाणां, सभासदां, स्वयंसेवकानां, परिषदर्थे कार्यभारवहानां अन्येषां च सर्वेषां सानन्दं सप्रश्रयं सप्रेमाभिनन्दनं कृत्वा यथाप्राप्तपुष्पहारादिभिः सर्वेपि संमानिताः। सर्वोऽपि परिषन्निमित्तं संजातो **द्रव्यव्ययस्तु माहाराष्ट्रान्तर्गत नासिकक्षेत्रे संजातैकोनविंशाखिलभारतीयवैद्यसंमेलनस्वागतसमित्या कृतस्तदर्थं** सा स्वागतसमितिरपि परमादरेणाभिनन्दिताऽभवत्। उभयपरिषद्गतवृन्तान्तलेखनाय वाराणसीस्थगीर्वाणवाग्वर्धिनीसभया केचनाभिज्ञा लेखका मन्त्रिमहाभागानुयाचिता नियुक्ता आसन् तैस्तु परिषदि संजातो विवादो यथाशक्त्या लेखनरूपेण परिणामितोऽपि लघुलेखनपद्धत्यारनवगमात् सकलो विवादः, सर्वाणि भाषणानि, प्रश्नोपप्रश्नाः, उत्तरप्रत्युत्तराणि यथावदवतारसुलभानि नैव शक्तानि। अतएव लेखकानां वृत्तान्तः, विवादचर्चाकर्तृणां स्वलिखितानि स्मरणपूर्वाणि भाषणानि, चक्षुर्वैसत्यम् वृत्तान्तः इति सर्वं

संपाद्य संकलितो वृत्तान्तोऽत्र प्रदत्तः। येन परिषद्‌गतवृत्तान्तस्य बहुशः पूर्णतयाऽकालनं भवेत्।

यदा च वाराणस्यां अनयोः परिषदोरधिवेशनं सुनिश्चितमभवत् तदा सर्वभारतीयप्रसिद्धदार्शनिकवैद्यवर,दक्षतरवैज्ञानिका निमंत्रिता बभूवुस्तदर्थं वाराणस्यामेव एका नामावलिस्संकलिताऽभवत्। तथापि केचन वैद्यवरा वा दक्षतरा वा दार्शनिका वा वैज्ञानिका वा नामानुपलब्ध्या, विस्मरणे न वा अनिमंत्रिताऽपि भवेयुः। न काऽपि अत्र दौर्बुद्धिको हेतुरासीत् तथापि दक्षिणदेशस्थैः कैरपि विपश्चिद्भिरन्यथा बुद्धिं धृत्वा अस्याः परिषदो निषेधप्रदर्शकं पत्रम् तन्त्रीद्वारा संदेशश्च प्रेषितोऽभवत्। तथा मोहमयीवास्तव्यैर्वैद्यतीर्थ पदधारिभिरप्पाशास्त्री साठे प्रभृतिभिः करांगुलिसंख्यैरेव भिषग्भिरपि अस्याः परिषदो निषेधप्रदर्शनादिको व्यापारः सुदीर्घं कृत आसीत्। तत्सर्वं सभायां मन्त्रिभिर्यथावन्निरूपितम्। अभिनन्दिताश्च सर्वेपि महाभागाः सभापतिभिः। विस्मरणादनिमंत्रिताश्चेद् क्षमार्थं याचिताऽपि। अन्ततो राष्ट्रीयगीतगानानन्तरं श्रीधन्वतर्यायुर्वेदजयजयकारध्वनिभिस्सभागृहं निनादितं, समाप्तिमगमदधिवेशनम्।

---

॥ श्रीगुरुः शरणम् ॥

## वाराणसीगीर्वाणवाग्वर्धिनीसभाया मतपत्रिका

# इतिवृत्त-परिशिष्ट ( अ )

यदविद्याविलासेन भूतभौतिकसृष्टयः ।
तं नौमि परमात्मानं सच्चिदानंदविग्रहम् ॥ १ ॥
साधारणा यत्र मुहुर्भ्रमंति । भूयो विवादादनवाप्य तत्वम् ॥
निरूप्यते पूर्वबुधोक्तनीत्या । सभूतवर्गोऽत्र सुविस्तरेण ॥ २ ॥

## पंचमहाभूतविचारप्रयोजनम् ।

ननु व्यर्थमेव पंचमहाभूतनिरूपणं तत्साध्यस्य कस्यापि प्रयोजनस्य अनुपलब्धेः । न तावत्कश्चित् कामः तत्प्रयोजनं संभवति । " श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां आत्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेषु आनुकूल्येन प्रवृत्तिर्हि काम " इति कामविदो वंदति ।

तत्र पुष्पादिरूपपृथिव्याः, मनोज्ञपानादेः जलस्य, रुचिरदीपादिप्रकाशस्य तेजसः, दक्षिणानिलादेः, सुरुचिरावकाशरूपस्य आकाशस्योपयोगित्वेपि न भूतविभाजकतावच्छेदकपृथिवीत्वादिधर्मपुरस्कारेण ज्ञानमुपयुज्यते । पुष्पादेः पुष्पत्वादिनैव ज्ञायमानस्योपयोगदर्शनात् । पुष्पाद्युपादानकप्रवृत्तिं प्रति पुष्पादिसुखरूपेष्टसाधनतावच्छेदकपुष्पत्वादिप्रकारकप्रत्यक्षस्योपयोगसंभवात् । यद्यपि परमाणुक्रमेण पुष्पादिसृष्टिं प्रति पृथिवीत्वादिना पुष्पादिसजातीयपरमाणूपादानस्यावश्यकतया तादृशपरमाणूपादानकप्रवृत्तौ पृथिवीत्वादिप्रकारकपरमाणुप्रत्यक्षस्योपादानप्रत्यक्षविधयाकारणत्वं, तथापि तादृश्यप्रत्यक्षस्य भगवत एव संभवात्, तं प्रति एतन्निरूपणस्य नोपयोगः । योगिनामपि तादृशप्रत्यक्षजननयोग्यत्वेपि वैद्यके नैतन्निरूपणस्योपयोगः वैद्यकफलस्य

तेनाजननात् । तथा च भूतविभाजकतावच्छेदकपृथिवीत्वादिप्रकारकज्ञान-जननार्थं एतन्निरूपणं व्यर्थमेव अतएव—

भौतिकाश्चशतं पूर्णं सहस्रं त्वाभिमानिका ।

इत्यादिद्युक्तरीत्या भूतोपासनादौ दिव्यशतवत्सरपरिमितभूतलयरूप-फलोपयोगिनि उपयुक्तत्वमेतन्निरूपणस्य अनुपयुक्तत्वं तदुपासनाफलस्य वैद्यक-फलाद्भिन्नत्वात् । योगिनामेव तादृशोपासनाधिकारितया कलौ च तेषामसंभवेन तेषामनुपदेश्यत्वात् । अतएव मोक्षस्यापि न प्रकृतफलत्वसंभवः ।

नापि अर्थपुरुषार्थस्य कस्यचिन्निर्वृत्तिः तत्प्रयोजनं, कामन्यायेनैव निराकृतत्वात् । तथा च एतन्निरूपणं भवतः भवन्मूलभूतानां वैद्यकग्रंथानां च सर्वथा निष्प्रयोजनत्वात्, काकदंतपरीक्षावद्धेयमेव श्रमकरत्वादिति चेदत्र ब्रूमः —

## प्रथमप्रश्नोत्तरम् ।

यत्तावदुच्यते निष्प्रयोजनं भूतनिरूपणमिति तन्न, सर्वेषामेव पुरुषार्थानां तत्प्रयोजनत्वसंभवात् । तथा हि—

मोक्षस्तावत्प्रधानं प्रयोजनं तस्य संभवति, ' अध्यारोपापवादाभ्यां निष्प्रपचं निरूप्यते ' इत्युक्तदिशा निष्प्रपंचब्रह्मसाक्षात्कारस्य तद्गतश्रुत्यनूदित-प्रपंचाध्यारोपसापेक्षत्वेन पंचमहाभूतज्ञानस्यावश्यकत्वात् । न चायोगिनां तदनुपयोगः शंक्यः, ब्रह्मविषयकपरोक्षज्ञाने दृढे सति प्रतिबंधापगमे अयोगिना-मपि मोक्षस्य क्रमिकापरोक्षज्ञानजन्यस्य शास्त्रकृद्भिरंगीकृतत्वात् । एवं सति

संवत्सरं पयोवृतिर्गवांमध्ये वसेत्सदा ।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी यतेंद्रियः ॥
संवत्सरांते पौषीं वा माघीं वा फाल्गुनीं तिथिं ।
त्र्यहोपवासी शुद्धश्च प्रविश्यामलकीवनम् ॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलं ।

गृहीत्वा पाणिना तिष्ठेज्जपन्ब्रह्मामृतागमात् ॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणं ।
शर्करामधुकल्पानि स्नेहवंति मृदूनि च ॥
भवंत्यमृतसंयोगात्तानि यावंति भक्षयेत् ।
जीवेद्वर्षसहस्राणि तावध्यागतयौवनः ॥
सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः ।
स्वयं चास्योपतिष्ठंते श्रीर्वेदवाक्यरूपिणी ॥

इत्यादिना चरकाचार्यैः ब्रह्मजपस्य नित्ययौवनादिसाधनत्वप्रतिपादनेन ऐहिकफलत्वस्यापि संभवात् । किंच—

सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।
अहिंसकमनायासं प्रशांतं प्रियवादिनं ॥
याज्यशौचपरं धीरं दाननित्यं तपस्विनं ।
देवगोब्राम्हणाचार्यगुरुवृद्धार्चने रतं ॥
आनृशंस्यपरं नित्यं नित्यं करुण वेदिनम् ।
समजागरणस्वप्नं नित्यं क्षीरघृताशिनं ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहंकृतं ।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेंद्रियं ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनां ।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥

इत्यादिना चरकाचार्यै आचाररसायने अध्यात्मप्रवणेंद्रियतायाः —

योगाह्यायुःप्रकर्षार्था जरारोगनिबर्हणाः ।
मनःशरीरशुद्धानां सिध्यंति प्रयतात्मनाम् ॥
तदेतन्नभवेद्वाच्यं सर्वमेवाहतात्मसु ।

इत्यादिना चरकाचार्यादिभिः प्रयतात्मतायाश्च रसायनमात्र एवात्यंत-

मावश्यकत्वोक्तेः । मनःशरीरशुद्धानामित्यनेनैव प्रयतात्मतालाभे सति प्रयतात्मनामिति पुनस्तदुपादानेन मानसगुणेषु प्रयतात्मताया अभ्यर्हिततमत्वबोधनात् । वाग्भटाचार्याअपि—

सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियम् ।
शांतं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥
गुणैरेभिः समुदितः सेवते यो रसायनं ।
स निर्वृतात्मा दीर्घायुः परत्रेह च मोदते ॥

इत्यादिना अध्यात्मप्रवणतायाः सर्वरसायनेषु उपयोगित्वं प्रतिपादयंति । यदीमानि पूर्वोक्तानि रसायनानि कलियुगेऽसंभवत्सिद्धिकानि अभविश्यन् तदा परमप्रामाणिको वाग्भटाचार्यः ।

उक्तानि शक्यानि फलान्वितानि । युगानुरूपाणि रसायनानि ॥
महानुशंसान्यपि चापराणि । प्राप्स्यादिकष्टानि न कीर्तितानि ॥

इत्यादिना उक्तरसायनानां शक्यत्वं सफलत्वं च नाकथयिष्यत् । तस्मात् उक्तरसायनानां यथावदनुष्ठानेन कलावपि सिद्धिस्यादेव ।

अपि च अणिमाद्यष्टैश्वर्यसिद्धिः कायसंपत्, पृथिव्यादिभूतधर्मैः काठिन्यादिभिरनभिघातश्चेति पंचमहाभूतविंचार--प्रयोजनत्वेनावश्यमंगीकरणीयानि तथा हि—

आयुर्वेदप्रवर्तकः परमप्रामाणिकत्वेन सर्वसंमतो भगवान् पतंजलिः योगदर्शने उक्ताणिमादिप्रयोजनकत्वं प्रतिपादयतिस्म । तथाहि तृतीयपादांतर्गतानि ४४-४७ सूत्राणि—

" स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमात् भूतजयः ॥ ४५ ॥
ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥ ४६ ॥
रूपलावण्यवज्रसंहननत्वानि कायसंपत् ॥ ४७ ॥

व्याख्यातानि चेमानि सूत्राणि, तथा हि—

" स्थूलं च स्वरूपं च सूक्ष्मं च अन्वयश्चार्थवत्त्वं च स्थूलस्वरूप-सूक्ष्मान्वयार्थवत्वानि तेषु संयमात् साक्षात्कारपर्यंतात् तत्तद्रूपवतां पंचमहा-भूतानां जयः वशवर्तिता भवतीत्यर्थः। तत्र स्थूलं परिदृश्यमानं अवयवसंस्थान-स्वरूपं काठिन्यसांसिद्धिकद्रवत्वोष्णत्वातिर्यग्गमनावकाशादानानि, सूक्ष्मं शांत-घोरमूढवृत्तिशून्यत्वात् शद्बस्पर्शरूपरसगंधमात्रारूपं कारणं । अन्वयः सत्वा-दिगुणत्रयं । अर्थवत्वं भोगापवर्गार्थिता । एतेषु क्रमेण प्रतिरूपं संयमात् भूतानि भूतप्रकृतयश्च योगिसंकल्पानुसारिणो भवंति वत्सानुसारिण्यो गाव इवेति यावत् " इत्यादि ।

तदेवं रीत्या भूतजयस्य उत्कृष्टप्रयोजनत्वेन तत्सिध्द्यर्थं पंचमहाभूत-विचारः कर्तव्य एव । एवमेव—

" तत्र गुदाद् द्व्यंगुलोपरिमेंढ्रद्व्यंगुलादधः कंदस्थानं, तदुपरि तप्तचा-मीकरप्रभं त्रिकोणं कामरूपं, तत् त्रिकोणस्य वामकोणे इडा, दक्षिणे पिंगला, मध्ये सुषुम्ना, मध्ये चित्रिणी वर्णमयी, तद्वर्णविन्यासात् कमलाकारचक्र-निष्पत्तिः । तथा हि—

कामरूपोपरि मूलाधारनामकं चक्रं तच्च सुवर्णाभं लंबीजान्वितेन सावित्रीसहितब्रह्मासरस्वतीसहितगणेशाद्यधिष्ठितेन षट्पंचाशच्छिवशक्तिमिथु-नवता चतुष्कोणेन पृथिवीस्वरूपेण कर्णिकाकारेण मध्ये भूषितं, व—श—ष-सामेकं चतुर्दलं तन्मध्ये भास्वराकारं अधोमुखं चित्स्वरूपिण्या सार्धत्रिवलया कोणस्थितया विद्युत्प्रभया कुंडलिन्या स्वमुखेन तन्मुखेन मुद्रयित्वा वेष्टितं स्वयंभूनामकं शिवलिंगं, एतच्च भावितं सकलयोगसिद्धिं, पृथिवीजयादिकं, ब्रह्म-गणेशादिप्रतीतिं च वितरति । यच्च हृदयनाभिप्रदेशादिकं कुंडलिन्याः अधि-ष्ठानमुक्तं, तन्मूलाधारादुत्थितायास्तस्याः हृदयादौ प्रकटीभावाभिप्रायेण, अतो न कोपि विरोधः इत्यास्तां विस्तरः । तदुपरि लिंगमूले स्वाधिष्ठाननामकं चक्रं,

तच्च सन्माणिक्यसमप्रभं वंबीजान्वितेन लक्ष्मीसहितविष्णवधिष्ठितेन द्विपंचाशन्मिथुनवता अर्धचंद्राकारेण शुभ्रेण जलस्वरूपेण कर्णिकोत्तमेन मध्ये भूषितं ब-भ-म-य-र-लात्मकं षट्दलं भावुकानां विष्णुप्रीतिजलजयादिकारकम् । अथ नाभौ मणिपूरनामकं चक्रं तच्च विद्युत्प्रभं वंबीजान्वितेन पार्वतीसहितशंकराधिष्ठितेन द्विसमधिकषष्ठिसंख्याकमिथुनवता त्रिकोणेन उद्यदादित्यप्रभेण तेजःस्वरूपेण कर्णिकोत्तमेन मध्ये भूषितं डादिफांतवर्णात्मकदशदलं स्वभावुकानां शंकरप्रीतितेजोजयादिकारकं । अथ हृदये अनाहतनामकं चक्रं एतदेव षोडशारषोडशास्रादिनापि आगमादौ प्रसिद्धं, तच्च धूम्रवर्णं पंबीजान्वितेन प्रकृतिसहितेश्वराधिष्ठितेन चतुःपंचाशन्मिथुनवता षट्कोणेन बाणनामकशिवलिंगलक्षितेन वायुस्वरूपेण कर्णिकोत्तमेन मध्ये भूषितं कादिठांतवर्णात्मकद्वादशदलं, एतच्च भावितं प्रकृतीश्वरप्रतीतिवायुजयादिकारकं । कंठे विशुद्धनामकं चक्रं तच्च श्वेतं अंबीजान्वितेन अर्धनारीश्वरस्वरूपसदाशिवाद्यधिष्ठितेन द्विसप्ततिमिथुनवता वृत्ताकारेण सुधांशुप्रभेण कर्णिकोत्तमेन मध्ये भूषितं स्वरीयवर्णात्मकषोडशदलं भावितं भावुकानां सदाशिवप्रीतिनभोजयादिकारकं । भ्रूमध्ये आज्ञानामकं चक्रं तच्च मुक्ताकारं हंबीजान्वितेन अविद्यासहितजीवाधिष्ठितेन शृंगाटकाकारेण चतुःषष्टिस्त्रीपुरुषवता मनोरूपेण कर्णिकोत्तमेन मध्ये भूषितं हकारळकारात्मकवर्णद्वयदलं भैरवानंदनाम्ना इतरेण शिवलिंगेनोपलक्षितं भावुकानामात्मप्रीतिकरं मनोजयादिकारकं। पादादिजानुपर्यंतं पूर्वोक्तलंबीजात्मकविशेषणविशिष्टपृथिवीस्थानं । एवमाजान्वोः पायुपर्यंतं अपां स्थानं । आपायोः हृदयपर्यंतं तेजःस्थानं । आहृन्मध्याद्भ्रूपर्यंतं वायुस्थानं । तदूर्ध्वमाकाशस्थानमिति । याज्ञवल्क्यगीतादावुक्तं । सर्वत्र सर्वसत्ताङ्गीकारात् भावनातोविशेषोपपत्तेः अविरुद्धं ज्ञातव्यम्, इत्यादिना । एवम्—

नाभेरधोगुदस्योर्ध्वं धारयेत्पंचनाडिकाः ।
वायुं ततो भवेत्पृथ्वीधारणाचेद्भयापहा ॥
पृथिवीसंभवो मृत्युर्न भवेत्तस्य योगिनः ।
नाभिस्थाने ततो वायुं धारयेत्पंचनाडिकाः ॥

ततो जलाद्भयं नास्ति जले मृत्युर्न योगिनः ।
नाभ्यूर्ध्वमंडले वायुं घटिकापंचधारयेत् ॥
आग्नेयी धारणा चेयं मृत्युस्तस्य न वन्हिना ।
न दह्यते शरीरं च प्रविष्टे चाग्निसंस्तरे ॥
नाभिभ्रूघ्राणमध्ये तु प्रादेशत्रयसंमिते ।
धारयेत्पंचघटिका वायुं सैषा च वायवी ॥
धारणा नैव वायोस्तु भयं भवति योगिनः ।
भ्रूमध्यादुपरिष्टात्तु धारयेत्पंचनाडिकाः ॥
वायुं योगी प्रयत्नेन सेयमाकाशधारणा ।
आकाशधारणां कुर्वन् मृत्युं जयति शाश्वतं ॥

इत्यादियोगशास्त्ररित्या पूर्वोक्तधारणादीनां भूतजयफलकत्वप्रतिपादनेन तदर्थं पंचमहाभूतनिरूपणमावश्यकमेव । नह्येषामप्रामाण्यं शंकितुमपि शक्यं । परमप्रामाणिकत्वेन सर्ववादिसंप्रतिपन्नचरकादिकर्तृकयोगशास्त्राप्रामाण्यशंकनस्य सर्वेषामपि आधुनिकप्राचीनग्रंथप्रामाण्यापादकत्वात् । तदेवं योगशास्त्रानुसारेणापि पंचमहाभूतविचारः सप्रयोजन एव ।

रूपलावण्येत्यादिना सूत्रेण च शरीरचिकित्सोपयोगित्वं भूतज्ञानस्य लब्धमेव । स्पष्टमाह च शारीरस्थानारंभे चरकचतुराननः चक्रदत्ताचार्यः ।

" निदानस्थाने ज्ञातहेत्वादिना, तथा विमाने प्रतीतरसदोषमानेन, कर्तव्यचिकित्साधिकरणं शरीरं ज्ञातव्यं भवति । यतोऽप्रतिपन्नेऽशेषविशेषतः शरीरे न शरीरविज्ञानाधीना चिकित्सा साध्वी भवति । अतः शारीरं कारणोत्पत्तिस्थितिवृध्यादिविशेषैः प्रतिपादयितुं शारीरस्थानमुच्यते अत्रापि चात्यंतदुःखोपरममोक्षकारणचिकित्सोपयुक्तपुरुषभेदादिप्रतिपादकतया प्रधानत्वेन कतिधा पुरुषीयोऽध्यायो निरूप्यते " इति ।

सुश्रुतटीकायां डल्हणाचार्योऽप्याह शारीरस्थानारंभे —

" हेतुलक्षणप्रतिपादकान्निदानस्थानात् अधिगतव्याधिलक्षणस्य

वैद्यस्य चिकित्सायाः अवसरः । चिकित्सा चाधिष्ठानविशेषज्ञानमंतरेण न संभवति, इत्यधिष्ठानज्ञापनाय शारीरस्थानमारभ्यते । शारीरस्थानेऽपि प्रतिपाद्ये आदौ सर्वशरीरकारणानां भूतानामेव चिंताकर्तुं युज्यत इत्यत आह अथात " इत्यादि ।

इत्यनेन हि ग्रंथद्वयेन पंचमहाभूतविचारस्य प्रयोजनं चिकित्सासाधुत्वमिति स्पष्टमुच्यते ।

अदृष्टवादिनस्तु वातपित्तकफत्वादिना व्याधिहेतुज्ञानेऽपि तत्प्रत्यनीकचिकित्सायाः कर्तुं शक्यत्वेऽपि च भूतविभाजकधर्मपुरस्कारेण व्याधिशरीरादि हेतुज्ञानस्य चिकित्सायां अदृष्टद्वारा उपयोगोऽपि, पाश्चात्याभिमत एलिमेंटसंज्ञक द्विनवतितत्वविभाजकतावच्छेदकधर्मपुरस्कारेण व्याधिशरीरादिहेतुज्ञाने तत्प्रत्यनीकचिकित्सायां कथंचित् कर्तुं शक्यत्वेऽपि च व्याधिशरीरौषधादीनां पंचमहाभूतान्यतमजन्यत्वज्ञानपुरस्कारेण औषधप्रयोगस्य आयूरुपादृष्टं प्रतिअदृष्टद्वारा कारणत्वस्वीकारात् । एतच्च आयुर्वेदग्रंथे पंचमहाभूतनिरुपणादेवावगम्यते आरोगस्य दृष्टत्वेऽपि आयुषो अदृष्टरूपतायाः आधुनिकैः पाश्चात्यैरपि अवश्यं स्वीकरणीयत्वात् । इति प्राहुः

वस्तुतस्तु दृष्टविषयाऽप्युपयोगो दृश्यते । यथानिघंटौ
पीतं स्फुरद्वलयशर्करिलाश्मरम्यं । पीतं यदुत्तममृगं चतुरस्रभूतं ।।
प्रायश्च पीतकुसुमान्वितवीरुदादि । तत्पार्थिवं कठिनमुद्यदशेषतस्तु ।।
अर्धचंद्राकृति श्वेतं कमलान्तदृषं चितं ।
नदीनदजलाकीर्णं आप्यं तत्क्षेत्रमुच्यते ।।
खदीरादिद्रुमाकीर्णं भूरिचित्रकवेणुकं ।
त्रिकोणं रक्तपाषाणं क्षेत्रं तैजसमुत्तमम् ।।
धूम्रस्थलं धूम्रदृषत्परीतं । षट्कोणकं तूर्णमृगावकीर्णं ।।
शाकैस्तृणैरंचितरूक्षवृक्षकं । प्रकारयेत्तत् खलु वायवीयम् ।।
नानावर्णं वर्तुलं तत्प्रशस्तं । प्रायः शुभ्रं पर्वताकीर्णमुच्चैः ।।
यच्चस्थानं पावनं देवतानां । प्राह क्षेत्रं क्षणस्वांतरिक्षम् ।।

द्रव्यं व्याधिहरं बलातिशयकृत् स्वादुस्थिरं पार्थिवं ।
स्यादाप्यं कटुकं कषायमखिलं शीतं च पित्तापहम् ॥
यत्तिक्तं लवणं च दीप्यमरूचि चोष्णं च तत्तैजसं ।
वायव्यं तु हिमोष्णमम्लमबलं स्यान्नाभसं नीरसम् ॥ इति ।

किंच पंचमहाभूतविचारप्रयोजनं किम् ? इति यत् इदानीं बहुकाल-निद्रात उत्थाय महत्युपेक्षागर्भे निपतितो विषयः प्रष्टुमुपक्रम्यते, तत्र तावत्प्रश्न-घटकीभूतप्रयोजनपदार्थनिर्वचन एव शास्त्रकृतां बहुविधो विवादः पुरत उपस्थाप्य विचारयितृचेतांसि आदितः स्वनिर्धारणायैव प्रवर्तयति । अक्षपादमते हि " यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनमिति सूत्रोक्तरीत्या प्रवृत्त्युद्देश्यत्वं तल्लक्षणं पर्यवस्यति । यत्साधयति तत्फलमिति चरकाचार्यः । " यागनिष्पाद्यो धर्मः कार्यतया कर्म तज्जन्यस्तु स्वर्गादिः फलमिति " अमुमेवार्थं पुष्णाति तट्टीकायां च चक्रदत्तः । एवं विधं च प्रयोजनं भोजनस्य तृप्तिः । यागादेश्च स्वर्गादिकं प्रसिद्धमेव ।

मीमांसकमते तु तदुद्देश्यककृतिव्याप्यजन्याकत्वं तत्, यथा यागे व्रीह्यवघातस्य तुषविमोकः प्रयोजनं अतएव सुवर्णनिर्मितकलायद्रव्यकयागे व्रीहिस्थानापन्नस्य कलायस्य तुषविमोकोद्देश्यककृतेरसंभवात् व्यापकाभावात् व्याप्यस्यावघातकर्तव्यस्याप्यभाव इति तेषां सिद्धांतः अतएव—

विशयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं च पंचांगं शास्त्रेऽधिकरणं स्मृतम् ॥

इति विचारसामान्य एव प्रयोजनस्यांगत्वांगीकरणात् पंचमहाभूतवि-चारप्रयोजनविचारावसरे मीमांसोक्तप्रयोजनस्वरूपमेव कटाक्षयितुं योग्यमित्यपि संभाव्यते, इदं पूर्वोक्तं प्रयोजनस्वरूपद्वयमेव लोके प्रसिद्धं ।

साहित्यशास्त्रेऽपरमपि तृतीयं प्रयोजनस्वरूपमेवमुपवर्णितं दृश्यते—

प्रयुज्यमानोऽभीष्टार्थः कारकादिसमन्वितः ।
नीयते यत्प्रबोधाय तत्प्रयोजनमुच्यते ॥ इति ।

प्रयुज्यमान इति शानचा प्रयोगस्य वर्तमानकालीनत्वावगमात् कारकादीत्यादिपदेन क्रियाया आप्युपसंग्रहात् वर्तमानप्रयोगविषयीभूतः क्रियाकारकोपरंजितः प्रकृतोर्थः यत्प्रबोधानुकूलव्यंजनाख्यव्यापारवान् तदेव प्रयोजनमिति वाक्यार्थः पर्यवस्यति । यथा गंगायां घोष इत्यत्र गंगापदस्य तीरलक्षणारूपा व्यापृतिः समस्तकारकोपरंजिता सती शैत्यपावनत्वादिव्यंजनाय कल्पते तत् शैत्यपावनत्वादि तादृशलक्षणायाः प्रयोजनम् । इतश्चतुर्थं तु प्रयोजनस्वरूपं महता प्रयासेनापि नोपगच्छामः । कश्चिन्महात्मा प्रदर्शयिष्यति चेत् अधमर्णा भविष्यामः ।

इदानीमिदमप्यालोच्यते, यस्यैव पंचमहाभूतविषयकस्य विचारस्य प्रयोजनमन्वेष्टुं वयं प्रवृत्ताः स्मः स विचारपदार्थः को वा ? भवितु मर्हति । तत्र तत्वनिर्णयो विचार इति व्यवहारतत्वादिषु निरूपितं, संदिग्धे वस्तुनि प्रमाणेन तत्वपरीक्षेति केचित्, तर्कापरपर्यायो विमर्श एव विचार इत्यमरः । प्रकृते च आयुर्वेदशास्त्रे पंचमहाभूतवर्णनं केवलमस्ति, पंचमहाभूतास्तित्वप्रतिपादको विचारापरपर्यायस्तर्कस्तु क्वचिन्न साक्षादुक्तः तर्हि कस्य प्रयोजनं निरूपणीयमिति व्यामोह एव भवति । अतः " स्वाध्यायोऽध्येतव्य " इत्यत्राध्ययनविधौ अध्ययनस्यार्थावबोधपर्यंततत्वेऽवगते अर्थात् फलवदर्थावबोधसंपत्त्यर्थं प्रमेयगतप्रमाणगतासंभावनानिवर्तकः तर्करूपो विचारोऽपि इति कर्तव्यतात्वेनाक्षिप्यत एवेति यथा वेदवादिभिः स्वीक्रियते, तथैव आयुर्वेदागमे आयुर्वेदाध्ययनविधावपि अध्ययनस्यार्थावबोधपर्यंतताया वक्तव्यतया पञ्चमहाभूतप्रतिपादकायुर्वेदग्रंथभागस्य तदर्थावबोधपर्यंतताकरणाय प्रमेयमात्रासंभावनानिवर्तकः तर्कापरपर्यायो विचार इतिकर्तव्यतात्वेन आयुर्वेदप्रणेतॄणां महर्षिणामप्यभिमत इति वक्तव्यम् । पंचमहाभूतरूपतत्त्वे च तात्पर्यमायुर्वेदस्य तदवबोधफलवत्तायामेव संभवति, तत्वमसीत्यादिवाक्यार्थाखंडार्थबोधे मोक्षरूपफलवत्तायामिव । अतएव ब्रह्मविचार-

स्येव पंचमहाभूतविचारस्यापि अंगीभूतबोधफलवत्त्वैव सफलत्वसंभवः इति प्राप्ताप्राप्तविवेकेन विचारोपकार्यपंचमहाभूतावबोधस्य किं प्रयोजनं निर्दिष्टान्यतमप्रयोजनरूपमध्ये संभवतीति प्रश्नार्थनिष्कर्षः संभवति।

तत्र तावद्विमृश्यमाने प्रयोजनस्वरूपे वक्ष्यमाणान्यपि प्रयोजनानि विमर्शपथमवतरंति। तथाहि—

भारतीयसंप्रदायेषु वेदांतसंप्रदायस्तावत्सर्वप्रधानतमो वेदप्रमाणकश्चेति साक्षात्परंपरया सर्वेषामेव भारतीयास्तिकदर्शनानां तत्प्रदर्शितपथानुयायित्वं निष्प्रपंचमिति, आयुर्वेदशास्त्रकाराणामपि तन्मतं सिद्धांतत्वेन संमतमिति निश्चयेन वक्तुं शक्यते। व्यवहारदशायां च सांख्ययोगदर्शनादिसिद्धांतः आयुर्वेदविदामनुमत इत्यत्रापि अविवाद एव वरीवर्ति। एवं सति कटकमुकुटकुंडलादयः एकस्य सुवर्णस्यैव विकारा इत्युच्यमाने सांख्ययोगदृष्ट्या प्रकृतिभूतस्य सुवर्णस्य विकृतिभूतानि कटकमुकुटादीनि इति। वेदांतदृष्ट्या तु प्रकृत्यपरपर्यायसुवर्णरूपापन्नमूलाज्ञानपरिणामभूतानि तादृशसुवर्णावच्छिन्नसच्चिदानंदाद्वयचैतन्यविवर्तभूतानि च तानीति वा आयुर्वेदसिद्धांतनिष्कर्षः संभवति।

एतादृशनिष्कर्षस्य प्रयोजनं लोके एवमनुभूयते कटकमुकुटादीनां सुवर्णादिविकारत्वमजानतां बालानां केनचिन्निमित्तवशेन कटकमुकुटादिविनाशदशायां अभीष्टवियोगप्रभवो दुरंतः शोकावेगः। “ अये किमर्थं शोचसि ? सुवर्णस्यैव विकृतिभूता एते कटकमुकुटादयः प्रस्तराद्याघातादिना विनष्टाः कामं भवंतु तत्प्रकृतिभूतं सुवर्णं तु हस्त एव वर्तते कृते समुचिते व्यापारे पुनः कटकमुटादिघटना इतोप्यतिरुचिरतरा कर्तुं शक्यत, इति समाश्वासनद्वारा कटकादेः सुवर्णादिविकारता दृष्टिः सांख्यसंमता समुपकरोति। वेदांतसंमतया तु प्रक्रियया विनष्टस्य मुकुटादेः ब्रह्मविवर्तत्वमात्रमुद्भावयता मिथ्यैव तद्वस्तु नष्टं यत्त्वमनुशोचसि अध्यासबलेन च पुनरुत्पादयितुं शक्यत, इति समाश्वासन-

प्रदानेन शोकाकुलजनः आश्वास्यते। स्वकीयप्रक्रियानुसारेण पुनर्लब्धकटक-मुकुटादिरपि कर्तुं शक्यत इति कटकमुकुटादिषु परस्परं विभज्यमानेषु अनु-वर्तमानस्य सुवर्णसामान्यस्य उपादानत्वदृष्टिः सांख्यसंमता वेदांतसंमता च यथा सफला, तथैव परस्परं विभज्यमानानां वातपित्तकफादीनां रसादिसप्त-धातूनां शरीरावयवस्नायुपेशीकंडरादीनां ज्वरादिसर्वरोगाणां तच्चिकित्साप्रक्रि-याणां तदुपयुक्तौषधद्रव्याणां च सर्वेषां भौतिकानां अनुवर्तमाने हि पंचीकृत-पंचमहाभूतैः सह प्रकृतिविकारभावदृष्टिरपि हि सांख्यसंमता वेदांतसंमता वा नूनं समुपकरोत्येव। तथा हि—

दैवदुर्विपाकात् खुड्डाकचतुष्पादाध्यायोक्तरीत्या चिकित्सोपयोगिपाद-चतुष्टयमध्ये भिषक्, उपस्थाता, रोगी, चेति पादत्रयमेव यत्र तिष्ठति चिकित्सोपयोगिद्रव्यात्मकश्चतुर्थः पादस्तु यत्र न लभ्यते, तत्र हि भग्नैकपदा-गौरिव त्रिभिः पादैः चिकित्सा कथं नाम प्रवर्तताम् इत्याशंकायां चिकित्सोपयोगि-द्रव्यालाभेन शोकाकुलीभूते परिजने परमकारुणिकैरायुर्वेदकारैः इदं शोकापनो-दनमुत्पादितं। मा नाम भौतिकद्रव्यालाभेन शोकाकुली भवत समस्तानि भौतिकानि द्रव्याणि पंचमहाभूतमयान्येव पंचमहाभूतेष्वध्यस्तानि इति च। अतो भौतिकानामलाभदशायां अस्मदुक्तरीत्या पंचमहाभूतैः सह भौतिकानां प्रकृतिविकारभावकुशलो भिषक् सांख्यवेदांतोक्तप्रक्रियया समवष्टब्धः सन् ध्यानादिबलात् तान्यपि द्रव्याणि समुत्पाद्य रोगापनोदनं कर्तुमर्हति।

न चेदं कार्यं द्व्यधिकनवतिसंख्याकपाश्चात्योन्नीतएलिमेंटसंज्ञतकत्वज्ञान-मात्रसाध्यं भवितुमर्हति। सुवर्णस्य तन्मते एलिमेंटसंज्ञकतया कस्मिंश्चित्काले पाश्चात्यप्रक्रियया भारतवर्षस्य सर्वथा सुवर्णसंशोषणे जाते सति स्वर्णापनोद्य-व्याधिचिकित्सायाः पाश्चात्यरसायनज्ञानमात्रसाध्यत्वानुपपत्तेः। पंचभूतविचा-रानुसारेण तु प्रोक्तरीत्या तत्रापि कार्यनिर्वाहणं संभवति। न चैकजातीयात् पंचमहाभूतसमुदायादेव कथं स्वर्णरजतताम्रधातुमूलपत्रादिविभिन्नप्रकाराणां कार्याणां समुत्पादः संभवतीति वाच्यं। एलक्ट्रॉन्, प्रोटॅन्, पाजिट्रॅन्, न्यूट्रॅन्

संज्ञकैकजातीयसमुदायादेव द्विनवतितत्वोपादनवत् प्रक्रियाविशेषेण तदुपपत्तेः सा च प्रक्रिया भगवता पतंजलिना योगदर्शने एवमुपपादिता । तथा हि तत्सूत्रम्—

जन्मौषधिमंत्रतपःसमाधिजाः सिद्धयः ।

देवादीनां जन्मत एव निरतिशयाणिमाद्यैश्वर्यसिद्धिः मंत्रेण वाल्मीकि-प्रभृतेः, आयुर्वेदोक्तरसायनसेवनेन च्यवनादेः, तपसा विश्वामित्रादेः, समाधि-विशेषाभ्यासेन च नरस्य, सतो योगिनो व्याघ्रादिशरीरप्राप्तिः, एवमादयः सिद्धयः समुत्पद्यंते । कथं विजातीयानां एवंविधो जात्यंतररूपेण परिणामः । इति प्रश्नसमाधानाय तत्रैव द्वितीयं सूत्रम्—

जात्यंतरपरिणामः प्रकृत्यापूरात् ।

पुंजीभूते शुष्कतृणसमूहे पतितमात्रायामिव वन्हिकणिकायां योयं महावन्हेः प्रादुर्भावः स तृणादिजातीयस्य सतो द्रव्यस्य वन्ह्यादिजात्यंतराकारेण परिणामः प्रकृत्यापूरात् भवति, अर्थात् तृणादिजातीयानां पुंजगतानामवयवानां प्रकृतौ विलापनपूर्वकं वन्हिजातीयानां अवयवानां प्रकृतेः सकाशादाकर्षणेन भवतीत्याशयः ।

ननु तृणवन्हिघटपटादीनां पृथग्जातीयानां भौतिकानां परस्परं विभ-ज्यमानानां सर्वानुगतमेकजातीयकं पंचभूतात्मकं तत्वं सामान्यरूपं कारणं इति खलु भवत्सिद्धांतः तत्र च वन्हितृणादिजातिगंधस्याप्यभावात् कथं प्रोक्त-पुंजे तृणादिजातीयावयवविलापनानंतरं प्रकृतिभूतात् पंचमहाभूतसमुदायात् वन्ह्यादिजातीयावयवाकर्षणं संभवदुक्तिकम् ? इत्याशंकासमाधानाय च तृतीयं सूत्रम्—

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ।

यथा हि एकविधं जलं कुल्यात्मना नानाविधेषु क्षेत्रेषु नानाविधं

स्वरूपं लभते एवमेव एकैव प्रकृतिः तत्पुरुषीयादृष्टसहकारेण नानारूपेण परिणमतीति संगच्छत एव। यथा हि केदारे प्रविष्टस्योदकस्य वप्राकारता प्रथमवप्रभेदने तु वप्रांतरे गमनं तदाकारतापत्तिः पूर्वाकारतापरित्यागश्चेति लोके दृष्टं तथैव तृणादिजातीयादृष्टोद्भवप्रयुक्तं तदंतः प्रविष्टायाः प्रकृतेः तृणाद्याकारधारणं तादृशादृष्टाभिभवे तु पूर्वाकारताविलयः वन्ह्याद्याकारोद्भव-कादृष्टविशेषोद्भववशात् तदंतः प्रवेशितप्रकृतेः वन्ह्याद्याकारधारणं बोध्यमिति न एकजातीयकारणात् विजातीयकार्याणामुत्पत्त्यनुपपत्तिरिति।

न चेवं रीत्या ध्यानविशेषेण वस्तुनो रूपांतरोत्पत्तिः अशक्याऽप्रा-माणिकी चेति शंक्यम् ? शंकाविषस्थले विषवेगस्य चिकित्सायाश्चायुर्वेदोप-दिष्टत्वात् पाश्चात्यैरप्यनुभूयमानत्वात् एवं सत्यविषाभिभवस्थले नैर्विष्यभावनया विषापनोदनप्रकारोऽपि दृष्टांतीकर्तव्यः। किंच ध्यानस्य विशिष्टरूपांतरोत्पाद-कत्वं आधुनिकैः पाश्चात्यादिभिरपि प्रयोगादिद्वारा प्रसाध्यांगीक्रियत एव। अतएव हि असति रजोवीर्यादीनां समानगुणत्वेऽपि कस्याश्चित् आंग्लस्त्रियः निग्रोजातीयपुरुषेण सह असति सहवासे तस्यास्तध्यानमात्रेण निग्रोजातीय-प्रजाया एव प्रादुर्भावः समजनीति प्रयोगद्वारा प्रसाधितं, एवं गुणवतामश्वाना-मुत्पादनार्थं अश्वशास्त्रकुशलाः वडवासु गुणवदश्वविषयकसंस्कारानाधातुं हीन-जातीयाश्वसहवासेऽपि पुरतः गुणवदश्वान् सन्निधाप्य श्रेयसीमश्वजातिं निष्पाद-यंतीति प्रसिद्धमेतत् रजोवीर्यादिसहकारेण अद्यत्वेऽपि ध्यानस्य भौतिकनिर्माण-क्षमत्वमस्तीति। पुरातनास्तु महर्षयः जीवतत्वविशेषज्ञाने इतोऽप्यधिकां कुशल-तामवाप्य आश्चर्यभूतानि मृतसंजीवनादीनि कर्माणि व्यदधुरिति हि पश्यामः आयुर्वेदीयेतिहासेषु तथा हि—

रुद्रेण यज्ञस्य शिरश्छिन्नं अश्विभ्यां पुनः प्रतिसंहितं, मृतसंजीविन्या विद्यया शुक्रेणासुराः प्रत्युज्जीविताः, द्रोणाचलाहरणेन वानराः लक्ष्मणश्च रामायणे प्रत्युज्जीविताः। तदेतत्सर्वमैतिहासिकं वृत्तं महर्षीणामस्मत्पूर्वजानां न सर्वथा उपेक्षणीयम्।

जन्मौषधिमंत्रतपःसमाधिजाः सिद्धयः ।

इति पातंजलसूत्रमिमं इतिहासमुपोद्बलयत्येव । जीवतत्त्वनिपुणैर्हि महर्षिभिः चैतन्यधातुः साक्षात्कृतः ध्यानविशेषाद्याहिताध्यासविशेषसाहाय्येन तस्यैव च चैतन्यधातोः जीवः, आनंदः, सत्यता, चेति रूपत्रयनिर्माणकलापि तैः स्वायत्तीकृताऽभवत् इति इतिहासत एवावगच्छामः । एवं सति ध्यानविशेषाभ्यासोपदर्शितप्रतिभासस्वरूपे सत्यतासंयोजनं यदा स्वकीयसामर्थ्यविशेषात् तैः क्रियतेस्म तदैव ब्रम्हणो मानसा मन्वादयः पुत्राः इत्याद्यैतिहासिकव्यावहारिकसृष्टिरपि समभवत् इति जानीमः । आधुनिका अपि रसायनविदः पाश्चात्या जीवतत्त्वानुसंधानाय प्रवृत्ताः यदा जीवधातुं प्राप्स्यंति तदा तं स्वायत्तीकृत्य महर्षीणामिदं कौशलम् स्वयमपि साक्षात्कृत्य विश्वसिष्यंतीत्यस्माकं सुदृढस्तर्कः । जीवधातोरपेक्षया अतिजडे शुक्रशोणितस्वरूपे संस्कृतिसंयोजनं यदि व्यावहारिककार्यक्षमं भवति, तर्हि विशुद्धं जीवधातुमुपादाय तत्र क्रियमाणं ध्यानाहितसंस्कृतियोजनं कथं फलोपधायकं न भवेत् इति सुधिय एवं विदां कुर्वंतु । चैतन्यधातोः स्वरूपमेव हि तथाविधमनुभवामः यत्तादात्म्यापन्नस्य सत्यत्वविषये शंकैव नोन्मिषति । आधुनिकानां रसायनविदां अत्र विषये यदि काचिदसंभावना भवेत् तर्हि कथं नाम तेषु जीवतत्त्वानुसंधानार्थं क्रियमाणः बहुवित्तव्ययायाससाध्यः प्रयत्नः तेषां प्रेक्षावत्तामनुमापयेत् । तस्मात्सिद्धमेतत् पंचमहाभूतविचारप्रयोजनं यध्यानविशेषेण भौतिकवस्तुनिर्माणं नाम आयुर्वेदाभिमतमिति ।

किंच प्राक्सूचितं आयूरक्षणं तद्वर्धनं चायुर्वेदस्य परमं प्रयोजनमिति निश्चप्रचम् । तदत्र स्पष्टमुपपाद्यते तथा हि--

आयुश्च शरीरेंद्रियसत्त्वात्मसंयोग इति अस्मदीयमहर्षिभिरुपलब्धम्, तत्र सत्त्वशद्ववाच्यमंतःकरणं तावत् अपंचीकृतपंचमहाभूतसत्त्वांशसमष्टिरिति वेदांतिभिरभ्युपेयते । एवं च यत्र मानसव्याधिवशात् मनुष्यस्य रोगप्रसक्तिः

तत्र अध्यात्मवित्संगत्यादिकमेव चिकित्सात्वेन प्रत्यपादि आयुर्वेदे । युक्तं च तत् अपंचीकृतपंचमहाभूतसमष्टिभूतस्यांतःकरणस्योपघाते सति ।

वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ॥

इत्याद्यायुर्वेदोपदिष्टसजातीयाकर्षणावलंबनेन तादृशस्थलेऽतःकरणपोषणस्य अपंचीकृतपंचमहाभूतीयसात्विकांशाभ्यवहरणेनैव संपादनीयत्वात् । एलिमेंटसंज्ञकपंचीकृतानां सर्वथा तत्रानुपयुक्तत्वात् । तत्र तादृशाध्यात्मसान्निध्ये सति वैद्येन दीयमानस्य शुचेः पंचीकृताभ्यवहारद्रव्यस्य जांगलिककृतनैर्विष्यभावनया व्यावहारिकविषापनोदनवत् अध्यात्मवित्कृतापंचीकृतपंचमहाभूतभावनया तदध्यस्तपंचीकृतांशविलये सति तत्रांतःकरणपोषणस्य संभवात् । एतदर्थमपि पंचमहाभूतनिरूपणं चिकित्साशास्त्रे संगच्छते । किंच न केवलं मानसचिकित्सामात्र एव पूर्वोक्तरीत्या मनःपोषणमुपयोगि, किंतु रोगसामान्यचिकित्सायामपि पूर्वोक्तरीत्या मनःपोषणमावश्यकमेव, अन्यथा मनसः अधृतिमत्त्वे प्रियाप्रियविकारत्वस्य निर्विकारताया धृत्यनुभावस्य शरीरेंद्रियादिष्वपि सुदूरनिरस्तत्वापत्तेः । अतएव शल्यचिकित्साप्रसंगे स्त्र्यादिमोहकद्रव्याणां दर्शनमपि अनर्थावहं भवतीति अपसारणीयं, सुहृदश्च मनोविनोदनक्षमा उपसारणीया, इत्यादिर्व्रणितपर्युपासनाविधिः सुश्रुतादिभिरुक्तः । इति व्याधिचिकित्सामात्र एव अध्यात्मवित्सन्निधानं आयुर्वेदविदामभिमतं पंचमहाभूतविचारस्य सप्रयोजनतां व्यवस्थापयतीति मन्यामहे ।

इदं चोदाहरणांतरं सैंकॉलाजिपदवाच्यमानसशास्त्राभिज्ञानां उक्तमेवार्थं दृढीकरोति । फ्रान्साभिजनः कश्चित् चिकित्सकः कंचनापराधिनं न्यायालये प्राप्तप्राणदंडं प्रयोगार्थमुपादाय बद्धाक्षस्य तस्य सूच्यग्रेण पादं विध्वा तथा तं प्रतिबोधितवान् यथा स स्वकीययैव भावनया विनैव भावनातिरिक्तं कारणं ममार । सहि सूच्यग्रेण विध्वा तत्र चोष्णजलं निक्षिप्य एवं प्रतिबोधितो यत् तव शरीरात् एतावान् रक्तप्रवाहो निर्गतः पुनरेवं जातं ततश्च

एवं जातमिति प्रतिक्षणं तस्य रक्तप्रवाहादेर्वस्तुतोऽभावेऽपि भावनामात्रेण गतासुरभवदिति । व्यक्तमेवात्र मनोऽपघातस्य जीवितनाशकत्वं तैरुद्घोषितम् । अतएव पाश्चात्येष्वेव मानसचिकित्साशास्त्राणां बहूनां प्रादुर्भावो वरीवर्ति इति । तथैव मॅस्मारिझम् हिप्नाटिझम् प्रभृतीनां मनःसंस्करणकलानां विस्तरेण प्रपंचोऽनुसंधेयः ।

एवं सति पूर्वोक्तानां पंचमहाभूतप्रयोजनानां अक्षपादजैमिनिभावप्रकाशनाद्युपयुक्तप्रयोजनेषु मध्ये कीदृशं प्रयोजनत्वं संभवतीति विचार्यते ।

तत्र पूर्वोक्तरीत्या पंचमहाभूतविचारेत्यत्र विचारपदस्य पंचमहाभूततत्त्वावबोधपरत्वनिर्णयात् तदस्तित्वावबोधस्य प्रयोजनं चिंत्यते, तेनैव तदंगभूतस्य तर्कापरपर्यायस्य विचारस्यापि सप्रयोजनत्वनिर्वहात् । तत्र तावत् ।

" यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् " ।

इत्यक्षपादोक्तप्रयोजनत्वं सुवर्णादिनिष्पत्तौ वर्तते, यतो हि सुवर्णादिनिष्पत्तिं प्रति पूर्वोक्तरीत्या भावनायाः कारणत्वात् भावनायाश्च पंचमहाभूतविशेष्यकसुवर्णत्वादिप्रकारकाहार्यज्ञानरूपत्वेनाहार्यज्ञानस्य च प्रत्यक्षमात्ररूपत्वेन उक्ताहार्यज्ञानविशेषस्य पंचमहाभूतस्यासंभावनाक्रांतत्वेन ग्राह्यसंशयस्य प्रत्यक्षविरोधितया तादृक्संभावनानिवृत्यर्थं तर्काधीनतत्वावबोधस्यावश्यकत्वमिति रीत्या परंपरया पंचमहाभूततत्त्वावबोधापरपर्यायविचारे सुवर्णादिनिष्पत्यात्मकमर्थमुद्दिश्य प्रवृत्त्या तस्याः तत्प्रयोजनत्वं अनपबाधितमेव । एवं पंचमहाभूतोपचयकरणकांतःकरणपुष्टिभाव्यकप्रवृत्तिं प्रति पंचमहाभूतास्तित्वज्ञानस्यावश्यकत्वात् उक्तांतःकरणपुष्टेः तादृशतत्वावबोधप्रयोजनत्वं अक्षपादोक्तरीत्या संगच्छते । तन्मते यदुद्देश्यककृतिविषयत्वं प्रकृतस्य कर्मणः तस्यैव प्रयोजनपदार्थत्वपर्यवसानात् । उद्देश्यत्वं चात्र प्रवृत्तिजनकीभूतेच्छाविषयत्वप्रयोज्यं इच्छाविषयनिष्ठं प्रवृत्तिविषयत्वं इति एतत्सर्वमविकलम् पूर्वोक्तप्रयोजने वर्तते ।

मीमांसकरीत्या तु यदुद्देश्य कृतिव्याप्यजन्यताकत्वं प्रकृतकर्मणस्तस्यैव

प्रयोजनत्वम् । अत्रोद्देश्यत्वं च अनुपादेयपंचकादिसाधारणमिति व्यक्तमाकरे, इत्यस्ति अक्षपादीयप्रयोजनलक्षणात् कश्चिद्विशेषः एतदीयप्रयोजनलक्षणे । परंतु तदुद्देश्यककृतेः प्रयोज्यापेक्षया व्यापकत्वस्य मीमांसकाभिप्रेतत्वात्, तदुद्देश्यककृत्यभावे प्रयोज्यस्यानुत्पाद्यत्वमेवेति अपरः सिद्धांतः तदीयः । एतदीयलक्षणानुसारेण पंचमहाभूतोत्पत्तेः प्रयोजकं किमिति विचार्यमाणे न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्तीति न्यायेन पंचमहाभूततत्कार्याद्युपभोगस्वरूपयोग्यादृष्टानां उपभोगार्थमेव पंचमहाभूतोत्पत्तिः ईश्वरेण कृता । सचोपभोगो "भौतिकास्तु शतं पूर्ण"मित्यादिवक्ष्यमाणरीत्या स्वरूपतो भूतोपभोगः पूर्वोक्तदिशा ध्यानादिद्वारेण सुवर्णाद्युपभोगादिश्च सर्वोप्यत्र गृह्यत इति तादृशोपभोगजनकादृष्टक्षये पंचमहाभूतादीनामपि प्रयोजकाभावात् प्रयोज्यस्याभाव इति न्यायेन अनुत्पाद्यत्वम् । विनाशश्च प्रलयापरपर्यायो निष्पाद्य इति वैद्यक एव सविस्तरं प्रपंचितम् । इति मीमांसकदिशापि पंचमहाभूतविचारप्रयोजनलक्षणं सम्यगेव समर्थितं भवति ।

भावप्रकाशनादिमते तु वर्तमानकालीनप्रयोगविषयीभूतः कारकादिसमन्वितः अभीष्टार्थः यत्प्रबोधोद्देश्यकव्यंजनाख्यव्यापारवान् भवति तत्प्रयोजनमिति प्रयोजनस्वरूपम् । एतन्मते च सामान्यतः तदुद्देश्यककृतिव्याप्यजन्यताकत्वरूपात् मीमांसाकाभिमतप्रयोजनस्वरूपात् बोधात्मकविशेषोद्देश्यकत्वस्य व्यंजनाख्यव्यापारवत्वस्य च तल्लक्षणघटकप्रयोगस्य वर्तमानकालीनत्वं च विशेषः । तथा चोक्तभावप्रकाशनोक्तं प्रयोजनत्वमपि पूर्वोक्तेषु प्रयोजनेष्वक्षतमेव, पंचमहाभूततत्वावबोधात्मकस्य विचारस्य वर्तमानकालीनप्रयोगविषयत्वेन व्यंजनाव्यापारेण उक्तप्रयोजनावबोधजनकत्वेन तत्र प्रयोजनलक्षणस्य व्यवस्थितत्वात्। यद्यपि व्यंजनाव्यापारेण उक्तप्रयोजनावगतिः केषांचित् न भवति, तथापि व्यंजनाव्यापारे पटुतरसंस्कारस्यावश्यकत्वेनोक्तसंस्कारविरहिणां व्यंजनाव्यापाराभावेन तादृशबोधाभावेपि क्षत्यभावात् ।

स्यादेतत् उक्तप्रयोजनस्य प्रयोजनत्वं तदैव भवेत् यदि पंचमहाभूततत्वावबोधस्य तादृशबोधविषयीभूतस्य पंचमहाभूतस्य वा पूर्वोक्तयत्किंचित्प्रयो-

जनत्वाभिमतवस्त्वभिव्यंजनक्षमवर्तमानकालीनप्रयोगविषयत्वं भवेत्। पाश्चात्याः हि वैज्ञानिकाः स्वकीयं सिद्धांतं प्रयोगशालासु अन्वयव्यतिरेकाभ्यां अनुभाव्य स्वयं चानुभूय प्रकाशयंति, किंबहुना प्रयोगसिद्धानामेव पदार्थानामस्तित्वमधुनातनवैज्ञानिकसदसि माननीयतामर्हति। प्रयोगद्वारा अप्रत्यक्षीकृतानां केवलवाग्जालावलंबनमात्रेण प्रतिपाद्यमानानां पदार्थानां प्रामाणिकत्वं न वैज्ञानिकैरभ्युपगम्यते, प्रयोगसिद्धस्यैव प्रामाणिकत्वमिति तत्सिद्धांतात्। पंचमहाभूतानां च प्रयोगसिद्धत्वाभावात् न प्रामाणिकत्वमुररीकारार्हमिति।

अत्रोच्यते किं तावत् प्रयोगसिद्धत्वं यस्य प्रामाणिकत्वनियामकत्वं भवद्भिरभ्युपगम्यते? सांगप्रधानानुष्ठानं हि प्रयोगः। यत्र यत्र सांगप्रधानानुष्ठानं तत्र तत्रावश्यं कार्योत्पत्तिरिति अन्वयसहचारः, यत्र तु सांगप्रधानाननुष्ठानं तत्र न कार्योत्पत्तिरिति व्यतिरेकसहचारश्चेति द्वयमेव हि बुध्द्युपारुढं सत् अभिमतस्य वस्तुनः प्रकृतकार्येण सह कार्यकारणभावं व्यवस्थापयति। एतादृशप्रयोगेण सिद्धिः कार्यस्य किं प्रत्यक्षैकरूपा विवक्षिता उत परोक्षादिरूपापि? किंच प्रयोगांशे स्वयमनुष्ठीयमानत्वमपि विवक्षितं? आहोस्वित् स्वयमनुष्ठानाशक्तिदशायां परैः मनुष्यैरेवानुष्ठीयमानत्वमनुमतं? उत स्वपरमनुष्याद्यविवक्षया प्राकृतिकव्यापारानुष्ठीयमानत्वमपि संमतम्? इति चिंतनीयतामर्हति। तत्र सिद्धिस्तावत् सर्वत्र प्रत्यक्षैकरूपैवेति न वक्तुं शक्यते, जलादिविभागप्रयोगद्वारा रसायनशालास्वनुष्ठीयमानस्य हैड्रोजनाद्यवयविद्रव्यस्य बाष्पावस्थापन्नस्य अरूपिद्रव्यत्वेन अप्रत्यक्षस्य प्रामाणिकताया प्रतीच्यवैज्ञानिकैरभ्युपगम्यमानत्वात्। न चेंधनवत्तदुपकार्येण ज्वालादिना तत्सिद्धिरस्त्येवेति वाच्यम्। एवं हि प्रयोगद्वारा साध्यमानस्य वस्तुनः सिद्धिः न प्रत्यक्षैकरूपा, अपि तु तत्कार्यज्वालादिसाध्यानुमितिरूपापीत्यायातम्। तस्मात्प्रयोगद्वारा प्रत्यक्षीकृतत्वमेव प्रामाणिकत्वनियामकमिति रिक्तं वचः। किं तर्हि प्रत्यक्षानुमित्यादिसाधारणकार्यान्वयव्यतिरेकसिद्धिमूलक एव प्रयोगः पदार्थानां प्रामाणिकत्वनियामक इत्यकामेनाप्यभ्युपगंतव्यमेव।

अस्मिन्नपि पक्षे प्रयोगस्य स्वकृतत्वं विवक्षितमिति न वक्तुं शक्यते। अंधकुण्यादीनां प्रयोगशालासु प्रयोगकरणासामर्थ्येन न दृष्ट्या चक्षुष्मद्वैज्ञानिकप्रयुक्तानामपि पदार्थानामप्रामाणिकत्वप्रसंगात्। अतः स्वकृतत्वं अनावश्यकं, किंतु प्रामाणिकपुरुषांतरकृतोऽपि प्रयोगः प्रामाणिकत्वव्यवस्थापक इति द्वितीयपक्षोऽगत्या शरणीकरणीयः। न च सोऽपि संभवति, भूगोलं गतिमत्, मार्तंडमंडलं स्थिरं, इत्यादयोहि सिद्धांताः नव्यवैज्ञानिकोपज्ञा एव किल? तत्रेयं जिज्ञासा उद्भवति, केन वा वैज्ञानिकेन भूमंडलमपूर्वं निर्माय तस्य गतिमत्वं प्रयोगशालायां प्रत्यक्षी कृतम्? यदि भूमंडलादीनां उक्तरीत्या मनुष्यकर्तृकप्रयोगविषयत्वं नास्ति तर्हि नव्यदृष्ट्या व्यापकस्य मनुष्यप्रयोगविषयत्वस्य लुप्ततया भूमंडलादेः प्रामाणिकत्वकथयापि लुप्तया भवितव्यम्। एवं च व्योमकमलिनीप्रसूनपूतिगंधवत् सर्वथा असत्कल्पभूमंडलादिगत्यादित्यमंडलस्थिरत्वादिसिद्धांतोऽपि स्वोपज्ञः किन्नाम शरणमवलम्ब्य रक्षिष्यते तदकामेनापि वक्तव्यं। वस्तुतः प्रयोगविषयत्वमात्रमेव प्रामाणिकत्वे तंत्रं, न तु प्रयोगस्य मनुष्यकृतत्वमपि। न च तस्य प्रत्यक्षीकृतिरप्यावश्यकी किंतु ईश्वराद्यनुष्ठीयमानसृष्टिस्थितिव्यापारात्मकप्रयोगविषयत्वमपि इति स्वीकारणीयमेव। तादृशप्रयोगविषयत्वसिद्धिरपि प्रत्यक्षानुमित्यादिसाधारण्येवेत्यभ्युपगम्यमेव, इति हि प्रतीच्यवैज्ञानिकानां सिद्धांतसंरक्षणव्यसनितयैव उक्तरीत्या प्रामाणिकत्वनियामकं प्रयोगविषयत्वस्य स्वरूपं सर्वैरेव परिष्करणीयमेव। अन्यादृशं पूर्वविकल्पितं प्रयोगविषयत्वमुपादाय तस्यैव प्रामाणिकत्वनियामकत्वप्रवादस्तु बालिशोक्तिवत् पूर्वोक्तरीत्या स्वपक्षव्याघातकतया उपेक्षणीयतामर्हतीति सुधीरमावदेयामश्च। अयमेवार्थः वैज्ञानिकेषु परिणतबुद्धिभिः दूरदर्शिभिरनुमन्यते। यथा तेष्वन्यतमेन केनचिद्वैज्ञानिकशिरोमणिना अब्दुल्ला नाम्ना 'विज्ञान' पत्रिकायां लिखितं। तथाहि "शास्त्री परीक्षाकी तयारी करनेवालोंको विज्ञान पढानेमें लेखकको यह अनुभव हुवा आहै कि, जो लोग विज्ञानका अध्ययन केवल सिद्धांत जाननेकेलिये करते है; उनकेलिये क्रियात्मक विज्ञानमें परिश्रम करना शक्तीका अपव्यय है। साथही यह बातभी नहीं है कि, क्रियात्मक

शिक्षाविना उन्हे सिद्धांतका ज्ञानही नहो । कठिनाई केवल इतनीही है कि, जिस अध्यापकने पाश्चात्य रीतीसे शिक्षा पाई है, उसे यह कम सूझती है कि, सिद्धांतोंको विना क्रियाकी शिक्षासे कैसे पढाया जाय । किंतु प्राचीन दर्शनोमें वैशेषिक और न्याय और थोडा सांख्य भौतिकविज्ञानही सरीखे है । परंतु उनकी शिक्षामें क्रियात्मककर्मका कोई अंग नहीं है । इसे कोई दोष भलेही समझे, परंतु जो विषय दार्शनिक अपनी प्राचीनपद्धतीसे पढाते है उनमें किसी प्रकारकी त्रुटि नहीं होती । रही परीक्षा और प्रयोगोंकी बात, सो विश्वकर्मा तक्षक आदि शिल्पशास्त्री, आयुर्वेद, धनुर्वेद, गांधर्ववेद, आदि ज्ञानविज्ञानविशारद इन सिद्धांतोंका प्रयोग बराबर किया करतेथे । और अनुभवकी कसौटीपर कस लेतेथे । इस प्राचीन प्रथाको पुनरुज्जीवित करनेसे सहजही वह त्रुटिया दूर होजातीहै " । इत्यादिना यथा च पंचमहाभूतानां ऐश्वरप्रयोगविषयत्वं तर्कादिसाहाय्येन निश्चीयते तथा तत्स्वरूपविचारप्रसंगे विस्तरेण निरूपयिष्यामः ।

जरंतस्तु पंचमहाभूतविचारप्रयोजनं तावत् पंचमहाभूतानि संति नवेत्येतदन्यतरकोटिनिर्धारणमेव सभायां विचारद्वारा क्रियते नात्र पूर्वोक्तरीत्या बहूहापोहावश्यकता इति वदंति। तन्न । शास्त्रे पंचमहाभूतावबोधप्रयोजनस्य विविचारयिषितत्वात्, तत्वावबोधमात्रस्य प्रयोजनत्वाभ्युपगमे वायसदशनानुसंधानादीनामपि तद्वत्त्वेन सप्रयोजनत्वापत्तिः । तथा च यदसंदिग्धं अप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरम् , यथा स्फीतालोकमध्यवर्ती घटः करटदंता वा। अप्रतिपित्सितं तु प्रतिपादयन् नायं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । इत्यादिदार्शनिकवचनानां दत्तजलांजलित्वप्रसंगः ।

वस्तुतस्तु निष्प्रयोजने शास्त्रतात्पर्यमेव न संभवति ।

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिंगतात्पर्यनिर्णये ॥

इत्युक्तदिशा प्रयोजनवत्वस्य तात्पर्यगमकत्वात् । निष्प्रयोजनेऽपि असुखात्मके तज्ज्ञानमात्रमादाय सप्रयोजनतया शास्त्रतात्पर्यविषयत्वाभ्युपगमे 'आदित्योयूपः' 'यजमानः प्रस्तरः' इत्यादावपि आदित्ययूपतादात्म्य-यजमानप्रस्तरतादात्म्यादौ शास्त्रतात्पर्यप्रसंगात्, तत्र लक्षणाश्रयणमपि असंगतं स्यात् । न च तादृशतादात्म्यस्य बाधितत्वादुपपत्तिरूपलिंगाभावेन तत्र शास्त्र-तात्पर्याभाव इति वाच्यं । प्रत्यक्षादीनां योग्यतादात्म्यबाधकत्वेऽपि अतींद्रिय-तादात्म्यादौ शास्त्रतात्पर्याभ्युपगमसंभवात्, ज्ञानमात्रस्य प्रयोजनस्यापि सद्भा-वाच्च । तस्माज्ज्ञानातिरिक्तप्रयोजनाभाव एव तत्र शास्त्रतात्पर्याभावगमकोऽगी-कार्यः । स चेत् पंचमहाभूतेष्वंगीक्रियते तदा गतं तत्र शास्त्रतात्पर्यकथयापि ।

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया ।
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः ॥
गीयंते स्वरमष्टमं कलयता जातेन वंध्योदरात् ।
मूकीनां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥

इत्यादाविव, राहोः शिर इत्यादाविव च सर्वथा असत्कल्पपंचमहाभूत-प्रयोजनस्य कल्प्यत्वप्रसंगात् इति पूर्वोक्तरीत्या अस्माभिरुच्यमानं सप्रयोजनत्वं जरद्भिरपि उररीकर्तव्यमेव । तथा च अस्मदुक्तरीत्यैव प्रयोजनस्य सद्भावात् आयुर्वेदसिद्धांते पंचमहाभूतास्तित्वं वर्तत इति सिध्यतीत्यलमतिविस्तरेण ।

## द्वितीयप्रश्नस्योत्तरम् ।

बहिरिंद्रियग्राह्यविशेषगुणवत्वं भूतत्वम् । बहिरिंद्रियजन्यलौकिकप्रत्य-क्षविषयगुणत्वव्याप्यजातिमद्विशेष्यगुणवत्वमिति यावत् । केचित्तु आत्मावृ-त्तिविशेषगुणवत्वं भूतत्वमाहुः तत्तु वेदांतिनां मते सर्वस्यापि विशेषगुणस्या-त्मवृत्तित्वादसंभवापत्त्या उपेक्षितम् । व्योमशिखाचार्यादयः प्राचीनवैशेषिकास्तु भूतत्वं जातिरिति वदंति, तैः सांकर्यस्य न जातिबाधकत्वमंगीक्रियते विशेषस्तु तद्ग्रंथ एव द्रष्टव्यः । स्वरूपयोग्यत्वलक्षणकरणात् न योगिप्रत्यक्षगम्येषु अपंचीकृतेषु पंचमहाभूतेषु, परमाण्वादिषु चाव्याप्तिः ।

## तृतीयप्रश्नस्योत्तरम् ।

आकाशरूपस्य भूतस्य एकैकेंद्रियार्थाश्रयत्वं, इतरेषां तु चतुर्णां अनेकेंद्रियार्थाश्रयत्वं इति व्यवस्थितिः । तथाहि—

आकाशस्य शद्ब एव विशेषगुणः । स च श्रोत्रेंद्रियमात्रग्राह्यः इति तस्यैकैकेंद्रियार्थाश्रयत्वं । वायुस्तु शद्बस्पर्शगुणवान् इति तत्र अनेकेंद्रियार्थाश्रयत्वं । शद्बस्य श्रोत्रग्राह्यत्वात् स्पर्शस्य च त्वगिंद्रियग्राह्यत्वात् । एवं तेजसः शद्बस्पर्शरूपगुणत्रयाश्रयत्वादनेकेंद्रियार्थाश्रयत्वम् । रूपस्य चाक्षुषत्वात् । जलस्य च शद्बस्पर्शरूपरसात्मकगुणचतुष्टयाधिकरणत्वादनेकेंद्रियार्थाश्रयत्वं, रसस्य रासनत्वात् । एवमेव पृथिव्याः शद्बस्पर्शरूपरसगंधगुणपंचकाश्रयत्वात्, गंधस्य च घ्राणेंद्रियग्राह्यत्वात् अनेकेंद्रियार्थाश्रयत्वं । नैय्यायिकास्तु वाय्वाकाशयोरेकेंद्रियार्थाश्रयत्वं, इतरेषामनेकेंद्रियार्थाश्रयत्वमभ्युपगच्छंति । तन्मते शद्बस्याकाशमात्रगुणत्वेन, वायौ स्पर्शमात्रस्यार्थस्य सत्वेन, तस्यापि एकेंद्रियार्थाश्रयत्वात् इति । तन्न, वायौ शद्बस्य प्रत्यक्षप्रमाणसिद्धत्वेन तस्य तत्रापलापासंभवात् न च वाय्वादिसन्निहिताकाशादिगतशद्ब एव तत्र गृह्यत इति वाच्यम्, वायुः शद्बवानिति प्रतीतेः बलवत्तरबाधकप्रमाणासत्वेन भ्रमत्वस्य वक्तुमशक्यत्वात् । न च शद्बो न वायुविशेषगुणः अयावत्द्रव्यभावित्वात् इति शद्बस्य वायुविशेषगुणत्वाभावसाधकानुमानरूपबाधकप्रमाणेन उक्तप्रतीतेर्भ्रमत्वमेव युक्तमिति वाच्यं, उक्तानुमानस्याप्रयोजकत्वात् । स्पर्शात्मकस्य विशेषगुणस्य यावत्द्रव्यभावित्वेपि शद्बात्मकस्य अयावत्द्रव्यभाविनोप्यंगीकारसंभवात् । तस्मात् वायोः शद्बस्पर्शात्मकविशेषगुणद्वयाधारतया अनेकेंद्रियार्थाश्रयत्वमुपपन्नमेव ।

अत्रेदं बोध्यं । यदेतभ्दूतानां एकद्वित्रिचतुःपंचेंद्रियग्राह्यत्वं पूर्वमुक्तं तत् अपंचीकृतेष्वेव बोध्यम् । पंचीकृतेषु तु पुनः पंचानां समुच्चय एव । तत्रापि यस्मिन्पंचीकृते यस्येंद्रियार्थस्योभ्दूतत्वं अनभिभूतत्वं च तस्यैव तत्तदिंद्रियवेद्यत्वं, अपंचीकृतानां तु सत्यपि अनेकेंद्रियार्थाश्रयत्वे सर्वथा अस्मदादीनां प्रत्यक्षाविषयत्वमेव दिव्यदृष्टिसंपन्नानां तु पुनः तान्यपि प्रत्यक्षाणीतिविवेकः ।

## चतुर्थप्रश्नस्योत्तरम् ।

अथ भूतस्वरूपं किमिति विचार्यते । तत्र—

" अथ योगानुशासनम् । योगश्चित्तवृत्तिनिरोधः । तदा द्रष्टुः स्वरूपेऽवस्थानम् । वृत्तिसारूप्यमितरत्र " ।

इति योगसूत्रे चित्तवृत्तिनिरोधकाले पुरुषस्य स्वरूपावस्थानमित्युक्तत्वात् अनौपाधिको धर्मविशेषः स्वरूपपदार्थ इति ज्ञायते । एवं च जपाकुसुमोपाधिप्रयुक्तस्य स्फटिकलौहित्यस्य न स्फटिकस्वरूपत्वं औपाधिकत्वात् । यागस्य द्रव्यदेवते रूपमिति व्यवहारात् देवतोद्देश्यकद्रव्यत्यागरूपयागे त्यागत्वादीनामितरधर्माणां सत्वेऽपि इतरव्यावर्तकत्वाभावेन रूपत्वाव्यवहारात् इतरव्यावर्तकत्वे सति अनौपाधिको धर्मविशेषः स्वरूपमिति लक्षणं वक्तव्यं, तद्रज्जुव्यक्तावारोपिताया अनिर्वचनीयतत्सर्पव्यक्तेः अनौपाधिक्यां अपि रज्जुस्वरूपत्वाव्यवहारात् यावद्विशेष्यकालावस्थायित्वमपि लक्षणे विशेषणं वाच्यमतस्तत्र नातिव्याप्तिः ।

" स्वरूपं च स्वभावश्च संसिद्धिप्रकृतीसमे "

इत्यमरात् समवायिकारणापरपर्यायप्रकृतिरूपस्य स्वभावस्य यावद्धर्मिकालवृत्तित्वं लभ्यते । ननु समवायिकारणनाशात्कार्यनाशस्थले क्षणमात्रं कार्यस्य निराधारत्वात् तदा समवायिकारणस्याभावेन तदपरपर्यायस्वरूपस्य यावत्कार्यकालमवस्थानमसंभवीति वाच्यं । वैदिकमते मृत्वादिसामान्यमेव घटादिरूपविशेषं प्रति समवायिकारणं नतु कपालमृत्पिंडादिकं तेषां कार्यपूर्वकाल एव वृत्तित्वसंभवेन कार्यकाले नाशावश्यंभावेन कार्यकालवृत्तितया कारणत्वरूपस्य समवायिकारणत्वस्यासंभवात् । अतएव—

"वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति" श्रुतौ विकारस्य कार्यभूतस्य घटादेः मिथ्यात्वं, तदुपादनस्य सत्यत्वमिति प्रतिपादनपरायां मृत्तिकैव सत्यमित्यनुक्त्वा मृत्तिकेत्येव सत्यमित्युक्तम् इति शब्दस्य समभि-

व्याहृतशद्बस्वरूपपरत्वेन मृत्तिकाशद्बवाच्यं यत्तदेव सत्यमिति प्रतिपादने तात्पर्यात् ।

जातिशक्तिवादस्यैवाभ्यर्हितत्वेन तादृशं मृत्तिकात्वमेवेति तस्यैवोपादानत्वं श्रौतोर्थः । एवं चास्मन्मते मृत्तिकात्वस्य नाशेन घटनाशस्याभावात् समवायिकारणस्य यावत्कार्यकालसत्वमुपपन्नम् । न चैवं समवायिकारणनाशस्य कार्यानाशकत्वे मुद्गरादिना घटनाशस्थले किं तन्नाशकमिति वाच्यम् । मुद्गराभिघातादेरेव तन्नाशकत्वात् । न चैवं पाषाणपतनादिनापि घटनाशस्य दर्शनात् मुद्गराभिघातपाषाणपतनयोः परस्परजन्यघटनाशे व्यभिचारः, कपालनाशस्य घटनाशकत्वे तु न स इति वाच्यम् । अंततो गत्वा कपालनाशं प्रति मुद्गराभिघातादीनां कारणताया वक्तव्यतया तत्र ईदृशव्यभिचारस्य दुरुद्धरत्वात् । अव्यवहितोत्तरत्वादेः कारणतावच्छेदककोटौ निवेशस्यावश्यकतया तद्धेतोरेवेतिन्यायेन तुल्ययुक्त्या घटादिनाशं प्रत्येव मुद्गराभिघातादेः कारणत्वौचित्यात् । वस्तुतस्तु नाशो नाम न कश्चिदभावः, घटादिसूक्ष्मावस्थाया एव नाशत्वाभ्युपगमात्, सत्कार्यवादाश्रयणात् । घटादीनां सूक्ष्मत्वं च ग्राह्यशक्तिप्रतिबंध एव । एवं च घटादिगोचरप्रत्यक्षं प्रति मुद्गराभिघातादीनां प्रतिबंधकत्वमिति पर्यवसितोऽर्थः । तत्र नोक्तव्यभिचारोऽपीति अव्यवहितोत्तरत्वादीनामनिवेश एव । तत्सिद्धमुपादानस्य यावत्कार्यकालभावित्वम् । अनौपाधिकत्वेन तस्य स्वरूपपदव्यवहार्यत्वं च । न चोपादानस्य उपदेयाधारत्वमेव युक्तम्, मृत्तिकात्वस्य घटोपादनत्वे मृद्घटः इति मृद्विशेष्यिकैव प्रतीतिर्युक्ता, घटोमृत् इतिघटविशेष्यकमृत्त्वप्रकारकप्रतीतिरनुपपन्नेति वाच्यम् । घटादेः मृत्तिकात्वभावापन्नेऽज्ञाते ब्रम्हणि अध्यस्तत्वेन अध्यस्तवस्तुनि अधिष्ठानस्यापि प्रतिबिंबितत्वसंबंधेनारोपस्य शुक्तिरूप्यादिस्थले रजतमिदमिति प्रतीत्युपपादनाय स्वीकृतत्वेन घटादिरूपाध्यस्ते मृत्वादिरूपाधिष्ठानस्यापि प्रतिबिंबरूपारोपाभ्युपगमेन घटोमृदिति प्रतीतेरूपपत्तेः । अतएव अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येत्यध्यासभाष्यं संगच्छते । एवं चाधारभूताया मृदः आधेयत्वं आधेयभूतस्य घटस्याधारात्वं चेत्यपि अध्यासवशादेवायातं तार्किका-

दिप्रतीतिसिद्धमुपपद्यते । अतएवाहमज्ञ इत्याधारभूतेऽप्यहमिति आधारभूतस्याप्यज्ञानस्य आधेयतया भानमुपपद्यते । तस्मात् उपादानभूतस्य व्यावर्तकधर्मस्यापि स्वरूपत्वमुपपन्नम् ।

न च घटशरावोदंचनमणिकादिसाधारणस्य मृत्वस्य घटोपादानत्वे तस्य घटेतरव्यावर्तकत्वाभावेन तत्स्वरूपत्वासंभवात् कथं " स्वरूपं च स्वभावश्च संसिद्धिप्रकृती समे " इत्यमरसंगतिरिति वाच्यम् । उत्पत्स्यमान-उद्बुद्धघटादिसंस्कारावच्छिन्नाया एव तादृशजातेः उपादानत्वाभ्युपगमेन व्यावर्तकस्यापि संभवात् ।

एवं च तन्मात्रविषयकधीविषयः तत्स्वरूपमिति लघुलक्षणं पर्यवस्यति । सत्यं ज्ञानमित्यादिश्रुत्युक्तानां सत्यज्ञानादीनां स्वरूपलक्षणानां ब्रह्ममात्रविषयकधीविषयत्वेन स्वरूपत्वमुपपन्नं, उक्तरीत्या ब्रम्हलक्षणे तन्मात्रविषयकत्वं सामान्यतः तदितराविषयकत्वे सति तद्विषयकत्वमेव भवति । प्रकृष्टप्रकाशः चंद्र इत्यादिवाक्येपि चंद्रव्यक्तिमात्रविषयिण्याः शाब्दधियः अभ्युपगतत्वात्तत्रापि लक्षणसंगतिः । परंतु देवतोद्देश्यकद्रव्यत्यागात्मकयागस्वरूपोद्देश्यकप्रवृत्तौ न तत्स्वरूपभूतद्रव्यदेवतामात्रविषयकत्वं त्यागादीनां तदतिरिक्तानां तत्र विषयत्वात्। अतः तन्मात्रपदस्य चक्षुर्मात्रग्राह्यो गुणो रूपमित्यादाविवार्थसंकोचेन लक्षणं वर्णनीयं, तच्च तदितरद्रव्याविषयकतद्विषयकधीविषयत्वादिरूपं वक्तव्यम् । इदं च गौणं स्वरूपलक्षणं संकुचितार्थत्वात् । प्रत्यक्षेण घटस्वरूपं गृह्यते इत्यादौ तादृशस्यैव स्वरूपस्य भानं घटमात्र–विषयकस्य प्रत्यक्षस्य रूपाद्यविषयकस्यासंभवेन तत्रमुख्यस्वरूपविषयकत्वासंभवात् ।

एवं व्यवस्थिते द्विविधे स्वरूपपदार्थे, पंचमहाभूतानां मुख्यं स्वरूपं तु तत्वमसीत्यादाविव जहदजहल्लक्षणाश्रयणेन पृथिव्यापस्तेजोवायुराकाशमिति भूतानि इति शब्दप्रतिपाद्यव्यक्तिपंचकमेव अखंडं बोध्यम् । " तस्माद्वाएतस्मादात्मन आकाशः संभूतः " इत्यादौ एकवचनश्रवणेन एकैकव्यक्त्युत्पादस्य श्रौतत्वात् । तच्च पृथिवीत्वादिसामान्यरूपमेव । न च " अग्नेरापः अभ्यः

पृथिवीति " बहुवचनश्रवणादपां बहुत्वमाशंक्यं । अप्शद्बवाच्यायाः अप्त्वजातेः ऐक्यस्यैव सिद्धत्वात् । " आपःस्त्री भूम्नि " इत्यनुशासनबलेन बहुवचनस्य साधुत्वमात्रार्थकत्वात् । एकवचनसंदंशपाठेनाप्येकवचनस्यौचित्याच्च । न च तादृशजातिपंचकसद्भावे किं प्रमाणमिति वाच्यम् । तार्किकमते गंधादिसम-वायिकारणतावच्छेदकतया अस्मन्मतेतु स्थूलगंधादिसमवायिकारणत्वेन तस्सि-द्धेरावश्यकत्वात् । एवंविधजातिपंचकस्य निर्विकल्पशाद्बप्रतीतावेव भानसंभ-वात् प्रत्यक्षत्वं अनुमानगम्यत्वं च न संभवत्येव । अतः गौणं तत्स्वरूपं अभिधीयते अनुमानगम्यत्वोपपत्तये, तच्च गंधादिसंस्कारपंचकमेव घ्राणादींद्रि-यपंचकांतर्गतभोगवासनोद्भवाव्यथानुपपत्त्या बहिरिंद्रियद्वारा पूर्वोपभुक्तपंचीकृत-पदार्थेभ्यः पृथग्विवेचनकारि तत्तदिंद्रियशक्तिस्वाभाव्यबलात् पृथक्पृथग्भूय तत्तदिंद्रियद्वारकबुद्ध्यारूढतत्तभ्दूतातिसूक्ष्मांशरूपं वालुकाभस्ममृत्तिकासमूहग-र्भपतितलोहकणा इव अयस्कांतसान्निध्ये तदारूढा अतिसूक्ष्मा पंचीकृतवालु-काभस्मादिपुंजात् इन्द्रियचुबुकेषु पुंजात् पृथग्भूय समारूढाः गंधादिपंचरूपाः कणाः एव संस्कारपदवाच्याः शास्त्रतो युक्तितः अहं गंधादिसंस्कारवान् इति साक्षिप्रत्यक्षाच्च अवगम्यमानाः घ्राणेंद्रियवर्तिभोगवासनायां गंध एव रसनस्थायां रस एव चाक्षुष्यां रूपमेव त्वग्विवर्तिन्यां स्पर्श एव श्रौत्यां तु शद्ब एव इति

रीत्या शारीरिकत्वे भिन्नप्रदेशवर्तिषु तत्तदिंद्रियेषु अनुगतासु भिन्नाभिन्नासु वास-नासु गंधादिसूक्ष्मावस्थारूपसंस्कारवत्तया अन्वितत्वात् पंचसंख्यान्विताः संतः त एव संस्काराः गौणभूतस्वरूपाणि द्रव्यांतरामिश्रिततद्विषयकपूर्वोपदर्शितशा-स्त्रीयतर्कजन्यसाक्ष्याद्यात्मकतदितरद्रव्याविषयकतद्विषयकधीविषयत्वात् गौणानि भूतस्वरूपाणीति निश्चप्रचम् ।

अत्रेदं बोध्यम् यदेतत् गंधादिसंस्काराणां पंचमहाभूतस्वरूपत्वमुक्तं तत् पूर्वोक्तरीत्या पंचमहाभूतसमवायिकारणत्वाभिप्रायेणैव कटककुंडलादेर्हेम-स्वरूपमितिवत् अतः वेदांतसिद्धांतरीत्या संस्काराणां कारणशरीरत्वेऽपि भूतानां च स्थूलसूक्ष्मद्वयशरीरवर्तित्वेऽपि च न क्षतिः । पंचमहाभूतानि तु

तादृशसंस्कारोच्छूनावस्थाविशेषा एव इति न कोपि पूर्वापरविरोधप्रसंग उद्भाव्यः ।

अथ सृष्टितत्वविवेचनार्थं प्रवृत्तानां भवतां अयं महानपनयः यत् जगदुपादानभूतत्वेनाभिमतानां भूतानां संस्कारोपादानकत्वकथनं नाम । न हि भवद्रीत्या संस्कारमयत्वं जगतः कस्यापि हृदये तार्किकादेः प्राचीनदार्शनिकस्य आधुनिकस्य वा वैज्ञानिकादेः समुन्मिषति, तत् सर्वलोकविरुद्धं वेदांतमतं चिकित्सोपयोगिग्रंथसन्दब्धमिति वदतः सर्वथा लौकिकपरीक्षककोटिबर्हिभावात् उन्मत्तवदुपेक्षणीयत्वमेव युक्तं इति । अत्रोच्यते—

चरकसंहितायां तावद् अर्थे दशमहामूलीयाध्याये हृदयस्वरूपमेवमुपवर्णितमुपलभ्यते—

प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।
गोपानसीनां आगारकर्णिकेवार्थचिंतकैः ॥
तस्योपघातान्मूर्च्छायं भेदान्मरणमृच्छत्ति । इत्यादि श्रुतावपि-
पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखं ॥
अधोनिष्ट्यावितस्त्यांते नाभ्यामुपरि तिष्ठति ।
ज्वालमालाकुलं भाति विश्वस्यायतनं महत् ॥

इति रीत्या हृदयस्य विश्वायतनत्वमुक्तं तच्च ब्रह्मांडवर्तिसकलभावानां संस्काराख्यसूक्ष्मरूपेण हृदयस्थत्वं सूचयति यदुच्छूनतायामेव स्वप्ने ब्रह्मांडदर्शनं एवं च स्वप्नस्थब्रह्मांडं प्रति हृदयस्थसंस्कारस्यान्वयव्यतिरेकेण कारणत्वसिद्धौ ब्रह्मांडत्वावच्छेदेनैव संस्कारस्य कारणत्वं युक्तं नवीनकार्यकारणाभावे मानाभावात् गौरवाच्च ।

यथा पाश्चात्यप्रयोगशालास्वपि गंधकादिद्रव्यज्वालावलीनां वर्णक्रमपद्धतिं प्रति गंधकादिद्रव्यस्यान्वयव्यतिरेकतः कारणत्वेऽवगते इतोऽतिदूरवर्तिसूर्यमंडलादिष्वपि प्रयोगशालाबर्हिर्भूतेषु पदार्थेषु तत्सामान्यवर्णक्रमदर्शनेनैव तज्जातीयद्रव्यज्वलनमपि प्रयोगसिद्धमिति कथ्यते, जडवादिनां सोयं तर्कप्रसरः

जडप्रयोगशालासु दृष्टप्रयोगानुसारेण यदि ब्रह्मांडेऽपि सर्वत्र प्रसरति तर्हि मनोविज्ञानिनां दार्शनिकानां हृदयरूपप्रयोगशालायां संपूर्णस्यापि ब्रम्हांडप्रतीकस्य तत्तदाकारसंस्कारजन्यत्वप्रयोगसिद्धस्तर्कः ब्रन्हांडमपि बाह्यं व्याप्नुवन् कथं नाम पराहन्यताम् । न च जडविषयकतर्कचेतनविषयकतर्कयोः विरोधप्रसंगे जडतर्कस्य प्राबल्यमाशंकितुं शक्यते, भोग्यजडवर्गापेक्षया भोक्तुश्चेतनवर्गस्य प्राधान्यात् तदाश्रितस्य तर्कस्य आचमनरूपपदार्थाश्रितायाः स्मृतेः क्षुते आचामेदित्यादिरूपायाः गुणभूतक्रमाश्रित " वेदं कृत्वा वेदिं करोती "—त्यादिश्रुतिबाधकत्ववत् गुणभूतार्थाश्रिततर्कबाधकत्वस्यैव प्रधानाश्रिततर्के स्वीकारौचित्यात् । तथा च जडाश्रितस्य तर्कस्यापरिपूर्णतयाऽऽसत्तर्कत्वं चेतनाश्रितस्य तर्कस्य प्रधानस्पर्शित्वेन परिपूर्णतया व्यवस्थितत्वम् । इत्यस्या-व्यवस्थाया बुद्धिमताऽपलपितुमशक्यत्वेन दार्शनिकसरणिरेवात्र विजयतेतमाम् । तथा च प्रधानं परित्यज्य गुणभूतपदार्थनिष्ठाः उन्मत्ता वा गुणभूतपदार्थमुपेक्ष्य प्रधानानुयायिनो वा उन्मत्ता इति प्रेक्षावंतः स्वयमेवावगच्छंतु ।

इदं च संस्कारजन्यत्वं प्रपंचस्य स्वप्नतुल्यतावादिनां श्रौतसिद्धांतिनां संमतं तदेव प्राच्यदर्शनत्वेनास्माभिरत्र समुध्द्रियते । प्राचीनेषु दर्शनेषु वेदसिद्धांतस्यैव सर्वापेक्षया प्राचीनत्वेन न्यायादिप्राच्यदर्शनानां च तत्रैव पर्यवसानस्य सूतसंहिताव्याख्यानादिषु प्रपंचितत्वेन न्यायाद्यन्यमतेषु शाखाचंद्रन्यायेन केषांचिद्गौणसिद्धांतानां स्वीकृतत्वेऽपि श्रौतसिद्धांतस्यैव चरमसिद्धांतत्वेन प्राच्यपाश्चात्ययोर्विवादप्रसंगे न्यायाद्यभ्युपगतप्राच्यगौणसिद्धांतेषु अनुपपत्त्युद्भावनमात्रेण पाश्चत्यानां कृतकृत्यता न संभवति किंतु न्यायादिचरमतात्पर्यविषयीभूतश्रौतसिद्धांतखंडनं एव प्राचीनमतपराजयः संभावयितुं शक्यते । स च यथा न संभवति तथाऽस्मिन् प्रबंधे स्थले स्थले समुपपादयिष्यामः । तथा च जगतः संस्कारजनत्वं स्वप्नतुल्यतयाऽपि संभवत्येव, अत्र च अद्वैतसंमते मते येषां विप्रतिपत्तिः तेषां प्रबोधाय कानिचित् उद्धरणानि अद्वैतिनां लेखेभ्यः समुध्दृत्य प्रदर्श्यंते । तथा हि स्व. पूज्यपाद धर्मप्राण लक्ष्मणशास्त्री द्राविडप्रणीतखंडनखंडखाद्यभूमिकायाम्—

" श्रुतिशतसमधिगम्यं अद्वैतं परिभावयितुं ये प्रवर्तंते तान् प्रतीदमुच्यते आगम्यतां क्रियतां च शास्त्रार्थविचारः अद्वैतमेव तत्त्वमुतद्वैतमिति । याभिरुपपत्तिभिर्भवता वस्तुसिद्धिरभिलष्यते ताभिरेव ता एव युक्तयो बाधिता भवंतीति नास्माभिः किंचिदभिनवमुद्भाव्य युक्तिजालं किंचित्स्थाप्यते दूष्यते वा तथा हि--

घटपटादीनां सत्यत्वं केन प्रमाणेनावगतम् ? प्रत्यक्षेणेति चेत्, तर्हि स्वाप्नपदार्थस्य शुक्तिरजतादेश्च सत्यत्वापत्तिः, प्रत्यक्षेण प्रतीयमानत्वाविशेषात्। अबाधितप्रत्येक्षेणेति चेत् घटपटादिप्रत्यक्षस्य बाधो नास्तीति कथं त्वया ज्ञातम् ? अनुपलब्ध्या तत्सिद्धिरिति कथनं अप्रयोजकं, यतः स्वाप्नपदार्थानां जागृतिबाधवत् जाग्रत्कालिकानामपि स्वप्ने बाधस्योपलब्धेः, एवं स्थिते परस्परस्य परस्परावस्थायां बाधितत्वात् कतरत्सत्यं कतरद्बाधितमिति नैव व्यवस्थापयितुं शक्यं, यादृशो हि इंद्रियान्वयव्यतिरेको व्यावहारिकघटादिप्रत्यक्षे समुपलभ्यते तादृश एव स्वाप्नप्रत्यक्षेऽपि । तत्रेंद्रियाद्यभावात् इंद्रियान्वयव्यतिरेकज्ञानस्य चक्षुषा गजं पश्यामीत्याद्यनुभवस्य च भ्रांतत्वमिति चेत् जाग्रद्दशायामपि तादृशप्रत्ययस्य भ्रांतत्वं नास्तीत्यद्याप्यासिद्धेः । तथापि स्वप्ने सर्वमेव तदानीं कल्प्यते नतु पूर्वसिद्धं किंचिदस्ति परंतु किंचित्पूर्वसिद्धत्वेन दृश्यते किंचित्तु तदानींमेवोत्पद्यमानत्वेन, तथा क्षणमात्रस्वप्नेऽपि युगाद्यात्मकः कालोप्यातिवाहित इति भवति बुद्धिः, नतु युगाद्यात्मककालस्य वस्तुत्वं तद्वदेव जाग्रत्यपि । प्रत्याभिज्ञानुभवादिकं स्वप्नेऽपि समानं, दिनांतरीयस्वप्नानुभूतस्य दिनांतरीयस्वप्नेऽप्यवभासदर्शनात्, जाग्रत्कालीनानुभवजन्यसंस्कारसहकृतमनोजन्यत्वात्स्वप्नप्रदर्शनस्य भ्रांतत्वमिति चेत् । स्वप्नानुभवजन्यसंस्कारसहकृतमनोजन्यानुभवविषयत्वं जाग्रत्पदार्थस्येति वैपरीत्यमेव किं न स्यात् । तस्मात् प्रतीत्यविशेषात् स्वाप्नपदार्थेभ्यो न जाग्रतपदार्थस्य कश्चिद्विशेष इति सिद्धं सकलस्य अनिर्वाच्यत्वम् । न चैवं रीत्या शून्यवाद एव प्रसज्येतेति वाच्यम् । अनृतस्यापि सत्याधिष्ठानतया सत्याभावे अनृतस्याप्यनुपपत्या तदंगीकारात् । तच्चाधिष्ठानं स्वयं प्रकाशज्ञानमेव निरपेक्षासिद्धिकम्, । तस्मिन्नेव सर्वपदार्थाः कल्पिताः एकस्मिंश्चंद्रेऽनुभूयमाने तस्मिन् कल्पितोऽपरश्चंद्रमा इव प्रतिभासंते

न हि केनापि वादिना ज्ञानाद्भिन्नं विषयं तात्त्विकं स्वीकृत्य तस्य प्रकाश उपपादयितुं शक्यते तथा सति अन्यत्वाविशेषात् घटज्ञाने पटस्य प्रकाशप्रसंगात् । सहभावात् प्रकाशमानताभ्युपगमेऽपि तुल्यो दोषः । न च सहभावोऽपि ज्ञानार्थयोः सर्वत्र संभवति अतीतानागतविषयकज्ञानेषु सहभावासंभवात् । न च ज्ञानार्थयोर्वास्तवतादात्म्यं, अर्थानां विच्छिन्नस्थूलदीर्घत्वेनानुभूयमानत्वात्, प्रकाशस्य चांतरत्वास्थूलत्वादिरूपेण प्रकाशनात् तत्पारिशेष्यात्, ज्ञाने विषयाणां कल्पित्वात्, कल्पितस्य च अधिष्ठानात्पृथक् सत्वाभावेन कल्पिततादात्म्यवत्वात्, प्रतीतिरित्येव स्वीकर्तव्यम् ।

एतेन यदि सर्वमेवासत्यं तथा सति—

आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।
रसवीर्यविपाकादितुल्यं तेषां प्रसज्यते ॥

इत्येतदपि बाधकं निरस्तं । उभयत्रापि ज्ञानवैलक्षण्यात्, यत्र हि मोदकलाभज्ञानमनाहार्यं भवति तत्र रसवीर्यादिकं फलं, यत्राहार्यं तज्ज्ञानं तत्र न तादृशं फलं । किं च फलमपि न वास्तवं, किंतु ज्ञानरूपमेवेति । कुत्रचित् तदानींतनबाधविषयज्ञानरूपं फलं, कुत्रचिद्व्यावहारिकबाधविषयज्ञानरूपं फलमिति नाव्यवस्था, वर्णेषु ह्रस्वत्वदीर्घत्वादीनां समारोपितत्वाविशेषेपि नग इति उच्चारितान्नाग इति गृहीतात्पदात् गजज्ञानं जायमानं भ्रांतिरूपं भवति, नतु नाग इत्युच्चारितात्, तथैव श्रोत्रेण गृहीतात् पदात् जायमानं भ्रमात्मकं भवति तत्कस्य हेतोः ? नायं नियमः यत्सर्वस्मादसत्यात् सर्वस्य सत्यस्यासत्यस्य वा जन्मेति, किंतु यतः कुतश्चिदसत्यात् यस्य कस्य चिदसत्यस्य सत्यस्य वा जन्मेति । वस्तुतो न च किंचित्कुतश्चित् उत्पद्यते नीरुध्यते वा, केवलं ज्ञानमात्रमेव तथा भवति व्यवहारश्च, तथा च श्रुतिः —

न निरोधो न चोत्पत्तिः न बद्धो न च साधकः ।
न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता ॥ इति ।

युक्तं च एतत् सर्वस्यापि वस्तुनः साध्यसाधनात्मकत्वेन प्रतीयमानतया तत्सिद्धौ मूलं कार्यकारणभाव एव । तस्मिन् सिद्धे कार्यविशेषेण कारणविशेषोऽनुमातव्यः यथा घटादिकार्यं दंडादिजन्यं तथैव प्रपंचोपि कार्यत्वात् केनचित् कारणेन जनित इति, किं तत्कारणमिति जिज्ञासायां परमाणवो वा प्रधानं वा स्वस्वसमयानुसारेण कारणं किमपि व्यवस्थापयंति वादिनः, तद्बलेन च सर्वस्य जगतः सत्यत्वमपि साधयितुं समीहंते । यद्यसदेतत् स्यान्नकारणान्वयव्यतिरेकावुपपद्येयाताम् । तथा सत्याशामोदकतृप्तानां उपार्जितमोदकानां च रसवीर्यविपाकादिसाम्यप्रसंगात् असत्यत्वाविशेषात् अतो यदभावादाशामोदकस्यार्थक्रियाकारित्वं तत्किंचिदेष्टव्यम् । तत्किमिति चेत्सत्यत्वमेवेति अभिमानो वादिनाम् । परमसौ विचारं न सहते—

प्रथमतो दृष्टांतमेवालोचयंतु भवंतः दंडघटयोरेव कार्यकारणभावः तात्विक उत व्यावहारिक इति, न तावत्प्रथमः कल्पो युज्यते, कारणत्वस्य निर्वक्तुमशक्यत्वात् तथाहि—किं तावत्कारणत्वं, यदि पूर्ववृत्तित्वं, तदा चिरध्वस्तस्यापि कारणत्वापत्तिः, अव्यवहितपूर्वभावित्वं चेत्, दंडत्वस्यापि स्वाश्रयाश्रयत्वसंबंधेन नियताव्यवहितपूर्ववृत्तित्वसत्वात् कारणत्वप्रसंगः । यद्यनन्यथा सिद्धत्वविशेषणान्नैषदोषः इत्युच्यते, तदपि न युक्तम् । यतः किंतदनन्यथासिद्धत्वं येन दंडत्वादीनां कारणत्वं निवार्येत, अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वं इति चेत्, तर्हि दंडवत् दंडत्वस्यापि संबंधविशेषेणावश्यक्लृप्तत्वस्य सत्वात् अनन्यथासिद्धत्वापत्तिः । यत्तु अवश्यक्लृप्तत्वं नाम लघुत्वं तथा च लघुनियतपूर्ववृत्तिभिन्नत्वमनन्यथासिद्धत्वं पर्यवसितम् । लघुत्वं च शरीरसंबंधोपस्थितिकृतं त्रिविधम्, तथा च दंडत्वस्य कारणत्वे दंडघटितपरंपरायाः संबंधत्वकल्पने गौरवात् । दंडस्य कारणत्वे संबंधांशे लाघवाच्च तदेवकारणं, दंडत्वं चान्यथा सिद्धमिति तन्न, परस्पराश्रयेण कारणत्वपदार्थापरिज्ञानप्रसंगात् । तथा हि लघुत्वगुरुत्वयोः परस्परप्रतिद्वंद्वेन परस्परग्रहसापेक्षतया गुरुत्वग्रहे सति लघुत्वग्रहः तद्ग्रहे गुरुत्वग्रहः । तथा च तयोरेव निर्वचनासंभवात् कथं तद्घटितकारणताग्रहसिद्धिः । किं च गुरुभूतस्य संबंधस्य धर्मस्य वा कारणतावच्छे-

दकत्वे किं नश्छिन्नं । न हि गौरवज्ञानस्य कारणतावच्छेदकत्वग्रहप्रतिबंधकत्वं सुशकं वक्तुं । तदभावाद्यनवगाहित्वात् । तदभावाद्यनवगाहित्वेऽपि मणि-मंत्रादिन्यायेन प्रतिबंधकत्वांगीकारे, तर्हि प्रतियोगितावच्छेदकत्वसाध्यतावच्छे-दकत्वादिकं गुरुभूतस्य न स्यात् । अंगीक्रियते च । अतएव दीधितिकारेण अपि " गुरुरपि धर्मो भवति अवच्छेदकः प्रतियोगिताया " इत्युक्तम् । अतः पारिशेष्यादेतदेव वक्तव्यमापतति, यत् यत्र यत्र प्रामाणिकानां कारणत्वेन व्यवहारः तदनन्यथासिद्धम् । यत्र च न कारणत्वव्यवहारः तदन्यथासिद्धमिति । लोके चैतादृशो अनुभवः यल्लघोः कारणत्वसंभवे न गुरोस्तदंगीक्रियते इति चेत् । तत्रैव नियामकं किमिति पृच्छयते । तत्र व्यवहार एव प्रामाणिकानां नियामक इत्युक्तौ, घट्टकुट्टीप्रभातवृत्तांतापातः । तथा च कारणत्वस्य व्यवहारमात्रसिद्धत्वे व्यवहारस्य वास्तवत्वनिरपेक्षत्वेन देहात्मव्यवहारे कॢप्ततया तद्वदेव दंडादावपि वस्तुतः कारणत्वाभावेऽपि भ्रमेणैव व्यवहारसंभवान्न वास्तवत्वं, इति व्यवहार-मात्रसिद्धकार्यकारणभावबलेन जगत्सत्यत्ववादिभिः कथं सूपपादमिति कृतधिय एव विदांकुर्वंतु । अबाधितव्यवहारबलात् सत्यत्वसिद्धिरिति चेत् । अग्रे बाधो न भविष्यतीति निश्चेतुमशक्यत्वात्, प्रतीतेश्च भ्रांताया अपि संभवात्, यथाह खंडनकारः " को ब्रूते सती नाम सावित्रिः असत्येव कुतो न स्यात् " इति । तस्मात् त्वयापि यौक्तिकविमर्शं विवर्जयित्वा अनादिपरंपराप्रसृतव्यवहारसिद्धा-न्येव वस्तुजातानि, न वास्तवानीत्यकामेनापि स्वीकर्तव्यम् । एतदेव किल ब्रह्मवादिभिर्व्यावहारिकत्वं नाम सर्वेषु वस्तुष्वंगीक्रियते, यद्विचारे क्रियमाणे सिकताकूपविसरणवत् नक्वचिदपि पक्षे व्यवतिष्ठंते पदार्थाः व्यवहारविषयितां तु नातिक्रामंति । यथाह खंडनकारः " कतिपयप्रतिपत्तृकतिपयकालतथात्वा-वगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते । तादृशश्चायं सत्वावगमः कथांग एतत्तदुच्यते व्यवहारिकीं प्रमाणादिसत्तामादाय विचारारंभ " इति । यथाहि स्वप्नसमये नानाविधा द्रष्टृदृश्यादयः पदार्थाः तदानीमबाधितत्वेन व्यवहारविषया अपि वस्तुसंत इति न वक्तुं शक्यते । जाग्रत्काले तेषामुपलब्ध्यभावात्, तद्व-देव लौकिकपदार्था अपि व्यवहारविषया भाविष्यंति । न च वस्तुसंतोऽपि न

च व्यवहारविषयतायां वस्तुसत्ताप्रयोजिका अवस्तुनापि देहात्मत्वादिना लोक-यात्राया अबाधितायाः प्रतीयमानत्वादिति ।

श्रीमद्विद्यारण्यकृतबृहदारण्यकवार्तिकसारेऽपि अव्याकृतस्य जगद्धेतुत्व-वर्णनावसरे जगतः संस्कारजन्यत्वं निरणायि तद्यथाः—

तस्य जगत्कारणतोच्यते—

कार्यकारणभावोऽयं शास्त्रयुक्तिपरीक्षणे ।
अविचारितरम्यः सन् भासते न तु वास्तवः ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
इति वास्तवजन्मादि शास्त्रेणैव निराकृतं ॥
युक्तिस्थान्योन्यसापेक्षा कर्मकारणतेत्यसौ ।
मृषा त्वमाह न तयोरेकस्याप्यनपेक्षता ॥
नाकुर्वत्कारणं दृष्टं कार्यापेक्षा ततो भवेत् ।
कार्यं नाक्रियमाणं स्यात्कारणापेक्षता ततः ॥
अविचारितरम्यश्चेदज्ञानात्मैकहेतुकः ।
स्यात्स्वप्नस्य तथा दृष्टा ह्यज्ञाना ( ता ) त्मैकहेतुता ॥
अज्ञातात्मातिरेकेण ब्रुवतो जगतो जनिं ।
सम्यग्ज्ञानान्नमुक्तिः स्यान्न ज्ञानं वस्तुनुत्क्वचित् ॥
कर्मभ्योपि न मुक्तिः स्यात्कर्मापि न हि वस्तुनुत् ।
अतो ज्ञानेन मुक्त्यर्थमज्ञाताऽत्मैकहेतुता ॥
प्रथते वैश्वरूपेण यस्याविद्यैव सर्वदा ।
तन्मतेऽनुपपत्तिः का नोपलभ्यो भ्रमः क्वचित् ॥
वस्तुवृत्तमपेक्ष्यैतन्न स्वतः परतः स्तमः ।
तज्जं वाऽतस्तमो दृष्टया तमस्तत्कार्ययोर्वचः ॥
तमश्चिदाभासयुतं नाज्ञासिषमितीक्षणात् ।
जगज्जन्मस्थितिलयास्तस्मादज्ञात आत्मनि ॥

तमः प्रधानक्षेत्राणां चित्प्रधानश्चिदात्मनां ।
परः कारणतामेति जडाजडभिदा ततः ॥
तत्तत्प्राणिकृतैस्तैस्तैर्भावनाज्ञानकर्मभिः ।
देवतिर्यङ्मनुष्यादिवैचित्र्यमुपपद्यते ॥
तत्तज्जात्युदिते शिल्पे भूयोऽभ्यासेन वासना ।
कौशल्यातिशयाख्या या भावनेत्युच्यते हि सा ॥
शास्त्राभ्यासोपासनादिज्ञानमप्यभिधीयते ।
विहितं प्रतिषिद्धं च कर्म तैश्चित्रजन्मता ॥
यद्याकृतगतं किंचिद्भावना हि समीक्ष्यते ।
तदव्याकृतरूपेण स्थितं व्यज्येत सृष्टये ॥
तद्व्यक्तौ तम एवात्र निमित्तं लोकदृष्टितः ।
लोके कार्यविशेषाणां तम एव नियामकं ॥
तैलशक्तिस्तिले कस्माद् दधिशक्तिः कुतो न हि ।
इति पृष्टो न जानामीत्येवं प्रत्युत्तरं वदेत् ॥
तमस्तन्नियामकमिति तेनोदितं भवेत् ।
प्रष्टुश्चतावता तत्र गच्छत्येवपि पृच्छिषा ॥
वक्तुर्ना कौशलं शक्यं कुशलैश्चैवमीरणात् ।
अन्यथा कुशलंमन्यस्त्वमेवात्रोत्तरं वद ॥
सर्वेषामविवादेन प्रश्नोत्तरतया वचः ।
यद्विभाति नतद्भातं किंतु वस्तु तथैवतत् ॥
प्रश्नविश्रांतिभूमित्वाच्चोद्यं तमसि नोदियात् ।
न बुद्धिमंतः पृच्छंति न जानामीति वादिनं ॥
पृच्छंत्यभिज्ञमिति चेद्बाढं न विवदामहे ।
चोद्यानर्हत्वमज्ञाने तावता वारितं कथं ॥
न चोदनीयं अज्ञानं दुर्घटानां नियामकं ।
इति लौकिकदृष्टांतात्सिद्धं वेदविदां मतं ॥

एवं तर्हि न जानामीत्येवं सर्वत्र भण्यतां ।
किं सृष्ट्युक्तिश्रमेणेति वाक्षि चेदुत्तरं शृणु ॥
साक्षान्नियामकं यत्र तमस्तत्रैव तद्ब्रुवे ।
अन्यद्द्वारा नियमने वक्तव्यं द्वारमापतेत् ॥
परमाणुर्मूलहेतुरित्येवं द्व्यणुकादिकं ।
ननूच्यते यथा तद्वद्वच्मि सृष्टिं तमःकृतां ॥
तमो नियामकं चेत्तत्किमंतर्यामिणेति चेत् ।
अंतर्यामित्वशक्तिर्या सैवतत्तम उच्यते ॥
ईशस्तमः प्रधानः सन्नियम्यानां नियामकः ।
तेष्वेवचित्प्रधानः सन् साक्षितां प्रतिपद्यते ॥
तमोनियमिताः कर्मभावनाद्यास्तमखिनं ।
जीवं बध्नंति नो मुक्तं कारणानतिवृत्तितः ॥
यथा कार्यो घटः कोऽपि मृत्तिकां नाति वर्तते ।
तमःकार्यं भावनादि नातिक्रामेत्तमस्तथा ॥
जलूका व्रणगा रक्तं दुष्टमेव विवेचयेत् ।
तथात्मगतकर्मादिलब्धात्मानं विचिंतयेत् ॥
स्वकर्तुरुपभोगार्थं कर्माव्याकृतरूपकं ।
व्यक्तीभवत्प्रयुक्ततद्भूतभौतिकदृग्जगत् ॥
अव्यक्तजगतो व्यक्तीरंतर्यामिप्रभावतः ।
भवंति देशकालादिव्यवस्थां प्रतिपद्यते ॥
यथा नियमयत्येष तथा भवति तज्जगत् ।
नियंता सर्वजगतो नान्यः संभाव्यते प्रभोः ॥
न चोपलब्धुमस्माभिः शक्यते परमेश्वरः ।
अतो विमुच्य चोद्यानि श्रूयतां महिमैश्वरः ॥
अंतर्यामि यदा कर्म नोद्बोधयति संहतिः ।
तदाभवेद्यदोद्बोधं कुर्यात्सृष्टिस्तदा भवेत् ॥

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणं ।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥
तादृशो ब्रह्मणोऽकस्मात्कर्मोद्बोधे प्रवर्तकं ।
तथा कर्मोपसंहारे नेश्वरोन्यदपेक्षते ॥
वाति वायुर्यथाऽकस्मादकस्माच्चोपशाम्यति ।
निर्निमित्ते तथैव स्यात्कर्मोद्बोधोपसंहृती ॥
उत्थास्यामि मुहूर्तेऽहं ब्राह्म इत्यभिसंदधत् ।
शयानो नियमेनैव तदोत्तिष्ठेत्तथेक्ष्यतां ॥
संहरन्नभिसंधत्त इयत्तां संहृतेस्ततः ।
तावत्याः संहृतेरंते सिसृक्षोदेति सत्वरं ॥
अज्ञानमात्रोपहितं ब्रह्माकाशस्य कारणं ।
आकाशोपहितं वायोर्वायूपहितमर्चिषः ।
अग्निनोपहितं चापां जलेनोपहितं भुवः ॥
एवमुत्तरकार्येषु ततः सर्वकृदुच्यत ॥

न चेदं भ्रमितव्यं वैद्यकमतं सांख्यमतानुयाय्येव, अपि तु तदपि वेदांतमतमेवानुसरति । तथा हि चरकसंहितायां कतिधापुरुषीयाध्याये प्रतिपादितम् —

तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः ।
असंज्ञाज्ञानविज्ञाननिवृत्तिं यांत्यशेषतः ॥
अतःपरं ब्रह्मभूतो भूतात्मा नोपलभ्यते ।
निसृतः सर्वभावेभ्यः चिह्नं यस्य न विद्यते ॥
गतिर्ब्रह्मविदां चात्र नाज्ञस्तज्ज्ञातुमर्हति ।

भावप्रकाशे सृष्टिप्रकरणे—

आत्माज्योतिश्चिदानंदरूपो नित्यश्च निस्पृहः ।

निर्गुणः प्रकृतेर्योगात्सगुणः कुरुते जगत् ॥
आत्माऽनादिरनंतश्चाव्यक्तो वक्तुं न शक्यते ।
चिदानंदैकरूपोयं मनसापि न गम्यते ॥
एवं भूतोऽपि जगतो भाविनीबलवत्तया ।
अविद्यास्वीकृते कर्मवशो गर्भे विशत्यसौ ॥

इति कथनाच्च वैद्यकमतं न सांख्याद्यनुयायि किंतु वेदांतमंत्रशास्त्रादि-मतानुयाय्येव, तन्मत एवात्मनः चिदानंदरूपत्वात् ब्रह्मभावसंभवाच्च । सांख्यमते चिद्रुपत्वस्य संभवेऽपि आनंदरूपत्वस्य कथमप्यसंभवात्, अतएव सुश्रुतटीका-कारादिभिः सर्वपारिषदत्वं आयुर्वेदस्योक्तम्, काणादसांख्यादितर्काणां परस्पर-प्रतिहतत्वेन सर्वपारिषदत्वासंभवात् । वेदांतमतस्य तु विश्वमायिकत्वाभ्युपगंतुः प्रपंचविषये सर्वविधतर्कावकाशदातृत्वेन तैरयं न विरुध्यते इति न्यायेन सर्वपारिषदत्वोक्तेः । तथा च पंचमहाभूतानां मूलं स्वरूपं संस्कारा एवेति वेदांतसिद्धांतकथनं वैद्यकर्तृणामपि संमतमेव अतएव ऋग्वेदस्यायुर्वेदोपवेदोपांग-मथर्ववेदस्येत्यादिना चरणव्यूहसुश्रुतादिषु वैदिकसिद्धांतनिष्ठतया आयुर्वेदस्य तदंगत्वकथनमपि साधु संगच्छते, तत्सिद्धं वेदांतप्रक्रियानुसारेण पंचमहाभूतानां स्वरूपं गंधादिविषयकसंस्कारा एवेत्यलमतिविस्तरेण ।

अथ गुणाः कथ्यंते—तत्र गुणास्तावत् चरकेण एवं निरूपिताः—

सार्था गुर्वादयो बुद्धिः प्रयत्नांताः परादयः । गुणाः प्रोक्ता इति ।
तत्र अर्थस्तावत् शद्बस्पर्शरूपरसगंधाः पंच ।

‘ अर्थाः शद्बादयो ज्ञेया गोचरा विषया गुणा ’ इति चरकात् । एते च वैशेषिकाः, यतः आकाशस्यैव शद्बः प्राधान्येन, वायोरेव स्पर्शः प्राधान्येन, एवमग्न्यादिषु रूपादयः, अन्यगुणानामन्यत्र उपलब्धिर्भूतांतरानुप्रवेशात् । गुर्वादयस्तु गुरुलघुशीतउष्णस्निग्धरुक्षमंदतीक्ष्णस्थिरसरमृदुकठिनविशदापिच्छि-लश्लक्ष्णखरस्थूलसूक्ष्मसांद्रद्रवा विंशतिः । दीपनादीनां तु चरकसुश्रुताचार्यादिभिः

गुणविभागावसरे अनिर्दिष्टत्वान्नात्र ते विभज्यंते, एते च सामान्यगुणाः पृथिव्या-दीनां साधारणत्वात् ।

एते च "यज्जःपुरुषीयाध्याये" चरकाचार्येणोक्ताः । बुद्धिप्रयत्नांताः नाम इच्छाद्वेषसुखदुःखप्रयत्नाः ।

इच्छा द्वेषःसुखं दुःखं प्रयत्नश्चेतनाधृतिः ।
बुद्धिस्मृतिरहंकारो लिंगानि परमात्मनः ॥

इति चरकाचार्योक्तेः । स्मृतिचेतनाधृत्यहंकारादीनां बुद्धौ अंतर्भावः । परादयः—

परापरत्वे युक्तिश्च संख्या संयोग एव च ।
विभागश्च पृथक्त्वं च परिमाणमथापि च ॥ १ ॥
संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः ।

इत्येवमाहत्यैकचत्वारिंशद्गुणाः वैद्यकशास्त्रे निर्दिश्यंते ।

अथ वैशेषिकचतुर्विंशतिगुणविभागेन अस्य विरोधः कथं वारणीयः ? इतिचेदत्रोच्यते, केषांचित् गुणानामन्यतम एव अंतर्भावात् चतुर्विंशतित्वं केषांचिद्विपर्ययरूपाणां गुणत्वानभ्युपगमाच्च । तद्यथाः—गुरुत्वं गुणः लघुत्वं तदभाव एव, न तु गुणांतरमिति वैशेषिकप्रक्रिया । लघुत्वं गुणः गुरुत्वं तदभावः कुतो न स्यादिति विनिगमनाविरहादुभयमपि गुणः इति वैद्यक-प्रक्रिया । शीतमुष्णश्च स्पर्शगुणान्नातिरिच्येते इति वैशेषिकप्रक्रिया । उत्क्षे-पणापक्षेपणादीनां गमनेंऽतर्भावसंभवेऽपि पृथक्त्वकथनं वैशेषिकशास्त्रे ब्राह्मण-परिव्राजकन्यायेन यथा शिष्यबुद्धिवैशद्यार्थं, तथा शीतोष्णादीनां पृथक्त्वकथनं शिष्यबुद्धिवैशद्यार्थं चिकित्सायामुपयोगभेदाभिप्रायेण चेति वैद्यकप्रक्रियायामपि न विरोधः ।

अथैतेषां लक्षणान्युच्यंते । द्रव्यकर्मभिन्नसामान्यवत्वमेव गुणानां लक्षणं एतावदन्यतमत्वं वा । चक्षुर्मात्रग्राह्यो गुणो रूपं, रसनग्राह्यो गुणो रसः, घ्राणग्राह्यो गुणो गंधः, त्वगिंद्रियमात्रग्राह्यो गुणः स्पर्शः, श्रोत्रग्राह्यो गुणः शब्दः, आद्यपतनासमवायिकारणं गुरुत्वं,

आद्योर्ध्वगमनासमवायिकारणत्वं लघुत्वं, जलीयस्पर्शत्वं शीतत्वं, तेजःस्पर्शत्वं उष्णत्वं,

शीतस्तु ह्लादनस्तंभीमूर्च्छातृट्स्वेददाहनुत् ।
उष्णो भवति शीतस्य विपरीतश्च पाचनः ॥
स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहम् ।
रूक्षं समीरणकरं परं कफहरं मतम् ॥

मंदस्तीक्ष्णविपर्ययः । तीक्ष्णो मुखदुःखोत्पादनादिति सुश्रुतोक्तेः मुखदुःखोत्पादनादिति अत्र चार्थोद्रष्टव्यः । तेन घ्राणदुःखोत्पादनाच्चेति द्रष्टव्यमितिडल्हणोक्तेश्च, तीक्ष्णं राजिकामरिचादिवत् इति डल्हणाचार्योक्तेश्च मुखनासिकाद्यवच्छिन्नसकलदेहव्यापकदुःखविशेषकारित्वं तीक्ष्णस्य लक्षणं पर्यवस्यति । मुखनासिकादिपदेन च मुखनासिकादितुल्यमांसादिमृद्ववयवा अपि अभिप्रेताः । तथा च राजिकामरिचादीनां सकलदेहांतर्वर्तिमांसादिदुःखजनकत्वेपि न क्षतिः । परुषवाय्वादेः सकलदेहव्यापकदुःखोत्पादकत्वेन परुषत्वापरपर्यायं खरत्वमेव न तु तीक्ष्णत्वं, मुखनासिकाद्यवच्छिन्नदुःखविशेषाजनकत्वात् । राजिकामरिचादीनां मुखनासिकानेत्राद्यवच्छिन्नदुःखविशेषकारित्वरूपतीक्ष्णत्वमेव । न तु सकलदेहदुःखजनकत्वं इति । न परुषत्वापरपर्यायं खरत्वं तेषां इति खरत्वतीक्ष्णत्वयोर्भेदसिद्धिः । तिग्मंतीक्ष्णंखरमित्यमरकोशस्तुतीक्ष्णत्ववत्यातपेष्वेव, खरत्वमपि नियतमित्याभिप्रायतया योज्यं आतपप्रकरणात्, किं च शमनोपायभेदादपि तीक्ष्णत्वखरत्वयोर्भेदः सिध्यति । यथा हि राजिकामरिचादीनामतियोगे मुखादिदुःखं तीक्ष्णकार्यत्वात् तद्विपरीतमंदगुणाभिरद्भिः

शाम्यति, घृतादिरूपया पृथिव्या वा। न तथा खरत्ववत्परुषवाल्यादिकृतं शारीरं दुःखं। किंतु श्लक्ष्णेन, मृदुश्लक्ष्णकार्पासादियोजते सति शाम्यत्येव । तत्सिद्धं खरविपरीतः श्लक्ष्णः, तीक्ष्णविपरीतश्चमंदः, वातकफनाशकं सत् पित्तवप्रर्धनद्वारा लेखनं तीक्ष्णं, पित्तशमनद्वारा लेखनविपरीतकार्यकारि मंदं । पित्तनैरपेक्ष्येण लेखनं खरं, पित्तशमननैरपेक्ष्येण च तादृशलेखनजन्यदुःखशमनकारि श्लक्ष्णमिति तु पर्यवसितार्थः ।

“ स्थिरो वातमलस्तंभी सरस्तेषां प्रवर्तकः ।

मृदुकठिनौ वैशेषिके प्रसिद्धौ, सौम्यःस्पर्शो मृदुः, उद्वेजकः स्पर्शः कठिनः । वस्तुतस्तु मृदुः कठिन इत्याकारकविलक्षणप्रतीतिसिद्धजातिमत्वमेव तल्लक्षणम्। विशदः पिच्छिलविपर्ययः धूलीस्पर्शादिवत् ।

क्लेदः च्छेदकरः ख्यातो विशदो व्रणरोपणः ।
पिच्छिलस्तंतुलो बल्यः संधानः श्लेष्मलो गुरुः ॥
श्लक्ष्णः स्नेहं विनापि स्यात् कठिनोऽपि हि चिक्कणः ।

तद्विपर्ययः खरः । सांद्रो द्रवविपर्ययः । द्रवः क्लेदकरो व्यापी शुष्कस्तद्विपरीतकः । इति तल्लक्षणात् । सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानं, इच्छा कामः, क्रोधो द्वेषः, कृतिः प्रयत्नः, सर्वेषामनुकूलवेदनीयं सुखं, प्रतिकूलवेदनीयं दुःखं, परापरव्यवहारासाधारणकारणे परत्वापरत्वे, ते द्विविधे दैशिके कालिके च, दूरस्थे दिक्कृतं परत्वं, समीपस्थे दिक्कृतमपरत्वं, ज्येष्ठे कालकृतं परत्वं, कनिष्ठे कालकृतमपरत्वं, देशकालवयोमानपाकवीर्यरसादिषु परापरत्वे इति चरकाचार्यः । अस्यार्थः परत्वं प्रधानत्वं, अपरत्वं अप्रधानत्वं, तस्य विवरणं देशेत्यादि । तत्र देशो मरुः परः, आनूपो अपरः, कालो विसर्गः परः, आदानमपरः, वयस्तारुण्यं परं, अपरमितरत्, मानं च शरीरादेर्यथोक्तं परं, तदन्यत् अपरं, पाकवीर्यरसा ये यस्य योगिनः ते तस्य पराः, अयोगिनस्त्वपराः, आदिग्रहणात् प्रकृतिबलादीनां ग्रहणं । किंवा परत्वापरत्वे वैशेषिकोक्ते ज्ञेये । तत्र दूरस्थे

दैशिकं परत्वं, समीपस्थे दैशिकं अपरत्वं । एवं जेष्ठे कालकृतं परत्वं, कनिष्टे कालकृतं अपरत्वं । वयः प्रभृतिषु परत्वापरत्वं कालदेशकृतमेवोपचरितमभिप्रेतं गुणे गुणानंगीकारात् । युक्तिश्च ' योजना यानुयुज्यत ' इति चरकः । योजना दोषाद्यपेक्षया भेषजस्य समीचीन कल्पना । या कल्पना यौगिकी स्यात् सा युक्तिरुच्यते । अयौगिकी कल्पनापि युक्तिर्नोच्यते पुत्रे अपुत्रवत् । युक्तिश्चेयं संयोगपरिमाणसंस्काराद्यन्तर्गतापि अत्युपयुक्तत्वात्पृथगुच्यते ।

संख्या स्यात् गणितं योगः सह संयोग उच्यते ।
द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव च ॥

बहुकर्मजसंयोगो वैशेषिकैर्नांगीक्रियते इत्यन्यदेतत् ।

विभागस्तु विभक्तः स्यात् वियोगो भागशो ग्रहः ।
पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ।
परिमाणं पुनर्मानं संस्कारः करणं मतम् ॥

करणं गुणान्तराधायकत्वमित्यर्थः संस्कारो गुणान्तराधानमुच्यते इति चरकात् ।

भावाभ्यसनमभ्यासः शीलनं सततक्रिया ॥

अयं च संयोगसंस्कारविशेषरूपोऽपि विशेषचिकित्सोपयुक्तत्वात् पृथगुच्यते ।

अथैतेषां गुणानामाधारभूतद्रव्यनियम उच्यते । रूपं पृथिव्यप्तेजोवृत्ति, रसः पृथिवीजलवृत्तिः, गंधः पृथिवीमात्रवृत्तिः, स्पर्शः पृथिव्यप्तेजोवायुवृत्तिः, शब्दः पृथिव्यप्तेजोवाय्वाकाशवृत्तिः, न च जलस्य रसवत्वे किंप्रमाणं, वैद्यके पृथिव्याद्यसंपृष्टस्य तस्य अव्यक्तत्वकीर्तनादिति वाच्यम् । अव्यक्तत्वं हि न प्रत्यक्षाविषयत्वं अपि तु प्रत्यक्ष—विषयरसत्वसामान्यमात्रवत्वं तथा च जलादावपि स्वादापरपर्यायः सः अनुभूतसिद्ध एव पिपासूनां, न तु तदवांतर-जातिर्मधुरत्वादिरूपा तथा हि—

पिपासुता शान्तिमुपैति वारिणा । न जातु दुग्धान्मधुनोऽधिकादपि ॥
अपां हि तृप्ताय न वारिधारा । स्वादुः सुगंधिः स्वदते तुषारा ॥

इत्यादयः कव्यनुभवाः स्वादास्वादविषयका उपपद्यन्ते । अत एवोक्तं चरकटीकायां सूत्रस्थाने २६ तमे अध्याये:—

" अव्यक्तत्वं च रससामान्यमात्रोपलब्धिः मधुरादिविशेषशून्या, सा च जले स्यात् । यत् उक्तं जलगुणकथने सुश्रुते " व्यक्तरसता रसदोष इति । इहापि च अव्यक्तरसं च इति वक्ष्यति लोकेपि चाव्यक्तरसं द्रव्यमास्वाद्य वक्तारो वदन्ति जलस्येवास्य रसो न कश्चिन्मधुरादियुक्त " इति विशेषमधुराद्यनुपलब्धिश्चानुद्भूतत्वेन यथा दूरादविज्ञायमानविशेषवर्णे वस्तुनि रूपसामान्यप्रतीतिर्भवति न शुक्लत्वादिविशेषबुद्धिरिति, तथाऽनुरसेऽव्यक्तीभावो भवति इत्यादि "

न च तत्र रूपवत्वे किं प्रमाणं इति वाच्यम् चक्षुर्ग्राह्यत्वस्यैव प्रमाणत्वात्, तस्य रूपरहितत्वे सजातीयाकर्षणनियमानुसारेण चक्षुर्ग्राह्यत्वानुपपत्तेः । न च गगने कथं चक्षुर्ग्राह्यत्वमिति वाच्यम् । तस्य पांचभौतिकत्वेन रूपवत एव चक्षुर्ग्राह्यत्वात् । जलादीनां कुतो न गंधवत्वमिति विचारस्तु न्यायवैशेषिकग्रंथे विस्तरतो द्रष्टव्यः नात्रोच्यते विस्तारभयात् । गुरुत्वं पृथिवीजलवृत्ति, सुश्रुतेन द्रव्यविशेष'विज्ञानीये' अध्याये–तथोक्तत्वात्, तत्कार्यस्य आद्यपतनादेस्तयोरुपलभ्यमानत्वाच्च । अतएव सुश्रुते उक्तम्–

" विरेचनद्रव्याणि पृथिव्यम्भोगुणभूयिष्ठानि पृथिव्यापो गुर्व्यः ताःगुरुत्वादधोगच्छन्ति तस्माद्विरेचनद्रव्याणि पृथिव्यम्भोगुणभूयिष्ठान्यनुमानात् ।

लघुत्वं तेजोवाय्वाकाशवृत्ति, आत्रेयभद्रकाप्यीयाध्याये चरकेणोक्तत्वात्, तत्र गुरुत्वविपरीतकार्यकरत्वदर्शनाच्च । अतएवाकाशमुपक्रम्य सुश्रुते उक्तम्:–

" तन्मार्दवसौषिर्यलाघवकरमिति । वायुमुपक्रम्य च तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति । तैजसद्रव्यमुपक्रम्य तु ऊर्ध्वगतिस्वभावमिति " ।

शीतत्वं जलवायुवृत्ति, पृथिव्यादीनां शीतत्वं तु जलवाय्वन्यतर-संबंधादेव भवति। न च वायोरपि जलसंबंधादेव शीतत्वोपपत्तौ कथं शीतत्वोक्तिरिति वाच्यम्। शीताभिवर्धनीयत्वेन वायोः शीतत्वोपचारात्, गोभिः श्रीणीतमत्सरमित्यत्र गोदुग्धे गोत्वोपचारवत्। मत्सरं सोमं गोभिः गोजन्य-पयोभिः श्रीणीत श्रपयेदित्यर्थः। उष्णस्तेजसिः स्निग्धत्वं पृथिवीजलवृत्ति, सुश्रुतेन जलवृत्तित्वस्य द्रव्यविशेषविज्ञानीये कण्ठत एवोक्तत्वात्। अतएव वैशेषिकाः जलमात्रवृत्तित्वं तस्योचुः। तैलादिपृथिव्यां तदन्तवर्तिजलस्यैव स्नेहः कार्यकारीति तन्मतम्। वस्तुतस्तु तस्य पृथिवीवृत्तित्वे वैद्यकानुमतम्। गुरुत्वस्य पृथिव्यामुक्तत्वात् " गुरुवातहरं पुष्टिश्लेष्मकृच्चिरपाकि च " इति परिभाषानुसारेण वातहरत्वश्लेष्मकारित्ववृष्यत्वानां लाभात्, बलावहत्वस्य च पार्थिव—द्रव्ये स्थैर्यबलगौरवसंघातोपचयकरमिति सुश्रुतेन कण्ठत एवोक्तत्वात्। स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहमिति परिभाषया तस्य स्निग्धत्व-निश्चयात्। रुक्षगुणः तेजोवायुवृत्तिः, न चाकाशः कथं न रुक्षः अस्निग्धत्वा-दिति वाच्यम्। आकाशगुणभूयिष्ठं संशमनं इति सुश्रुतेनोक्तत्वात्।

न शोधयति यद्दोषान्समान्नोदीरयत्यपि।
समीकरोति विषमान् शमनं तद्यथाऽमृता॥

यद्द्रव्यं दोषत्रयं न शोधयति नोर्ध्वाधोभागाभ्यामानयति समान्दोषा-न्नोदीरयति न वर्धयति शमनं तत् इति भावप्रकाशेनोक्तत्वात्, " रुक्षं समीरणकरं परं कफहरं मतम् " इति रूक्षलक्षणघटकसमीरणकरत्वस्याकाशेऽनुपपत्तेः।

तीक्ष्णविपर्ययभूतो मन्दः शिथिलत्वादि पृथिवीजलमात्रवृत्तिः। वायौ आशुकारित्वस्य सुश्रुतेनोक्तत्वात्।

" अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशय " इत्यादिना तेजसोऽपि अतिशयवेगवत्वेन आशुकारित्वात् आकाशे च क्रियाया अभावेन

मंदकारित्वरूपशिथिलत्वस्य अप्राप्तत्वात् तस्मात्परिशेषात् मंदः पृथिवीजलमात्र-वृत्तिरिति सिध्यति । अतएव सुश्रुते वातप्रकृतिलक्षणेः —

" द्रुतगतिरटनोऽनवस्थितात्मा इति "

शीघ्रक्रियाकारित्वं वायोः । तथा पित्तप्रकृतिलक्षणेऽपि " क्षिप्रकोप-प्रसाद " इति पित्तस्य तेजसः शीघ्रकारित्वं, तथा कफप्रकृतिलक्षणे " चिर-ग्राहीदृढवैरश्च"त्यादिना मंदकारित्वं कफस्य उक्त्वा—

प्रकृतिमिह नराणां भौतिकीं केचिदाहुः ।
पवनदहनतोयैः कीर्तिताः तास्तु तिस्रः ॥
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान् ।
शुचिरथचिरजीवी नाभसः खैर्महद्भिः ॥

इत्यादिना पृथिव्याकाशप्रकृत्योरपि शीघ्रकारित्वाभावमेव प्रत्यपादयत् । कठिनस्य अनम्रतापरपर्यायस्तब्धताकरत्वावगमात्, नम्रताया एव मृदुत्वरूप-त्वौचित्यात् । मृदुत्वं जलतेजोवाय्वाकाशगुणः । तत्र आकाश–जलयोः मृदुत्वं कंठोक्तं, मध्ययोस्तेजोवाय्वोस्तु, पूर्वोक्तरीत्या युक्तिसिद्धम् । काठिन्यं च क्षिता-वेवेति कंठोक्तमेव ज्ञेयम् । किं च शब्दजनकविभागसहकारी स्पर्श–विशेषः कठिनः स च वंशद्वयविभागात् चटचटाशब्दे विभागसहकारिभूतः दृष्टः, स च क्षितावेवेति । पिच्छिलगुणः जलमात्रवृत्तिः, चरकसुश्रुताभ्यां तथोक्तेः । विशदस्तु इतरभूतचतुष्टयवृत्तिः पृथिवीतेजोवायुषु चरकेण, तेजोवाय्वादिषु च सुश्रुतेन तथोक्तेः । श्लक्ष्णः जलाकाशवृत्तिः । आकाशे चरकसुश्रुताभ्यां कंठोक्तः, जलेपि आदर्शादिवत् समतलत्वदर्शनात् युक्त्युन्नेयः । खरस्तु पृथिवीतेजोवायु-वृत्तिः चरकसुश्रुताभ्यां तथोक्तेः । स्थूलः पृथिवीमात्रवृत्तिः चरकसुश्रुताभ्यां तथोक्तेः सूक्ष्मस्तु तदितरचतुष्टयवृत्तिः तेजोवाय्वाकाशेषु चरकसुश्रुताभ्यां तस्य कंठो-क्तत्वात् । देहस्य सूक्ष्मच्छिद्रेषु विशेद्यः स सूक्ष्म उच्यते । इति लक्षणेन तस्य तत्रोन्नेयत्वात् । द्रवविपरीतस्य सांद्रस्य अंद्रेण निबिडावयवसंयोगेन सहवर्तते तत् सांद्रं इत्यर्थकत्वे पृथिवीमात्रवृत्तित्वं । शुष्क इत्यर्थकत्वे तु जलातिरिक्त-

भूतचतुष्टयवृत्तित्वोपलब्धिः । पृथिव्यादौ तु पंचीकृते तदन्तर्गतजलस्यैवेति वैद्यकाभिप्रायः ।

" खरद्रवचलोष्णत्वं भूजलानिलतेजसाम् " इति वाग्भटोक्तेः करकायां द्रवत्वानुपलब्धिस्तु तस्याः पांचभौतिक्याः पार्थिवभागोद्भवादेव । द्रवत्वदशायां तु वक्ष्यमाणचारणक्रियान्यायेन पार्थिवभागस्य जलभक्षितत्वात् काठिन्यानुपलंभः । यत्तु—

" अपां संघातो विलयनं च तेजःसंयोगात् " इति वैशेषिकसूत्रमुपन्यस्य विलयनं द्रवत्वं तेजःसंयोगाद्भवति इति व्याख्याय जलीयद्रवत्वमपि नैमित्तिकमेव, सांसिद्धिकत्वकथनं तु स्वल्पतेजःसंयोगसाध्यत्वाभिप्रायेणेति केषांचित् कथनं, तन्न । विलयनशब्दस्य प्रलयार्थकत्वस्यापि संभवेन हिमरूपकठिनावयविद्रव्यध्वंसस्यैव तत्सूत्रार्थत्वेन अब्निष्ठद्रवत्वस्य तेजःसंयोगजन्यत्वकथनस्य वैशेषिकसिद्धान्तविरूद्धत्वात् । हिमद्रव्यं च न जलं किंतु उद्भूतपार्थिवभाग एवेति उक्तमेवेति न वैद्यककल्पनायां कश्चित् विरोधः शंक्यः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां लिंगशरीरगुणत्वं, कामः संकल्पो विचिकित्सा इत्यादि श्रुतेः । परत्वादीनां दशगुणानां साधारणत्वात् पंचमहाभूतगुणत्वं ।

एते च गुणाः गुरुत्वादयः न हि संस्काररूपाणां पंचमहाभूतानां, तत्तत्संस्काराणां शद्बादिद्वारा पृथक् पृथक् प्रतीयमानत्वात् । यद्यपि ईश्वरीयोच्छूनसंस्काररूपे बाह्यजगति गुणानामेकत्र सुगंधि चन्दनं गुरु इत्यादिरूपेण संकीर्णतया प्रतीतिर्भवति । तथापि सर्वज्ञस्य ईश्वरस्य गंधः गुरुत्वात् पृथक् इति ज्ञानान्यथानुपपत्त्या संस्काररूपेण पृथगेव सत्वं प्रसिध्यति । तस्मात्कापि संस्काररूपाणां भूतानां न गुरुत्वादि गुणवत्वं, किन्तूच्छूनावस्थानामेव तेषां, तेषामेव च संस्काराणां तन्मात्रपदवाच्यत्वं ।

पंचमहाभूतानां स्वरूपं गुणाश्च निरूपिताः । इदानीं धर्मा निरूप्यन्ते । तत्र तत्तद्व्यक्तित्वान्यतमत्वादिधर्माणामनन्ततया ज्वरहेतुत्वज्वरनाशकत्वादि-

चिकित्सोपयोगिधर्माणां चात्र निरूपणे बहुविस्तरप्रसंगात् प्रकरणप्राप्त-पंचमहाभूतविवेकोपयोगपर्याप्तधर्ममात्रत्वं अत्र निरूप्यते । स च धर्मः द्विविधः साधर्म्यं वैधर्म्यं च तत्र पृथिवी-जलादिसाधर्म्यस्य पृथिव्याद्येकैकपक्षकपृथिवी-जलातिरिक्तभूतत्रयभेदसाधने अन्वयीहेतुतया उपयोगः । यदुक्तं यस्य साध-र्म्यवैधर्म्यमितरस्य तदितिन्यायेन सर्वं साधर्म्यं वैधर्म्यरूपमेवेति न तस्य पृथक्-प्रयोजनं अत्र चिन्तयामः । पृथिव्याद्येकैकगतं इतरवैधर्म्यं तु लक्षणमिति उच्यते । तस्य तत्तल्लक्ष्यपक्षकेतरभेदसाधने व्यतिरेकिहेतुतेति ध्येयम् ।

तत्र पंचानामपि भूतानां शद्वः, परापरत्वे, युक्तिः, संख्या, संयोग-बिभागौ, पृथक्त्वं, परिमाणसंस्काराभ्यासाश्च एकादश समानधर्माः ।

## अथ पंचधा चतुर्गुणाः ।

तेषु पृथिव्यप्तेजोवायूनां चतुर्णां स्पर्शः समानो धर्मः । पृथिव्यप्ते-जआकाशानां चतुर्णां रूपाभावसामानाधिकरण्यविशिष्टानां स्पर्शशीतत्वरूक्षत्व-खरत्वानामभावः, साधर्म्यम् । आप्तेजोवाय्वाकाशानां गंधाभावः, । सूक्ष्मत्वं, स्थिरत्वाभावः, कठिनत्वाभावः ।

निबिडसंयोगात्मकसांद्रत्वाभावश्च, सरत्वं, मृदुत्वं, समानधर्माः ।

पृथिवीतेजोवाय्वाकाशानां चतुर्णां पिच्छिलत्वाभावः, द्रवत्वाभावः, विशदत्वं, शुष्कत्वरूपसांद्रत्वं, चत्वारः समानधर्माः ।

## अथ त्रिगणादश ।

तत्र पृथिव्यप्तेजसां रूपं साधर्म्यं । पृथिव्यब्वायूनां अनुष्णस्पर्शत्वं । पृथिव्यबाकाशानां आशुकारित्वविपरीतमन्दत्वम्, रुक्षत्वाभावश्च । अप्तेजोवा-यूनां गंधाभावविशिष्टस्पर्शवत्वं, उष्णशीतान्यतरवत्वम् । शीतस्पर्शपदेन शातत्वतदभिवर्ध्यत्वएतदन्यतरत् विवक्षितं तेन वायौ नाव्याप्तिः ।

आप्तेजआकाशानां वाय्ववृत्तिसरत्वसूक्ष्मत्वे । तेजोवाय्वाकाशानां लघुत्वं साधर्म्यं, स्निग्धत्वाभावः, गुरुत्वाभावश्च ।

पृथिवीतेजोवायूनां खरत्वं श्लक्ष्णत्वाभावश्च । अब्वाय्वाकाशानां अनुष्णत्वे सति सरत्वं । पृथिवीवाय्वाकाशानां जलत्वासमानाधिकरणमन्दत्वं । पृथिवीतेजआकाशानां शीतत्वाभावः । अत्रापि शीतत्वं पूर्ववदेव बोध्यम् तेन नवायावतिव्याप्तिः ।

## दश द्विगुणाः ।

पृथिव्यापां रसवत्वं, गुरुत्वं, स्निग्धत्वम्, लघुत्वाभावश्च । पृथिवीतेजसोः स्पर्शवत्वे सति शीतत्वाभावत्वं । अत्र शीतत्वं पूर्ववदेव बोध्यं । एवमग्रेऽपि । पृथिवीवाय्वोः उष्णत्वाभाववत्वे सति खरत्वम् । पृथिव्याकाशयोः शीतोष्णाभाववत्वे सति शुष्कत्वं । अप्तेजसोः गंधाभाववत्वे सति रूपवत्वं, वाय्ववृत्तिशीतोष्णान्यतरत्वम् । अब्वाय्वोः शीतत्वम् । अब्राकाशयोः श्लक्ष्णत्वं, खरत्वाभावश्च । तेजोवाय्वोः रूक्षत्वं, आशुकारित्वापरपर्यायं तीक्ष्णत्वं च शीतोष्णान्यतरवत्वं च । तेजआकाशयोः वायुभिन्नत्वे सति गुरुत्वाभाववत्वम् । वाय्वाकाशयोः तेजोवृत्तिलघुत्ववत्वम् ।

## अथ प्रत्येकस्य धर्माः ।

तत्र गंधः, रसः, रूपं, स्पर्शः, शब्दः, गुरुत्वं, स्निग्धत्वं, मन्दः, स्थिरः, कठिनः, विशदः, खरः, सांद्रः, परादयो दश, एते समुदिताः पृथिव्याः ।

रसरूपस्पर्शशब्दगुरुत्वशीतत्वस्निग्धत्वमन्दत्वसरपिच्छिलश्लक्ष्णसूक्ष्मद्रवमृदुत्वानि, परत्वादयश्च दश, जले ।

रूपस्पर्शशब्दलघुत्वउष्णरूक्षतीक्ष्णसरविषदखरसूक्ष्ममृदुत्वानि, परत्वादयश्च दश, तेजसि ।

स्पर्शशब्दलघुत्वशीतत्वरूक्षमंदसरविशदखरसूक्ष्ममृदुत्वानि, परत्वादयश्च दश, वायौ ।

शब्दलघुत्वमंदसरविशदश्लक्ष्णसूक्ष्ममृदुत्वानि, परत्वादयश्च दश, आकाशे।

तत्र यथासंभवं केषांचित् कर्मसाधर्म्यं यथाः–सुश्रुते तत्र–विरेचन-द्रव्याणि पृथिव्यंबुगुणभूयिष्ठानि पृथिव्यापो गुर्व्यः ता गुरुत्वादधोगच्छन्ति। तस्माद्विरेचनं अधोगुणभूयिष्ठमनुमानात्। वमनद्रव्याणिअग्निवायुगुणभूयिष्ठानि, अग्निवायू हि लघू, लघुत्वाच्च तान्यूर्ध्वमुत्तिष्ठंति—तस्माद्वमनमप्यूर्ध्वगुणभूयिष्ठं। उभयतो गुणभूयिष्ठं उभयतो भागं—आकाशगुणभूयिष्ठं संशमनं, सांग्राहिकमनिलगुणभूयिष्ठं, अनिलस्य शोषणात्मकत्वात्, दीपनमग्निगुणभूयिष्ठं, लेखनमनिलानलगुणभूयिष्ठं, बृंहणं पृथिव्यंबुगुणभूयिष्ठं, एवमौषधकर्माण्यनुमानात्साधयेत्।

भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः।
भूम्यंबुवायुजैः पित्तं क्षिप्रमायाति निर्वृतिम्॥
खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणां।
वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्यते।
वसुधाजलजाताभ्यां बलासः परिवर्धते॥

किं च साधर्म्यवैधर्म्यपरिज्ञानार्थं विंशतिगुणानां कर्माण्यपि सुश्रुतोक्तरीत्या लिख्यंते। गुणव्यवस्थानुसारेण तेषामपि व्यवस्था ज्ञेया। तथा हि सुश्रुतेः—

अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम्।
कर्मभिस्त्वनुमीयंते नानाद्रव्याश्रया गुणाः॥
ह्लादनः स्तंभनः शीतो मूर्च्छातृट्स्वेददाहजित्।
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः॥
स्नेहमार्दवकृत्स्निग्धो बलवर्णकरस्तथा।
रूक्षस्तद्विपरीत.स्याद्विशेषात्स्तंभनः खरः॥
पिच्छिलो जीवनो बल्यः संधानः श्लेष्मलो गुरुः।
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः॥
दाहपाककरस्तीक्ष्णः स्रावणोमृदुरन्यथा।

सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः ॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ।
दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥
दशैवान्यान्प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ।
द्रवः प्रक्लेदनः सांद्रः स्थूलः स्याद्बंधकारकः ॥
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा ।
सुखानुबंधी सूक्ष्मश्च सुगंधो रोचनो मृदुः ॥
दुर्गंधो विपरीतोऽस्मात् हृल्लासाऽरुचिकारकः ।
सरोऽनुलोमनः प्रोक्तो मंदो यात्राकरः स्मृतः ॥
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ।
विकासी विकसन्नेव धातुबंधान्विमोक्षयेत् ॥
आशुकारी तथाऽशुत्वाद्धावत्यंभसि तैलवत् ।
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ॥
गुणा विंशतिरित्येवं यथावत् परिकीर्तिताः ॥ इति ॥

तथा च इदमुक्तं भवति पृथिव्यापां स्नेहमार्दवकृत्वबलवर्णकरत्वसादोपलेपकृत्वतर्पणबृंहणत्वानि, स्निग्धत्वाद् गुरुत्वाच्च। जलवाय्वोः ह्लादनत्वमूर्च्छास्वेददाहजित्वानि, शीतत्वात् । जलाकाशयोः जीवनत्वबल्यत्वसंधानत्वश्लेष्मलत्वगुरुत्वानि, श्लक्ष्णत्वात्। तेजोवाय्वोः स्नेहकृत्वादिविपरीतं कर्म, रुक्षत्वात् । पृथिव्यबाकाशानां बल्यत्वं, स्निग्धत्वश्लक्ष्णत्वपिच्छिलत्वान्यतमत्वात् । तेजोवाय्वाकाशानां अपतर्पणत्वाबृंहणत्वादि; लघुत्वात् । पृथिवीतेजआकाशानां ल्हादनत्वाद्यभावः, शीतत्वाभावात्। पृथिवीजलतेजोवायूनां स्तंभनत्वं, खरत्वात्। जलतेजोवाय्वाकाशानां बंधकारकत्वाभावः, असांद्रत्वात् अस्थूलत्वात् । सूक्ष्मेषु स्रोतःस्वनुसरत्वं, सूक्ष्मत्वात् । अनुलोमनत्वं, सरत्वात् । पृथिवीतेजोवाय्वाकाशानां रोपणत्वं, विशदत्वलघुत्वान्यतरत्वात् । जीवनत्वाद्यभावः, पिच्छिलत्वाभावात् । पृथिवीजलवाय्वाकाशानां यात्राकरत्वं, मंदत्वात् । पाचनत्वाद्यभावः, उष्णत्वाभावात्। स्रावणत्वाभावः, तीक्ष्णत्वाभावात्। इत्यादि।

प्रत्येकं च आकाशे सादोपलेपबलकृत्तर्पणबृंहणत्वाभावाः, यात्राकरत्वा-नुलोमनत्वे, जीवनत्वसंधानत्वश्लेष्मलत्वगुरुत्वाभावाः, क्लेदचूषणरोपणत्वे तत्पर्यायाश्च, सूक्ष्मेषु स्रोतःस्वनुसरत्वानि। दाहपाककफस्रावणत्ववैपरीत्यम्। नच जीव-नत्वादीनामभावो विपर्ययश्च विरुद्धत्वात् कथमेकत्रसंभवतः इति वाच्यं वृक्षः कपिसंयोगवाँस्तदभाववाँश्चइत्यादाविव देशकालभेदावच्छेदेन प्रतियोगितदभा-वयोरेकत्र समावेशात्। वायोः सादोपलेपकृत्तर्पणबृंहणत्वानामभावाः, ल्हादनस्तं-भनत्वशीतमूर्छातृटस्वेददाहजित्वानि, स्नेहमार्दवकृद्बलवर्णकरत्वाभावाः; यात्रा-करत्वं, अनुलोमनत्वं, जीवनसंधानश्लेष्मलत्वगुरुत्वानामभावाः, क्लेदचूषणरोप-णत्वे, स्तंभनत्वं, सूक्ष्मेषु स्रोतःस्वनुसरत्वं च दाहपाककरस्रावणत्ववैपरीत्यं च। तेजसि सादोपलेपबलकृत्तर्पणबृंहणत्वानामभावाः, ल्हादनमूर्छातृटस्वेददाहजि-त्ववैपरीत्यं, पाचनत्वं, स्नेहमार्दववर्णकरत्ववैपरीत्यं, स्तंभनत्वं, स्रावणत्वं, अनुलो-मनत्वं, जीवनसंधानश्लेष्मलगुरुत्ववैपरीत्यं, सूक्ष्मेषु स्रोतःस्वनुसरत्वं, शद्बा-जनकसंयोगवत्वरूपमृदुत्वं च। जले सादोपलेपबलकृत्तर्पणबृंहणत्वानि, ल्हादनस्तंभनमूर्च्छातृटस्वेददाहजित्वानि, स्नेहमार्दववर्णकरत्वानि, यात्राकरत्वं, अनुलोमनत्वं, जीवनसंधानश्लेष्मलगुरुत्वानि, सूक्ष्मेषु स्रोतःस्वनुसरत्वं, प्रक्ले-दनत्वं, पाककरस्रावणत्ववैपरीत्यं च। पृथिव्यां सादोपलेपबलकृत्तर्पणबृंहणत्वानि, स्नेहमार्दववर्णकरत्वानि, यात्राकरत्वं, वातमलस्तंभनत्वे, शद्बजनकविभागजन-कत्वं जीवनबल्यसंधानश्लेष्मलगुरुत्वानामभावाः, स्तंभनत्वबंधकारकत्वं चेति। किंच प्राणवाक्पाणिपादपायूपस्थात्मनां अपंचीकृतराजसपृथिव्याद्यवच्छिन्न-क्रिया, वचनादानगतिविसर्गानंदजनकत्वम्। प्राणानां वायूपादानाद्वायुत्वं, वागिंद्रियस्य शद्बव्यंजकत्वान्नाभसत्वं। तेजोमयीवागिति। श्रुतिस्तु "मनसः अपंचीकृतपांचभौतिकत्वेऽपि अन्नमयं हि सौम्य मन" इति श्रुतिवत्तदुपकारि-तया व्याख्येया। मनसः पंचभूतगुणग्राहकत्वेन पांचभौतिकत्वमनुमानात्। पाणेः क्रियाशक्त्याधिक्येन वायवीयत्वं। पायोस्तु जलवन्मलशोधकत्वेन जलीयत्वं। पादयोस्तैजसत्वम्। पादे संस्कृते चक्षुषः स्वास्थ्यद्वारा रूपव्यंजकत्वात् उपस्थस्य पार्थिवत्वं शुक्राभिव्यंजकत्वात्। शुक्रस्य पार्थिवत्त्वात्। दुर्गन्धाति-शयवत्त्वात्, कठिनत्वाच्च।

इदानीं प्रश्नस्य आदिपदलभ्यं तद्विभागादिकमुच्यते । तत्र पंचापि भूतानि चतुर्विधानि । गंधादिसंस्काररूपाणि तन्मात्रशब्दवाच्यानि प्रथमानि, वेदांतनये संस्काराणां पूर्वानुभूतार्थसूक्ष्मशकलविशेषरूपताया एव योगवासिष्ठादौ प्रतिपादनत्वात् भूतत्वोपपत्तिः । द्वितीयानि तु अपंचीकृतपंचमहाभूतरूपाणि, सूक्ष्मशरीरारंभकानि—स्वप्ने अहमिति भासमानस्यैव जागरेऽप्यनुवृत्तिदर्शनात्, उभयावस्थानुस्यूतान्तःकरणारंभकानि पंचमहाभूतसत्वांशरजोंशसमष्टिव्यष्टि-रूपाणि बोध्यानि । इमान्येव वैद्यके शरीरेंद्रियसत्वात्मसंयोग इत्यत्र सत्वपदेनो-च्यन्ते । "अन्नमयं हि सोम्य मनः, आपोमयः प्राणः तेजोमयीवागित्यादि" श्रुति-सिद्धानि च । तृतीयानि पंचीकृतपंचमहाभूतात्मकानि जाग्रदवस्थापन्नविराट्-शरीरारंभकाणि बोध्यानि । तेषां पंचीकृतत्वं च सर्वत्रैवोपलभ्यमानेषु भूतेषु पंचमहाभूतविशेषगुणानां शब्दादीनामुपलभ्यमानत्वात्, तत्र यद्भूतविशेषगुणा-धिक्यमारब्धद्रव्यस्य तद्भूतव्यपदेशविषयत्वं तस्येति । " वैशेष्यात्तु तद्वादस्त-द्वादः " इति सूत्रे वेदान्तिभिर्निर्णीतम् । चतुर्थानि भौतिकरूपाणि घटपटादीनि । ननु भूतभौतिकयोः को भेदः इति चेदुच्यते । विराट्शरीररूपपंचीकृतभूतो-त्पत्तिर्हि ईश्वरकर्तृका, तदनंतरव्यष्टिरूपगवाश्वादिसृष्टिस्तु विराट्कर्तृका इति भिन्नकर्तृकत्वेनैव तयोर्भेदसिद्धेः । पुनर्भौतिकानि त्रिविधानि, शरीरेंद्रियविषय-भेदात् । मानुषं शरीरं पार्थिवं अस्मादादीनां, वरुणसूर्यवाय्वादिलोकेषु जलादि-प्रधानानि शरीराणि । घ्राणरसनचक्षुस्त्वक्श्रोत्राणींद्रियाणि-भूतेभ्यः समुत्पन्नानि तदीयसत्वांशरूपाणि । शरीरेंद्रियादिव्यतिरिक्तः सर्वो भूतभौतिकवर्गः विषयो बोध्यः । नित्यं अनित्यं चेति भूतद्वैविध्यं नांगीक्रीयते " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादि श्रुत्याआकाशस्यापि अनित्यत्वांगीकारात् । वैशेषि-कवत् परमाणुद्वारिकापिसृष्टिर्नांगीक्रीयते । सामान्यस्यैव विशेषं प्रति कारणत्वस्य पूर्वं व्यवस्थापितत्वेन सामान्यभूतानां विभ्भूनां पंचभूतव्यक्तानामेव स्वभेदनद्वारा महाघटस्य खंडघटं प्रतीव परमाण्वादिकं प्रति कारणत्वाध्यवसायात् । अतः द्रव्यारंभपरंपरायाः परमाणावेव विश्रामः इति मतं नांगीक्रीयते । संभवति च सामान्यस्यैव रसस्य पृथग्विशेषान् प्रति कारणत्वं ऊष्मणा विलीनस्य घृतादेरेव

द्रव्यस्यैव शिशिरीकरणेन द्रव्यत्वापगमे सति घृतादिषु स्वापेक्षयाल्पतमपरिमाणक घृतकणारंभकत्वदर्शनात् । आत्मन आरभ्य सृष्टिक्रमचिन्तकानां सामान्यस्यैव विशेषकारणत्वे अभ्युपगमातिशयस्य व्यक्तत्वाच्चेत्यलम् । आदिपदग्राह्यविभागादिविवेचनं समाप्तम् ।

## पंचमप्रश्नस्योत्तरम् ।

अथ भूतसंख्याविमर्शः अत्रेदं बोध्यम् । घ्राणरसनचक्षुस्त्वक्श्रोत्राणां तावत् गंधरसरूपस्पर्शशद्बात्मकतदर्थग्राहकत्वं तत्तदर्थैःसह, अयोगातियोगमिथ्यायोगेषु सत्सु रोगोद्भवद्वारा विनाशशीलत्वं चायुर्वेदोक्तमितिनेदं तिरोहितं चरकसुश्रुताद्यध्यायिनां । शद्बरागाच्छ्रोत्रं, स्पर्शरागात् त्वक्, रूपरागाच्चक्षुः, रसरागाद्रसनं, गंधरागात् घ्राणं च उदभूदित्ययं वैदिकसिद्धांन्तः, तत्तदिंद्रियेषु विद्यमानतत्तदर्थगोचरप्रीत्यतिशयदर्शिनां लौकिकानामपि तर्कगम्यएव, स्वप्नदशायां बाह्येंद्रियाणामुपरतत्वात् केवलमानसतत्तदर्थानुभवदर्शनेन बहिरिंद्रियेषु व्यावर्तमानेषु प्रवर्तमानस्य रागस्य कारणत्वं बहिरिंद्रियाणां तत्कार्यत्वं च इति उपादानोपादेयभावनियमविदां न तिरोहितं, रागः इंद्रियाणिविनापि तिष्ठति इंद्रियाणि तु रागं विना न तिष्ठन्ति इति इंद्रियाणां रागाधीनत्वदर्शनात्, रागजन्यत्वं निश्चीयते । सोयमिंद्रियेषु सत्सु कदाप्यनुच्छिद्यमानः शद्बादिपंचगोचरो रागः विषयविधया शद्बादीनवगाहमानः तत्साधनेषु पुरुषान् आचांडालमाविद्वज्जनं च प्रवर्तयन् शद्बादीनां पंचानामास्तित्वं साधयति । नहि पाश्चात्यवैज्ञानिकंमन्या अपि पूर्वोक्तरागपंचकहीनाः क्वचिदपि प्रवर्तमानाः समुपलभ्यंते इति तेषां प्रवृत्त्यन्यथानुपपत्त्यैवानुकूलतर्केण प्रवृत्त्युद्देश्यभूतानां शद्बादीनां पंचानां परस्परविभक्तानामास्तित्वं दुरपन्हुवं तेषामपि वेदनये विश्वस्यैव वासनामात्रमयब्रह्मज्ञानशरीरत्वेन व्यवहारदशायामपि पारमार्थिकत्वानभ्युपगमेन यावद्ब्रह्मानुभवं अबाध्यत्वरूपस्य व्यावहारिकसत्यत्वस्यैवांगीकृतत्वेन जाग्रत्कालीनघटादितुल्यस्यैव सत्यत्वस्य उक्तयावद्ब्रम्हानुभवमनुच्छिद्यमानशद्बादिपंचरागविषयीभूतानां तदधीनप्रवृत्त्युद्देश्यीभूतानां तेषां पंचानामभ्युपगमनीयत्वात् । नहि ‘ स्वर्गकामोयजेते’ति विधिना प्रेरकस्वभावेन स्वर्गमुद्दिश्य प्रेर्यमाणः पुरुषः स्वप्रवृत्त्युद्देशस्य

सत्यत्वं अपन्हुवानः क्वचित्‌दृष्टः, इति मीमांसासरण्यैव अकामैरपि वैज्ञानिकैः शद्बादिपंचकास्तित्वं पूर्वोक्तयुक्त्या अभ्युपगम्यमेव । तेषां च पंचानामपि पृथग्भूतानां संस्कारद्वारैव तत्तदिंद्रियवर्तिरागारूढत्वसंभवात् । शद्बादिगोचरसंस्कारपंचकसिद्धिरपि दुरपन्हवैव ।

संस्काराणां च मानसप्रतिभाशक्तितीक्ष्णकुठारविच्छिद्यमानतत्तदर्थांशसजातीयांशरूपताया एव वासिष्ठादिषु प्रतिपादितत्वेन लौकिकानां युक्त्युपारूढत्वेन च तादृशसंस्कारपंचकसिद्धेर्दुर्वारतया, संस्काररूपतापन्नतादृशांशपंचभूतासिद्धिरप्रत्यूहैव । यदि हि ब्रह्मांडमध्यें शद्बादिपंचकवत् तदतिरिक्तस्यापि कस्यचिद्‌गुणविशेषस्य ग्राहकं षष्ठमिद्रियं केनाचित्परीक्षकेण समन्विष्य उपस्थापितं स्यात्, स्यादेवतदा पंचमहाभूतसिद्धान्तक्षतिः, षष्ठमप्यरं महाभूतमाभिमन्येत च । न चैवमस्ति न वा बाह्यज्ञानेंद्रियाणां पंचापेक्षया न्यूनसंख्याकत्वं लौकिकेन परिक्षकेण वा क्वचिदुच्यते । तेन शद्बादिगोचरसंस्कारविशेषरूपाणां भूतानां पंचत्वमेव, नाल्पत्वं तेषां न वा आधिक्यं शंकितुमपि शक्यत इति सिद्धम् । सिद्धे एवं शद्बादिपंचविषयगणे श्रोत्रादीनामिंद्रियाणां तैराकृष्यमाणत्वदर्शनेन सजातीयाकर्षणेनैवोपपत्तौ विजातीयाकर्षणे प्रमाणाभावात् । शद्बादिजातीयत्वमपि दंण्डापूपकयैवागतम् इति इंद्रियाणामपि आकाशादिजातीयत्वसिद्धिः । तेषां चेंद्रियाणां पंचत्वादपिभूतानां पंचत्वसिद्धिरिति ।

## षष्ठसप्तमप्रश्नस्योत्तरम् ।

तदुत्पत्तिक्रमस्तु पंचीकारणप्रक्रियया निश्चेतुं शक्यते । तथाहिः—

अविद्यागतसंस्कारमूलकैवेयं सृष्टिरित्यभ्युपगमात् शद्बादिविषयरागसतत्वस्यैव ईशसंकल्पस्य संस्कारोद्बोधकत्वे ईशसृष्टौ संस्कारोद्बोधक्रमेणैव सृष्टिक्रमः पर्यवस्यति । तत्र च प्रथमं शद्बसंस्कारोद्भवः पश्चात्स्पर्शस्य तदनु रूपस्य, ततः रसस्य, तत्पश्चात् गंधस्योद्भव इति अस्मन्मतस्थितिः, तत्र च पूर्वपूर्वभूतभावापन्नस्य ब्रह्मण एव उत्तरोत्तरभूतभावेन विवर्तमानत्वात् पूर्वपूर्वभूतगुणानां

उत्तरोत्तरत्रानुवृत्तिः आवश्यकी सा चानुवृत्तिः पंचमहाभूतविवेकप्रकरणे एव-मुपदिष्टाः—

शद्बस्पर्शौ रूपरसौ गंधो भूतगुणा इमे ।
एकद्वित्रिचतुःपंचगुणा व्योमादिषु क्रमात् ॥
प्रतिध्वनिर्वियच्छद्बःवायौ वीसीति शद्बनम् ।
अनुष्णाशीतसंस्पर्शो वन्हौ भुगुभुगुध्वनिः ॥
उष्णस्पर्शः प्रभारूपं जले बुलुबुलुध्वनिः ।
शीतस्पर्शः शुक्लरूपं रसो माधुर्यमीरितम् ॥
भूमौ कडकडाशद्बः काठिन्यं स्पर्श इष्यते ।
नीलादिकं चित्ररूपं मधुराम्लादिकारसाः ॥
सुरभीतरगंधौ द्वौ गुणाः सम्यक् विवेचिताः । इति

एवं रीत्या समुत्पन्नानामपंचीकृतानां पंचमहाभूतानां सत्वांशसमष्टिरंतःकरणं, तद्व्यष्टिः पंचज्ञानेंद्रियाणि, रजोंशसमष्टिः प्राणः, तद्व्यष्टिश्च पंचकर्मेंद्रियाणि, सूक्ष्माणि, अविशेषपदवाच्यानि । तत्र समष्टिभूतेंतःकरणादौ सर्वेषां भूतांशानां विद्यमानत्वेऽपि न पंचीकृतत्वं, किंतु अपंचीकृतत्वमेव । क्षीरनीरवत्संयोगः पंचीकृतत्वं तिलतंडुलवच्चसः अपंचीकृतत्वं । अदृष्टविशेषोद्भावितक्रियाविशेषस्य व्यवस्थापकत्वाच्च कदाचित् पंचीकृतत्वं कदाचित् अपंचीकृतत्वं चेति व्यवस्थोपपत्तिः । तत्र समष्टिरित्यस्य तावद्व्यष्टिव्यापकः अखंडवैय्याकरणानां वाक्यस्थले तावद्वर्णाभिव्यंग्यअखंडस्फोटस्थानीयःतज्जातीयद्रव्यःविशेषः इति तु सिद्धान्ततत्वादिनिर्दिष्टं मतम् । तत्र तिलतण्डुलवत्संसृष्टिः समष्टिः इति मते—

कदाचित्पिहिते कर्णे श्रूयते शद्बआंतरः ।
प्राणवायौ जाठराग्नौ जलपानेन्नभक्षणे ॥
व्यज्यन्ते ह्यन्तराशद्बाः मीलनेचांतरं तमः ।
उद्गारे रसगंधौ चेत्यक्षाणामांतरग्रहः ॥

इत्यादिना तिलतंडुलवत्संसृष्टशद्बादिविषयग्राहकत्वं पंचदश्यादावुक्तं स्वप्ने च निर्विवादं तदनुभूयते च। चित्ररूपवत्तद्व्यापकस्य द्रव्यांतरस्य समष्टिरूपत्वाभ्युपगमे तु तत्रापि चित्ररूपन्यायेनैव तदुपलब्धिरुपपादनीया।

तत्र तिलतंडुलन्याये संयोगे न केनचित् कस्याप्यभिभवः, पंचापि भूतानि तत्रस्थानि अप्रतिहतशक्तिकान्येव अविकलानि तत्रावतिष्ठंत इति, अपंचीकृतानां मनआदीनां समष्टिव्यष्टिभूतानां शरीरादिकमभित्वैव प्रवेशनिर्गमोपपत्तिः। क्षीरनीरन्यायेन संकरे तु परस्परं शक्त्यभिभवस्य आवश्यकत्वात् न सर्वथाऽविकलत्वं पंचानामपि वक्तुं शक्यते। विकलशक्तित्वादेव तेषां मूर्च्छितत्वमिव भवति। अतएव तेषां मूर्तमिति व्यपदेशः। तत्र पंचीकरणप्रकारस्तु, अपंचीकृतानि आकाशादीनि पंचापि भूतानि प्रत्येकं द्वेधा विभज्य तत्र पुनः पंचानामपि एकैकमर्धं प्रत्येकं चतुर्धा विभज्य, तादृशविभक्तचतुर्थांशस्य तत्तज्जातीयातिरिक्तावशिष्टभूतार्धेषु क्षीरनीरवत् संयोजने पंचानामपि भूतानां पंचीकृतत्वोपपत्तिः। अत्र प्रथमतो द्वेधाविभजनं विभक्तैकदेशस्य पुनश्चतुर्धाविभजनं, इत्युपलक्षणमेव न मुख्यतया विवक्षितं, बहुपरिमाणत्वन्यूनपरिमाणत्वमेव च विवक्षितं।

अतएव श्रुतौ क्वचित् त्रिवृत्करणोपदेशेऽपि न तेन-सह विरोधप्रसंगः। एवं सति यथा राजतमुद्रारूपस्य रूप्यकस्य अष्टौ आणकाः अर्धोंऽशः, आणकद्वयं तच्चतुर्थांशः अष्टाणकमुद्रायामेकैकस्यां द्व्याणकमुद्राचतुष्कसंयोजने परिपूर्णो रूप्यभाव इति यथा गणितं, तादृशं न पंचमहाभूतेषु पंचीकरणं विवक्षितं, पुराणादिषु अंडकटाहे पृथिव्याद्यावरणानां प्रत्येकं दशगुणाधिक्योक्त्या, लोकेऽपि पृथिव्यपेक्षया जलांशाधिक्यस्य तदपेक्षयापि तेजःपरिमाणाधिक्यस्योपलभ्यमानत्वेन रूप्यपंचकस्येव भूतपंचकस्य समानमानताया वक्तुमशक्यत्वात्। किंतु पुराणप्रामाण्यानुरोधेन प्रत्येकं उत्तरोत्तरं दशगुणत्वं परिमाणस्य। यद्वा तत्र दश संख्याया अपि लोकानुभवाविरोधाय परिमाणाधिक्यमात्रोपलक्षणपरतया उत्तरोत्तरमधिकपरिमाणत्वमेवाभ्युपगम्यते। एवं स्थिते पंचीकरण-

पंचीकरणदशायां आकाशादिक्रमेणैव इयं सृष्टिः, न तु पृथिव्यादिक्रमेणेति निश्चयेन वक्तुं शक्यते । पृथिव्यादे, अपंचीकृतस्यापि आकाशाद्यपेक्षया न्यूनपरिमाणत्वनिश्चयेन पंचीकरणदशायां पृथिव्याद्यर्धस्य न्यूनपरिमाणस्य महापरिमाणाकाशार्धादिपरिमाणव्यापकत्वासंभवात् । एतादृशगणितप्रमाण्या-देवाकाशादिक्रमिकासृष्टिरिति श्रौतसिद्धांतः संगच्छते । तदेवं रीत्या अपंची-कृतानां पंचमहाभूतानामपि पृथिव्यादीनां जलाद्यपेक्षया न्यूनपरिमाणत्वं । आकाशादि-भूतेषु पूर्वपूर्वाणि परं परं प्रति परिणामविधया कारणानि भवंतीति वेदान्तसिद्धान्तः । उपादानस्य स्वस्वरूपरक्षापूर्वकं परिणाम-भावश्च स्वपेक्षया उपादेयस्य न्यूनपरिमाणत्व एव संभवति । न हि प्रस्थपरिमितस्य दुग्धस्य स्वान्यूनपरिमाणकदध्युपादानत्वे कोऽपि वैज्ञानिकः दुग्धस्य स्वरूपावस्थितिं साधयेत् । तस्मात् आकाशवायुतेजोजलपृथिवीनां क्रमेण उत्तरोत्तरं न्यून-परिमाणवत्त्वात्, सर्वेषां स्वरूपतोऽवस्थित्युपलब्धेश्च पूर्वपूर्वगुणानां उत्तरोत्तर-स्मिन् अनुवृत्तेश्च क्रमिकउपादानोपादेयभाव दुरपह्नव एव । संमत एवैषोऽर्थः न्यायसूत्रकृतामपि ' त्रिष्टं ह्यपरंपरेण ' इत्युक्तेः भाष्यकृतादिभिस्तु शाखाचंद्र-मसन्यायेन तत्तदधिकारिविशेषबोधार्थमन्यथाकृतमपि । प्रपंचस्य अविद्योपान-कत्वमपि सूत्रकृता "मायागंधर्वनगरे"त्यादि सूत्रेणापि सूचितमेवेति । यथा च न्यायसूत्रकृतां अद्वैत एव तात्पर्यं तथाधिकं तु श्री. स्व. पं. पूज्यपाद, धर्मप्राण लक्ष्मणशास्त्रिद्राविडकृतखंडनखंडखाद्यभूमिकायां द्रष्टव्यम् ।

**गुणेभ्यः कारणांतरेभ्यो वा भूतानामुत्पत्तिरिति प्रश्ने तु आह चरकः—**

" तत्पूर्वं चेतनाधातुः सत्वकरणो गुणग्रहणाय प्रवर्तते, स हि हेतुः कारणं निमित्तमक्षरं कर्ता मंता वेदिता बोद्धा द्रष्टा धाता ब्रम्हा विश्वकर्मा विश्वरूपः पुरूषः प्रभवोऽव्ययः नित्यगुणग्रहणं प्रधानमव्यक्तं जीवोज्ञः पुद्गलः चेतनत्वात् विभुर्भूतात्मा चेंद्रियात्मा चांतरात्मा चेति । सगुणोपादानकाले अंतरिक्षं पूर्वं परमन्येभ्यो गुणेभ्य उपादत्ते प्रलयात्यये सिसृक्षुः भूतान्यक्षरभूतः सत्वोपादानः पूर्वतरमाकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वा-

दिकाँश्चतुरः, तथा देहग्रहणेऽपि प्रवर्तमानः पूर्वतरमाकाशमेवोपादत्ते ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकाँश्चतुरः, सर्वमपि तु खल्वेतत् गुणोपादानमणुना कालेन भवति । अनेन हि सन्दर्भेण " तस्माद्वाएतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अभ्द्यः पृथिवी " इति श्रुति-प्रतिपादितसृष्टिक्रमप्रक्रियैव चरकानुमतेति सिध्यति । युक्तिसिद्धत्वाच्च, अन्नमय-प्राणमयमनोमयविज्ञानमयानंदमयकोशेषु पंचीकृतान्नमयकोशापेक्षया प्राणमय-मनोविज्ञानमयात्मक-अपंचीकृतपंचमहाभूतोत्थलिंगशरीरस्य तदपेक्षयापि कारणशरीररूपस्यानंदमयकोशस्य अपंचीकृतपंचमहाभूतसमष्टिरूपलिंगशरीरो-पादानताया न्याय्यत्वात् सर्वोंपि हि जनः अन्नमयशरीरस्थमंगुल्यादिकं सर्पदष्टं, प्राणमयरक्षणेच्छया प्राणानपि च मानात्मकमनोमयरक्षणेच्छया, मानं च विनयोनोपसृप्य गुरुजनाधीनविज्ञानेच्छया, प्रयोजनरतं काकदन्तपरिक्षादि स्वल्पविज्ञानमपि, प्रयोजनात्मकानंदपरिक्षया, प्रयोजनमपि चान्यदीयं स्वकीय-प्रयोजनापेक्षया परित्यजन् दृष्ट इति स्वशद्धार्थभूतं विशुद्धमात्मस्वरूपमेव सर्वापेक्षया आंतरतमं निर–तिशयानंदनिरवधिकप्रेमविषयत्वादुन्नी–यते । पूर्वोक्तक्रमानुसारेणैव च तादृशविशुद्धात्मशरीरोपरि कोशवदाच्छादकः प्रथमः आनंदमयकोशः, कारणशरीरं, द्वितीयतृतीयचतुर्थाः विज्ञानमनःप्राणमयाः कोशाः सूक्ष्मशरीरं, पंचमस्त्वन्नमयः स्थूलशरीरं च बाह्यबाह्यतरबाह्यतम-आवरण–रूपत्वेन सर्वांतर-विशुद्धानंदात्मस्वरूपाभिव्यक्त्युत्कर्षतारतम्यानुभवात् क्रमेण प्रमापकर्षवन्त अनुभूयंते । तेन अपंचीकृतपंचमहाभूतसमष्ट्यात्मक-विज्ञानमयकोशमारभ्य पंचीकृतपंचमहाभूतात्मकः सर्वोऽपि स्थूलदेहान्तः सर्वोप्ययं भूतवर्गः आनंदमयकोशभावापन्नात्मन एव कार्यभूत इति सिद्धम् । विज्ञानमयकोशस्य तु शद्बादिरूपधर्मसाध्यफलाकृष्यमाणत्वेन पूर्वोक्तसजातीया-कर्षणन्यायेनैव शद्बादिसजातीयत्वसिद्धेः पंचभूतसमष्टिरूपता सिध्यति । — " विज्ञानं यज्ञं तनुते " इत्यादिना तस्य यज्ञादिकर्तृत्वश्रवणेन यज्ञादीन् प्रति सुतरां शेषत्वात् शद्बाद्याकृष्यत्वं अनपवादमेवेति सर्वेषां भूतानां अविद्यात्मक-कारणशरीरावच्छिन्नात्मनः सकाशादुत्पत्तिः श्रुतिसिद्धा युक्तिमतीच चरकेणापि

स्वग्रंथ अनूद्यमाना नैवापलापमर्हतीति सिद्धं । इत्थं च सति एतद्विरोधिनी परमाण्वादिमूलकजगदुत्पत्तिवादिनी वैशेषिकादिप्रक्रिया श्रुतिविरुद्धत्वात् वेदांत-दर्शनद्वितीयाध्यायोक्तदूषणगणग्रस्तत्वात् चरकादिभिरनुक्तत्वाच्च नास्माकं सिद्धान्तः । न वा मध्यस्थानां केषामपि स्वीकारयोग्यतामर्हति किंतु शाखाचंद्र-न्यायेन पूर्वोक्तश्रौतसिद्धांतमार्गप्रदर्शिका एवेत्यवहितमनोभिरवधेयम् ।

## अष्टमप्रश्नस्योत्तरम् ।

व्यवकीर्णशद्वस्य पृथक्करणार्थकत्वात् भूतानां पृथक्करणं कथं भवतीति प्रश्नस्याशयो भवति । तत्र अपंचीकृतपंचमहाभूतानां बहिरिन्द्रियाग्राह्यत्वस्य-सिद्धान्तत्वात् बहिरिंद्रियग्राह्यस्य स्थूलस्य च पंचीकृतत्वेन एतेषां पृथक्करणं न स्थूलेंद्रियसाध्यं कदापि भवितुमर्हति । किंतु ईश्वरस्य संकल्पानुगृही-तत्तददृष्टादिहेतुकं शद्वादिपंचविषयपृथक्करणं तत्तत्श्रोत्रादींद्रियरूपेण तद्गतशद्वादिवासनापंचकरूपेण च विद्यमाने भूतसंख्याविमर्शप्रस्तावोक्ततर्क-गम्यं स्वानुभवगम्यं च समेषामस्तीत्येव कथयामः । यथा च अस्माभिरनुष्ठा-तुमशक्यस्यापि ईश्वरादिप्रयुज्यमानस्याप्यर्थस्य सत्यत्वाभ्युपगम आवश्यकः तथा प्रयोजननिरूपणावसर एव मार्तण्डमंडलादिदृष्टान्तोपदर्शनेन युक्त्युपष्टंभादे-वास्माभिः स्फूटीकृतमिति नात्र शंकालेशस्याप्यवकाशः ॥

## नवमप्रश्नस्योत्तरम्

भूतानां सृष्टिकारणत्वं कीदृक् इति इदानीं श्रौतसिद्धांतानुसारेण निरूप्यते । तत्र एकतन्तुकपटोत्पत्तेर्दर्शनात् पटादिकं प्रति तंतुद्वयसंयोगादेः आरंभवादाभिमतं असमवायिकारणत्वं तन्तुद्वयस्य समवायिकारणत्वं च सर्वथा युक्त्यपेतम् नैव स्वीकारार्हम् । न च तत्र तंत्ववयवांशुसंयोगानामेव कारणत्वं अस्त्विति वाच्यम्, तन्तुरूपावयविद्रव्यावष्टब्धेष्वंशुषु पटकार्योत्पादासंभवात् । समवायेन द्रव्यं प्रति समवायेन द्रव्यस्य प्रतिबंधकताया आरंभवादिभिरभ्यु-पगमात् । तन्तोरेव स्वावयवांशसंयोगस्तत्र पटकारणमित्यपि न सम्यक् । अव-

यवावयविनोरयुतसिद्धत्वेन तयोः संयोगासंभवात् । युतसिद्धयोरेव संयोग इति हि उक्तं प्रशस्तपादभाष्ये । ययोर्द्वयोरेकमपराश्रितमेवावतिष्ठते तावयुतासिद्धौ । एवं च युतसिद्धत्वं तावत् पृथगाश्रयाश्रयित्वं पृथगतिमत्वं वा इति तद्भाष्योक्तेः अवयवावयविनोश्च अयुतसिद्धत्वेन संयोगासंभवात् । किंच सहस्रतन्तुकपटस्थले शततमतन्तुसंयोगे सति खण्डपटोत्पत्तिः सहस्रतन्तुसंयोगेन महापटोत्पत्तिः इति तत्र पटद्वयप्रत्यक्षं बहुपटप्रत्यक्षं च दुर्वारम् । तस्मात्पूर्वोक्तरीत्या कार्येष्वनुवृत्त-मानस्य सामान्यस्यैव कारणत्वं व्यावर्तमाना विशेषाः सर्वेऽपि कार्यरूपाएव इति विवर्तपरिणामवादावेव सिद्धान्तः ।

ब्रह्मणो विवर्तकारणत्वं मायायास्तु परिणामिकारणत्वमिति विवेकः। तादात्म्यसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितकार्यसमसत्ताकतादात्म्यसंबन्धावच्छिन्नकारणत्वं परिणामिकारणत्वं । तद्विषमसत्ताकतादात्म्यसंबन्धावच्छिन्न कारणत्वं विवर्तकारणत्वम् । मायाजगतोः पारमार्थिकव्यावहारिकप्रातिभासिक-रूपत्रिविधसत्वमध्ये व्यावहारिकसत्तारूपसमसत्ताकत्वमेव । ब्रह्मणस्तु पारमार्थिक-सत्वेन विषमसत्ताकत्वं, अतो विवर्तकारणत्वम्, तथा च एकस्यैव द्रव्यस्य विवर्तोपादानत्वे एकस्यैव च परिणाम्युपादानत्वमिति स्वीकारात् न अवयव-द्वयोपादानकत्ववादिआरंभवादे अनुपपद्यमानस्य एकतन्तुकपटादेरनुपपत्तिः, न वा संयोगस्यासमवायिकारणत्वमपि । संयोगस्थानाभिषिक्तक्रियाविशेषस्य निमित्त-त्वेन एव उपपत्तौ संयोगस्य तत्कारणत्वे मानाभावात् । किंच संयोगस्य कारणत्वे उत्पन्नस्य द्रव्यस्य पुनरुत्पदापत्तिर्न वारयितुं शक्यते । क्रिया-विशेषस्यैव च कारणत्वे न सा आपत्तिः, तस्याः स्वजन्मोत्तरसंयोगोत्पत्तिकाल एव कार्योत्पादकत्वाभ्युपगमेन उत्पन्नस्य पुनरुत्पादप्रसंजकत्वभावात् । इदमेव च स्पष्टीकृतं बृहदारण्यकवार्तिकसारे यथाः—

मृत्तिका घटहेतुः स्यात् मृदस्तत्रानुवर्तनात् ।<br>
मृदस्त्ववान्तरावस्था पिंडस्यानुनुवर्तनात् ॥<br>
एकस्मिन्नेव वियति चांद्रं तेजोभिभूयते ।

सौर्येण तेजसा तद्वत् पिण्डेनाव्रियतां घटः ॥
एकस्यां मृदि पिण्डाद्याः कार्याः सन्ति सहस्रशः ।
यस्याभिव्यक्तिसामग्री स्यात्तेनान्येऽत्र संवृताः ॥
पिण्डेनाऽव्रियते कुंभः कुंभेनापि कपालकम् ।
कपालेनावृतः कुंभः एवमन्योन्यसंवृतिः ॥
कुंभेनैव कपालाख्या कुभांशा भांत्यतो घटः ।
न कपालैरावृतश्चेत् न विभक्तस्तदावृतेः ॥
यदि पिण्डावृतिः कुंभः कुलालस्तर्हि साधनैः ।
भंगायैवावृतेर्यत्नं कुर्यान्न घटनिर्मितौ ॥
एवं चोदयतस्तेऽत्र कोभिप्रायस्तमीरय ।
किमुत्पत्तिं वारयसे किंवा दण्डादिसाधनम् ॥
आद्य इष्टो द्वितीये तु मा दण्डादि निवार्यताम् ।
घटाभिव्यक्तिहेतुत्वाद्ग्राह्यं दण्डादिसाधनम् ॥
अनेकसाधना यस्मात् अभिव्यक्तिर्जगत्यसौ ।
वस्तुभेदादतो लोकसिद्धं साधनमिष्यताम् ॥
दीपेन व्यज्यते रूपं नवनीतं तथा घटः ।
दण्डादिना ततः सर्वं स्यादेव व्यक्तितः पुरा ॥
तमो विनाशनायैव दीपश्चेदस्तु तावता ।
सदैव व्यज्यते सर्वं इति नैवापनुद्यते ॥
भावाभावोत्पन्ननष्टशब्दप्रत्ययभेदधीः ।
अभिव्यक्तितिरोभावद्वैविध्यादुपपद्यते ॥
व्यक्तो दीपेन भावःस्यात् जातो व्यक्तस्तु दण्डतः ।
पिण्डावृतस्त्वभावः स्यात् नष्टः च्छन्नः कपालकैः ॥
एवं व्यक्त्या वरणयोर्बहुत्वादेक एव सन् ।
उच्यते बहुभिःशब्दैः तदुदाहियते पुनः ॥
कुड्यावृतस्त्वसंस्पृष्टः स्पृष्टो व्यक्तस्तु पाणिना ।

मोहावृतस्त्वविज्ञातो ज्ञातो व्यक्तः प्रमाणतः ॥
ननूदाहरणेष्वेषु तत्तदावृत्तिभंगतः ।
अन्या कास्यादभिव्यक्तिः यया कार्यं नियम्यते ॥
अभिव्यक्तेरनन्यत्वे शिलया पिण्डभंगतः ।
अभिव्यज्येत कुंभोयं विना दण्डादिसाधनैः ॥
उच्यते तावदज्ञातज्ञातोदाहरणेन्तिमे ।
भेदे विशद एवाभिव्यक्त्या वरणभंगयोः ॥
अज्ञातत्वावमृष्टयर्थं आदित्सन्ते हि मानिनः ।
मानानि मानसंबंधात् अज्ञातत्वं च नश्यति ॥
पिण्डे घटे कपालादौ याऽनुवृत्ता विभाति सा ।
मृदेव सर्वहेतुः स्यात् कार्याः पिण्डादयोऽखिलाः ॥
विरुद्धानेककार्याणां युगपज्जन्म नेष्यते ।
एकस्मात्कारणात्तेन पिण्डादेः क्रमभाविता ॥
पिण्डाद्यखिलकार्येण विना मृत् क्वापि नेष्यते ।
अतोऽसती मृदिति चेत् न मानेनोपलंभनात् ॥
असाधारणरूपेषु व्यावृत्तेष्वितरेतरम् ।
बहुष्वेकं यदा भाति प्रत्यक्षं कारणं तु तत् ॥
कारणस्यास्तिता तस्मात्सिद्धा कार्योदयात्पुरा ।
कार्यस्याप्युदयात्पूर्वं यथास्तित्वं तथोच्यते ॥
सत्तु पूर्वं जगत्कार्यं तमोऽन्तस्थघटादिवत् ।
अभिव्यक्तित्वधर्मित्वादन्यथा स्यान्नृश्रृंगवत् ॥
सत्यामपि हि सामग्र्यां वंध्यापुत्रोह्यसत्वतः ।
अभिव्यक्त्याऽलंबनत्वं न कदाचित् प्रपद्यते ॥
सदेव चेत् सदाकार्यं घटः पिण्डकपालयोः ।
कालेऽपि चोपलभ्येतेत्येतच्चोद्यं न युज्यते ॥
विद्यमानत्वमात्रेण नाभिव्यक्तिर्भवेद्यतः ।

सद्वस्त्वेवानभिव्यक्तं तत्सामग्र्यां च लक्ष्यते ॥
अविज्ञातो ज्ञातुमिष्टः ज्ञायमानोऽथ विस्मृतः ।
स्मर्यते स्मृत इत्येवं सन्नेवं बहुधोच्यते ॥
लोके सामग्र्यभावाद्वा कुड्याद्यावृत्तितोऽथवा ।
सन्घटोऽपि न दृश्येत पिंडस्थो नेक्ष्यते कुतः ।
आवृतत्वादिति ब्रूमः पिण्डेनैव तदावृतिः ॥
न पिण्डस्थो घटः किं तु मृन्निष्ठः पिण्डसंस्थितः ।
कुंभदेशाद्भिन्नदेशं कुड्याद्यावरणं भवेत् ॥
अभिन्नदेशपिण्डेन कुंभ आव्रियते कथम् ।
मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति चेत् ॥
मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ।

मेयाभत्वमभिव्यक्तिः नश्येदज्ञातता तया ॥
घटोऽवगत इत्येतत् ततः संपद्यते फलम् ।
एवं दीपप्रकाशेन सप्रकाशो घटो भवेत् ॥
घटनिष्ठः प्रकाशोयं घटनिष्ठं तमोनुदेत् ।
एवं दण्डादिना मृत्स्थः घटाकारः स्फुटो भवेत् ॥
पिण्डाकारस्तिरोधत्ते ततो दण्डाद्यपेक्षते ।
शिलया पिंडभंगे तु व्यज्येतान्यत्तदा मृदि ॥
कार्यं विदलचूर्णादि तेनाप्यावृत्तता घटे ।
अतो नियतमेवात्र कार्याभिव्यक्तिसाधनम् ॥
सदेवव्यज्यते कार्यं नापूर्वं जायते ततः ।
भाषामात्रविभेदोयं इति चेत्तर्ह्यवैदिकीम् ॥
त्यक्त्वा भाषां कार्यसत्तां वद वैदिकभाषया ।
भूतभावीघटौनस्तः तव सन्तौ मते मम ॥
तयोर्ज्ञानं सद्विषयं वर्तमानस्य धीरिव ।
अतीतानागतोर्थोऽसन् इति यद्युच्यते तदा ॥

अतीतानागतज्ञानं भ्रांतमैवेश्वरं भवेत् ।
प्रागभावस्तथा ध्वंसइत्याद्या वाङ्युतीरिताः ॥
अभावा ब्रह्मकार्यत्वात् सद्रूपाः स्युर्घटादिवत् ।
भावत्वस्याविशेषेऽपि यथाजलभुवोर्भिदा ॥
भावावान्तरभेदाः स्युः प्रागभावादयस्तथा ।
लोके प्रसिद्धिमुल्लंघ्य किं भावत्वदुराग्रहात् ॥
कार्यं तवेति चेत्तवा किं कार्यं वेदलंघने ।
अभावव्यवहारस्तु भावत्वेप्युपपद्यते ॥
भावान्तरमभावो हि कयाचित्तुव्यपेक्षया ।
सदेव कार्यमित्युक्त्या व्यावर्त्यं किं भवेद्वद ॥
अभाव इति चेत् तर्हि सोभ्युपेयो बलात्त्वया ।
बाढमभ्युपगच्छामि शून्यत्वं भ्रान्तिकल्पितम् ॥
तन्निवृत्याथभावत्वं युक्तियुक्तमिहोच्यते ।
किं प्रागभावः प्रध्वंसात् भिद्यतेऽथ नभिद्यते ॥
अभेदे तेऽपसिद्धान्तः भेदे भेदकमुच्यताम् ।
विलक्षणस्वरूपत्वं न तयोः शून्यमात्रयोः ॥
न चौपाधिकभेदः स्यात् शून्यस्योपाध्यसंभवात् ।
घटस्य प्रागभावो यः सपिण्डोपाधिको यदि ॥
तर्ह्यत्र मानं वक्तव्यं प्रत्यक्षं तु न युज्यते ।
नीरूपप्रागभावस्य चाक्षुषत्वमसंगतम् ॥
पिण्डे दृष्टे प्रागभावः दृष्ट इत्येष ते भ्रमः ।
प्रागभावव्यवहृतिर्यदि पिण्डदृशस्तदा ॥
स एव प्रागभावोऽस्तु किमुपाधितया तव ।
पिण्डत्वप्रागभावत्वे एकस्याप्यविरोधिनी ॥
स्वतः पिण्डोथपेक्ष्यान्यं प्रागभावत्वमश्नुते ।
प्रागभावस्त्वदृष्टश्चेत्येवं तत्सत्वदर्शने ॥

भावस्येवोपपद्यते न शून्यस्य निरात्मनः ।
युक्तियुक्तं वैदिकं च मतं त्यक्त्वा दुराग्रहात् ।
कुतर्कसमये लग्नः किम्मुधा परिमुह्यसि ।
अभावस्यापि भावत्वे कुतः कार्यमसद्भवेत् ।
कारणस्य तु भावत्वमविवादं मतेऽपि ते ॥

एवमेव संयोगस्थानाभिषिक्तक्रियाया एव यथा कारणत्वं तथा अत्रैव-ग्रंथे नवनीतदृष्टांतेन प्रपंचीतं विवेकिभिर्द्रष्टव्यं । एवं च पूर्वोक्तरीत्या भूतानां भूतभावापन्नमायारूपेण सृष्टिपरिणामिकारणत्वमेव निश्चप्रचम् ।

## ॥ दशमप्रश्नस्योत्तरम् ॥

न्यूनपरिमाणस्य द्रव्यस्य बहुसंख्याकस्य संयोगे सति तदुपादानकस्य तत्संयोगासमवायिकारणकस्य कार्यस्योत्पत्तिः आरंभवाद्यभिमता । कार्यन्यून-परिमाणस्य दुग्धादेः क्रियाविशेषवशात् स्वसमानसत्ताककार्यरूपापत्तिः परिणामवादाभिमता इति परिणामारंभकक्रिययोर्विशेषः । तत्रारंभक्रिया यथा न संभवति तथोपपादितमधस्तात् ॥

## ॥ एकादशप्रश्नस्योत्तरम् ॥

तदेवमेकस्यैव भावरूपाज्ञानस्येश्वरसंकल्पवशात् आकाशादिपृथिव्यन्त-भूतभावापन्नस्य पूर्वोक्तप्रक्रियाया पंचीकृतत्वे स्थूलभूतस्वरूपत्वाद्दृश्यत्वमभ्यु-पगम्यते, इति बहिरिंद्रियग्राह्यविशेषगुणवत्त्वरूपं भूतत्वं दृश्यानामपि पृथिव्या-दिनामस्त्येव, इयान्परं विशेषः तेषां पंचीकृतत्वेन व्यवकीर्णभूतत्वं न संभवति ।

## ॥ द्वादश-त्रयोदशप्रश्नस्योत्तरम् ॥

'एलिमेंट' संज्ञकानां द्विनवतिसंख्याकानां प्रतीच्यरासायनिकैर्मुलतत्व-तयांऽगीकृतानामपि अस्मन्मतरीत्या भूतत्वमेव ।

'खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्' । इति चरकाचार्योक्तरीत्या कठिणत्वद्रवत्वोष्णत्वचलत्वानां भूजलतेजोवायुधर्माणां एलिमेंटसंज्ञकेषु सर्वेषु पदार्थेषु उपलभ्यमानत्वेन तेषां पांचभौतिकत्वेन स्थूलत्वनिश्चयात् । किंच इलेक्ट्रोनप्रोटॉनसंज्ञकयोर्विद्युत्कणयोरपि अबिन्धनं दिव्यं विद्युदादीत्यस्मन्मत-सिद्धरीत्या अबिंधनतेजोविशेषरूपत्वमेव । चलत्वेन वायुधर्मस्य, उष्णत्वेन तेजो धर्मस्य, पदार्थसंग्राहकत्वेन संग्रहजनकस्नेहरूपगुणविशेषस्य, अनुमीयमानत्वेन जलस्य च सिद्धत्वात् । इति न पंचमहाभूतातिरिक्तत्वमेतेषां केषामपि युज्यते । विस्पष्टावबोधार्थं प्रतीच्यरासायनिकैरंगीकृतानां द्विनवतितत्वानां परिष्कृतानि लक्षणानि अस्मदीयविज्ञानार्थसंग्रहे द्रष्टव्यानि ।

अथेदानीमत्यावश्यक एको विषयो विचार्यते, अगस्त्यकृतविमानसंहि-तायां तावदुच्यते:—

संस्थाप्य मृण्मये पात्रे ताम्रपत्रं सुसंस्कृतम् ।
छादयेत् शिखिग्रीवेण चार्द्राभिः काष्ठपांसुभिः ॥
दस्तालोष्टो निधातव्यः पारदाच्छादितस्ततः ।
संयोगाज्जायते तेजः मित्रावरूणसंज्ञितम् ॥
अनेन जलभंगोस्ति प्राणोदानेषु वायुषु ।
एवं शतानां कुंभानां संयोगः कार्यकृन्मतः ॥
वायुगंधकवस्त्रेण सुबद्धो यानमस्तके ।
उदानःस्वलघुत्वेन बिभर्त्याकाशयानकम् ॥

इत्यादिना हॅड्रोजनसंज्ञकोदानवायुनिर्माणप्रकारमुपदिश्य तद्वारा-विमान-निर्माणम् तत्रोक्तम् । मित्रावरुणसंज्ञकविद्युतेजःप्रवाहेणप्राणवायूदानवाय्वो-र्मध्ये जलस्य भंगोप्युपदिष्टः । इममेवजलभंगमाश्रित्य प्रतीच्यवैज्ञानिकाः जलस्य एलिमेंटसंज्ञकमूलतत्वत्वं न संभवति इति वदन्ति-तत्तु न संभवति इलेक्ट्रोन प्रोटानसंज्ञकयोर्विद्युत्कणयोरपि पांचभौतिकत्वस्य साधितत्वात् । प्रतीच्य-रासायनिकमते परममूलतत्वतयांगीकृतानां इलेक्ट्रोनप्रोटॉनादिसंज्ञकानां विद्युत्क-

णानामपि जलाद्यारब्धत्वस्योक्तत्वेन जलतत्वस्य भौतिकजगन्मूलकारणतायां अविवादात् । न हि परमाणुक्रमेणोत्पत्तिः परमसिद्धान्तेऽभ्युपेयते, किन्तु मूलकारणादेव क्रियाविशेषेण परमाण्वादिरूपस्यांगीकारात् न मूलकारणत्वसंपत्तये परमाणुत्वमावश्यकम् । किंतु मूलकारणस्य खण्डशोभवनरूपावस्थाविशेषस्य चरमः परिणामः कार्यभूतः परमाणुः स क्वचित् विच्छेदकस्य सत्वे विच्छेदक्रियाया हस्तगतत्वे च लभ्यते । अन्यथा तु न लभ्यते एव । नैतावता मूलकारणत्वस्य कापि क्षतिः । न हि मूलकारणं ब्रह्म आब्रह्मस्तम्बपर्यंतपरिमाणं देहेषु जीवभावेनोपलभ्यते जीवभावापन्नमिति कृत्वा ब्रह्मणो जगदुपादानत्वे कश्चिद्विप्रतिपद्यते इत्येव तत्वम् ।

ऑक्सिजनहॅड्रोजनसंज्ञकयोः प्राणोदानवाय्वोः जलभंगकथनं न तु जलस्य सर्वथा विनाशप्रतिपादनपरं पूर्वोदाहृतवार्तिकसारोक्तदिशाविनाशस्य सर्वथैवासंप्रतिपत्तेः । किंतु

**नष्टदुग्धभवं मस्तु मोरटं जेज्जटोऽब्रवीत् ।**

इत्यादौ नीरतादात्म्यापन्नस्य दुग्धस्य नीरात् पृथग्विविक्तत्वमेव-यथा नष्टत्वपदार्थः, न तु सर्वथा नाशः घनीभूतस्य क्षीरद्रव्यस्य आमिक्षायाः तत्रोपलंभात् । तथैव जलभंग इत्यत्र जलस्यापि प्राणोदानवायुभ्यः विविक्तत्वमेव तदर्थः । मूलकारणस्य जलस्य सर्वथा नाशासंभवात् । विविक्तस्यापि सतस्तस्य पृथगनुपलब्धिस्तु प्राणोदानवायुचारणादुपपन्ना । पठ्यते ह्यायुर्वेदरसायनतंत्रेषु चारणा नामिका कापि रासायनिकी क्रिया, यत्र बुभुक्षितपारदेन सुवर्णे चारिते सति सुवर्णस्य स्वरूपेणानभिव्यक्तिः पारदरूपेणाभिव्यक्तिश्च भवति, गुरुत्वं तु सौवर्णं पारदे अधिकमागच्छति इत्युपलभामहे । तथैव प्राणोदानवायुभ्यां स्वतो लघुभ्यामपि तत्पृथक्करणक्रियया पृथक्कृतस्य जलस्य चरितत्वात् जलस्वरूपानुपलंभः जलगुरुत्वेनैव तयोर्गुरुत्वं चोपपन्नं । अस्मदीयप्राचीनरसायनतंत्रप्रतिपाद्यानि रासायनिककर्माणि च तंत्रेषु उक्तानि इहावश्यमेवानुसन्धेयानि यथा–

स्वेदनमर्दनमूर्छनस्थापनपातननिरोधनियमाश्च ।
दीपनगगनग्रासप्रमाणमथजारणविधानं ॥
गर्भद्रुतिबाह्यद्रुतिसंरागसारणाश्चैव ।
क्रामणवेधौ भक्षणमष्टादशधेति रसकर्म ॥

अथ तेषां लक्षणानुच्यंते । स्वेदः स्वेदनं —

क्षाराम्लैरौषधैर्वापि दोलायंत्रे स्थितस्य हि ।
पाचनं स्वेदनाख्यं स्यात् मलशैथिल्यकारकम् ॥

इत्युक्तेः मलशैथिल्यकारकम् पाचनमेव स्वेदनशब्दार्थः । मर्दनं खल्विदं यत्पेषणम् ।

उद्दिष्टैरौषधैः सार्धं सर्वाम्लैः कांजिकैरपि ।
पेषणं मर्दनाख्यं स्यात् बहिर्मलविनाशनम् ॥

इत्युक्तेः । बहिर्मलविनाशनक्षमं पेषणमेव मर्दनशब्दार्थः —

स्वरूपस्यविनाशेन पिष्टत्वापादनं हि यत् ।
विद्वद्भिर्जितसूतोसौ नष्टपिष्टः स उच्यते ॥

मूर्छापादनं इत्युक्त्या नष्टपिष्टकारकं मर्दनविशेषेण मूर्छनम् —

मर्दनादिष्टभैषज्यैर्नष्टपिष्टप्रकारकम् ।
तन्मूर्छनं हि वार्यद्रिभूर्जकंचुकनाशनम् ॥

इत्युक्ते प्रोक्तकंचुकविशेषात्मकमलनाशनम् तत्फलम् । स्थापनमुत्थापनं-चेत्येकः पदार्थः तच्च ।

स्वेदपातादियोगेन स्वरूपापादनं हियत् ।
तदुत्थापनमित्युक्तं मूर्छाव्यापत्तिनाशनम् ॥

उर्ध्वाधस्तिर्यग्भेदेन पातस्त्रिविधः —

उक्तौषधैमर्दितपारदस्य यंत्रस्थितस्योर्ध्वमधश्च तिर्यक् ।
निर्यापनं पातनसञ्ज्ञमुक्तं वंगाहिसंपर्कजगकंचुकघ्नम् ॥

फलं स्पष्टमेव । रोधः कुंभमध्ये निरोधनं तदुक्तम् –

जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् ।
स्थितिराप्यायनी कुंभे यासौ रोधनमुच्यते ॥

आप्यायनमेतत्कर्मणः फलम् । संयमनं नियमः –

रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत् ॥

दीपनं स्वेदनविशेषः –

धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः ।
ग्रासार्थं त्रिदिनं स्वेदः दीपनं तन्मतं बुधैः ॥
इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ।
इयतीत्युच्यते यासौ ग्रासमानमितीरितम् ॥

इति वचनसिद्धं ग्रासप्रमाणं नाम संस्कारः –

ग्रासस्य चारणं गर्भद्रावणं जारणं तथा ।
इति त्रिरूपा निर्दिष्टा जारणा वरवार्तिकैः ॥

इति जारणा संस्कारः । तत्र चारणा द्विविधाः –

समुखा निर्मुखा चेति चारणा द्विविधा पुनः ।
निर्मुखा चारणा प्रोक्ता बीजदानेन भागतः ॥
शुद्धस्वर्णं च रूप्यं च बीजमित्यभिधीयते ।
चतुःषष्ट्यंशबीजस्य प्रक्षेपो मुखमुच्यते ॥
एवं कृते रसो ग्रासलोलुपो मुखवान् भवेत् ।
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ॥
इयं हि समुखा प्रोक्ता जारणा मृगचारिणा ।
दिव्यौषधिसमायोगात् स्थितः प्रकटकोष्ठिषु ॥
भूंजीताखिललोहाद्यं योसौ राक्षसवक्त्रवान् ।
इयं हि निर्मुखा प्रोक्ता जारणा वरवार्त्तिकैः ॥
रसस्य जठरे ग्रासक्षेपणं चारणा मता ।
ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ॥

बहिरेव द्रुतीकृत्य घनसत्त्वादिकं खलु ।
चारणा या रसेंद्रस्य सा बाह्यद्रुतिरुच्यते ॥

एवमष्टादशानां कर्मणां पृथक्पृथक्फलानां रासायिनकप्रक्रियाया-मुपलभ्यमानत्वात् । तेषामुदाहृतवचनेषु पारदविषयत्वेनावभासनेपि कांजि-कादिद्रव्यविशेषकरणकत्वावभासेनापि भावभावनाकरणद्रव्ययोर्विशेषाणां अवि-वक्षितत्वेन सर्वत्रापि भौतिकद्रव्ये प्रसरः संमत एव । अतएव स्वर्णादीनामपि जारणादिकं रसायनक्रियादिषूक्तं संगच्छते । अतएव च नष्टपिष्टकारकमूर्च्छना-ख्यकर्मविशेषेण मूर्च्छितमूर्तपदवाच्यानां पंचीकृतपंचमहाभूतानामपि पिष्टसदक्ष-द्भावनेन एकैकाभ्यःअपंचीकृतपंचमहाभूतव्यक्तिभ्यः विभ्वीभ्यः पंचीकरणात्मक-मूर्च्छितावस्थाप्रापिणीभ्यः पिष्टभावापन्नाभ्यःपरमाणुद्व्यणुकादिरूपपिष्टावयवानामु-त्पत्तिरपि साधुसंगच्छते पूर्वोक्ता । एवंविधं मूर्तत्वमुपलक्ष्यैव मूर्च्छनान्मूर्तमित्युक्तं, पुराणेषु पंचीकृतवस्तुजातमित्यनवद्यम् । अन्यविधस्य मूर्च्छनपदार्थस्य रासाय-निकप्रक्रियातुल्यायां सृष्टिप्रक्रियायां योजनाया अननुरूपत्वात् इति ॥

## ॥ चतुर्दशपंचदशप्रश्नयोरुत्तरम् ॥

सत्येवं पंचीकृतानां परमाणूनां तदेव तन्मात्रमिति व्युत्पत्तिनिष्पन्न-तन्मात्रपदवाच्यत्वं सुतरामसंभवमेव । अतः प्रागुक्तदिशा श्रोत्रेंद्रियान्तःपाति-वासनामयशरीराणां शब्दादीनामेव तन्मात्रत्वं प्रागेवोपवर्णितमस्माभिरित्यवश्येयम् ।

स्यादेतत् शब्दादीनां पंचानां गुणानां पूर्वोक्तयुक्त्या वासनान्यथा-नुपपत्त्या पृथग्भावसिध्या पंचत्वसिद्धावपि कथं तदाश्रयभूतानां द्रव्याणां भूतपदवाच्यानां पंचत्वसिद्धिरुपपद्यते ? गुणगुणिनोर्भेदादिति । अत्र ब्रूमः गुणादिकं गुण्यादिभ्यो भिन्नाभिन्नं समानाधिकृतत्वादित्याद्यनुमानबलेन गुणिगु-णिनोर्भेदभंगात् । प्रपंचितश्चायमर्थः आकरग्रंथेषु । न च गुणिगुणिनोर्भेद आत्यंतिकः प्रतीच्यै रासायनीकैरभ्यूपेयते इत्यलमत्राकाण्डताण्डवेन ।

भूतानां शब्दतन्मात्रारूपत्वे कथं गुरुत्वादिगुणयोगित्वं इति शंकायां तु

प्रतिविधानमुच्यते । यथा हि सिद्धे शद्बादीनां पंचानां पृथक् भावेनास्तित्वे तदाकृष्यमाणानां इंद्रियाणां आकर्षणान्यथानुपपत्या तत्तज्जातीयत्वे; तथैव गंधादिगुणयोगिषु द्रवेषु गुरुत्वादीनां गुणानां बहुलं उपलब्धेः मूलकारणस्थितानां गुरुत्वादिसंस्काराणां गंधादिसंस्कारैराकृष्टत्वस्य नियततत्साहचार्यान्यथानुपपत्या कल्पनीयत्वेन, आकर्षणस्य असति बाधके साजात्येनैव निर्वाहात्, गुरुत्वादियोगिनां द्रव्याणां गंधाद्यधिकरणपृथिवीत्वादिजातीयत्वसिद्धिरप्रत्यूहैव । पूर्वोक्तानां च सर्वेषामपि गुणादिसाधर्म्याणां गंधादिगुरुत्वादिसमानाधिकरणजातिविशेषवत्वपरिचायकत्वेन जातिघटितलक्षणरूपतया परिणमनीयत्वाभ्युपगमात्, न केवलं गुरुत्वादिसंस्काररूपद्रव्येषु गंधादिगुणाभावेऽपि पूर्वोक्तसाधर्म्याणां अव्याप्तिशंकाकलंकावकाश इति रमणीयम् ।

## ॥ षोडशप्रश्नस्योत्तरम् ॥

अत्र प्रतीच्यरासायनीकाः गुरुत्वं वस्तुनो लक्षणम् गुरुत्वरहितानां तु पदार्थानामवस्तुत्वमेव इति प्राच्यदार्शिनिकैः स्वीकृतयोः पृथिवीजलयोः गुरूणि द्वे रसवति इत्यादिदर्शनात् गुरुत्वयोगित्वेन कथंचिद्वस्तुत्वसंभवेऽपि तेजोवाय्वाकाशानां तद्रहितानां अवस्तुत्वमेव न्याय्यमिति । तदेतत् अज्ञानविजृंभणं । न हि वस्तुत्वं गुरुत्वव्याप्यं सकलप्राणीप्सितस्य सुखस्य सर्वजनजिहासितस्य दुःखस्य कृमेरपि "मा न भूवंन भूयासमिति;" प्रेमास्पदस्यात्मनश्च गुरुत्वराहित्ये अवस्तुत्वापत्तेः । इष्टापत्तिरितिचेन्न । सर्वप्राणिसाधारणप्रेप्सा जिज्ञासाविषयस्यापि अवस्तुत्वे तदुद्देशिके प्रतीच्यवैज्ञानिकानामपि तत्साधनेषु प्रवृतिनिवृती कथं न व्याव्हन्येयातां ?। तस्मात् वस्तुतत्वापर्यालोचिप्रतीच्यवैज्ञानिकदेशिनामबोधमात्रविजृंभितमात्र एवायं गुरुत्वाश्रयस्यैव वस्तुत्वमिति प्रवादः बालिशप्रवादवत् प्रेक्षावाद्भिरुपेक्षणीय एव । अतएव नव्यप्रतीच्यवैज्ञानिकाः जगदुपादानं इति वदन्तः गुरुत्वाद्यनपेक्षकृतामेव परमार्थभूताम् वस्तुत्वव्यवस्थापिकां जगदुपादानभूतां मन्यन्ते । अस्मन्मते गुरुत्वं तावत् तमोगुणधर्मः, क्रिया तु रजोगुणस्य इति । पूर्णतमोनिष्ठा प्रतीच्यवैज्ञानिका इदानीं

कालमहात्म्यात् रजोगुणनिष्ठतामवाप्ता इति तु वस्तुस्थितिः । सत्येवं क्रियाशीलयोः तेजोवाय्वोः वस्तुत्वं नव्यतरवैज्ञानिकदृष्ट्यापि इदानीं शक्यमेवेति तेजोवाय्वोर्द्रव्यत्वे न कापि क्षतिः । तत्सिद्धिस्तु रूपवासनास्पर्शवासनयोः इतरवासनाविविक्तयोः सिध्या उष्णस्पर्शाश्रयत्वेन च अप्रत्यूहैव । एकस्यैव द्रव्यस्य कदाचिदुष्णत्वं जलादेः संतापितस्य निर्वापितस्य शीतलत्वमित्यादिप्रक्रिया तु सर्वस्यापि बाह्येंद्रियोपलभ्यपदार्थस्य पंचभूतात्मकत्वादुपपन्ना । अतएव शीततरहस्तेन उपलभ्यमानस्य जलस्योष्णस्योष्णतया यस्यैव उपलंभः, तस्यैव च उष्णतरहस्तेन उपलभ्यमानस्य शीतत्वोपलंभश्च तत्तद्धस्तंप्रति द्रव्यांतर्वर्तितेजोजलयोः उद्भवानुद्भवाभ्यां चारणोत्थापनाख्यरासायनिककर्मकृताभ्यां उपपन्ना । इति न कोऽपि पूर्वापरविरोधः अत्र शंकितुमपि शक्यः ।

## ॥ सप्तदशप्रश्नस्योत्तरम् ॥

ननु अस्तु नाम उक्तरीत्या क्रियाशीलयोः तेजोवाय्वोः नव्यतरप्रतीच्यदृष्ट्याप्यास्तित्वं । आकाशस्य तु सर्वथा गुरुत्वशून्यस्य निष्क्रियस्य च नव्यतरप्रतीच्यदृष्ट्या कथं वस्तुत्वसिद्धिसंभव इति चेदत्र ब्रूमः ' निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनं । " इत्यादि श्रुत्युपदर्शितस्वरूपस्य निर्गुणस्य आत्मस्वरूपस्यापि सच्चिदानंदघनस्य निखिलप्रेप्सितस्य वस्तुत्वाभ्युपगमावश्यकतायाः प्रतीच्यैरपि दुरपह्नवत्वेन तमोनिष्ठतामिव रजोनिष्ठतामपि विहाय प्रतीच्यैरपि सत्वनिष्ठतां आश्रित्य स्वप्रकाशानंदरूपाणां पदार्थानामपि अस्तित्वं एष्टव्यमेव। तत्र ध्वन्यात्मकस्य शद्बस्य वायुगुणत्वेन क्रियासाहचर्येऽपि तदभिव्यज्यमानस्य वर्णात्मकस्य शद्बस्य नित्यत्वेन विभूत्वेन अर्थाश्रयत्वेन च द्रव्यरूपस्य अंगीकारावश्यकतया शद्बवासनारूपस्य ध्वन्यादिशद्बस्यापि श्रोत्रैकमात्रग्राह्यविषयस्य सत्वेन स्पर्शविनाकृतशद्बतत्वस्य पूर्वोक्तन्यायेनांगिकरणीयतया च तस्यैव नभोरूपत्वसिद्धेरप्रत्युहत्वात् । वर्णात्मकस्य तु शद्बस्य ध्वनिं विनैव मौनिश्लोकादिस्थले रेखाविन्यासाद्यभिव्यंग्यस्य अनिर्वचनीयस्य सिद्धेः न ध्वनिरूपत्वमादाय वायुधर्मत्वाद्याशंकनमुचितं । मनोमयकोषस्य विशेषतः वर्णात्म-

कशब्दमयत्वप्रतिपादनादपि प्राणमयापेक्षया अभ्यंतरत्वसिद्धेः वाय्वतिरिक्तत्व-सिद्धिः । एतदेव आकाशद्रव्यं तामसं शुद्धमाकाशद्रव्यमित्युच्यते । राजसस्य प्राणांतर्गतत्वात्, सात्विकस्येंद्रियान्तःपातित्वात्, निष्पन्नस्य तामसस्यैव विभु-विषयाकाशरूपत्वौचित्यात् तस्य चात्मनः सकाशादुद्भवः, " तस्माद्वा एत-स्मादात्मन आकाशः संभूतः " इति श्रुत्या उच्यते । यथा हि सुषुप्तस्यात्मनः न अहमित्याकारेण स्वाभाविकपरानादविषयत्वं स्वप्ने जागरणे च तद्विषयत्वं । तथैव सुषुप्ततात्परात्मनः हिरण्यगर्भोत्पत्तौ तदनंतरं विराडुत्पत्तौ च अहमित्या-कारकपरानादविषयत्वं । अयं चाहं शब्दः प्रत्याहारन्यायेन अकारहकारात्मक-वर्णद्वयप्रत्याहाररूपत्वात् मध्यवर्तिसकलवर्णस्वरूपप्रापकः, ळकारस्य लकारा-दभिन्नत्वात्, क्षकारस्य कषसंयोगरूपत्वानातिरिक्तमूर्तिता । तथा च प्रत्या-हारन्यायेन अहं शब्दस्य वाचकत्वसिद्धे वाच्यभूतानां सर्वेषामपिवर्णानां तद-भेदासिद्धिः । स्पष्टश्चायमर्थः मंत्रशास्त्रदर्शिनां । सर्वस्याप्यक्षरसमाम्नायस्य परा-नादविवर्तत्वेन नादस्य च पराशब्दाभिधेयस्यः—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।<br>वैखरी वाक् प्रयोक्तृणां प्राणवृत्तिनिबंधना ॥

इत्युक्तदिशा तत्तदुपाधिभेदेनैव ककारादिरूपतां लभत इति अहमा-ख्यस्य नादस्य सकलवर्णरूपत्वं सिद्धं । अयमर्थश्च वाक्यपदीयादिदर्शिनां सुस्पष्टावगमः ।

किंच आकारादिलिपीनामपि देवनागर्याद्यक्षरारूढानां उक्तार्थोपष्ट-म्भकत्वं तर्क्यते । सृष्ट्युद्भवस्थले हि चिद्बिंदुः अचिद्बिन्दुरिति बिंदुद्वयस्यैव समस्तसृष्ट्यारंभकत्वम् । लोकेऽपि स्त्रीबिन्दुपुरुषबिन्दुसंयोगादेव सर्वत्र सृष्टि-दर्शनात् । तत्र शिवशक्तिसमावेशदशायां बिंदुद्वययोगे सति उभयानुभूतस्य दण्डाकारस्य तन्मध्ये जीवस्य तृतीयस्य प्रवेशो भवतीति लोकसिद्धमिदं । एतद्-दृष्टान्तेन जगन्मूलभूतस्य बिन्दुद्वययोगस्यापि अनुमीयमानत्वेन तस्य ' स

आत्मानं द्वेधा अपातयत, इति श्रुत्युक्तदिशा द्विधा करणे सति एकोंशः स्फुटचिद्रूपः अपरस्तु स्फुटाचिद्रुप इति व्यवस्थायां तयोः परस्परमौन्मुख्ये सति शून्यरूपता वैमुख्येतु आकारहकारलिपिरूपता इति दृष्टत्वेन सर्वस्यापि तदुपादेयस्य प्रपंचस्याहमात्वसिद्धिः इत्यादिरतुलः प्रपंचः मंत्रशास्त्रेष्वेव द्रष्टव्यः। तत्सिद्धमाकाशस्यापि स्वतंत्रमास्तित्वं, सुषुप्तावस्थात्मनः प्रथमसृष्टिरूपत्वं नादरूपत्वात्। तच्च सर्वथानप्रपंचनीयमेव। तस्य च नादस्य निरवयवमेव परमार्थः। तस्यावयवाः पुनः अष्टादशसंस्कारान्तर्गतमूर्छनसंस्कारानिष्पाद्याः घटाकाशमठाकाशादिरूपाः संभवन्त्येवौपाधिकपरिछेदस्य तत्राभ्युपगमात्। तथा च वर्णात्मकशद्वरूपेण अर्थाश्रयतयाऽवकाशरूप एव आकाशः। शद्वलिंगेन अर्थाश्रयत्वेन च लिंगेन सर्वत्रानुमीयते। मधुशद्वाभिलप्यमानस्य अर्थस्य माधुर्यमुपलभ्यते। कठोरशद्वाभिलप्यमानस्य तु कठोरत्वम्। पश्यति स्त्रीति वाक्ये हि न मधुरोऽर्थः प्रकाशते। विलोकयति कान्तेति उक्ते माधुर्यमर्थस्य प्रकाशते इत्यनुभवात्, शद्वविवर्तत्वमर्थस्य सिद्धं। अर्थविवर्ताधिष्ठानशद्वगतस्य माधुर्यादेः शुक्तिकारजतस्थले शुक्तिकागतत्रिकोणत्वादेः अधिष्ठेयरजतादाविव अर्थविवर्ते अनुवर्तनस्य न्याय्यत्वादिति सिद्धमर्थाश्रयत्वं शद्वस्य। तत्सिद्धमाकाशनामकं अतिरिक्तद्रव्यम्।

## ॥ अष्टादशैकोनविंशप्रश्नयोरुत्तरम् ॥

पंचमूलभूतेभ्यः एकैकमहाभूतानां उद्भवक्रमश्च पूर्वमेव निरूपित इति नेह वितन्यते।

यत्तु प्रतीच्यवैज्ञानिकाः ईश्वराख्यस्य कस्य चनास्तित्वं विनैव तर्कावष्टंभस्वप्रयोगेन च किंचित् वदन्ति तत्तु यावत् पर्यन्तं सप्रमाणतया ईश्वराख्यस्य अस्तित्वं न व्यवस्थाप्यते तावत्पर्यन्तं असंभावितास्तित्वस्य तस्य बंध्यापुत्रः किं ब्राह्मणो वा क्षत्रियो वा इति विचारवत् स किं आकाशं वा तेजो वा वायुर्वेत्यादिविचारोऽपि न कक्षीकरणीयतामर्हति। प्रकाशवाहकत्वादिकं तु तत्कार्यमस्मन्मतसिद्धेन वायुनापि संभवति इति सर्वान्तरात्मतत्व-

दर्शनविमुखानां जडवादिनां प्रतीच्यानां मतानि न कथमपि प्रधानभूतस्यात्मदर्शनस्य तदुपष्टंभकस्य पंचमहाभूतसिद्धांतस्य च बाधकानि भवितुमर्हन्ति। तन्न्यायस्य पूर्वमेवावेदितत्वात्।

## ॥ विंशप्रश्नस्योत्तरम् ॥

मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पंचभूतादिसंयोगविशेषजन्यं वा इति प्रश्नसमाधानं त्विदमेव, यत् यावत्पर्यन्तं रसायनमिश्रणद्वारा मृतस्योज्जीवनं नवीनपुरुषोत्पादनं वा प्रतीच्यरसायनिकैर्न क्रियते तावत्पर्यन्तं चैतन्यस्य पंचमहाभूतसंयोजन्यत्वं तन्मतेनाप्यसिद्धमेव। प्राणार्थे 'शरीरावयवपरित्यागदर्शनात्, मानार्थे प्राणत्यागदर्शनात्, ज्ञानार्थे मानत्यागदर्शनात्, प्रयोजनार्थे निष्प्रयोजनज्ञानत्यागदर्शनात्, स्वकीयप्रयोजनानुरोधेन परकीयप्रयोजनत्यागदर्शनाच्च सर्वाभ्यन्तरमिदमात्मतत्वं कथं नाम सर्वथा बाह्यैः चरितार्थयितुं शक्यं। इति सर्वप्रधानस्य सच्चिदानंदस्वरूपस्य आत्मतत्वस्य सर्वप्रपंचातीतत्वमेवेति पूर्वमेवावोचाम।

किंच सर्वस्यैव प्राणिजातस्य अधिकं जीव्यासमिति, अधिकं जानीयामिति, अधिकं सुखीभवेयमिति, कदापि परतंत्रो न भवेयमिति, मदधीनएव सर्वः प्रपंचो भवतीति, च पंच इच्छाः अनुछिद्यमानाः जाग्रति तत्प्रेर्यमाणएव सर्वोपि जन्तु नानाव्यापारेषु प्रवर्तमानो दृश्यते एतादृशप्रवृत्त्यन्यथानुपपत्तिरूपतर्केण तन्मूलभूतेच्छाविषयाणां-निरतिशयास्तित्व-निरतिशयज्ञान-निरतिशयानंद-निरतिशयैश्वर्यरूपाणां पदार्थानां अस्तित्वं वास्तविकमिति सकलहृदयसंवादिनि एतस्मिन्नपदार्थे संशयएव नोल्लसति अस्ति न वेति,।

किंतु—

वेदाः सर्वे-पुराणानि स्मृतयो भारतं तथा।
अस्मिन्नर्थे स्वसंवेद्ये पर्यवसन्ति नान्यथा

इति सूतसंहितोक्तदिशा सर्वस्यापि प्रपंचव्यापारस्य विश्रान्तिभूमिरिद-मात्मतत्वम् न जडरूपतया कथंचिदपि उत्प्रेक्षयितुं योग्यं, इति एतद्बोधनाय

धीधनाबाधतायास्याः तदा प्रज्ञां प्रयच्छथ
क्षेप्तुं चिन्तामणिं हस्ततलस्थं यदि वांछथ ॥
ग्रंथग्रंथिमयेमुष्मिन् सुकरो न हि संचरः
विद्वच्छलथीकृते तस्मिन् दुष्करो न च संचरः ॥

इत्यलम् ।

**॥ श्रीकृष्ण गोविंद हरे मुरारे । हे नाथ नारायण वासुदेव ॥**

# परिशिष्ट ( आ )

## आयुर्वेदाश्रमी वैद्य गोपालशास्त्री गोडबोले चिंचवड [ पुणें ] एषां मतम् ।

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः ।

प्रश्न १—पञ्चमहाभूतविचारप्रयोजनम् ।

उत्तर—पञ्चमहाभूतविचारप्रयोजनम्--पिंडब्रह्मांडरूपप्रपंचावयवानाम् मूलतत्त्वपरिज्ञानम् । महाभूतानि हि पिंडब्रह्मांडरूपप्रपंचावयवानाम् मूलतत्त्वानि, नाम उपादानकारणानि भवंति ।

प्रश्न २—भूतलक्षणं ( किं नाम भूतत्वम् ? ) ।

उत्तर—भूतत्वम् नाम सविशेषशद्वादिमत्त्वम् कार्यद्रव्यारंभकत्वं च ।

प्रश्न ३—भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा? ।

उत्तर—अनेकेन्द्रियार्थाश्रयित्वम् अनेकेन्द्रियार्थोपादानत्वात् ।

प्रश्न ४—भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

उत्तर—खादीनाम् स्वरूपम् अप्रतीघातादिगुणाः शद्वादयः, धर्माः बिविक्ततादयश्च ।

प्रश्न ५—भूतसंख्याविमर्शः ।

उत्तर—भूतचतुष्टयवादीभूतपंचकवादीति द्वौ पक्षौ तत्र पक्षो ज्यायान् भूतपंचकवादी साधकतमत्वात् ।

प्रश्न ६—भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा ?, सादित्वं चेत्तदुत्पत्तिः सक्रमा अक्रमा वा ? ।

उत्तर—दर्शनभेदात् सादित्वम् अनादित्वं च तथापि उभयत्र तदुत्पत्तिः सक्रमोक्ता ।

प्रश्न ७—गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ? ।

उत्तर—तमोगुणात् तन्मात्राणि तन्मात्रेभ्यश्च भूतानि उद्भवन्ति ।

प्रश्न ८—भूतानाम् इतरेतरव्यवकीर्णत्वम् कथम् संपद्यते ? ।

उत्तर—पंचीकरणेन सूक्ष्मभूतानाम् इतरेतरव्यवकीर्णत्वं, ततश्च-स्थूलभूतोद्भवः ।

प्रश्न ९—भूतानां सृष्टिकारणत्वं कीदृक् ? ।

उत्तर—भूतानाम् सृष्टिकारणत्वम् उपादानस्वरूपेण कारणद्रव्यत्वात् ।

प्रश्न १०—परिणामारंभक्रिययोर्विशेषः ।

उत्तर—परिणामक्रियायाम् अवस्थान्तरतापत्तिः, आरंभक्रियायाम् अन्यस्मात् आन्यस्योत्पत्तिः, एवम् अयम् परिणामारंभक्रिययोर्विशेषः ।

प्रश्न ११—दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तर—दृश्यानाम् पृथिव्यादीनाम् न भूतत्वम् भौतिकत्वात् ।

प्रश्न १२—एलिमेन्टसंज्ञकानां द्विनवतिसंख्याकानां प्रतीच्यरासायनिकैर्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा ? ।

उत्तर—द्विनवतिसंख्याकानाम् मूलतत्त्वतयांगीकृतानाम् एलिमेन्टसंज्ञकद्रव्याणाम् न भूतत्वम् भौतिकत्वात् ।

प्रश्न १३—इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ? ।

उत्तर—एतद्विषये किमपि नाद्यैव वयम् विवक्षवः ।

प्रश्न१४—परमाणुतन्मात्रयोर्विवेचनम् तयोर्भेदो वा अभेदो वा ।

उत्तर—आदौ परमाणुतन्मात्रयोर्भेदाभेदलक्षणे उच्येते । तत्र भेदलक्षणं यथा ( १ ) निरवयवः क्रियावान् परमाणुः । ( २ ) निर्विशेषशद्बादिगुणवत् द्रव्यम् तन्मात्रम् । अथ च तयोरभेदलक्षणम् यथा—( १ ) जालान्तरगते रश्मौयत् सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते । ( २ ) भूतानाम् अव्यवहितसूक्ष्मावस्थाविशिष्टद्रव्यम् तन्मात्रम् । ( ३ ) परमाणुतन्मात्रयोर्महाभूतोपादानकारणत्वम् इति । उक्तलक्षणानां पर्यालोचनात्परमाणुतन्मात्रयोर्नात्यन्तम् भेदः नवा अत्यन्तम् अभेद इति सिध्यति ।

प्रश्न १५—द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तर—द्रव्यम् विना नान्यत् गुणाधिष्ठानम् । गुणसमुदायशब्दो गुणाधिक्यबोधकः किंतु न गुणिबोधकः । तस्मात् द्रव्यद्रव्यगुणयोः अभिन्नत्वम् स्वीक्रियते ।

प्रश्न १६—तेजसो द्रव्यत्वम् न वा ? ।

उत्तर—तेजसो द्रव्यत्वम् विद्यते तदेव उपपद्यते च गुणकर्माश्रयत्वात्समवायिकारणत्वाच्च किंतु तेजसः अद्रव्यत्वम् अव्युत्पाद्यं भवति अद्रव्यवत्त्वात् ।

प्रश्न १७—आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भावत्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ? ।

उत्तर—आकाशस्वरूपविमर्शः—आकाशद्रव्यम् भावरूपमेव विद्यते । भावत्वेऽपि तस्य निरवयवत्वम् सूक्ष्मत्वम् एकत्वं च इत्येते धर्माः सन्ति । कस्मात् तस्य विभुत्वात् नित्यत्वाच्च । आकाशलक्षणम्–अप्रतीघातत्वम् अवगाहदातृत्वम् सौषिर्यं च । आकाशगुणः शब्दः ।

प्रश्न १८—पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

उत्तर—पंचमूलभूतेभ्यो नाम शब्दादितन्मात्रेभ्यो एकद्वित्रिचतुःपंचसंख्यकेभ्य आकाशादीनि महाभूतानि उद्भवन्ति ।

प्रश्न १९—ईथराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे तेजसि वायौ वा ?

उत्तर—ईथराख्यद्रव्यस्यअन्तर्भाव आकाशद्रव्ये एवभवति न तु तस्य अन्तर्भावो वायौ तेजसि वा । यत ईथरद्रव्ये आकाशद्रव्ये च विभुत्वम् अप्रतीघातत्वम् अवगाहदातृत्वं च इत्यादि प्रायः साधर्म्यम् विद्यते ।

प्रश्न २०—मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेषजन्यं वा ? ।

उत्तर—मनुष्यादिशरीरेषुचैतन्यम् खलु चेतनाधातोः आत्मन एव प्रभवति न तु तत् कदापि अचेतनेभ्योमहाभूतेभ्यः ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

प्रश्न १—त्रिदोषविचारप्रयोजनम् ।

उत्तर——" दोषधातुमलमूलम् शरीरम् " इत्यादीनि आयुर्वेदप्रोक्तमहावाक्यानि तेषु—मलेभ्यो धातूनाम् धातुभ्योऽपि दोषाणाम् यत् परत्वम् प्रोक्तम् आयुर्वेदाचार्यैः तद्बीजपरिज्ञानमेव त्रिदोषविचारप्रयोजनम् ।

प्रश्न २——वातादीनाम् दोषत्वम् धातुत्वम् मलत्वम् वा । त्रिविधत्वमपि चेत् तत् विरुद्धम् अविरुद्धम् वा ।

उत्तर——वातादीनाम् दोषत्वम् धातुत्वम् मलत्वं च इति त्रिविधत्वमपि आयुर्वेदे उपदिष्टम् भवति । वातादीनाम् उक्तत्रिविधत्वम् प्रत्यक्षतः शास्त्रतश्च अविरुद्धमेव स्वस्थास्वस्थशरीरसम्यक्समीक्षणासिद्धत्वात् स्वस्वेतरतंत्रप्रामाण्याच्च ।

प्रश्न ३——दोषसंज्ञायां हेतुः ।

उत्तर——वातादीनाम् दोषसंज्ञकत्वम् शरीरप्रवृत्तिहेतुनिदर्शकम् तथा शरीरदूषकत्वबोधकम् ।

प्रश्न——कथं त्रय एव दोषाः ? ।

उत्तर——[ १ ] धातुसाम्याधारस्य आहारपरिणामस्य तथा आहारपरिणामकरस्य रसात्मकद्रव्यस्य आहारपरिणामोत्तरविपाकस्य च त्र्यात्मकत्वात् भूयस्त्वात् । [ २ ] धातुसाम्याधारस्य रसपरिणामस्य रसपरिणामकरद्रव्याणां च भूयसा त्रिविधस्वरूपात् । [ ३ ] आहारपरिणामकररसत्रये रसपरिणामकरद्रव्यत्रये च पंचभूतान्तर्भावात् । [ ४ ] निजरोगकारणद्रव्याणाम् शोधनशमनोपाययोस्त्रिविधस्वरूपात् । एवम् उक्तहेतुचतुष्टयात् स्वस्थानस्थिताः स्वलक्षणसंपन्नाः देहधातुविशेषाः कफपित्तवातदोषसंज्ञकाः शरीरे त्रय एव भवन्ति ।

प्रश्न ५——वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तर——वातादीनां द्रव्यरूपत्वमेव आयुर्वेदसंमतम् भवति साक्षात् तथोपदिष्टत्वात्, न तथा शक्तिरूपत्वम् तथोपदेशाभावात् ।

प्रश्न ६——वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तर——वातादीनां व्याप्यत्वे सति स्थूलत्वप्रतीतिः किंच व्यापित्वे सति सूक्ष्मत्वप्रतीतिः । वातादीनां स्थूलत्वप्रतीतिर्नाम प्रत्यक्षप्रमितिः सूक्ष्मत्वप्रतीतिर्नाम् अनुमानप्रमितिः एवं उभयविधप्रतीतिः ।

प्रश्न ७—किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तर—वातादीनां उपादानकारणानि आहार्यद्रव्याणि । अमूनि आहार्यद्रव्याणि परिणामार्थं यदा मुखद्वारा कोष्ठान्तः प्रविष्टानि भवन्ति तदा तेषाम् किंच मुखकोष्ठावकाशेषु स्वस्वस्थानस्थितानां रसात्मकानाम् आहारपरिणामकरकफपित्तादिद्रव्याणां सन्निपातो भवति, तेन आहारः परिणामं आपद्यते । परिणामं आपद्यमाने एव आहारे च शारीरा दोषा उद्भवंति । इदानीम् दोषोद्भवक्रम एवं विद्यते । यथा अविदग्धे आहारे कफोत्पत्तिः । विदग्धे आहारे पित्तोत्पत्तिः । सम्यक् विपक्के आहारे च वायूत्पत्तिः । इति ॥

प्रश्न ८---वातादीनां गुणाः कर्माणि च ।

उत्तर—वातादीनां गुणा रूक्षतीक्ष्णमंदादयः । चलनपचनस्नेहनादीनि तत्कर्माणि ।

प्रश्न ९—वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ?

उत्तर—वातादीनां स्वरूपं सामान्यतो विशेषेण च उपदिष्टम् आयुर्वेदाचार्यैः । तत्र विशेषस्वरूपं नाम वातादीनां प्रत्येकशः पंचविधत्वं । पंचविधत्वं एतत् आयुर्वेदाचार्यैः नामस्थानसंस्थानक्रियाऽमयप्रयोजनभेदेन पृथक् पृथक् प्रतिपादित्वात् वास्तविकमेव न तत्र कल्पनांशः ।

प्रश्न १०-वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तर—वातादीनां रोगकारणत्वं उपादानस्वरूपं निजरोगहेतुनिदर्शकं किंच कीटादीनां रोगकारणत्वं उपादानस्वरूपं आगंतुरोगहेतुनिदर्शकम् । निजरोगाणां उपादानकारणम् परिणामिस्वरूपं । आगंतुरोगाणां उपादानकारणं विपरिणामिस्वरूपं । नहि निजागंतुभ्योऽन्येरोगाः सन्ति न च केऽपि रोगाः कारणैर्विना संभवन्ति । तस्मात् वातादीनां रोगकारणत्वं उपादानस्वरूपं निजरोगहेतुनिदर्शकं इत्यभिप्रायः ।

---

# श्री. नागरलाल मोहनलाल पाठक, उ. पी. आयुर्वेद महाविद्यालये प्रधानाध्यापकाः एषां मतम् ।

## पंचभूतचर्चापरिषदि विचारार्हा विषयाः ।

प्रश्न १---पंचमहाभूतविचारप्रयोजनम् ।

उत्तर—'सदेवसौम्यदेमग्र आसीदेकमेवाद्वितीयं' " इतिश्रुत्या प्रतिपादितं सद्रूपमद्वितीयं ब्रह्म अवाङ्मनसगोचरत्वेन स्वतोऽवगन्तुमशक्यम् " तत्कार्यत्वेन तदुपाधिभूतस्य भूतपंचकस्य विवेकद्वारा तदवबोधनं भवतीति पंचमहाभूतविचारप्रयोजनम् । तथा च पंचदश्यां विद्यारण्यस्वामिनः ।

सदद्वैतं श्रुतं यत्तत्पंचभूतविवेकतः ।
बोध्दुं शक्यं ततो भूतपंचकं प्रविविच्यते ॥

प्रश्न २---किं नाम भूतत्वं, के गुणाः तेषामिन्द्रियार्थाश्रयित्वं कीदृक्, सादित्वादिकं च ।

उत्तर—तत्र भूतत्वं नाम बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषययोग्यविशेषगुणवत्वं । तच्चाकाशादीनामुपलभ्यतेऽत एवाकाशादिषु भूतसंज्ञा व्यवहृता पूर्वाचार्यैः । ' विष्टं भूतं परमपरेण ' इति नयेन आकाशे शब्द एक एव गुणः । वायौ शब्दस्पर्शौ, तेजसि शब्दस्पर्शरूपसंज्ञकास्त्रयो गुणाः, जले तेच रस इति चत्वारः, पृथिव्यां पंचापि गुणाः, इति भूतानामेकेन्द्रियार्थाश्रयित्वमनेकेन्द्रियार्थाश्रयित्वं चोपलभ्यते, एतत्तु सांख्यवेदान्तिनां मतं । नैय्यायिकास्तु भूतानामेकेन्द्रियार्थाश्रयित्वं स्वीकुर्वते । भूतानां कार्यरूपेण सादित्वं, कारणरूपेणानादित्वम्, सांख्ये दृश्यते । न्यायनयेऽपि भूतानां कार्यरूपेणानित्यत्वं परमाणुरूपेण नित्यत्वं प्रतिपादितम् । भूतकारणानि तन्मात्रसंज्ञकानि अनादीनि इति सांख्यदर्शनम् ।

प्रश्न ३---भूतानां सृष्टिकारणत्वं कीदृक् ।

उत्तर---सृष्ट्यारंभस्तु पंचीकृतपंचमहाभूतेभ्य इति सांख्यवेदान्तिनां मतम् । नैय्यायिकास्तु जीवानामदृष्टहेतुना ईश्वरेच्छया वा परमाणुषु क्रिया-उत्पद्यते, ततो द्व्यणुकादिसंयोगाज्जगदुत्पत्तिः इति कथयंति ।

प्रश्न ४---दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तर---अमुनैव हेतुना दृश्यानां पृथिव्यादीनां भूतत्वं न किंतु भूत-कार्यत्वं । यथा मृत्तिकाजातो घटो मृत्तिकातो न विभिद्यते, एवमेव महा-भूतेभ्यो जातं दृश्यपृथिव्यादिकं महाभूतेभ्यो न विभिद्यते ।

प्रश्न ५---दृश्यपृथिव्यादीनां द्रव्यत्वमेव ।

उत्तर---दृश्यं पृथिव्यादिकं भूतकार्यत्वेन द्रव्यम् पदार्थवादेऽपि तेषां द्रव्येऽन्तर्भावः "क्रियागुणवद् द्रव्यं," अथवा " यत्राश्रिताः कर्मगुणाः कारणं समयायि यत्, तद् द्रव्यम्" (चरक) इति द्रव्यलक्षणम् सुव्यवस्थं भूतकार्ये पृथिव्यादौ उपपद्यते, एवमेव तदुपादानभूतपरमाणुष्वपि ।

प्रश्न ६---केषां मूर्तत्वम् ।

उत्तर---मूर्तत्वं नाम अवकृष्टपरिणामवत्वं आकाशस्य महत्परिमाण-वत्वान्न मूर्तत्वम्, इतरेषां मूर्तत्वं ।

प्रश्न ७---तेजसोद्रव्यत्वम् ।

उत्तर---तेजसोऽपि द्रव्यत्वमवश्यमभ्युपेयम् । न नव्यानां मतमिव प्रका-शात्मकं केवलं तेजः, किन्तु उष्णस्पर्शवदपि । उष्णे जले उष्णे वाते च तेजः परमाणूनां समन्वयादुष्णत्वं प्रतीयते तस्मादुष्णस्पर्शवत्परमाणुमदिदं द्रव्यं स्वीकर्तव्यं अन्यथा जलवातस्थोष्णतानुपपत्तेः ।

प्रश्न ८---आकाशस्य द्रव्यत्वं शद्वाश्रयत्वं च कथं ? ।

उत्तर---अथेदमवकाशात्मकमाकाशं द्रव्यं । आकाशस्य द्रव्यत्वे, शद्वस्य विशेषगुणत्वे आकाशाश्रयत्वे च अनुमानप्रयोगाश्चेत्थम् । आकाशं द्रव्यं विशेषगुणविशिष्टत्वाज्जलवत् । शद्वो विशेषगुणः चक्षुरिन्द्रियग्रहणायोग्य-बहिरिन्द्रियग्राह्यजातिमत्वात स्पर्शवत् । शद्वो द्रव्यसमवेतो गुणत्वात् संयोगवत्

इति शब्दस्य द्रव्यसमवेतत्वे सिद्धे " शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् ।

अथ ये नव्या वायोरेव शब्दाश्रयत्वं नाकाशस्य इति वदंति ते पृष्टव्याः; सर्वे विशेषगुणा यावद्द्रव्यभाविनः तेषां भूतैः सह समवायसंबंधात् समवायसंबंधस्य च नित्यत्वात् ।

समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः ।

स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः । ( चरक. ) एवं वायोरेव शब्दाश्रयत्वे यत्र यत्र वायुस्तत्र तत्र शब्द इत्यभ्युपेयं स्यात्, एतत्तु स्पर्शस्यैव घटते न शब्दस्य स्वाश्रयध्वंसप्रयोज्यध्वंसप्रतियोगित्वम् । इति कथं वायोः शब्दाश्रयत्वम् ।

प्रश्न ९—आकाशं भावरूपं वा न

उत्तर--तस्माद्दृष्टद्रव्याश्रितत्वे सति द्रव्याश्रितत्वात् शब्दो द्रव्याश्रितस्तश्च द्रव्यमाकाशमिति सिध्यति । अथेदमाकाशं भावरूपमभावरूपं वेति विचार— आकाशं भावरूपमवकाशात्मकमिति नो मतिः, भवंतीति भावा इति व्युत्पत्त्या सत्तावद्द्रव्यस्य भावरूपत्वं सिद्धयति । सत्तावन्तस्त्रयस्त्वाद्याः [ मुक्तावलिः ] इति आकाशस्य सत्तावत्वं स्वीकृतम् ।

आकाशस्य अभावरूपतास्वीकारे तज्ज्ञानमेव न संभवति । अभावज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वात्, इह भूतले घटाभावः इत्याकारकं घटाभावज्ञानं घटज्ञानपूर्वकमेव संजायते । तस्मादाकाशस्याभावात्मकतां स्वीकुर्वाणाः पृष्टव्या, यत् कीदृशोऽयमभावः । तज्ज्ञाने च किदृक् प्रतियोगिज्ञानं कारणतामवगाहते इति । वादेऽस्मिन्नैयायिकपंडितानामेवाधिकारः । अतस्तन्नियोजनमेव युक्तम् ।

प्रश्न १०—आधुनिकैराविष्कृतानि नवीनतत्वानि ।

उत्तर—पुरातनपंचमहाभूतवादस्याधुनिकपदार्थविज्ञानेन सह समन्वयः कर्तुं शक्यो न वेति नात्र निश्चित्य कथ्यते। आधुनिका द्रव्यस्य Substance लक्षणमेवान्यथा प्रतिपादयन्ति । तेषां मते गुरुत्वगुणवद् द्रव्यम्, पंचमहाभूतानां द्रव्यत्वं मन्यमानानां प्राचीनानां मते गुणकर्मवद् द्रव्यमित्यनयोर्मूल एव

महान् भेदः । परमाणुः Atom गुरुगुणयुक्तः प्रत्यक्षोऽविभाज्यश्चेति केचित्, केचिच्च परमाणुर्विभाज्य इति विवदन्ते नव्याः । प्राचीनास्तु परमाणोरविभाज्यतामतीन्द्रियतां च स्वीकुर्वन्ति, रूपादिगुणयोगस्तु परमाणुष्वपि न निवार्यते प्राचीनैः । सर्वेषां परमाणूनां रासायनिकसंयोगे Chemical Compound गुणपरिवर्तनं भवतीति नव्या भाषन्ते, प्राचीनास्तु पृथिवीपरमाणुष्वेवाग्निसंयोगाद्गुणपरिवर्तनं भवति नान्येषु, संस्काराद् द्रव्येषु परमाणूनामूनातिरिक्तविशेष उपपाद्यते तद्विशेषाच्च द्रव्येषु गुणान्तराधानं शक्यं न परमाणुषु इति वदन्ति । एवं च जलवायुतेजसां स्वरूपविमर्शे लक्षणनिबन्धने च प्राचीनार्वाचीनपंडितानां महान् भेदः ॥

इत्यस्मात्कारणकलापात् ये नव्या इलेक्ट्रोन प्रोटोन एलीमेन्टसंज्ञकानां नवीनतत्वानां सृष्ट्युत्पादने हेतुतां स्वीकुर्वन्ति ते कया रीत्या स्वसिद्धान्तं स्थापयन्ति, कानि लक्षणानि तेषां नवीनतत्वानां, के वा गुणधर्माः, कयारीत्या वा तेभ्यः सृष्ट्युत्पादनप्रकार इति सर्वं तेभ्य एव याथातथ्येनावगम्य सांख्यवेदान्तन्यायदर्शनपारावारपारदृश्वानः पंडितमहोदयाः स्वसिद्धान्तं स्थापयिष्यन्ति। वयं च तेषां पंडितवरेण्यानां साहाय्यमवलम्ब्य यथामति सिद्धांतप्रतिपादनाय प्रयत्नं करिष्याम इत्यत्र विरम्यते, । उपरिष्टात्तद्विषयकमस्मदीयमतं प्रतिपादयिष्यामः । विषयेऽस्मिन्समन्वयसाधनाय History of Indian philosophy by dasgupt तथा च History of hindu chemistry by Vrajendranate Seel इत्येतत्पुस्तकद्वयं समालोचनीयम् । ग्रन्थयोरनयोः कयारीत्या पंचमहाभूतवादस्याद्यतनपदार्थविज्ञानेन सह समन्वयः कृत इति सम्यगवेक्षणीयम् । विषयेऽस्मिन्नन्यत्सर्वमवसरप्राप्तं तत्रैव कथयिष्यामः ।

**अथ त्रिदोषचर्चापरिषदि विचारार्हविषयाणां क्रमशः संक्षेपेणोत्तरं लिखामः ॥**

## उत्तराणि.

**१ प्रश्नाकाः**—शरीरस्वास्थ्यसंरक्षणम् ।

२-३ वातादीनां दोषधातुमलसंज्ञा भिन्नप्रयोजननिबन्धनाः परस्परं न विरुध्यन्ते ।

४ स्वातंत्र्येण दूषकत्वं दोषत्वमिति त्रय एव दोषाः ।

५ वातादीनां शक्तिविशेषसंयुक्तद्रव्यत्वं न केवलं शक्तिस्वरूपा एते इतिवाच्यम् दोषापत्तेः ।

६ वातस्य सूक्ष्मत्वं कफपित्तयोरुभयत्वं सूक्ष्मत्वं स्थूलत्वं च । अत्र सूक्ष्मत्वं नाम दृक्प्रत्यक्षायोग्यत्वं तदन्यत् स्थूलत्वम् ।

७ अन्नादेव तेषामुद्भवः । तत्तदन्नगतपंचभूतविशेषा एव तान् जनयंति । अष्टांगसंग्रहे वातादीनामुपादानं द्रष्टव्यम् ।

८ वातादीनां गुणकर्माणि आयुर्वेदीयतंत्रेषु स्थले स्थले वर्णितानि, येभ्योऽनुमीयंते दोषाः । नात्र विस्तरभयाल्लिख्यंते ।

९ वातादीनां पंचविधत्वं स्थानकार्यभेदोपाधिजन्यं न वास्तविकं ।

१० आयुर्वेदे तु " रोगस्तुदोषवैषम्यम् । न हि समानस्थो दोषो विकारं जनयति । " इति च सिद्धांतवाक्यं वर्तते । कीटाणूनां रोगकारणत्वं वातादिदोषप्रकोपमतिरिच्य न संभवति ।

## ॥ अन्ये विचारार्हा विषयाः ॥

### क्रमेणोत्तरदानम्.

१ आयुर्वेदशास्त्रं देशकालविशेषाद्रोगविशेषा जायंते इति मतं श्रद्दधाति । अतश्च नवीनाविर्भूतानां रोगाणामायुर्वेदे संग्रहः कर्तव्यः ।

२ उपयोगिनां नवीनौषधानां संग्रहोपि अवश्यमेष्टव्यः ।

३ प्रतिसंस्करणमपि कर्तव्यम् । वर्तमानासु संहितासु असामंजस्यं प्रत्यक्षविरोधित्वं च बहुषु स्थलेषु विद्यते तत्परिमार्जनीयं, सूत्रात्मकानां विषयाणां विस्तरः कर्तव्यः ।

एवं त्रिदोषसिद्धांतविषयकाः सामान्याश्च ये प्रश्ना भवद्भिः प्रेषितास्तेषां संक्षेपमात्रेणोत्तरदानं कृतम् । विस्तरस्त्वत्रानावश्यकः । तं तु यथावसरं तत्रागत्य करिष्यामः ।

ता. १०।८।३५.

॥ श्रीमद्धन्वन्तरये नमः ॥

## कविराज लक्ष्मीकांत दामोदर पुराणिक

### प्रधानाध्यापकः–पुराणिक आयुर्वेद विद्यालय नागपूर

### ऐषां मतम् ।

---

### त्रिदोषादि चर्चापरिपादिविचारार्हा विषयाः ।

१ प्रश्न–त्रिदोषविचार प्रयोजनम् ।

उत्तर–त्रिदोषाणां स्वरूपविनिश्चयार्थं ।

२ प्रश्न–वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तर–त्रिविधत्वं, अविरुद्धम्, ( कार्यानुमेयी संज्ञा )

३ प्रश्न–दोषसंज्ञायां हेतुः ? ।

उत्तर–दूषीकरणाद्दोषाः इ. ।

४ प्रश्न–कथं त्रय एव दोषाः ?

उत्तर–वातः, पित्तं, कफः ।

५ प्रश्न–वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं, वा ?

उत्तर–द्रव्यरूपत्वं ।

६ प्रश्न–वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं, वा ? ।

उत्तर–उभयत्वम् ।

७ प्रश्न–किं वातादीनामुपादानम् ?, उपादानात्तेषां उत्पत्तिक्रमश्च कीदृशः ? ।

उत्तर–पञ्चमहाभूतं, आकाशवायू, ( वातः ) तेजसः ( पित्तं ) अम्भःपृथिवी ( कफः )

८ प्रश्न–वातादीनां गुणाः कर्माणिच ।

उत्तर--अकुपितः समस्थितः;

**गुणः**—वात, रूक्ष, लघु, शीत, दारुण, खर, विशद, इ.

पित्त--सस्नेह, उष्ण, तीक्ष्ण, द्रव, अम्ल, सर, कटु, इ.

कफ--गुरु, शीत, मृदु, स्निग्ध, मधुर, स्थिर, पिच्छिल, इ.

**कर्म**—वात, उत्साह, उछ्वास, निश्वास, चेष्टा, धातुगति,

पित्त--दर्शन, पक्ति, उष्मा,

कफ-स्नेह, बंध, स्थिरत्व,

९ प्रश्न--वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं, वास्तविकं काल्पनिकं वा ? तथा तत्-स्थान कार्यभेदोत्पन्नं,

उत्तर--वास्तविकं,--स्थानकार्यभेदोत्पन्नं,

१० प्रश्न—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ।

उत्तर—रोगस्तु दोष वैषम्यं, (कालार्थ कर्मणां योगो हीनमिथ्याति मात्रकः)

कृमिदोषः—कीटादीनामपिरोगकारणत्वं भवति, तथापि उपरिनिदर्शितं मुख्यतः त्रिदोषकारणं भवति । कृमिदोषः अप्रधानः ।

---

## मदनगोपाल यदुनन्दनोपाध्याय एषां मतम् ।

कथं त्रय एव दोषाः ?

शरीरस्य पाञ्चभौतिकत्वात्तत्र खवायुतेजोजलपृथ्व्यतिरिक्तन्न किमपि द्रव्यमृत आत्मनः । अतः पंचैव दोषाः संभवितुं शक्नुवन्ति । तत्राकाशस्य विभुत्वादविकृतत्वाच्च न तस्य दोषत्वं दूष्यत्वम्वा । उपादानादुपादेयः सर्वदा स्थूलो भवतीति सिद्धान्तात् पृथ्व्याः स्वतः स्थूलस्यान्यस्य कस्यचनोपादेयस्य जनकत्वासम्भवात्तस्या अनुपादानत्वम् । अनुपादानत्वाच्च न दोषत्वम् । अतः शेषाणां

वाततेजोजलानामेव शरीरस्य क्षयवृद्धिसाम्योपादानत्वादिमे एव त्रयो दोषाः संभवन्ति । शरीरे यत्किंचित् वायवीयं तद्वायुः; यत्किंचित्तैजसं तत्पित्तम्; यत्किंचिज्जलीयं तच्छ्लेष्मा । एतेषाङ्गुणाः कर्माणि च शास्त्रेषु सुस्पष्टमेव प्रतिपादितानि । न खल्वसात्मेन्द्रियार्थसंयोगप्रज्ञापराधपरिणामा वातादीनदूष्यैव रोगारंभकाः ।

---

## कविरत्न श्री गोस्वामी भैरवगिरी ( मुजफरपूर ) एषां मतम् ।

### त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः-त्रिदोषविचारप्रयोजनम् ।

उत्तरंः—विभिन्नचिकित्सापद्धतीनामाक्षेपैरायुर्वेदसमादरे शैथिल्यमातन्वतां सतामायुर्वेदे पुनराकर्षणम् ।

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरंः--वातादयो दोषाः, धातवो, मलाश्च । तेषामविरुद्धा इमाः संज्ञाः कार्यभेदाश्रयणात् त्रिविधाः परिचिताः ।

३ प्रश्नः--दोषसंज्ञायां हेतुः ।

उत्तरंः—दूषणापरपर्यायाणां विविधविकाराणां जनकत्वादिमे दोषसंज्ञया व्यपदिश्यन्ते ।

४ प्रश्नः--कथं त्रय एव दोषाः ? ।

उत्तरंः—तिसृष्वेव विधासु शारिरिकीणां चेष्टानां विकृतीनाञ्चान्तःपातात् विकारलक्षणानाञ्चापि त्रैविध्यात् अमी त्रित्वन्नातिवर्त्तन्ते दोषाः ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरंः—वातादयो दोषाः शक्तिरूपाः ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:--वातादयः शक्तिरूपेणावस्थिताः सूक्ष्मा अपि लक्षणव्यापारादि-महिम्ना स्थूलाः ।

७ प्रश्नः—किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:—पंचभूतानामन्यतमस्य पवनस्य परिणामभूतो वातः, पावकस्य पित्तं, जलस्य च श्लेष्मा । सचायं परिणामो न तत्वान्तरत्वम् इति भूतपंचकान्नातिरिक्तद्रव्यसंग्रहः । अतस्तत्रैव उत्पत्तिक्रमावरोधः ।

८ प्रश्नः—वातादीनां गुणाः कर्माणि च ।

उत्तरं:—वातादीनां रुक्षतादयो गुणाः उत्साहोच्छ्वासादीनि च कर्माणि चरकसुदान्तसेनादिभिः प्रतिपादितानि ।

९ प्रश्नः—वातादीनां स्वरूपं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ?

उत्तरं:—वातादीनां स्वरूपं पंचविधत्वं च वास्तविकम् । तच्च स्थान-कार्यभेदोत्पन्नम् ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्व-मुतान्येषामपि कीटादीनाम् ? ।

उत्तरं:—वातादयो रोगाणां समवायिकारणम् । दोषाणामेव रोगकारणता । क्वचिदागन्तुके व्याधौ कीटादीनामपि कारणत्वम् ।

## अन्ये विचारार्हा विषयाः ।

१ प्रश्नः—नवाविर्भूतानां रोगाणामायुर्वेदे संग्रहप्रयोजनविचारः ।

उत्तरं:—देशकालादिदोषादुद्भूता नवनवा रोगाः संग्राह्याः ।

२ प्रश्नः—नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे संग्रह-प्रयोजनविचारः ।

उत्तरं: उपयोगिनां नवानां द्रव्याणामपि संग्रहः कार्यः ।

३ प्रश्नः—आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारप्रयोजनविचारः ।

उत्तरं:—शारीर-निदान-प्रतिसंस्कारोऽपेक्षितः ।

## दामोदरशास्त्री कोनकर, ( पनवेल ) एषां मतम् ।

### त्रिदोषादिपरिषदि विचारार्हा विषयाणां यथानुक्रमं उत्तराणि ।

**प्रश्नांकाः—**

१ आविष्कृताऽनाविष्कृतरोगाणां चिकित्सार्थम् ।

२ दोषधातुमलत्वं प्रवृत्तिनिमित्तभेदात् । अविरुद्धम् ।

३ दूष्यान् वृद्धाः दूषयन्तीति दोषाः ।

४ स्वभावो निरनुयोज्यः ।

५ द्रव्यत्वम् ।

६ स्थूलत्वं सूक्ष्मत्वं च ।

७ पंचमहाभूतानि, वाय्वाकाशधातुभ्यां वायुः, अग्नेः तेजसः पित्तं, अंभःपृथिवीभ्यां श्लेष्मा । संग्रहः अनुसंधेयः । पांचभौतिकाः शरीरपदार्थाः ।

८ 'तत्र रूक्षो, पित्तं सस्नेह स्निग्धः' इत्यादयः क्रमेण दोषगुणाः स्रंसव्यास इ. तथैव कर्माणि ।

९ वायुस्वरूपो वातः । द्रवस्वरूपं पित्तं । श्लेष्मा स्थिरः । काल्पनिका भेदाः । स्थानकार्यभेदकल्पिताः ।

१० असमवायिकारणत्वम्, कीटादीनामपि रुजाकर्तृत्वं वर्तते एव । तथा ते दोषप्रकोपहेतवोऽपि । कृमीणामपि भूयांसि लक्षणानि दोषद्वारैणैव ।

# सारस्वतोपाध्याय गणेशदत्तशर्मणो हरिद्वारवासिनो मतम् ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—त्रिदोषविचारप्रयोजनम् ।

उत्तरं:—त्रिदोषायत्तमेवायुर्वेदसर्वस्वम् । तद्विचारादृते न स्यादायुर्वेदविचारारम्भः ।

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरं:—त्रिविधत्वम् । न तत्र कश्चिद् विरोधः ? ।

३ प्रश्नः—दोषसंज्ञायां हेतुः ।

उत्तरं:—" शरीरदूषणाद्दोषा " इति प्रथितचरम् ।

४ प्रश्नः—कथं त्रय एव दोषाः ।

उत्तरं:—" प्रकृत्यारम्भकत्वे सति निरपेक्षत्वेन दूषणात्मकत्वं " दोषत्रयस्येव न कस्यचन द्रव्यान्तरस्य ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरं:—द्रव्यरूपत्वम् ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:—पित्तकफयोरुभयत्वम् वातस्यास्थूलत्वम् ।

७ प्रश्नः—किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:-पंचभूतोपादाना वातादयः । गर्भे बीजरुपेभ्यो भौतिकेभ्यः पित्रोः शुक्ररजोंशेभ्यो, मातुराहाररसस्थेभ्योंशेभ्यस्तन्मयेभ्यश्च । प्रसवानन्तरं तु यथास्वाहाराचारजेभ्यो भौतिकांशेभ्यो दोषत्रयी शरीरे पुष्यति तत् प्रपञ्चितं प्रसादकिट्टोत्पत्तिप्रसंगे चरकवाग्भटाभ्याम् ।

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरः--रुक्षचलाद्याः, सस्नेहतीक्ष्णादयः, स्निग्धशीतप्रभृतयो गुणा वातादीनां सुविदिता एव । कर्माण्यपि विविधानि यथाप्रसंगं लिखितानि सौश्रुतान्येव, यथा चरके वातकलाकलीयेऽध्याये—

" वायुस्तन्त्रयन्त्रधर " इति । " सोम एव श्लेष्मान्तर्गत.......... चापराणि द्वन्द्वानीति " । च. अ. १२ ( सूत्र ) ।

" अग्निरेव शरीरे पित्तान्तर्गतः........चापराणि इन्द्वानीति " च. अ. १२ [ सूत्र ] । अन्यच्चाप्येवमेवान्यत्र यथा प्रकरणं दृश्यते ।

९ प्रश्नः—वातादीनां स्वरूपं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं काल्पनिकं वा ? । तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरः—सर्वशरीरव्यापित्वे वातादिदोषत्रितयस्य वाय्वग्निजलात्मकत्वम् । परंच पंचधाभिन्नत्वे वाय्वादिबहुलपंचभूतपरिणामत्वम् । पंचविधत्वं वास्तविकम् । स्थानकार्यभेदेभ्य एव नामभेदः । स्वरूपभेदश्चाप्यस्त्येव ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरः—विषमं दोषत्रयं रोगाणां समवायिकारणम् । कीटादयस्तु निदानार्थकरा दोषवैषम्यजनकाः कदाचिद्भवन्ति, कदाचा रूपार्थकरा वैषम्यविशेषपरिचायका, यथा कृमि-कुष्ठ-जनपदोध्वंसनीयाख्येष्वध्यायेषु ।

---

## काव्यतीर्थ श्री श्रीकांतशर्मा वैद्यरत्न विहारप्रांतीय वैद्यसंमेलन मंत्री ( पाटणा ) एषां मतम् ।

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—पञ्चमहाभूतविचारप्रयोजनम् ।

उत्तरः--जगतः प्रधानकारणत्वान्महाभूतानां विचारोऽत्यावश्यकः ।

२ प्रश्नः—भूतलक्षणं ( किं नाम भूतत्वम् ) ?।

उत्तरं:—जगतः प्रधानकारणत्वम् भूतत्वम्।

३ प्रश्नः—भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा ?।

उत्तरं:—पञ्चमहाभूतानामाकाशं केवलं कर्णेन्द्रियविषयस्य शब्दस्या-धारोवर्तते, अन्यभूतानि तु स्वकीयेन्द्रियविषयाणां प्रधानतयाऽधिकरणानि-भूत्वाऽपि अन्येन्द्रियविषयाणामपि यथायोग्यमाधाराः संति।

४ प्रश्नः—भूतस्वरूपगुणधर्मादीनां विवेचनम्।

उत्तरं:—शब्दगुणमाकाशं। तच्चैकं विभु नित्यञ्च। रूपरहितस्पर्शवान्वायुः। उष्णस्पर्शवत्तेजः। शीतस्पर्शवत्य आपः। गन्धवती पृथ्वी।

५ प्रश्नः—भूतसंख्याविमर्शः।

उत्तरं:—पञ्चमहाभूतानि।

६ प्रश्नः—भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा ?, सादित्वं चेत्तदुत्पत्तिः सक्रमा अक्रमा वा ?।

उत्तरं:—सादित्वं तदुत्पत्तिश्च सक्रमा।

७ प्रश्नः—गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ?।

उत्तरं:——शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रेभ्यो यथाक्रमं वियद्वाय्वग्निवारिवसुंधराणां पञ्चमहाभूतानामुत्पत्तिर्भवति।

८ प्रश्नः—भूतानामितरेतरव्यवकीर्णत्वं कथं सम्पद्यते ?।

उत्तरं:—भूतानामितरेतरव्यवकीर्णत्वं यथाप्रयोजनं यथावकाशं यथायोग्यं प्रकृतिमहिम्नः संपद्यते।

९ प्रश्नः—भूतानां सृष्टिकारणत्वं कीदृक् ?।

उत्तरं:—भूतानां सृष्टेः समवायि कारणत्वम्।

१० प्रश्न—परिणामारंभक्रिययोर्विशेषः।

उत्तरं:—कर्मणः परिपाकफलं परिणामः, कर्मणः प्रारम्भ आरम्भक्रिया, इत्यनयोर्विशेषः।

११ प्रश्नः—दृश्यानां पृथिव्यादीनां भूतत्वं न वा।

उत्तरं:--दृश्यानां पृथिव्यादीनामस्ति भूतत्वम् ।

१२ प्रश्नः--एलिमेंटसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकै-र्मूलतत्वतयाऽङ्गीकृतानां भूतत्वं न वा ? ।

उत्तरं:- एलिमेंटसंज्ञकानां भूतत्वं न मन्यतेऽस्माभिः ।

१३ प्रश्नः—इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ?

उत्तरं:—न मन्यतेऽस्माभिः ।

१४ प्रश्नः--परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

उत्तरं: -तन्मात्राणि योगिभिरवगम्यानि, परमाणवस्तु अणुवीक्षणयन्त्र-साहाय्येन द्रष्टुं शक्या इत्यनयोर्भेदः ।

१५ प्रश्नः--द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तरं:—द्रव्याणां गुणानाञ्च वस्तुतो भेद एव ।

१६ प्रश्नः—तेजसो द्रव्यत्वं न वा ? ।

उत्तरं:—अस्ति तेजसो द्रव्यत्वम् ।

१७ प्रश्नः—आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भाव-त्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्द अवकाशो वा ? ।

उत्तरं:--आकाशो भावरूपो निरवयवः शब्दगुण अवकाशात्मकश्च ।

१८ प्रश्नः--पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

उत्तरं:--शब्दतन्मात्रादाकाशः शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः, शब्दतन्मात्रस्पर्शतन्मात्रसहिताद्रूपतन्मात्रादग्निः, शब्दतन्मात्रस्पर्शतन्मात्ररूपत-न्मात्रसहिताद्रसतन्मात्रादापः, शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रसहि-ताद्गन्धतन्मात्रात्पृथिवी समुत्पद्यते ।

१९ प्रश्नः--ईथराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे तेजसि वायौ वा ? कथं च सः ? ।

उत्तरं:--ईथराख्यस्य तत्त्वस्य आकाशेऽन्तर्भावः ।

२० प्रश्न.--मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेष-जन्यं वा ? ।

उत्तरं--चैतन्यम् आत्मजन्यं ।

## त्रिदोषादि चर्चापरिषदिविचारार्हा विषयाः ।

१ प्रश्नः--त्रिदोषविचारप्रयोजनम् ।

उत्तरं:--आयुर्वेदीयचिकित्सायाः प्रधानाधारास्त्रयो दोषा वातपित्तकफा अतस्तेषां ज्ञानं चिकित्साविधानार्थमत्यावश्यकम् ।

२ प्रश्नः--वातादीनां दोषत्वं, धातुत्वं मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरं:--वातादीनां दोषत्वं धातुत्वं मलत्वञ्चाविरुद्धम् ।

३ प्रश्नः--दोषसंज्ञायां हेतुः ।

उत्तरं:--रसादीनां धातूनां दूषणद्वातादीनां दोषसंज्ञा ।

४ प्रश्नः--कथं त्रय एव दोषाः ? ।

उत्तरं:--यतो वातपित्तकफैर्दुष्टा एव रसादयो रोगोत्पादने समर्था भवन्ति न तु स्वतंत्रा अतस्त्रय एव दोषा न चतुर्थः ।

५ प्रश्नः--वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ?

उत्तरं:--वातादीनां द्रव्यरूपत्वमेवास्ति ।

६ प्रश्नः--वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:--वातादीनां स्थूलत्वं सूक्ष्मत्वंचेत्युभयत्वमेवास्ति ।

७ प्रश्नः--किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:--समाना औषधान्नविहारा वातादीनामुपादानभूतास्तैरभ्यस्यमानैर्यथोक्तचितं निष्पद्यन्ते पुष्यन्ते च वातादयो दोषाः ।

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरं:-वातस्य गुणाः रौक्ष्यलाघवशैत्यादयः कर्माणिच उत्साहोच्छ्वास-निश्वासादयः । पित्तस्य गुणाः स्निग्धत्वौष्ण्यतैक्ष्ण्यादयः, कर्माणिच

दर्शनपक्त्यूष्मादयः । कफस्य गुणाः गौरवशैत्यमृदुत्वादयः, कर्माणि च स्नेहबन्धस्थिरत्वादीनि ।

९ प्रश्नः–वातादीनां स्वरूपं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ?।

उत्तरं:--वातो गमनशीलः, पित्तं सन्तापलक्षणं, श्लेष्मा संश्लेषणादिकृत्-सौम्यस्वभावः एतेषां पंचविधत्वं स्थानकार्यभेदोत्पन्नं काल्पनिकमेव ।

१० प्रश्नः–वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरं:--रोगोत्पादने वातादीनां प्रधानकारणत्वं कीटादीनां च गौणकारणत्वमस्तीतिदिक् ।

## अन्ये विचारार्हा विषयाः ।

१ प्रश्न --नवाविर्भूतानां रोगाणामायुर्वेदे संग्रहप्रयोजनविचारः ।

उत्तरं:--नवाविर्भूतानां रोगाणामायुर्वेदे चिकित्सासौकर्यार्थं यथोचितं संग्रहणम् समुचितं प्रतीयते ।

२ प्रश्नः--नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे संग्रह-प्रयोजनविचारः ।

उत्तरं:--नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे चिकित्सासौकर्यार्थं यथोचितं संग्रहणं समुचितं प्रतीयते ।

३ प्रश्नः--आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारप्रयोजनविचारः ।

उत्तरं:--आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारस्य चिकित्सासौकर्यार्थं प्रतीयते आवश्यकं प्रयोजनम् ।

---

## श्री. महादेव साहित्यशास्त्री, व्याकरणाचार्य आयुर्वेदाचार्य सप्तसागर [ बनारस ] एषां मतम् ।

### त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः

### दशमप्रश्नस्योत्तरम् ।

रोगनिष्ठकार्यतानिरूपितकारणता केषामिति जिज्ञासायामुच्यते समासतः ।

कारणत्वं द्विधा ज्ञापकत्वरूपं कारणरूपञ्चेति तत्र ज्ञापकत्वं पूर्वरूपाणाम् ।

कारणत्वं त्रिधा—सहकारीनिमित्तोपादानभेदात् तत्र सहकारीकारणत्वं देशकालादीनाम् ।

निमित्तकारणत्वञ्च मिथ्याहारविहारादीनां कीटादीनाञ्च जातव्याधीरूपकार्यात् पृथगुपलब्धेः ।

उपादानकारणत्वं हि विषमाणां वातपित्तश्लेष्मणाम् तेषां वैषम्ये व्याधेरुपलब्धेः साम्ये तदनुपलब्धेरिति आवापोद्वापाभ्यां वातादीनामेवतत्त्वन्नतु-कीटादीनाम् । सत्यां विशिष्टव्याधिक्षमतायां विशिष्टकीटादीनां शरीरान्तर्वर्तित्वेपि व्याधेरनुत्पादात् । क्वचिद्गुल्माश्मर्यान्त्रवृध्यादीनां कीटादिभिरन्तरेणोपलब्धेः ।

**( काक )** वैज्ञानिकोऽन्वयमात्रमवलम्ब्यव्याधिकारणत्वपरीक्षणे प्रवित्तः । तत्परीक्षयापि कीटादीनाम् निमित्तकारणत्वमेव, तल्लक्षणस्य निमित्तकारणत्वेऽव्यभिचारादुपादानकारणत्वे व्यभिचारात् ।

वातादीनां तथात्वे बहिर्जगतांतर्जगतः साम्यञ्चोपलभ्यते तद्यथा—

अप्तेजोमरुतां न्यूनाधिकतमत्वे जगतः प्रलयः समत्वेच स्थितिर्नहि विशिष्टकीटसन्निकर्षाद् बहिर्जगतः प्रलयस्थिती सम्भाव्येते ।

---

# आयुर्वेदाचार्य पांडुरंग हरी देशपांडे, पुणें एषां मतम् ।

## पंचभूतचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—पञ्चमहाभूतविचारप्रयोजनम् ।

उत्तरं:—पंचमहाभूतेभ्यस्त्रिदोषाणां संभवत्वात् ।

२ प्रश्नः—भूतलक्षणं ( किं नाम भूतत्वम् ? ) ।

उत्तरं:—निखिलचराचरसृष्टद्रव्याणां मूलयोनिर्भूतत्वम् । खरद्रवचलोष्णत्वाप्रतीघाता भूजलानिलतेजःखानां लिंगानि ।

३ प्रश्नः--भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा ? ।

उत्तरं:--शद्वादिष्विंद्रियार्थेषु ख्यादीनामाश्रयित्वं ' एक गुणः पूर्वो गुणवृद्धिः परे परे ' इत्यनेन नियमेन वर्तते ।

४ प्रश्नः--भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

उत्तरं:--स्वतंत्रप्रबंधे क्रियते ।

५ प्रश्नः-- भूतसंख्याविमर्शः ।

उत्तरं:--पंचैव भूतानि ।

६ प्रश्नः--भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा ?, सादित्वं चेत्तदुत्पत्तिः सक्रमा अक्रमा वा ? ।

उत्तरं:--तन्मात्राप्रकृतित्वाद्भूताः सादयः, अनुद्भूतत्वाच्च तन्मात्राणां, भूतानामनादित्वमपि स्वीक्रियेत । सादित्वे यथाक्रमं शद्वादिविशेषेभ्यो भूतानामुत्पत्तिः ।

७ प्रश्नः--गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ? ।

उत्तरं:--तन्मात्राभ्यो गुणा भूताश्च सहजन्मानः । न गुणेभ्यो भूतोत्पत्तिर्नच कारणांतरेभ्यः ।

८ प्रश्नः--भूतानामितरेतरव्यवकीर्णत्वं कथं संपद्यते ।

उत्तरं:--भौतिकोत्पत्तिसमये सर्वेषां संमीलितानामेवोत्पादनसमर्थत्वमत-स्तदा व्यवकीर्णत्वं भवति ।

९ प्रश्नः--भूतानां सृष्टिकारणत्वं कीदृक् ? ।

उत्तरं:--स्वतंत्रप्रबंधे विवेचितम् ।

१० प्रश्नः--परिणामारम्भक्रिययोर्विशेषः ? ।

उत्तरं:--स्वतंत्रप्रबंधे विवेचितम् ।

११ प्रश्नः--दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तरं:--तेषां भौतिकत्वम् न भूतत्वम् ।

१२ प्रश्नः--एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकै-र्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा ? ।

उत्तरं:-एलिमेंट्संज्ञकानां न भूतत्वमथ तु भूतजन्यत्वात्तेषां भौतिकत्वमेव ।

१३ प्रश्नः--इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ? ।

उत्तरं:- एतेषामपि भौतिकत्वम् ।

१४ प्रश्नः--परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

उत्तरं:--स्वतंत्रप्रबंधे विवेचितम् । तयोर्भेदः आद्यानां भूतमयत्वात् ।

१५ प्रश्नः--द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तरं:--गुणमयत्वमेव द्रव्यस्वरूपम् । अतो गुणत्वाद्गुणसमुदायत्वाद्वा-द्रव्यस्याभेदः ।

१६ प्रश्नः--तेजसो द्रव्यत्वं न वा ? ।

उत्तरं:--भूतत्वात्तेजसो न द्रव्यत्वम् । भौतिकानि हि द्रव्याणि ।

१७ प्रश्नः--आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भाव-त्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ?

उत्तरं:--भावरूप एवाकाशः शब्दगुणत्वात् गुण्याभावाच्च गुणोत्पत्तेः

असंभवात् अभावाच्च सर्वथा गुणसंभवाऽभावः। सर्वत्र च शब्दोपलब्धेराकाशस्य विभुत्वम् ( सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् )।

१८ प्रश्नः–पंचमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ?।

उत्तरः–तात्त्विकस्वरूपा एव मूलभूतास्तन्मात्रावस्थाः । तेषामुद्भूतत्वं ( नाम प्रत्यक्षप्रयोजको धर्मः ) भूतत्वम् । तच्च पंचीकरणेन भवति ।

१९ प्रश्नः–ईश्वराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे, तेजसि, वायौ वा ? कथं च सः ।

उत्तरः–आकाशे ईश्वरं चेद्वायुस्वरूपं, आकाशस्य वाय्वाधिष्ठानत्वात् । तत्रापि किंचित्स्वरूपवत्वादाकाशवायुतेजोमयमीश्वरं भवितुमर्हति ।

२० प्रश्नः–मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पंचभूतादिसंयोगविशेष-जन्यं वा ? ।

उत्तरः--चैतन्यमात्मजन्यमेव । चैतन्याद्भिन्नं जीवत्वं पंचभुतादिसंयोग-विशेषजन्यम्।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः–त्रिदोषविचारप्रयोजनम् ।

उत्तरः–आयुर्वेदस्य मूलभूतत्वात्त्रिदोषाणाम् ।

२ प्रश्नः–वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरः–यद्यप्यवस्थाप्रसंगभेदाद्दोषाणां धातुसंज्ञया मलसंज्ञया वा कुत्र-चिदुल्लेखस्तथापि दोषसंज्ञयैव ते सर्वत्र व्यवहर्तव्याः । तेन दोषणामेवैषां त्रिविधत्वं न संभवति ।

३ प्रश्नः--दोषसंज्ञायां हेतुः ।

उत्तरः--दूषणात्मकस्वरूपावबोधाय दोषसंज्ञा ।

४ प्रश्नः--कथं त्रय एव दोषाः ? ।

उत्तरः- त्र्यधिकक्रियाभावात्क्रियात्रयकर्तारो दोषा अपि त्रय एव ।

५ प्रश्नः--वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरं:--वातादयः शक्तिमन्ति द्रव्याणि, न केवलानि द्रव्याणि शक्तिर्वा । अन्योन्याभावेऽकार्यकर्तृत्ववत्वात् ।

६ प्रश्नः--वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:--शक्त्यावस्थायां सूक्ष्मत्वं द्रव्यावस्थायां स्थूलत्वम् ।

७ प्रश्नः-किं वातादीनामुपादानं ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ?

उत्तरं:–पंचमहाभूता वाय्वादीनामुपादानम् । वाय्वाकाशधातुभ्यां वायुस्तेजसः पित्तमंभःपृथिवीभ्यां श्लेष्मेत्युत्पत्तिक्रमः ?

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरं:--रौक्ष्यादयस्तैक्ष्ण्यादयः स्निग्धतादयो वातादीनां गुणा वियोजनपचनश्लेषणानि च कर्माणि ।

९ प्रश्नः--वातादीनां स्वरूपं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरं:--वातादीनां स्वरूपं वास्तविकं रौक्ष्याद्यात्मरूपवर्णितत्वात् । पित्तस्यैकः कफस्य च पंचेत्येते एव प्रकारा स्थानकार्यभेदोत्पन्नाः । इतरे [ वातस्य पंच पित्तस्यचोर्वरिताश्चत्वारः ] सार्वदेहिककार्यभेदोत्पन्नाः ।

१० प्रश्नः--वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरं:--वातादीनां वैषम्यमापद्यमानानां रोगकारणत्वम् । तेषामेव रोगकारणत्वम् । तथापि निजरोगेषु । कीटादय आगन्तुत्वेन रोगोत्पादकास्तदा पाश्चाद्दोषानुबधः ।

---

# श्री. नारायणदत्तशास्त्री (यशवंतगंज, इंदोर सिटी) एषां मतम् ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—त्रिदोषविचारप्रयोजनम् ।

उत्तरंः—चिकित्सासौकर्यं ।

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरंः--त्रिविधत्वं, अविरूद्धं च ।

३ प्रश्नः—दोषसंज्ञायां हेतुः ।

उत्तरंः—दुष्टिकरणाऽस्वरूपयोग्यत्वं ।

४ प्रश्नः—कथं त्रय एव दोषाः ? ।

उत्तरंः—न्यूनाधिकसंख्याभावात् शीतोष्णानुष्णाशीतातिरिक्ताभावाच्च ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरंः—द्रव्यत्वं ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरंः—उभयरूपत्वम् ।

७ प्रश्नः-किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ?

उत्तरंः--क्रमेणानिलानलजलान्युपादानं उत्पत्तिक्रमो गगनादिक्रमेण भवति ।

८ प्रश्नः—वातादीनां गुणाः कर्माणि च ।

उत्तरंः-स्पर्शादयो, रूपादयो, रसादयो गुणाः। रूक्षणं, पचनं, स्नेहनं च कर्माणि क्रमेण ।

९ प्रश्नः—वातादीनां स्वरूपं. तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरः—शरीरघटकत्वे सति रूक्षादिजनकत्वं तच्च स्थानकार्यभेदोत्पन्नं काल्पनिकं ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरः—वातादीनां रोगकारणत्वं नैजत्वं शारीरत्वं वा अन्येषां कीटादीनामागंतुत्वम् ।

---

## पं. दामोदर शर्मा गौड, आयुर्वेदिक कॉलेज, बी. एच्. यू. एषां मतम् ।

### त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

---

४ प्रश्नः—कथं त्रय एव दोषा ? ।

उत्तरः—चत्वारस्तु दोषाः, वातादिवत् रक्तस्यापि प्राधान्येन धातुदोषमलरूपत्वात् अन्येषां रसमांसादीनान्तु न दोषत्वम्, प्राधान्येन तथात्वाभावात् रक्ताधीनत्वाच्च । सुश्रुते यथा—" तेषां क्षयवृद्धी शोणितनिमित्ते " रक्तस्यच वातादिषु त्रिषु कीदृशः प्रभाव इत्यपि विचारार्हो विषयः-यथाहि सुश्रुते—

धातुक्षयात् स्रुते रक्ते मन्दः संजायतेऽनलः ।
पवनश्च परं कोपं याति तस्मात् प्रयत्नतः ॥

अत्र यद्यपि श्लेष्मा नोक्तस्तथापि " एक संबन्धिज्ञानमपरसंबंधिनं स्मारयति " इति न्यायेन सोऽपि आक्षिप्तो भवति, यदा वातपित्ते अपि प्रभावान्विते भवतस्तदा का कथा शीतलप्रकृतेर्बराकस्य श्लेष्मणः ।

( क ) अतः परं क्रमश एतेषां धातुत्वं दोषत्वं मलत्वं च साध्यते किं नाम धातुत्वम् ।

देहधारणशीलत्वम् । धारणशब्देन चात्र धारणं पोषणं चोभयमपि विवक्षितम् । **धारणत्वं** चैषां स्वं स्वं प्राकृतं कर्म कुर्वतां स्पष्टमेव, रक्तस्य प्रतिकारशक्तिरपि ( Immunity ) विदिता एव, उक्तमप्यत्र—

नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् ।
शोणितादपि वा नित्यं देह एतैस्तु धार्यते ॥

सुश्रुत ।

एषु च वायुः प्रधानतमः सर्वशरीराधिपतित्वात्, आशुकारित्वाच्च । रक्तन्तु प्रधानतरम् सर्वशरीरोपजीवकत्वात् वाताविकृतत्वाच्च । कफपित्ते तु प्रधाने वातेरितत्वे रक्तोपजीवितत्वे च सति स्वस्वकर्मपरत्वात् अतएव तयोः पंगुत्वमपि वर्णितम् ।

**पोषण**मूलश्चाहारः, तस्य सात्म्यीकरणे चतुर्णामेषां प्रयत्नशीलता दृश्यते तथापि—

१ मुखान्तर्गतस्याहारस्योपरि कफः प्रागेव वातप्रेरितो रक्तोपजीवितश्च स्वकर्म समारभते । तथापि—

अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति ।
तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥

चरक ।

प्राणश्चात्र वायुः सच अन्नप्रणालीजालकस्थिता हार्दिकजालकस्थिता च कर्मानुमेया शक्तिः ( Oesophageal & Cardiac Plexuse ) द्रवस्नेहौ च कफगुणौ । कफक्रिया चैषा Salivary aection इति नवैः प्रतिपाद्यते ।

२ [ च ] ततः प्राप्तामाशयस्योपरि पित्तरूप उदर्याग्निर्वातप्रेरितः रक्तोपजीवितश्च सन् स्वकर्म करोति । तथापि—

समानेनावधूतोऽग्निरुदर्यः पवनेन तु ।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥

चरक ।

समानपवनश्च आमाशयिकजालस्थिता कर्मानुमेया शक्तिः ( Gastnic plexus ) उदर्योऽग्निश्च आमाशयिको रस एव ( Gastnic Iuice )

[ छ ] ततो ग्रहणीमभिपन्नस्योपरि वातप्रेरितं रक्तोपजीवितं च सत् पित्तम् स्वकर्मारभते । यथा–

परन्तु पच्यमानस्य विदग्धास्याम्लभावतः ।
आशयाच्चयवमानस्य पीत्तमच्छमुदीर्यते ॥

चरक ।

पित्तं चात्र यकृद्रसः क्लोमरसश्च ज्ञेयः ( Bile & Pancrealic Iuice ) वायुश्च समानाख्य एव ।

३ आन्त्रगतस्योपर्यापि वातप्रेरितस्य रक्तोपजीवितस्य वन्हिविशेषस्यापि ( Succus Eutericus ) क्रिया भवति । प्रधानं च कर्म रसभावमापन्नस्याहाररसस्य शोषणम् । यद्यपि शोषणस्य द्विविधो मार्गः, रक्तं लसीकाच तथापि वसातिरिक्तरसावयवानां वातप्रेरितम् रक्तमेव केवलो मार्ग इति प्रत्यक्षम् । रसस्य च रक्तांगत्वात् ( Plasma ) अप्राधान्यम् । वसावयवयुतो रसोऽपि नातिचिरादेव रक्ताङ्गत्वमुपयातीत्यपि विदितमेव । बृहदंत्रेच शोष्यमाणस्य तस्य पिंडीभावो भवति, शोषितं च तरलांशमपि रक्तावयवत्वमापयाति इत्यपि स्पष्टमेव । किंच तत्र क्षारीयप्रतिक्रियत्वादाहारस्य जीवाणुकर्मजन्यो [ Gas ] वायुरुत्पद्यते इत्यपि नागोचरम् । उक्तमपि च ।

पक्वाशयंतु प्राप्तस्य शोष्यमाणस्य वन्हिना ।
परिपिण्डितपक्वस्य वायुःस्यात् कटुभावतः ॥

बृहदंत्रेऽपि पाचनं भवतीति परिपिण्डतपक्वस्येति शद्बेन ज्ञायते । नवसम्मतं च मतमिदम् ।

( ४ ) वातप्रेरणा च सर्वत्र पूर्वं वर्णिता एव ।

एवमेषां चतुर्णां धातुत्वं सिद्धं भवति ।

[ ख ] दोषत्वं तावत्, प्रकृत्यारम्भकत्वेसति दुष्टिकर्तृत्वम् । प्रकृत्यारम्भकत्वेसति, अर्थात् शरीरप्रकृतिभावो यथा विकृतिभावं नाप्नुयात् तथा प्रयत्ने

कृतेऽपि दुष्टिकर्तृत्वम् मिथ्याहारविहारादिविप्रकृष्टहेतुना विवशीकृतास्य व्याधिकारकत्वम् । अपिपदेन च जीवाणवो ज्ञेयाः । एवं च—

| | |
|---|---|
| वातदोषता | Nervous disturbance |
| पित्तदोषता | Digestive ,, |
| कफदोषता | Serous ,, |
| रक्तदोषता | Abnormal & Toxaemic Condition of Blood. |

[ **ग** ] मलत्वं नाम निर्हार्यत्वम् । दुष्टा दोषा यदेदृशीमवस्थामाप्नुवन्ति तदा तेषां यदि निर्हरणं न स्यात् तदा शारिरिकदशाऽतिशयेन वैषम्यमापद्यते । सैषा मलावस्था व्याख्याता भवति ।

| | |
|---|---|
| मलरूपो वायुः | विदिग्धः |
| मलरूपं पित्तम् | अम्लपित्तादौ विदग्धं पित्तम् |
| मलरूपः कफः | श्लैष्मिककलावृतप्रदेशरोगेषु स्रावरूपः |
| मलरूपं रक्तम् | Septicalmic & Pyaemic Blood |

" तद्दुष्टं शोणितमनिर्ह्रियमाणं कंडूशोफरागदाहपाकवेदना जनयते " इति सुश्रुते ।

सुश्रुताभिप्रेतंच मतमिदं नार्षमिति न वक्तुं शक्यते । सुश्रुते रक्तस्य दोषत्वस्वीकारे स्थले स्थले शैथिल्यं दृश्यते तत् तत्कालीनवैद्यसमुदाय विरोधजमित्यनुमीयते ।

---

## पंडित विश्वेश्वरम् [ मद्रास ] इत्येषां मतम् ।

### त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—त्रिदोषविचारप्रयोजनम् ।

उत्तरं:—आयुर्वेदे रोगारोग्यकारणं, चिकित्साविधानं च त्रिदोषसिद्धान्त-

मनुसृत्यैव वर्तते। ततो यावत्पर्यंतमायुर्वेदानुसारेण चिकित्सा क्रियते, तावत्पर्यंतं त्रिदोषविज्ञानमावश्यकं भवति । 'धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्'।

२ प्रश्नः– वातादीनां दोषत्वं धातुत्वं मलत्वं वा ? त्रिविधत्वमपि चेत् तद्विरुद्धमविरुद्धं वा ?।

उत्तरं:-त्रिविधत्वमपिविद्यते, अविरुद्धमेव। यतोऽवस्था विशेषा दोषाणाम्।

३ प्रश्नः–दोषसंज्ञायां हेतुः ?।

उत्तरं:–शरीरदूषणाद्दोषाः। ते वातपित्तकफाः यदादुष्टास्तदा शरीरं दूषन्तीति ज्ञापकार्थं दोषशब्दं लभन्ते ।

४ प्रश्नः--कथं त्रय एव दोषाः ?।

उत्तरं:--विसर्गादानविक्षेपैर्यथा सोमसूर्याऽनिला जगत् धारयंति, तथैव त्रयो दोषा अपि शरीरपरिपालकाः स्थिरीकरणपाचकविक्षेपणक्रियाभिः। रक्तमपि न दोषो भवति, यतो दोषैर्विना रक्तं न दुष्यति ।

५ प्रश्नः--वातादीनां द्रव्यत्वं शक्तिरूपत्वं वा ?।

उत्तरं:--द्रव्यत्वमेव गुणकर्मयुक्तत्वात् ।

६ प्रश्नः--वातादीनां स्थूलत्वं सूक्ष्मत्वं उभयत्वं वा ?

उत्तरं:--उभयत्वमपि, किन्तु तत्र वायुस्सदा सूक्ष्मः ।

७ प्रश्नः--किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ।

उत्तरं:--'तत्प्रकोपस्य तु प्रोक्तं विविधाऽहितसेवनम्' मा. नि. ।

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरं:--रौक्ष्यादयो वातादीनामात्मलिंगानि, रुक्षादयो गुणाः, स्रंसव्यासादयः कर्माणि ।

९ प्रश्नः--वातादीनां स्वरूपं, तेषां पंचविधत्वं काल्पनिकं वास्तविकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ?।

उत्तरं:--पंचविधत्वं तावत् स्थानकार्यभेदोत्पन्नमेव, स्वरुपभेदो न भवति। गुणसाम्यत्वात् ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेवरोगकारणत्व-मुतान्येषामपि कीटादीनाम् ।

उत्तरं:—विरुद्धाहारादिभिर्दुष्टा दोषा धातून् प्रदुष्य रोगान् कुर्वन्ति । कीटाः निमित्तकारणं भवंति । ' षट् ते कुष्ठैककर्माणः ' ।

---

## श्री. अनिश्चितनामा इत्येषां मतम् ।

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः ।

---

१ प्रश्नः—पंचमहाभूतविचारप्रयोजनम् ।

उत्तरं:—पांचभौतिकोदेहः ।

२ प्रश्नः—भूतलक्षणम् ( किंनाम भूतत्वम् )

उत्तरं:—बहिरिन्द्रियग्राह्यविशेषगुणवत्वं नाम, भूतत्वम् ।

३ प्रश्नः--भूतानामेकैकेन्द्रियार्थाश्रयित्वं, अनेकेन्द्रियार्थाश्रयित्वं वा ?

उत्तरं:--एकेन्द्रियविशेषार्थाश्रयित्वम् ।

४ प्रश्नः--भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

उत्तरं:--योगदर्शन ३-४४ व्यासभाष्यम् । गर्भोपनिषद्, याज्ञवल्क्य-स्मृतिः ६ । श्लोक ७६-७८ ।

५ प्रश्नः—भूतसंख्याविमर्शः ।

उत्तरं:—श्रुतिसिद्धत्वात्पंच ।

६ प्रश्नः—भूतानां सादित्वं, अनादित्वं, उभयत्वं वा ? सादित्वं चेत्त-दुत्पत्तिः सक्रमा अक्रमा वा ? ।

उत्तरं:—सादित्वं, सक्रमा ।

७ प्रश्नः—गुणेभ्यः कारणान्तरेभ्यो भूतानामुद्भवप्रकारः कः ? ।

उत्तरं:–तामसाऽहंकारात् ( सांख्यपुराणादिषु प्रोक्तः ) ।

८ प्रश्नः–भूतानामितरेतरव्यवकीर्णत्वं कथं संपद्यते ? ।

उत्तरं:–पंचीकृतप्रकारेण ।

९ प्रश्नः–भूतानां सृष्टिकारणत्वं कीदृक् ? ।

उत्तरं:–याज्ञवल्क्यस्मृतिः यतिधर्म प्र. श्लो. १४६-१४८ ।

१० प्रश्नः–परिणामारंभक्रिययोर्विशेषः ? ।

उत्तरं:–कारणानुगतकार्यसिद्धान्तेन ।

११ प्रश्नः–दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तरं:–भौतकत्वमेव ।

१२ प्रश्नः–एलिमेन्टसंज्ञकानां द्विनवतिसंख्याकानां प्रतीच्यरासायनिकैर्मूलतत्वतयांऽगीकृतानां भूतत्वं न वा ? ।

उत्तरं:–भूतत्वलक्षणेन ज्ञेयम् ।

१३ प्रश्नः–इलेक्ट्रानप्रोटानसंज्ञकयोर्भूतत्वं न वा ? ।

उत्तरं:–भूतत्वलक्षणेनज्ञेयम् ।

१४ प्रश्नः–परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

उत्तरं:–भेदाभेदः, योगदर्शनम् ३-४४ वाचस्पतिमिश्राः ।

१५ प्रश्नः–द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तरं:–समवायसंबंधतया अभेदः ।

१६ प्रश्नः–तेजसो द्रव्यत्वं न वा ? ।

उत्तरं:–तस्मात् उष्णस्पर्शगुणाश्रयतया तेजसोद्रव्यत्वं सिद्धम् ।

१७ प्रश्नः–आकाशस्वरूपविमर्शः स भावरूपोऽभावात्मको वा ? भावत्वे सति तस्य सावयत्वं निरवयत्वं वा? सावयत्वं चेत् के नाम अवयवाः ? किमाकाशलिंगं ? शब्दः अवकाशो वा ? ।

उत्तरं:–भावरूपः, निरवयत्वं, शब्दगुणकमाकाशम् ।

१८ प्रश्नः–पंचमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

उत्तरं:–' सर्गादौ स यथाऽकाशं वायुं ज्योतिर्जलं महीम् ' ।

१९ प्रश्नः--ईश्वराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ।

उत्तरं:--लक्षणेन लक्ष्यं बोद्धव्यम् ।

२० प्रश्नः—मनुष्यादिशरिरेषु चैतन्यमात्मजन्यं पंचभूतादिसंयोगविशेषजन्यं वा ? ।

उत्तरं:—आत्मजन्यम् ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—त्रिदोषविचारप्रयोजनम् ।

उत्तरं:—सर्वरोगानिदानभूतत्वात् ।

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपिचेत्तद्विरुद्धमविरुद्धं वा ?।

उत्तरं:—त्रिविधमपि नैवविरुद्धं स्वरूपेण ।

३ प्रश्नः—दोषसंज्ञायां हेतुः ।

उत्तरं:—वृन्दमाधव स्वस्थाधिकार श्लोक ६ श्रीकण्ठदत्तः ।

४ प्रश्नः—कथं त्रय एव दोषाः ?

उत्तरं:—प्रकृतविकृतिसिद्धान्तात् । श्रुतिसिद्धत्वात् ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ?।

उत्तरं:—द्रव्यस्वरूपा एव । अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यम् ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ?।

उत्तरं:—उभयत्वम् ।

७ प्रश्नः—किं वातादीनामुपादानं ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:—आकाशवायुभ्यां वायुः । आग्नेयं पित्तम् ।अंभःपृथिवीभ्यां श्लेष्मा। पंचभूतानि ।

८ प्रश्नः—वातादीनां गुणाः कर्माणि च ।

उत्तरं:—चरक सूत्रस्थान अ. १२ ।

९ प्रश्नः–वातादीनां स्वरूपं, तेषां पंचविधत्वं वास्तविकं वा ? तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरं:--वास्तविकं, स्थानकार्यस्वरूपभेदजन्यम् ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्व-मुतान्येषामपि कीटादीनाम् ? ।

उत्तरं:–दोषवैषम्यमेवव्याधिः । कीटादिजन्य आगन्तुकः ।

---

## कविराज पंडित उपेन्द्रनाथदासानां ( दिल्ली ) मतम् ।

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः–पञ्चमहाभूतविचारप्रयोजनम् ।

उत्तरं:--पंचभूतस्वरूपादौ वैमत्यं दृश्यते यतः । स्वरूपादिनिर्णयाय पंचभूतं विचार्यते ।

२ प्रश्नः--भूतलक्षणं ( किं नाम भूतत्वम् ) ? ।

उत्तरं:--नित्यत्वे सति गुणवत् समवायिकारणत्वम् भूतत्वमिति लक्षणम् ।

३ प्रश्नः--भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा? ।

उत्तरं:--एकैकेन्द्रियार्थाश्रयित्वं सर्वेषामेवभूतानाम् ।

४ प्रश्नः--भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

उत्तरं:--परमाणुत्वं, नित्यत्वं च, महाभूतानामाकाशादिक्रमेणैकद्वित्रि-चतुःपंचगुणाश्रयित्वं, दृश्यानां पांचभौतिकत्वात् पंचगुणत्वं दृश्यानामिति ।

५ प्रश्नः--भूतसंख्याविमर्शः ।

उत्तरं:--इन्द्रियेन्द्रियार्थानां पंचत्वात्, पंचैव भूतानि ।

६ प्रश्नः--भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा ?, सादित्वं चेत्तदुत्पत्तिः । सक्रमा अक्रमा वा ? ।

उत्तरं:--परमाणुस्वरूपाणां भूतानामनादित्वं, महाभूतानां जन्यानां भूतेभ्यः समुत्पत्तिः, तत्रैतस्मादात्मन आकाशः संभूतः आकाशाद्वायुर्वायोरग्नि-रग्नेरापः अभ्द्यः पृथिवीत्युक्तः क्रमः ।

७ प्रश्नः-गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ? ।

उत्तरः—ईश्वरेच्छया संयुक्तानां भूतानां विशेषको नाद्यापि दृश्यते ।

९ प्रश्नः—भूतानां सृष्टिकारणत्वं कीदृक् ? ।

उत्तरः—उपादान-[ समवायि ]-कारणत्वमेव भूतानामिति ।

१० प्रश्नः—परिणामारम्भक्रिययोर्विशेषः ।

उत्तरः—दार्शनिकानां मते कथंचित् भिन्नार्थयोरेतयोर्नास्ति वस्तुभेदः ।

११ प्रश्नः—दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तरः—दृश्यानां सर्वेषामेव पांचभौतिकत्वम् ।

१२ प्रश्नः—एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकैर्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा ? ।

उत्तरः—एतेषामपि पांचभौतिकत्वं न भूतत्वमिति ।

१३ प्रश्नः—इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ? ।

उत्तरः—एतेषामपि पांचभौतिकत्वं न भूतत्वमिति ।

१४ प्रश्नः—परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

उत्तरः—शब्दभेदोऽपि न वस्तुभेदः ।

१५ प्रश्नः—द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तरः—गुणेभ्यो गुणिनां भेदएव ।

१६ प्रश्नः—तेजसो द्रव्यत्वं न वा ? ।

उत्तरः—द्रव्यत्वमेव तेजसः ।

१७ प्रश्नः—आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भावत्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ? ।

उत्तरः—आकाशस्याऽपि पृथिव्यादिवत् भूतत्वम् परमाणुरूपस्याकाशस्य नित्यत्वं स्थूलस्यानित्यत्वं शब्दसमवायिकारणत्वं च ।

१८ प्रश्नः—पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

उत्तरः–आकाशाद्वायुरित्यादिक्रमेण समुत्पत्तिः ।

१९ प्रश्नः–ईथराख्यास्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः? आकाशे तेजसि वायौ वा? कथं च सः? ।

उत्तरः–ईथराख्याकाशयोः शब्दभेदेपि न, वस्तुभेदः ।

२० प्रश्नः–मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेषजन्यं वा? ।

उत्तरः–जीवाधिष्ठितयोः शुक्रशोणितयोर्युतिमात्रदर्शनाज्जीवात्मसंयोगजन्यमेव चैतन्यम् ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः–त्रिदोषविचारप्रयोजनम् ।

उत्तरः–त्रिदोषाणां स्वरूपादौ वैमत्यं भिषजां यतः ।
अतस्तत्वविचारार्थं त्रिदोषोऽपि विविच्यते ॥

२ प्रश्नः–वातादीनां दोषत्वं, धातुत्वं, मलत्वं, वा? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा? ।

उत्तरः–वातादीनां धातुत्वं, सर्वशरीरगतत्वं च यावानंशो विकृतो दुःखदायको भवति, तावानंशो दोषो, यावानंशो विकृतो तस्य मलत्वमेव ।

४ प्रश्नः–कथं त्रय एव दोषाः? ।

उत्तरः–दुष्टिकर्तृत्वं त्रयाणामेव, प्रकृत्यारंभकत्वमप्येतेषामिति त्रयोदोषा निरुच्यन्ते ।

५ प्रश्नः–वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा? ।

उत्तरः–गुणक्रियाश्रयत्वात् द्रव्यत्वमेव वातादीनाम् ।

६ प्रश्नः–वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा? ।

उत्तरः–प्रत्यक्षयोग्यगुणक्रियाशालित्वात् स्थूलत्वमेव वातादीनाम् ।

७ प्रश्नः– किं वातादीनामुपादानम्? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः? ।

उत्तरः–पांचभौतिकानां वातादीनां पांचभौतिकान्यन्नपानश्वासवायुप्रभृतीनी, पांचभौतिकान्युपादानानि उत्पत्तिक्रमवर्णने स्थानाभावः ।

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरः--रूक्षतोष्णतास्निग्धतादयो गुणाः, संचालनपाचनश्लेषणादीनि कर्माणि ।

९ प्रश्नः--वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरः--रौक्ष्यतैक्ष्ण्यगौरवादीनि चरककीर्तितान्यात्मरूपाणि दोषाणाम् ।

१० प्रश्नः--वातादीनां रोगकारणत्वं कीदृशम्? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरं--दोषदूष्यसमूर्छनाजन्यत्वाद्रोगाणां समवायिकारणत्वमेव दोषाणामिति । दोषवर्धनद्वारैव रोगकर्तृत्वं कीटानां । समदोषे शरीरे प्रविष्टाः कीटाः स्वयमेव विनश्यंति, दोषविकृतियुक्ते शरीरे प्रविष्टा एव कीटा दोषवर्धनद्वारा रोगं जनयंतीति दोषाणामेव रोगकारणत्वं कीटानां तु, दोषवर्धकत्वेन सहकारित्वमेव ।

---

## वैद्यराज अमृतलाल प्राणशंकरशर्मणां मतम् ।

### त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः--त्रिदोषविचारप्रयोजनम् ।

उत्तरः--विरुद्धपक्षस्थितानां पाश्चात्यायुर्वेदविदां समाधानार्थं, तथा पृथक्जनेषु श्रद्धोत्पादनार्थम् ।

२ प्रश्नः--वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरः--दोषधातुमलशब्दाः पदार्थरूपेण ग्रंथेषु दृश्यंते, तथा च तच्च दूषणाद्धारणात् मलिनीकरणाच्च तेषामेव त्रिविधत्वमपि दृश्यते, कचिच्च

वातादयो दोषरूपेण, रसादयो धातुरूपेण, मूत्रादयो मलरूपेण वर्णिता उपलभ्यंते, तत् सर्वमपि प्रकृत्यन्तरेण भिद्यमानमविरुद्धमेव ।

३ प्रश्नः--दोषसञ्ज्ञायां हेतुः ।

उत्तरं--संज्ञावाचकानां रूढशब्दानां हेतुविचारोऽनावश्यकः ।

४ प्रश्नः--कथं त्रय एव दोषाः ? ।

उत्तरं:--यथा कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेण व्यवस्थितमप्यतिरिच्य वातपित्तश्लेष्माणः । तस्मात्त्रय एव दोषाः ।

५ प्रश्नः--वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरं:--आयुर्वेदतंत्रेषु यद्दोषाणां वर्णनं क्रियते तस्मिन् विचार्यमाणे दोषा द्रव्याण्येवाऽस्मिन् न कोपि संदेहलेशः

६ प्रश्नः--वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:--वातस्य सूक्ष्मत्वं, पित्तकफयोश्च स्थूलत्वं सूक्ष्मत्वम् च ।

७ प्रश्नः--किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:--वातादीनां पंचमहाभूतजन्यत्वात् तान्यवोऽपादानानि तथा च आयुर्वेदानुसारेण वायोः पित्तं, वातपित्तयोश्च श्लेष्मा इत्युत्पत्तिक्रमः प्रतिभाति।

८ प्रश्नः--वातादीनां गुणाः कर्माणि च ।

उत्तरं:--वातादीनां गुणाः कर्माणि च तंत्रेषु तेषु तेषु स्थलेषु वर्णितानि यथा वा. सू. अ. १-११-१२ इत्यादि ।

९ प्रश्नः--वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरं:--वातादीनां स्वरूपं पंचविधत्वं च वास्तविकं काल्पनिकं वेत्ति मया नाद्यावधि निश्चितम् ।

---

॥ श्री ॥

## पं. जगन्नाथशर्मा वाजपेयी ( बनारस ) एत्येषां मतम् ।

### पंचभूतचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः--पञ्चमहाभूतविचारप्रयोजनम् ।

उत्तरं:—पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् । स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ।

२ प्रश्नः—भूतलक्षणं [ किं नाम भूतत्वम् ] ।

उत्तरं:—जगदारंभकत्वे सति विशेषगुणाश्रयत्वम् ।

३ प्रश्नः—भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेंद्रियार्थाश्रयित्वं वा ? ।

उत्तरं:--उभयमपि ।

४ प्रश्नः--भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

उत्तरं:--संख्याभेदेन गुणधर्मादीनां भेदः

५ प्रश्नः—भूतसंख्याविमर्शः ।

उत्तरं:—पंचमहाभूतानि ।

६ प्रश्नः—भूतानां सादित्वम्, अनादित्वम्, उभयत्वं, वा ? सादित्वंचेत्तदुत्पत्तिः सक्रमा अक्रमा वा ? ।

उत्तरं:—सादित्वमुत्पत्तिश्च सक्रमा, अनादित्वमन्येषां मते ।

७ प्रश्नः—गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः ? ।

उत्तरं:—तेषामेकगुणः पूर्वे गुणवृद्धिः परे परे ।

८ प्रश्नः—भूतानामितरेतराव्यवकीर्णत्वं कथं संपद्यते ? ।

उत्तरं:--गुणसंख्याभेदेनैव भेदः ।

९ प्रश्नः--भूतानां सृष्टिकारणत्वं कीदृक् ? ।

उत्तरं:--उपादानकारणत्वम् समवायिकारणत्वम् वा ।

१० प्रश्नः--परिणामारम्भक्रिययोर्विशेषः ।

उत्तरः-आरम्भक्रिया कर्तृजन्या, परिणामक्रिया वेगजन्या, वीचीतरंग-न्यायेन ।

११ प्रश्नः--दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

उत्तरः--भौतिकत्वमेव ।

१२ प्रश्नः--एलिमेन्टसंज्ञकानां द्विनवतिसंख्याकानां प्रतीच्यरासायनिकैर्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा ? ।

उत्तरः--समेषामप्यत्रैवान्तर्भावः ।

१३ प्रश्नः--इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ? ।

उत्तरः--वायोः साधारणावस्थारूपेण तयोरंगीकरणं युक्तम् ।

१४ प्रश्नः--परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

उत्तरः--विभिन्नशास्त्रीयसंज्ञात्वान्न शक्यो निश्चयः ।

१५ प्रश्नः-द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

उत्तरः--उभयमपि प्रकरणवशात् ।

१६ प्रश्नः--तेजसो द्रव्यत्वं न वा ? ।

उत्तरः--सर्वसम्मतं द्रव्यत्वम् ।

१७ प्रश्नः--आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भावत्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ? ।

उत्तरः--शब्दगुणकमाकाशम्भावरूपमेव । तात्विकं निरवयवत्वं, काल्पनिकं तु सावयवत्वं, घटाकाशमठाकाशादिभेदात् तच्चावकाशदानादनुगृण्हाति ।

१८ प्रश्नः--पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

उत्तरः--अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् । स्वे स्वे द्रव्ये व्यक्तलक्षणम् ।

२० प्रश्नः--मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेषजन्यं वा ? ।

उत्तरः--आस्तिकमतेनात्मजन्यमेव ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ प्रश्नः—त्रिदोषविचारप्रयोजनम् ।

उत्तरं:—चिकित्सासौकर्यम्, ततश्चारोग्यं, ततः पुरुषार्थचतुष्टयम ।

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

उत्तरं:—सर्वमप्यविरुद्धम् कर्मवैशेष्यात् संज्ञावैशिष्ट्यं पाचकपाठ-कादिवत् ।

३ प्रश्नः—दोषसञ्ज्ञायां हेतुः ।

उत्तरं:—शरीरदूषणाद्दोषाः ।

४ प्रश्नः—कथं त्रय एव दोषाः ? ।

उत्तरं:—प्रकृत्यारंभकत्वेसति दुष्टिकर्तृत्वं, रूपलक्षणस्य तत्रैव सत्त्वात् ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरं:—शक्तिविशिष्टद्रव्यत्वम् ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरं:—उभयत्वमप्यविरुद्धम् ।

७ प्रश्नः—किं वातादीनामुपादानम्? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरं:—वायुतेजोजलानि मूलभूतान्येव वातपित्तश्लेष्मणामुपादानानि । भूतैश्चतुर्भिस्सहितः सुसूक्ष्मैर्मनोजवो देहमित्यादि ।

८ प्रश्नः—वातादीनां गुणाः कर्माणि च ।

उत्तरं:— रूक्षत्वशैत्यस्निग्धत्वौष्ण्यगौरवमृदुत्वादयोगुणास्तादृशानि कर्माणि ।

९ प्रश्नः—वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

उत्तरं:- वातीति, तपतीति श्लिष्यतीति व्युत्पत्तिवत्त्वेन शक्तिरूपत्वमेव । पंचविधित्वं काल्पनिकं स्थानकार्यभेदोत्पन्नम् ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम्? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम्?।

उत्तरः—क्वचिदुपादानकारणत्वं, क्वचिन्निमित्तकारणत्वं कीटादीनां न सर्वत्रकारणत्वमपि च न तेषां स्वातंत्र्येण व्याधिकारणत्वम्।

### अन्ये विचारार्हा विषयाः।

१ प्रश्नः—नवाविर्भूतानां रोगणामायुर्वेदे संग्रहप्रयोजनविचारः।

उत्तरः—यद्यपि नास्त्यैकोऽपि कश्चनरोगो यस्यायुर्वेदपद्धत्या निदानमसंभवं तथापि विशेषप्रतिपत्त्यर्थं विचारः करणीयोऽवश्यम्।

---

## न्यायरत्न वाडीकरशास्त्री, वैद्यभूषण दातारशास्त्री इत्येतयोर्मतम्।

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः।

२ प्रश्नः—भूतलक्षणं ( किं नाम भूतत्वम्? )।

उत्तरः—रूपं, गंधो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुध्यादिभावनांताश्च शद्बो वैशेषिका गुणाः॥

१ बुद्धिसुखदुःखइच्छाद्वेषप्रयत्नधर्माधर्मभावनासंस्कारआत्मावृत्तिविशेषगुणवत्वं भूतत्वम्।

२ बहिरिन्द्रियग्राह्यविशेषगुणवत्वं भूतत्वम्।

३ बहिरिन्द्रियग्राह्यजातिमत् गुणवत्वम् भूतत्वं [ परमाणावपि ]

४ पंचीकृतभूतकार्यं प्रत्यक्षविषयः, अपंचीकृतभूतोत्थं कार्यं प्रत्यक्षस्य अविषयः, तेन वैशेषिकाणां नैय्यायिकाणां च परमाणुः सांख्यानां च तन्मात्रा अप्रत्यक्षा एव इन्द्रियप्रत्यक्षाऽविषयत्वात्। ग्राह्यत्वं नाम अत्र लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्।

**लौकिकप्रत्यक्षं नामः**—षड्विधसन्निकर्षजन्यं प्रत्यक्षं लौकिक-प्रत्यक्षं बोध्यम् ।

१ **संयोगः**–द्रव्ययोरेव भवति, द्रव्यप्रत्यक्षे सर्वत्र चक्षुस्त्वङमनसां-संयोगसान्निकर्ष एव कारणं भवति ।

२ **संयुक्तसमवायः**-रूपप्रत्यक्षे संयुक्तसमवायसन्निकर्षः कारणं भवति ।

३ **संयुक्तसमवेतसमवायः**–रूपत्वजातिप्रत्यक्षे संयुक्तसमवेतसम-वायसान्निकर्षः कारणं भवति ।

४ **समवायः**– शब्दप्रत्यक्षे समवायसन्निकर्षः कारणं भवति ।

५ **समवेतसमवायः**– शब्दत्व [ जाति ] प्रत्यक्षे समवेतसमवाय-सन्निकर्षः कारणं भवति ।

६ **विशेषणविशेष्यभावः**—अभावप्रत्यक्षे विशेषणविशेष्यसन्निकर्षः कारणं भवति ।

३ **प्रश्नः**--भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा? ।

**उत्तरंः**--भूतानां मध्ये आकाशस्य एकेन्द्रियार्थाश्रयित्वं, इतरेषां चतुर्णां भूतानां तु अनेकेन्द्रियार्थाश्रयित्वम् ।

**आकाशः**–सावकाशः स्वरूपवान्, भावरूपः, सावयवः, शब्दलिंगकः, सावयवत्वेऽपि अनिर्देश्यावयववान्, अप्रत्यक्षत्वात् तथापि सावयवः कार्य-द्रव्यत्वात् घटवत् । संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, शब्दगुण-धर्मवान् [ वेदान्तिमते सांख्ययोगमते च सावयवत्वं, नैय्यायिकवैशेषिकमते निरवयवत्वम् आकाशस्य ]

**वायुः** ——स्पर्शशब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेग ( संस्कार ) क्रियावान्, मूर्तत्वभूतत्वद्रव्यारंभकत्वजातिमत्वादिधर्मवान्, अनुष्णाशीतापाकजस्पर्शलिंगः, स्पर्शशब्दधृतिकंपैर्लिंगैरनुमीयते । चाक्षुषप्रत्यक्षं नास्ति वायोः । नवीनमते त्वाचप्रत्यक्षं विद्यते, प्राचां मते वायोरप्रत्यक्षत्वं ।

**तेजः**--उष्णस्पर्शवत्वं, भास्वरशुक्लरूपत्वं, गुणाः रूपशब्दस्पर्शसंख्या परिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रव्यत्ववेगवत्वादयः । धर्माः

प्रत्यक्षविषयत्वद्रव्यारंभकत्वमूर्तत्वभूतत्वतेजस्त्वद्रव्यत्वसत्तादिजातिमत्वक्रियावत्वा-दयः।

**जलम्**:--शीतस्पर्शवत्वसांसिद्धिकद्रवत्वं जलस्य लक्षणम्। गुणाः--रसस्पर्शशद्बरूपसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्व स्नेह-वेगादयः। धर्माः---रूपवत्वप्रत्यक्षविषयत्वभूतत्वमूर्तत्वक्रियावत्वजातिमत्व-द्रव्यारंभकत्वादयः।

**पृथ्वी**:--नानारूपवती, गंधवती, पृथ्वी। गुणाः--गंधसंहिताः स्नेह-वर्जिता, उपर्युक्ता गुणाः क्षितौ विद्यंते। धर्माः--कठिनत्वमूर्तत्वमृदुत्व-प्रत्यक्षविषयत्वद्रव्यारंभकत्वभूतत्वाधारत्वजातिमत्वादयः।

५ **प्रश्नः**--भूतसंख्याविमर्शः।

**उत्तरं**--पंचैव भूतानि।

६ **प्रश्नः**--भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा?, सादित्वं चेत्तदुत्पत्तिः। सक्रमा अक्रमा वा?।

**उत्तरं**:--तत्र भूतानां कारणतिरोभावेन कारणदृष्ट्या अनादित्वम्। प्रादुर्भावो कार्यदृष्ट्या सादित्वम्। इत्यनेन प्रकारेण उभयत्वम्। तथा च कार्यदृष्ट्या तदुत्पत्तिस्सक्रमा।

७ **प्रश्नः**--गुणेभ्यो भूतानामुत्पत्तिप्रकारः—

**उत्तरं**:--परिणामवादमाश्रित्य महदहंकारक्रमेण भूतानामुत्पत्तिर्भवति, कारणान्तरमाश्रित्य भूतानामुत्पत्तिस्तु चतुर्णां भूतानां परमाणुभिर्द्व्यणुकत्र्यणुका-दिक्रमेण भवति।

८ **प्रश्नः**--भूतानां परस्परव्यवकीर्णत्वं कथं संपद्यते?।

**उत्तरं**:--त्रैलोक्यं, पंचसु महाभूतेषु, पंचमहाभूतानि तन्मात्रेषु, तन्मा-त्राणि, एकादशेन्द्रियाणि अहंकारे, अहंकारो बुद्धौ, बुद्धिः प्रधाने,। प्रथमं सर्वं भौतिकं स्वस्वभूतेषु विलीयते, अनंतरं भूतानि स्वे स्वे तन्मात्रे लीयंते, तदनंतरं पृथ्वीतन्मात्रं आपतन्मात्रे, आपतन्मात्रं तेजस्तन्मात्रे, तेजस्तन्मात्रं वायुतन्मात्रे, वायुतन्मात्रं आकाशतन्मात्रे लीयते।

९ प्रश्नः--भुतानां सृष्टिकारणत्वं कीदृक् ?।

उत्तरंः--सांख्यक्रमवत् विज्ञेयम् आरंभक्रियायां असतः कार्यस्य उत्पत्तिस्तु, ईश्वरेच्छावशात्, प्राणिकर्मसहितात् भवतीति विशेषः।

१० प्रश्नः--दृश्यानां पृथिव्यादीनां भूतत्वं न वा ?।

उत्तरंः--दृश्यानां पृथिव्यादीनां न भूतत्वं अपि तु भौतिकत्वम्।

१४ प्रश्नः--परमाणुतन्मात्रयोर्भेदो न वा ?।

उत्तरंः—परमाणुतन्मात्रयोरभेद इति प्रतिभाति। [ नागोजीभट्ट कृत योगसूत्रवृत्तिः पाद २ सूत्र २९ पृष्ट २९१ ] अथापि शास्त्रीयवचनाभावादत्र संशयो वर्तते।

१५ प्रश्नः—द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदोऽभेदो वा ?।

उत्तरंः—द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वर्तते। गुणसमुदायो द्रव्यमिति तु न संमतम् परं च द्रव्यगुणयोर्नित्यसंबंधो वर्तते तेन द्रव्याद्गुणादीनामभेदः प्रतीयते।

१६ प्रश्नः--तेजसो द्रव्यत्वं न वा ?।

उत्तरंः--तेजसो द्रव्यत्वमेव, तस्य औष्ण्यं गुणः।

१८ प्रश्नः--पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ?।

उत्तरंः--पंचमूलभूतेभ्यो नाम पंचतन्मात्रेभ्यः सांख्यदर्शनपद्धत्या ‘ विष्टं ह्यपरं परेण ’ इति न्यायेन एकैकमहाभूतानामुद्भवो भवति।

२० प्रश्नः--मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं न वा ?।

उत्तरंः- मनुष्यादिशरीरेषु चैतन्यं नाम-इच्छाद्वेषः सुखं दुःखं प्रयत्नादि आत्मजन्यं, न पंचभूतादिसंयोगजन्यम्। अत्र आत्मा समवायिकारणं निमित्तकारणं वा भवति।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः

२ प्रश्नः—वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ?।

उत्तरंः—वातादीनां दोषत्वं धातुत्वं मलत्वं त्रिविधमपि अविरुद्धम्।

३ प्रश्नः--दोषसंज्ञायां हेतुः ।

उत्तरः--वातादीनामेव दूषकत्वाद्दोषसंज्ञा रुढा नान्येषाम् ।

४ प्रश्नः--कथं त्रय एव दोषाः ? ।

उत्तरः--त्रय एव दोषाः नान्यश्चतुर्थः ।

५ प्रश्नः—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

उत्तरः—वातादीनां द्रव्यत्वमेव ।

६ प्रश्नः—वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

उत्तरः—वातादीनां स्थूलत्वं सूक्ष्मत्वमपि ।

७ प्रश्नः——किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरः—वातादीनामुपादानं तु अन्नरूपेण परिणतानि भूतान्येव, तेषामुत्पत्तिक्रमस्तु आकाशवायुभ्यां वातः, तेजसः पित्तम्, अंभःपृथिवीभ्यां श्लेष्मा, तथा च रसदोषसन्निपातेन रसविपाकवीर्यत्वेनाऽपि नित्यं स्थूलत्वेन उत्पत्तिर्भवति ।

९ प्रश्नः—वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं, वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूभेदोत्पन्नं वा ? ।

उत्तरः—वातादीनां स्वरूपं तेषां पंचविधत्वं वास्तविकम् न काल्पनिकम् । यत्पञ्चविधत्वं तत्स्वरूपभेदेनैव स्वीकर्तव्यम् ।

१० प्रश्नः—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

उत्तरः-वातादीनामेव रोगकारणत्वं स्वनिदानत्वेन निजरोगेषु, आगन्तुरोगेषु तु कीटादिभ्यो दोषप्रकोपात् रोगकारणत्वम् ।

---

# वैद्य बद्रीदत्त मिश्रः साहित्यायुर्वेदाचार्यः ।

## अध्यक्षो युक्त ( U. P. ) प्रांतीय बदापूर मंडलस्थ गुरुकुल महाविद्यालयस्य एषां मतम् ।

---

### पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः ।

४ प्रश्नः—कथं त्रय एव दोषाः ? इति ।

ननु शरीरदूषणाद्दोषा इति व्युत्पत्त्या विकृतैः शारीरधातुभी रसरक्तादिभिरपि शरीरदुष्टिदर्शनात्, "वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः" इत्यत्र समासोक्त्या व्यासाशङ्कनाच्च दोषाणां त्रित्वकथनमसाध्विति चेत्—

"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ।
प्रकृतिर्जायते तेन," इति सुश्रुतोक्त्या ।
"शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषकृमेः ।
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक्" ॥

इति वाग्भटोक्त्या च पाञ्चभौतिकशरीरभूमिकायां सूक्ष्मरूपाणाम् दोषाणामेव सत्तया कारणरूपत्वेनावस्थानात्- इतरेषां रसादीनाञ्च "मातुश्चाहाररसजैः क्रमात्कुक्षौविवर्धते" इति सुश्रुतोक्त्या मातुराहाररसादिसमुद्भवत्वेन यावच्छरीरावस्थानादेतेषामेव दोषत्वौचित्यात् । अतएव च "प्रकृत्यारम्भकत्वे सति दुष्टिकर्तृत्वमिति दोषलक्षणं सङ्गतं भवति । दोषा एव यावच्छरीरस्थितय इत्यत्र "नित्याः प्राणभृतां देहे वातपित्तकफास्त्रय" इति चरकीयं वच एव मानमुपैति । एवं च रसादीनां प्रकृत्यारम्भकत्वाभावात् "मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् । रसो जलञ्च देहेऽस्मिन्नेकैकाञ्जलिवर्धितम् ।" इत्युक्तप्रमाणानां स्वमानन्यूनाधिक्यरूपा दुष्टिरपि दोषाधिनैव । अतएव च शास्त्रे "

"रसासृङ्मांसमेदोऽस्थि मज्जशुक्राणि धातवः ।
सप्तदूष्याः" इति दूष्यत्वेनोक्ता रसादयो न तु दोषत्वेन । नन्वेवं

" पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् । "

इति शास्त्रे वातप्राधान्यदर्शनात् तस्यैकस्यैव दोषत्वेन कथनात् कथमेते त्रय इति चेत् " तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः । श्लेष्मा शेषेषु, " इत्याश्रयाश्रयिमूलाया गुणसाम्येन नियताया दोषदूष्यपरम्परायाः शास्त्रेणैव दर्शितत्वादुक्तपद्यस्य, वातप्रशस्तिपरत्वेन रसरक्तादिदुष्टौ वायोरप्रयोजकत्वेन, कुपितयोः पित्तश्लेष्मणोः प्रसरादौ तात्पर्यग्राहकत्वात् । अतएव च " नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् । शोणितादपि वा नित्यं देह एतैस्तु धार्यते " ॥ इति सुश्रुतोक्तं शोणितस्य चतुर्थत्वमप्यौपचारिकं धात्वाशयपरंच, एवमेव व्रणप्रश्ने सूत्रस्थानीया " तदेभिरेव शोणितचतुर्थै " रिति सुश्रुतोक्तिरपि–उपचारपरा " रक्तं सर्वशरीरस्थं जीवस्याधार उत्तमः । " इति धारणमूलकत्वेन धातुपरा वानुसन्धेया भवतीति वातादीनां त्रयाणामेव प्राधान्यं मन्यमानः सुश्रुताचार्योऽप्युपसंहरति व्रणप्रश्न एव–

" विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा " ।

इति संक्षेपतस्त्रयाणामेव दोषत्वं प्रतिपादयन्विरमति ॥

६ प्रश्नः–वातादीनां स्थूलत्वं, सूक्ष्मत्वमुभयत्वं वा ?

उत्तरः–जगति विद्यमानं सर्वमपि वस्तुजातं लक्षणं प्रमाणं वान्तरा न प्रसिध्यतीति "लक्षणप्रमाणाभ्यां वस्तुसिद्धि" रिति सतां सम्मतं मतमवलम्ब्य जागर्ति खलु–आयुर्वेदमूलभूतानां वातपित्तकफानां विषयेऽपि " किं स्वरूपा वातादय" इति जागरूकः प्रश्नः । तत्र "तावत्स्वंरूप्यतेनेनेति स्वरूपं" " लक्ष्यतेऽनेनेति लक्षणमिति " स्वरूपलक्षणयोः समानार्थत्वम्, यद्यपि–

" तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः " ।
" पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ।
स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः । "

इति तत्र तत्र गुणपरं स्वरूपं प्रतिपादितमस्त्याचार्यैस्तथापि स्थूलसूक्ष्मभेदेन सकलस्य जगतो लघुत्वेन द्वैविध्यमेव मन्यमानानां प्राचां प्रत्यक्ष-

वादिनां प्रतीचाञ्चोदेति प्रश्नो दोषविषयेऽपि यत्—यानुद्दिश्य दोषानायुर्वेद-विदां विदुषां "वातपित्तश्लेष्माण एव देहसम्भवहेतवः," "नर्ते देहः कफा-दस्ति न पित्तान्न च मारुतात् । शोणितादपि वा नित्यं देह एतैस्तु धार्यते" इति तथा "दोषरोषो रुजां हेतुः," "दोषा एव हि सर्वेषां रोगाणामे-ककारणम्" इति च यथाक्रमं स्वस्थातुरविषयः सिंहनादो वरीवर्ति, तेषां समेषां दोषाणां स्थूलत्वं सूक्ष्मत्वं वाऽनिर्धार्य स्वरूपावस्थानमेव न सम्भ-वतीति सत्तां समुद्भावयितुं स्थूलत्वसूक्ष्मत्वनिर्णयस्यावश्यकत्वं प्रतीयते द्वै-विध्यवादिनां, शवच्छेदादिना शारीरिकाणि समस्तानि तत्त्वानि प्रत्यक्षीकुर्वतां प्रत्यक्षवादिनां त्रिदोषखण्डनपराणां पाश्चात्यानां विशिष्टज्ञानायापि स्थूलसूक्ष्मत्वं प्रतिपादनमत्यावश्यकमेव । अतएव च स्वस्थातुरपरायणत्वेनायुर्वेदस्य सामा-न्यतो दोषाणां द्वैविध्यं व्याचक्षाणश्चरकाचार्यः—

"नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पंडितः ॥"

इति मूलतो दोषस्वरूपबोधायैव भिषज आदिदेश । एवंचोक्तवचना-त्प्रकृतिस्था विकृताश्चेति वातादयो द्विविधा व्यवस्थितास्तेषु ये प्रकृतौ स्वभावे पाञ्चभौतिकशरीरारम्भे स्थितास्ते प्रकृतिस्थाः यदाह सुश्रुतः—

"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ।
प्रकृतिर्जायते तेनेति" साम्येन चैते स्वास्थ्यप्रदा नैरोग्यकारका वा भवन्ति, स एष चोक्तोर्थः "समधातुः समस्तासु [ प्रकृतिषु ] श्रेष्ठा" "दोषसाम्यमरोगिता" इत्युभाभ्यामाप्तवचोभ्याम्;—

विकृता वृद्धाः क्षीणावा इमे रोगदा इति साधारण्येन शारीराणां दोषाणां द्वयी गतिः, तत्र खलु प्रकृतिस्थानां शरीरधारकाणां दोषाणां कर्मभेदेन प्रत्येकं पञ्चविधत्वं, तत्र वायोर्यदुक्तं सुश्रुतेन निदाने—

"प्राणोदानौ समानश्च व्यानश्चापान एव च ।
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥"

इति अविकृतस्य तस्य समष्ट्या कर्मोक्तं चरकेण—

" उत्साहोच्छ्वासनिश्वासचेष्टाधातुगतिः समा ।
समोमोक्षो गतिमतां वायोः कर्माविकारजम् ॥ "

इति पंचानां प्राणादीनां विभिन्नकर्मता तु सुश्रुतेन निदान एव दर्शिता एवं पित्तस्य पंचरूपतापि सूत्रे सुश्रुतेनोक्ता " पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि, तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोतीत्यादिना, कर्म च तदीयं समुदितमुक्तमविकृतं चरकेण—

" दर्शनं पक्तिरूष्मा च क्षुत्तृष्णादेहमार्दवम् ।
प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥ "

इति पाचकरञ्जकसाधकालोचकभ्राजकाभिधानां तेषां कर्मभेदस्तु सुश्रुतेन तत्रैव नामग्राहमुक्तः, । क्लेदकावलम्बकरसकतर्पकश्लेषकनामभिः श्लेष्मणः पांचविध्यमपि सुश्रुतेन सूत्रे ।

" माधुर्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ।
आमाशये संभवति श्लेष्मा मधुरशीतलः ॥ "

इत्यादिना प्रबंधमुखेन निरूपितम्, अविकृतस्य तस्य कार्यन्तु ।

" स्नेहोबन्धः स्थिरत्वंच गौरवं वृषता बलम् ।
क्षमाधृतिरलोभश्च कफकर्माविकारजम् ॥ "

इति हृद्येन निरवद्येन पद्येनाग्निवेशो निबबन्ध । त एतेऽविकृता वातादयो नैरोग्यकरा एव प्रसादाख्यया समाख्याता आयुर्वेदतन्त्रे यदाह चरकः—

" शरीरधातवः पुनर्द्विविधाः संग्रहेण—मलभूताः प्रसादभूताश्च, तत्र मलभूतास्ते ये शरीरस्याबाधकराः स्युस्तद्यथा--शरीरच्छिद्रेषूपदेहाः, पृथग् जन्मानो बहिर्मुखाः परिपक्वाश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणः, ये चान्येऽपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते सर्वांस्तान् मलान् संचक्ष्महे, इतरांस्तु प्रसादानिति " एतेनाविकृतानां प्रसादत्वेन सहैव विकृतानां वातादीनां मलरूपतापि पृथग्जन्मानो बहिर्मुखाः परिपक्वाश्च

धातव इति प्रकुपिताश्च वातपित्तश्लेष्माणः '' इत्युक्त्या चोक्ता, तदेवं प्राकृतानां दोषाणां प्रसादत्वे विकृतानां मलरूपत्वे व्यवस्थिते प्रसादरूपस्य मलरूपस्य चेत्युभयात्मकस्य वायोः सर्वभावेषु—

" वायुस्तन्त्रयन्त्राधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योजकः, सर्वेन्द्रियार्थानामभिवोढा, सर्वशरीरधातुव्यूहकरः सन्धानकरः शरीरस्य, प्रवर्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलं, हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानां, स्थूलाणुस्रोतसां भेत्ता, कर्त्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपित इति ।

" स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः ।
स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥ "
सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः ।
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥
अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः ।
तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ।
अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् ॥

इति चरकसुश्रुतयोः प्रामाण्यात् सूक्ष्मत्वम्, सर्गारम्भे सूक्ष्मतन्मात्राभ्यां आरब्धत्वात् आकीटमनुष्यं परमसूक्ष्मेष्वपि शरीरावयवेषु धात्वंशेषु विद्यमानत्वाच्च सौक्ष्म्यमेव । अतएव नैयायिकैर्विहितं "रूपरहितस्पर्शवान्" इति वायोर्लक्षणं साधु सङ्घटते । न चायमायुर्वेदिको वायुः शीतत्वेन न्यायनयानुमोदितादनुष्णाशीतस्पर्शवतोर्वायोर्भिन्न इति चेद्दोषाणां परस्परानुप्रवेशात् पांचभौतिकत्वेनाप्यांशानुप्रवेशाद्वा योगवाहित्वाच्च वायोः शीतत्वप्रतीतेः एवं च शीतत्वं सर्वथा जलीयस्य श्लेष्मण एव गुणोऽतएव च—

" योगवाहः परं वायुः संयोगादुभयार्थकृत् ।
दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात् ॥ "

इति वचनं सङ्गच्छते, " कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः "

इति कापिलबलोक्ते वचसि वायोः कार्यानुमेयत्वसिद्धान्तोऽपि सामञ्जस्यमुपैति ।

केचित्तु लौकिकेभ्यो वाय्वग्निसोमेभ्यो विभिन्ना एवायुर्वैदिका वातपित्तकफा इति कल्पयन्ति तन्मतमपि " अतस्त्रिविधविकल्पा व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्याः " इति चरकीयवचसा पित्तकफवातानामेवाग्निसोमवायुरूपत्वान्निरस्तम् । " पृथिव्यापस्तेजोवायुराकाशं ब्रह्म चाव्यक्तमित्येत एव षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते " इत्याद्यागमदर्शनादप्रामाणिकत्वञ्च तस्य मतस्येति समानोऽयं लौकिकेन वातेन केवलमौपाधिकभेदभागिति पांचभौतिकशरीरसम्बन्धाद्भिन्नः प्रतीयते, न चैवं पंचभूतात्मकमपि द्रव्यजातं " क्षमामधिष्ठाय जायत " इति " अम्बुयोनि " इतिचोक्तया पृथिव्यधिष्ठानं सलिलकारणञ्चेति पृथिवीसलिलयोश्च मूर्तत्वात्ततो जातानां सकलभावानां कारणानुविधायित्वान्मूर्तत्वमेवेति वायोरपि सूक्ष्मत्वं न युक्तमिति चेत्–" अग्निपवननभसां समवायत " इति सङ्केतदिशा सर्वभावानां पाञ्चभौतिकत्वस्यैव सिद्धान्तितत्वेन स्थूलसृष्टिसमारम्भे " शब्दतन्मात्रसहकृतात्स्पर्शतन्मात्रात्स्थूलोवायुरुत्पद्यते " इति मूलावलम्बाच्छारीरस्य वायोः पाञ्चभौतिकत्वदशायामपि " व्यपदेशस्तु भूयसेति " सिद्धान्तात् स्पर्शशब्दगुणस्य वायोस्तादृशकार्यानुमेयत्वमेवेति । अतएव च " प्रकृतिः स्पर्शशब्दयोः " इत्युक्तम् । एवं खलु संक्षेपात् प्रसादरूपस्य वातस्य सूक्ष्मत्वे पृथग्जन्मान इत्युक्त्या व्युत्पादिते च " प्रकुपिताश्च वातपित्तश्लेष्माण " इत्युक्त्या वा मलरूपस्य तस्य–

" पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वन्हिना ।
परिपिण्डितपक्वस्य वायुःस्यात् कटुभावतः " ॥

इति चरकसिद्धांतादाहारपरिणामजन्यावस्थायां स्थूलत्वं स्यादित्यपि नाशङ्कनीयम्, वायुपदेनात्रान्नपरिपाकजनितस्य बाष्पस्यैव उक्तत्वात्, न चैवंतद्बाष्पमेव वातमलम्, तेनापि वायोः कार्यानुमेयतापुष्टेः, यच्च शारीरस्य वायोर्विकृतस्य वातजादिरोगेषु मलमूत्रादिषु कृष्णारुणवर्णकारित्वं दृश्यते तदपि–

" एकः प्रकुपितोदोषः सर्वान् दोषान् प्रकोपयेत् " ।

इति दोषान्तरसाहाय्याद् दोषदूष्यसंमूर्छनाद्वा सहायककृतमेव मन्तव्यम् । अतएव च " लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः " इत्यत्र लोहितमुद्गारं पश्यतीति टीकाकृदर्थोऽपि दोषदूष्यसम्पर्कात्संगच्छते इति सर्वथैव मलरूपस्यापि वायोरतीन्द्रियत्वापरपर्यायं सूक्ष्मत्वमेवेति महर्षिभिर्योगजदृष्ट्या विलोकितस्य चर्मचक्षुषामगम्यस्याचिन्त्याद्भुतशक्तिकर्मत्वं कार्यानुमेयत्वञ्च वायोः प्रत्यपादि यथामति ।

पित्तस्य तु प्रसादरूपस्य स्थूलत्वं सूक्ष्मत्वञ्चोपलभ्यते शरीरे वर्तमानस्य, तद्यथाऽविकृते पञ्चात्मके पित्ते " पाचकं विहाय चतुर्विधस्य रञ्जकसाधकालोचकभ्राजकाभिधस्यातीन्द्रियत्वात् सौक्ष्म्यमेव । स्थूलं पाचकपित्तं प्रायस्त्रिविधं भवति ।

" आमाशये ह्यम्लरसं ग्रहण्यां कटुतिक्तकम् ।
अग्न्याशयान्निस्रुतं तत्कटुत्वं भजते पुनः " ॥

दृश्यश्चैतद्भवति जीवतः पुरुषस्य झटित्युदरविपाटने, वमतश्च पुंसो विकृतं मुखादितो निर्गतं प्रत्यक्षतामुपैति, तदेव च शेषाणां चतुर्णां पित्तस्थानानामनुग्राहकं भवतीत्यतः " शक्तिकेन्द्रं " तदेव यदुक्तमाचार्यैः—

" तत्रस्थमेव शेषाणां पित्तानामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत्स्मृतम् " ॥

"अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति ।"

" तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहङ्करोति " ।

" जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः ।
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते " ॥

एवं च रञ्जकादिरूपेण रसरक्तादिधातुविपरिणामिनी, पोषकाणामाहारद्रव्यांशानामादानक्रिया, सन्तापशोषणादिकृत्यञ्च सूक्ष्मपित्तस्यैव कार्यम् । रसरागकर्तृणो रंजकस्य वातसाहाय्येन क्रियाशीलत्वात्सूक्ष्मत्वम्, हृद्गतस्य

साधकस्याभिप्रेतार्थसाधनत्वेनैव सूक्ष्मत्वम्, एवं दृक्स्थस्य पित्तस्यालोचकत्वमुक्तं तस्याप्याधारस्यातीन्द्रियत्वेनातीन्द्रियत्वम्, यतो हि सर्वाण्यपीन्द्रियाण्यतीन्द्रियाणि अतश्चक्षुषोऽपि सुतरामतीन्द्रियत्वं सिद्धम्, एवं त्वक्स्थस्य भ्राजकपित्तस्याप्यतीन्द्रियत्वमवसेयम्, तथा च प्रसादरूपं पंचात्मकं पित्तं मुख्यं पाचकमेव स्वस्थानस्थं स्थूलम्, रागादिक्रियासूक्तं रंजकादिनामकं चतुर्विधं तदतीन्द्रियमेवेत्युभयविधत्वम्, मलदशायान्तु तत् " वमनेऽम्लपित्तादिविकारे च मुखान्निर्गतं कटुरसमम्लरसं वा समेषामक्षिलक्षी भवत्येव, रक्तान्मांसार्थं पच्यमानं किट्टं पित्तमुत्पद्यते प्रसादश्च मांसं भवतीत्युक्तं " पित्तं मांसस्य च मलो, मलः स्वेदस्तु मेदस " इति चरकीयवचनेन, एवंच पित्तस्य मलरूपता स्पष्टैव, विकृतपित्तस्वरूपं तु—

" पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ।
उष्णं कटुरसं चैव विदग्धश्चाम्लमेव च ॥ "

इति वचसोक्तं भवति, एवंच मलरूपस्य पित्तस्य सर्वथा स्थूलत्वमेवेति, न चैतस्यापि "पित्तमाग्नेय" मिति सिद्धान्तादग्निरेव शरीरे पित्तान्तर्गत इत्यादिचरकवचसा पित्तमात्रस्य सूक्ष्मत्वोक्ताम्लपित्तादिविकारेषु निर्गच्छतो द्रवस्य द्रव्यान्तरकल्पनया सूक्ष्मत्वम्, " सर्वं खलु पांचभौतिकमिति " चरकसिद्धान्तादग्नेर्दहनक्रियायाः प्रशमनार्थं तत्र प्रचुरस्य जलीयभागस्यावश्यकत्वेन पूतित्वेन भूततया च तस्यैव स्थूलत्वेन द्रव्यान्तरकल्पनाया अन्यायात्वादनौचित्याच्च ।

पंचप्रकारो बलासस्तु मूर्तयोः पृथिवीजलयोराधिक्येन कारणानुरूपत्वात्कार्यस्य प्रसादरूपोऽपि स्थूलप्रायः, आमाशये यः खलु क्लेदकः प्रधानरूपः श्लेष्मा विद्यते तस्य स्वस्थाने स्थूलत्वमितरश्लेष्मसाहाय्येत्वस्यापि सूक्ष्मो भागएवाधिकृतो यदुक्तं धन्वन्तरिणा सुश्रुते—

" माधुर्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ।
आमाशये सम्भवति श्लेष्मा मधुरशीतलः ॥ "

" स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणानुग्रहं करोति " ।

" सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति" इति चरकीयवचनस्यापि सुश्रुतगद्यार्थपोषकत्वेन " द्विर्बद्धं सुबद्धं भवतीति" न्यायादितरपोषकस्य प्रकृतस्य श्लेष्मणः सूक्ष्मत्वमेव निश्चीयतेऽत एव च " सर्वशरीरचरा वातपित्तश्लेष्माण " इति वचोऽपि पित्तश्लेष्मणोः सूक्ष्मभागानामेव शरीरे यथास्थानं समुन्नयनात्सङ्गच्छते ।

द्वितीयस्यावलम्बकनाम्नः कफस्य श्वासपथादावार्द्रतासम्पादनात् प्रत्यक्षविषयत्वेन स्थूलत्वम्, बोधकापरपर्यायस्य रसकाभिधानस्य तृतीयस्यापि " लाला " रूपत्वेन प्रत्यक्षं सर्वसिद्धमेवेति तस्यापि स्थूलत्वम्, सान्धिसंश्लेषकस्य संश्लेषणकर्मणः " श्लेषका " ख्यस्यापि पिच्छिलपदार्थत्वेन प्रत्यक्षं शरीरतत्त्वज्ञैः सुवेदमिति सोऽपि स्थूल एव–

यदुक्तम्–" स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्तते ।

सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथेति ॥ "

" तर्पकाभिधस्तु पञ्चमः शिरस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्येणानुग्रहङ्करोत्यतीन्द्रियाणामनुग्राहकत्वात् सूक्ष्मप्राय एव । नासाचक्षुरादीनामार्द्रताप्रदत्वादयमपि स्थूल इत्यपि केषाञ्चिन्मतमिति प्रसादरूपस्याविकृतस्य श्लेष्मणो द्वैविध्यं स्थूलसूक्ष्मभेदेन प्रतिपादितं शास्त्रसरण्येति ।

मलरूपस्य तु कफस्य सर्वदा सर्वथा स्थूलत्वमेव स खलु " रसाद्रक्तार्थं पच्यमानं किट्टमेव " यदुक्तम्–

" किट्टमन्नस्यविण्मूत्रं रसस्य च कफोऽसृजः । "

एवञ्चैतत्पद्यप्रतिपादितरूपः कफः प्रतिश्यायादौ नासिकादिमार्गान्निःसरन् स्थूल एवेति नात्र कस्यापि विवादः, तदीयं स्वरूपन्तु–

" श्लेष्मा शीतो गुरुः स्निग्धः पिच्छलः शीत एव च ।

मधुरस्त्वविदग्धः स्याद्विदग्धो लवणो भवेत् ॥ "

इति पद्यप्रतिपादितार्थमिति मलरूपस्य श्लेष्मणोऽपि स्थूलत्वमेव वर्णितं यथामति शास्त्रमनुसरतेति ।

एवञ्च वातादीनां त्रयाणामपि प्रसादमलभेदाद् द्वैविध्येन प्रसादेषु

प्रत्येकं पंचात्मतया च व्यवस्थितानां मध्ये वातस्य सर्वावस्थासु विद्युच्छक्तिवद-चिन्त्याभ्दुतशक्तित्वात्सूक्ष्मत्वमेव, अतएव चैतद्विषये—

" पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥ "

इति दोषादिनेतृत्वेनोक्तं वचश्चारितार्थ्यमुपैति ।

पित्तश्लेष्माणौ तु प्राकृतावस्थायां स्थूलसूक्ष्मभेदेन पंचात्मतया यथा निर्देशमुभयात्मकौ, मलावस्थायाञ्च द्वावपि स्थूलावेवेति निष्कर्षः ।

ते चेमेऽविकृता यथावसरमावश्यकेन स्थौल्येन सौक्ष्म्येण चावश्यकं शारीरिकं कर्म निष्पादयन्तो देहधरा भवन्तीति साधूक्तं महर्षिणा सुश्रुतेन—

" विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ "

संक्षेपतः शास्त्रं पुरस्कृत्य दोषाणां दुरूहं स्थूलसूक्ष्मभेदं यथामति प्रतिपाद्य विरमति ।

७ प्रश्नः—किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

उत्तरः—दृश्यते खलु लोके प्राणिनां प्रवृत्तिस्त्रिवर्गमयी धर्मार्थकामानन्तरा सर्वमपि कार्यमकार्यमितिः— ' त्रिवर्गशून्यं नारम्भं भजेत् तंचाविरोधयन् ', । इति शास्त्रोपदेशेनापि लभ्यते । वेदोपदिष्टं धर्माचरणं स्वस्थैरनामयैर्वा नरैरायुष्मदभिरेव साध्यम्—

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ॥
आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥

इत्युभाभ्यामाप्तवचोभ्यामनुमोदितोभवत्यर्थः । आयुर्वेदोपदिष्टं स्वास्थ्य-मायूरक्षा वा शारीरधातुज्ञानादृते न सम्भवतीति षड्धातुसमुदायस्य ( पृथिव्यापस्तेजोवायुराकाशब्रह्मचाव्यक्तमित्येते षड्धातवः समुदिताः पुरुष-इति शब्दं लभन्ते ) पुरुषस्य शारीरधातूनां समीकरणं विहाय चिकित्सा-

शास्त्रस्य प्रयोजनान्तरमेव नानुपश्यामि इत्येष चार्थः—

तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा ।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते
धातुसाम्यक्रियाचोक्ता तन्त्रस्यास्य प्रयोजनम् ॥
इति सुश्रुतचरकवाक्याभ्यां स्पष्टतामुपैति ।

के खलु शारीरा धातवो येषां शरीरधारणक्रियया धातुत्वं भवति च यत्साम्यसम्पादनेन नैरोग्यमिति विचारे तु ‘ दोषधातुमलमूलं हि शरीरम् ’ ‘ दोषधातुमलामूलं सदा देहस्य ’ इत्याद्याप्तवचोनुसन्धानाद् ‘ वातपित्तकफाः ’ रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणिमूत्रशकृत्स्वेदादयः एव च प्रस्तुता भवन्तीति सर्वेषामेषां धारणसाम्यात् धातुत्वेऽपि विशेषज्ञानाय त्रिधा व्यवहारोऽप्युचित एव ‘ प्राधान्येन व्यपदेशा भवन्तीति ’ न्यायात् । अथ त्रिष्वप्येतेषु दूषणस्वभावात्, रोगोत्पादने प्रधानत्वात्, यावच्छरीरावस्थानत्वेन

नित्यत्वात्, पाञ्चभौतिकशरीरभूमिकायां शुक्रशोणितयोरवस्थानेन प्रकृति-सम्पादकत्वाच्च, मुख्यत्वं वातपित्तकफानामतएव चायुर्वेदप्राणिरूपत्वनैव “ वातपित्तश्लेष्मणा एव देहसम्भव हेतवः तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेक इति सुश्रुताचार्या आमनन्ति, अतएव चैषां त्रैविध्यमपि “ वातपित्तकफा दोषाः धातवश्च मला मताः ” इत्युक्तिसूक्तं संगच्छते । तदेषां प्रशस्तिचर्चा-मपास्य देहमूलानां मूलविचारं कर्तुकामोऽहमीश्वरजीवौ प्रकृतां जगज्जननीं सत्वरजस्तमसां साम्यमयीं त्रयीं प्रकृतिं विहाय सर्वमपि सूक्ष्मं स्थूलंच जगत् सादिहेतुकश्च पश्यामीति वातपित्तकफानामप्यादिना हेतुना चौपादान-रूपेणावश्यं भाविना भाव्यमिति प्रश्नः स्वाभाविकः समुदेति तदत्र कदा केनोपादानविशेषेण किमात्मका ह्येते समुत्पद्यन्त इति विचार एव यथामत्या आप्तानां विदुषांचोक्तीः पुरस्कृत्य प्रस्तूयते सयुक्तिकम्

न हि सांख्यसमं ज्ञानमिति सदुक्त्या सूक्ष्मस्थूलभेदेन द्वय्या-स्सृष्टेरवतरणे तन्मतमेवादितः प्रदर्श्यते । तच्च प्रकृतेर्महान् महतोऽहंकारो-

ऽहंकारात् पंचतन्मात्राणि इति सूक्ष्मं जगत्, तन्मात्रेभ्यः पञ्चमहाभूतानि अहंकाराच्चैकादशेन्द्रियाणीति स्थूलं जगत् । सुश्रुते त्वयमर्थः प्रसारविशेषेणोपलभ्यते तद्यथाः—तस्मादव्यक्तान्महानुत्पद्यते, तल्लिङ्ग एव, तल्लिङ्गाच्च महतस्तल्लिङ्गएवाहंकार उत्पद्यते, सच त्रिविधो वैकारिकस्तेजसोभूतादिरिति तत्र वैकारिकादहंकारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यंते, तद्यथा श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणवाग्धस्तोपस्थपायुपादमनांसीति, तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते तद्यथा, शद्वतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति, तेषां विशेषाः शद्वस्पर्शरूपरसगन्धाः तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः, एवमेषा तत्वचतुर्विंशतिर्व्याख्याता ॥ इति

तन्मात्रेभ्यो भूतोत्पत्तौ– ॥ ' तन्मात्रेभ्यो वियद्वायूवन्हिवारिवसुन्धराः एतानि पञ्च जायन्ते महाभुतानि तत् क्रमात् ' ॥ इति प्रमाणमुपलभ्यते शद्वादयश्च तदाश्रया इति । तैरेव चैतैर्महाभूतैः सर्वमपिस्थावरजंगमात्मकं जगत् प्रादुर्भूतं इति, " तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत " इति सुश्रुतोक्त्या स्पष्टी भवति । सर्गारम्भे तन्मात्रेभ्यश्चैषां समुद्भवे पूर्वपूर्वसूक्ष्मभूतस्योत्तरोत्तरभूते गुणाधानं दृश्यते, तद्यथा—शद्वतन्मात्राच्छद्वगुणमाकाशं जायते, तस्य च स्पर्शमात्रागुणे वातेऽनुप्रवेशाच्छद्वस्पर्शगुणो वायुरुत्पद्यते, द्विगुणस्य तस्य रूपतन्मात्रे तेजस्यनुप्रवेशात् तेजः त्रिगुणं जायते, शद्वस्पर्शरूपगुणं तेजो रसतन्मात्रं विशतीत्यापश्चतर्गुणाः सम्पद्यन्ते, चतुर्गुणाश्च ताः गन्धतन्मात्रं विशन्तीति भूः शद्वस्पर्शरूपरसगन्धैः पञ्चभिर्गुणैरुपेता भवतीत्युक्तोर्थश्चरकाचार्यैः—

तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे ।
पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः ॥

अतएवच—पृथ्वीपंचगुणा तोयं चतुर्गुणमथानलः ।
त्रिगुणो द्विगुणो वायुर्वियदेकगुणा भवेत् ॥

इति केचिद् वदन्ति भूतादीनामुद्गमक्रमश्चैष प्रतिपादितस्तैत्तिरीयोपनिषद्यपि—"तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः, स वा एष पुरुषोऽन्नरसमयः।" तदेवं वैदिके क्रमेप्यन्तिमभूतस्य पञ्चगुणस्य भूरूपस्याविर्भावानन्तरं तत एवौषधीनामुत्पत्तिदर्शनात् वनस्पतीनांच सर्भेषामपि---

क्षमाम्भोग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः।
द्वयोल्बणैः क्रमाद् भूतैर्मधुरादिरसोद्भवः॥

इति वाग्भटोक्त्या भूतेभ्यः षड्रसोत्पत्त्या 'जगत्येवमनौषधम्, न किंचिद् विद्यते द्रव्यं वशान्नानार्थयोगयोरिति' तदुक्त्यैव औषधत्वाद् रसमयत्वेन, रसतत्वस्य च सजलस्य रसतन्मात्राज्जातत्वेन तस्मिंश्चोत्पत्तिक्रमानुसारतः शद्बस्पर्शरूपाणामनुप्रवेशाद् बीजरूपरसस्यापिवातादिकारणत्वादोषध्युत्पत्तिसमकालावच्छेदेनैव वातादीनामुत्पत्तिः सिद्धान्तपथमवतरति। तदेवं सर्वमपि स्थूलं जगत् पञ्चतन्मात्रेभ्य एव जातमिति सिद्धान्तमवलम्ब्य वाय्वग्निसोमपर्याया वातपित्तकफा अपि तत एव समुत्पन्नाः कारणगुणपूर्विका हि कार्यश्रुतिः इति सिद्धान्तात्तद्गुणज्ञानानन्तरमेव सर्वेषां स्थूलद्रव्याणां रसगुणवीर्यविपाकप्रभावाणां ज्ञानं सम्पत्स्यत इति। कारणभूतानां तन्मात्राणां सूक्ष्मत्वेन रसगुणपाकेषु यत् किंचिदंशेन सम्भवदपि वीर्यप्रभावयोस्तन्नितरामसम्भवमिति तद्भेदानन्त्योपसंहारेण रूक्षोष्णस्नेहप्रधानैर्गुणैरेव तत्रात्यसूक्ष्मतत्वानां ज्ञानदिशा सर्वमपि वस्तुजातं परिचयपथमेतीति एतत्प्रधानैर्गुणैरेव जगद्धारणकारणानामानिलसूर्यचन्द्रमसां प्रादुर्भावो जातः। त एते रोगचिकित्साप्रधान आयुर्वेदशास्त्रे तत्र व्याधयोऽपरिसंख्येयाः भवन्त्यतिबहुत्वात् दोषास्तु खलु परिसंख्येया भवन्त्यनतिबहुत्वादिति। तथा सर्वे विकारा निजा नान्यत्र वातापित्तकफेभ्यो निर्वर्तन्ते इत्यादि प्रमाणाद् व्यवहारसौकर्याय वातपित्तकफाख्याः सम्मताः। तदुक्तं चरके विमाने 'अतस्त्रिविधविकल्पाः व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्या' इति, सूत्रे च चरके 'अग्निरेव शरीरे

पित्तान्तर्गतः कुपिताऽकुपितः शुभाशुभानि करोति, सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति, वातस्य वार्त्ता तु तत्राध्याये प्राधान्येन चर्चितैव । तदेवमुक्तप्रामाण्यादग्निसोमवायूनां पित्तकफवातानां साम्यं समायात्यतएव च दर्शितं कर्मसाम्यमपि सुश्रुते

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ।

इति सूक्ष्मारब्धत्वात् परमसूक्ष्मेषु शरीरावयवेषु विद्यमानत्वादिमेऽपि सूक्ष्मा एवेति ।

प्राणरूपेणापि परिगणनमेषां दृश्यते—"अग्निः सोमो वायुः सत्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः" तदेवं बीजरूपेण व्यवस्थितानामेषामेवायुर्वैदिकं जगत् त्रिधाकर्त्तुं वातपित्तकफा इति नामोक्तामित्येको दोषोत्पत्तिमार्गः । सर्वं खलु पाञ्चभौतिकमिति स्थूलविषयके चरकीयसिद्धान्ते तु वाय्वाकाशभूताभ्यां वायोरुत्पत्तिः अतएवच प्रकृतिः स्पर्शशब्दयो इति सङ्गतं भवति, पित्तं तु पाञ्चभौतिकमेव, एवं खलु पित्तमाग्नेयमिति सुश्रुतवाक्यस्य प्राधान्येन व्यपदेशा भवन्तीतिन्यायात् अग्न्याधिके तात्पर्यम् । तदीयदाहकत्वनाशाय प्रचुरो जलीयभावोऽप्यावश्यकस्तत्र एवमितराण्यपि भूतानि यथाभागमावश्यकानीति पाञ्चभौतिकता सौम्यस्य कफस्य कारणत्वे प्राधान्यं पृथिवीजलयोरेव तद् भागस्यैव तत्राधिक्यात् इतरद्भूतत्रयंचानुषाङ्गिकमित्यत एव च श्लेष्मा स्थूलप्रायो निगद्यते ।

एवंच सुश्रुतसूत्रीया "तत्र वायोरात्मैवात्मा पित्तमाग्नेयं श्लेष्मा सौम्यः" इत्युक्तिः सामञ्जस्यमुपैति । तदिमेऽपि वातपित्तकफा अग्निसोमवायुत्वेन लोके व्यवस्थितानां तत्वानां लोकपुरुषयोः साम्यं निर्वाहयन्ति । तदुक्तं चरके शारीरे "पुरुषोऽयं लोकसम्मित इत्युपक्रम्य तस्य पुरुषस्य पृथिवी मूर्तिरापः क्लेदस्तेजोऽभिसन्तापो वायुः प्राणो वियच्छुशिराणी ब्रह्मान्तरात्मा" इत्यादिना । एवं बीजरुपाणां द्वितीयोऽयमुत्पत्तिपथः ।

केचित्तु प्रकाशः सत्वस्य गुणः, क्रिया च रजोधर्मः, स्थूलता परिपूर्णत्वं च तमसो गुणाविति कफवातपित्तानामपि कफः सात्विको, रजोबहुलत्वाद्-

वायू राजसस्तमोबहुलत्वाच्च पित्तं तामसमिति सत्वरजस्तमोरूपतां कल्पयन्ति । पित्तप्रकृतौ पुरुषे क्रोधादयस्तमसो गुणा विद्यन्ते । श्लैष्मिके च क्षमादयः इति । ' रक्तान्तनेत्रः सुविभक्तगात्रः । स्निग्धच्छविः सत्वगुणोपपन्नः । क्लेशक्षमो मानयिता गुरुणां । ज्ञेयो बलासप्रकृतिर्मनुष्यः इति समर्थनात् पुष्टं चैतत् प्रतियते, इति चेन्न । मेधाप्रतिमादियुक्तस्य तेजस्विनः पैत्तिकस्य सत्वप्रधानत्वेन तमः प्रधानत्वासम्भवात् । अत एव " पित्तमुष्णं द्रवं पूति नीलं सत्वगुणोत्तरम् " इति शार्ङ्गधरोक्ताः पित्तगुणाः संगता भवंति । तत्प्रकृतिकोपस्तु तमः सम्पर्कात् समुन्नेय इति । श्लेष्मा च तामसप्रायो भवति । यदुक्तं "श्लेष्मा शीतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा । तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ॥ " एवं च सत्वगुणोपपन्न इति पदस्यार्थस्तु " शरीरेन्द्रियसत्वात्मसंयोगो धारी जीवितम् । शरीरं सत्वसंज्ञं च व्याधीनामाश्रयो मत इत्यादि चरकप्रमाणान्मानसिकैः राजसैस्तामसैश्च गुणैर्युक्तो गम्भीरो भवतीति कार्यः ।

अथ च चरकविमानेऽष्टमे श्लैष्मिकगुणनिरुपणे " मन्दत्वस्तैमित्य-गुरुत्वानि " तामसचिन्हानि प्रतिभान्ति [ श्लैष्मिके ] ओजस्वित्वबलवत्वायुष्मत्वैः सात्विकत्वं प्रतीयते इति श्लेष्मणस्तमसि सत्वे वा कुत्र आन्तर्भावः कार्य इति संदेहात् गुणानां वैषम्याच्च न सम्भवति साम्यं सत्वरजस्तमसां कफवातपित्तैः । भवति च प्रकृतिगुणानां साम्ये प्रलयः यदुक्तं " सत्वरजस्तमसां साम्यावस्था प्रकृतिः " इति विकृतावेव च लोकरचना, दोषेषु च तद् वैपरीत्यं, भवति खल्वेषां साम्ये नैरोग्यमानन्दो लोकस्थितिरिति । वैषम्ये च रोगोत्पत्तिरूपसंहार इति, यदुक्तं " रोगस्तु दोषवैषम्यं दोषसाम्यमरोगितेति । अपरं च सर्वेषामपि शारीरिकदोषाणां कोपे रोगकर्तृत्वमुक्तं प्रकृतिगुणप्रधानस्य सत्वस्य च सर्वदा सर्वथा अविकारित्वमेव, तदुक्तं भगवता गीतोपनिषदि " तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयमिति " । एवंच बीजरूपाणां दोषाणां सत्वरजस्तमोरूपत्वकल्पनमनुचितमप्रामाणिकं चेति ।

तदेवं सूक्ष्मरूपाणां दोषाणां द्विधोपादानत्वदर्शनेन तन्मात्रपक्षे सूक्ष्मत्वेनायुर्वेदिकयोः पित्तकफयोर्दृश्यमानानां पार्थिवगुणानां निर्वाहानुपपत्या प्रकृ-

तद्दोषविषये पाञ्चभौतिकश्चरकीयसिद्धान्त एव गरीयानिति तत्र [ चरके ] ते शारीराः प्रसादमलरूपेण द्विधा दर्शिताः शारीरे षष्ठेऽध्याये तयोः प्रसादभूता एव च प्रकृतिभूता उच्यन्ते। तेषां गर्भावतरणे मूलोपादानं तु शुक्रशोणिते एव पित्रोरित्युक्तम् । " शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः । प्रकृतिर्जायते तेन " इति एवं पित्रोः शुक्रशोणितयोर्दोषोत्कटता [ दोषप्राधान्यं दोषव्यवस्थितिश्च ] शिशोश्च गर्भस्थस्य दोषपुष्टिराहाररसादेवेति प्रसादरूपाणां नैरोग्यप्रदानां दोषाणामुपादानं हिताहारविहारावेव । दृश्यते रसमूला चैषामुत्पत्तिर्विनाशश्च रसेभ्यो दैनिकः समुद्भवो दोषाणां दर्शितश्चरकेण यथा–

" तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति त्रयस्त्रयश्चोपशमयन्ति । तद्यथा कटुतिक्तकषाया वातं जनयन्ति, मधुराम्ललवणास्त्वेनं शमयन्ति । कटुकाम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनं शमयन्ति । मधुराम्ललवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनं शमयन्ति " इति उक्तश्चायमेवार्थो वाग्भटेन–

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्येतु कुर्वते ॥ इतिपद्येन

शिशुरपि " मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते " इत्युक्त्या आहाररसादेव सर्वभावानां शारीराणां वृद्धिं प्राप्नोतीति । " कटम्ललवणं पित्तं (व) स्वाद्वम्ललवणः कफः । कषायतिक्तकटुकोवायुर्दृष्टोऽनुमानत–इति । कपिलबलस्तु द्रव्याश्रितरसरूपतामेव दोषाणामुक्तवान् । अतस्तन्मतेऽपि प्रसादरूपाणां दोषाणां रसा एवोपादानतामुपयान्तीति ।

**यत्तुकेचित्**–'तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥

इति सुश्रुताधारमवलम्ब्य शुक्रशोणितसंयोगे पुरुषव्यक्तिं, तयोश्चसम्पादनाय [ परम्परया ] अन्नस्यावश्यकत्वम्, तत्परिपाकार्थं च वातपित्तकफानामन्नेनैव-समुद्भवं ततश्च धातूत्पत्तिम् मलसमुद्भवं च मत्वा " देहे अन्नमया एव सर्वे-भावाः " " दोषधातुमलमूलं हि शरीरम् " इति वाक्यार्थं सङ्गमय्योक्तप्रकारामेव दोषोत्पत्तिं मन्यन्ते । तेषां पक्षेऽपि शारीरदोषोत्पत्तावेव स्वारस्यं प्रतीयते । मलरूपाणां च तेषामुत्पत्तिक्रमः ।

दर्शितश्चरकेणैव—अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ।

मधुरात् प्राक्कफोद्भावात्फेनभूतं उदीर्यते ।
परं तु पच्यमानस्य विदग्धस्याम्लभावतः ।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ।
पक्काशयं तु प्राप्तस्य शोष्यमाणस्य वन्हिना ।
परिपिण्डितपक्कस्य वायुः स्यात् कटुभावतः ।

इति चरकेचिकित्सिते १५ अध्याये । अन्यच्च तत्रैव:—

किट्टमन्नस्य विण्मूत्रं रसस्य च कफोऽसृजः ।
पित्तं मांसस्य च मलो मलः स्वेदस्तु मेदसः ।

रसस्य कफः रक्तस्य पित्तमित्यादिक्रमः—

कफः पित्तं मलाः खेषु प्रस्वेदो नखरोमच ।
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ।

वाग्भटेनापि दर्शितः । एवञ्चान्नरसरक्तान्येव मलरूपाणां दोषाणामुपादानानीति । स एव दर्शितो विकासक्रमः स्थूलानामेव मलरूपाणां दोषाणाम् । नैतेन सूक्ष्माणां शारीराणां पुष्टिर्भवति तत्वानामिति, तत्परिपोषायाहारपरिपाकश्च पञ्चभूतानामग्निभिरेव भवतीति सिद्धान्तः—

भौमाप्याग्नेयवायव्या पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान्स्वान्स्वान् यथास्वं विपचन्त्यनु ॥

पद्येनानेन दर्शितः शास्त्रे ।

एवं यथाविचारं स्वशक्त्या सूक्ष्माणां, शारीराणां प्रसादमलभेदेन द्विविधानाञ्चोपादानानि यथाक्रमं तेषां तेभ्य उत्पत्तयः संक्षेपेण दर्शितानि । अतः परं विस्तरं वा सुधिय एव विभावयन्तु इति शम् ॥

———

# वैद्यशास्त्री नारायणशंकरो देवशंकरात्मजः प्राणाचार्यः अहमदाबाद इत्येषांमतम् ।

( १ ) पञ्चमहाभूतविचारप्रयोजनम् ।

**तस्योत्तरम्**:—चरक-शारीरस्थाने प्रथमाध्याये कथितं ।

खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः ।

चेतना धातुरप्येकः स्मृतः पुरुषसंज्ञकः ॥ श्लो. १४ ॥

सुश्रुतसूत्रस्थाने प्रथमाध्याये चोक्तं । अस्मिन्शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते ( १६ ) तथा च सृष्टौ द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्थाः । सप्तपदार्थेभ्यश्चोत्पत्तिर्विनाशश्च भवतः । ते पञ्चभूतानां समवायिकारणम् । उक्तं च । चरकाचार्येण सूत्रस्थानाध्याये २६ " सर्वं द्रव्यं पाञ्चभौतिकमस्मिन्नेवार्थे तच्चेतनावदचेतनञ्च "

( २ ) भूतलक्षणम् । किंनामभूतत्वम् ?

**तस्योत्तरम्**:—भूतपदवाच्याः पञ्चभूताः । न्यायशास्त्रे चोक्तम् । पृथिव्यप्तेजोवाय्वाकाशभूतपदवाच्याः । आयुर्वेदेप्येवं चरकसुश्रुतादिग्रन्थेषु भूतशब्देनव्यवहारः कृतः ।

( ३ ) भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा?।

**तस्योत्तरं**:—चरकशारीरस्थाने प्रथमाध्याये चोक्तं ।

एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु ।

हस्तौ पादौ गुदोपस्थे जिव्हेन्द्रियमथापिवा ।

कर्मेंद्रियाणि पंचैव पादौ गमनकर्माणि ॥ २३ ॥

पायूपस्थौ विसर्गार्थौ हस्तौ ग्रहणधारणे ।

जिव्हा वागिन्द्रियं, वाक् च सत्याज्योतिस्तमोऽनृता ॥ २४ ॥

महाभूतानि, खं वायुरग्निरापः क्षितिस्तथा ।

शद्बः स्पर्शश्चरूपञ्च रसोगन्धश्च तद्गुणाः । ''

इत्यादि सुश्रुतशारीरस्थाने प्रथमाध्यायेऽपि पूर्वोक्तरीत्या प्रतिपादितं । तत्र बुद्धीन्द्रियाणां शद्बादयोविषयाः कर्मेन्द्रियाणां यथासंख्यं वचनादानानन्द-विसर्गविहरणानि इत्यादि । एवंरीत्या न्यायवैशेषिके, न्यायसूत्रे, वात्स्यायन-भाष्येऽपि चोक्तं ।

( ४ ) भूतस्वरूपगुणधर्मादीनां विवेचनम् ।

**तस्योत्तरं**:—चरकसूत्रस्थानेऽध्याये २६ तमे सर्वं कथितम् । " तावद्-द्रव्यभेदमभिप्रेत्य किंचिदभिधास्यामः । सर्वं द्रव्यं पाञ्चभौतिकं । तस्मिन्नेवार्थे तच्चेतनावदचेतनञ्च । तस्य गुणाः शद्बादयो गुर्वादयश्च द्रवान्ताः । इत्यादि'' । विशेषश्च तृतीयद्वितीयप्रश्नस्योत्तरे समागतएव ।

( ५ ) भूतसंख्याविमर्शः ।

**तस्योत्तरं**:—आयुर्वेदशास्त्रे पञ्चभूतानामेव प्राधान्यं । प्रतिपत्रं तेषामेवो-ल्लेखः कृतः । पञ्चभूतसिद्धान्तविचारमन्तरा त्रिदोषसिद्धान्तस्य विचारो न भवति ।

( ६ ) भूतानां सादित्वम्, अनादित्वम्, उभयत्वम् वा ? सादित्वं चेत् तदुत्पत्तिः सक्रमा, अक्रमा वा ? ।

**तस्योत्तरं**:—यथा सांख्यवेदोपनिषदि भूतानां सादित्वम् तथैवायुर्वेदशास्त्रेऽपि चरकशारीरस्थाने प्रथमाध्याये [१-६६] तथा च सुश्रुत शा. अ. १-४ द्रष्टव्यं ।

( ७ ) गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवः प्रकारः कः ।

**तस्योत्तरं**:—षष्ठमप्रश्नस्योत्तरे समावेशः ।

( ८ ) भूतानामितरेतरव्यत्वकीर्णत्वं कथं संपद्यते ? ।

**तस्योत्तरं**:—महाभूतानामन्योन्याश्रयित्वम् ।

( ९ ) भूतानां सृष्टिकारणत्वं कीदृक् ? ।

**तस्योत्तरं**:—पूर्वमेवोक्तं " सर्वं द्रव्यं पांचभौतिकमस्मिन्नेवार्थे तच्चेतना-वदचेतनं च '' । प्रथमप्रश्नोत्तरे समावेशः । तथाऽपि चरकसूत्रस्थाने तथा च । चरके शा. अ. १२ तमे द्रष्टव्यम् ।

( १० ) परिणामारम्भक्रिययोर्विशेषः ।

**तस्योत्तरं**:—यथा सांख्यमिमांसादिशास्त्राणां सिद्धान्तस्तथैव,

आयुर्वेदशास्त्रस्याऽपि । सुश्रुतशारीरस्थाने प्रथमाध्याये कथितं । " सर्वभूतानां कारणमकारणं सत्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः संभवहेतुरव्यक्तं नाम । तदेकं बहूनामधिष्ठानं समुद्र इवौदकानां भावानां " । ३ । प्रथमाध्याये परिणामवाद एव वर्णितः । अतस्सांख्यशास्त्रस्य यथा परिणामवादो मान्यस्तथैवायुर्वेदस्याऽपि ।

( ११ ) दृश्यानां पृथिव्यादीनां भूतत्वं न वा ? ।

**तस्योत्तरं**:—आयुर्वेदशास्त्रसंमतं पृथिव्यादीनां भूतत्वं । दार्शनिकादयोऽपि मन्यन्ते । गुणवत्वेन क्रियावत्वेनाऽपि भूतत्वं ।

( १२ ) एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकैर्मूलतत्वतयाऽङ्गीकृतानां भूतत्वं नवा ? ।

**तस्योत्तरं**:—प्रतीच्यरासायानिकानां मते तु भूतत्वमेव । आयुर्वेदीयमतेऽपि भूतत्वमेव । कथमिति चेत् । पूर्वोक्तपंचमहाभूतानां विचारत एव हैड्रोजनऑक्सिजनादिष्वपि भूतत्वमेव । एतद्विषये प्रतीच्यरासायनिका विचारं करिष्यन्ति ।

( १३ ) इलेक्ट्रॉन प्रोटॉनसंज्ञकयोर्भूतत्वं न वा ?

**तस्योत्तरं**:—पदार्थविज्ञानशास्त्रानुसारेण एतयोरपि भूतत्वमेव । तथाऽपि निर्णयं रासायनिकाः करिष्यन्ति ।

( १४ ) परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा ? अभेदो वा ? ।

**तस्योत्तरं**:—तन्मात्राविषये सुश्रुताचार्येण सुश्रुतशारीरस्थाने प्रथमाध्याये कथितं । " भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते तद्यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति; तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः, तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः; एवमेषा तत्वचतुर्विंषतिर्व्याख्याता । परमाणुविषये चरकाचार्येण शारीरस्थाने सप्तमाध्याये कथितं । " शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति " अत्र शरीरावयवाः इति कथितं तथाऽपि " पार्थिवशरीरं " इति न्यायेन पृथिव्यादीनां परिमेयपरमाणवस्सन्ति इति गणितं । एतेन परमाणुतन्मात्रयोरैक्यं नास्तीति प्रतिपादितं । सांख्यतत्वसमाससूत्रेऽपि पूर्वोक्तप्रमाणेन कथितम् ।

( १५ ) द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायेन तदभेदो वा ? ।

**तस्योत्तरं**:—एतद्विषये सुश्रुतसूत्रस्थाने ४१ " द्रव्यविशेषविज्ञानीय " अध्याये कथितं । द्रव्याश्रिता गुणास्सन्ति । तत्सर्वशास्त्रसंमतं । द्रव्याद् गुणस्य स्वातंत्र्यं कदाऽपि न संभवति । द्रव्ये गुणाधिक्यमास्ति । अतश्च द्रव्याश्रिता गुणाः । गुणसमुदायत्वेनाऽपि तदभेदो नास्ति ।

( १६ ) तेजसो द्रव्यत्वं न वा ? ।

**तस्योत्तरं**:—द्रव्यत्वमेव । उपरिष्टात्प्रतिपादितमेव । आधुनिकवैज्ञानिकानामेतद्विषये भिन्नविचार एव ।

( १७ ) आकाशस्वरूपविमर्शः स भावरूपोऽभावात्मको वा ? भावत्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गं ? शब्दः अवकाशो वा ? ।

**तस्योत्तरं**:—" आत्मन आकाशः संभूतः ( तै. २-१ ) इत्यादि श्रुतिभ्य आकाशस्य वस्तुत्वप्रसिद्धिः । एतद्विषये श्रुतिवेदोपनिषदादिसिद्धान्ताः पूर्वमेव कथिताः । आयुर्वेदशास्त्रेऽपि तथैव । शब्दगुणकमाकाशमिति नैयायिकाः वदन्ति । सांख्यशास्त्रे वेदे च भावरूपत्वं । विषयेऽस्मिन् भिन्नभिन्नमतानि सन्ति । तथाऽपि सावयवत्वं, भावरूपत्वं, शब्दगुणकमाकाशमिति सिद्धं ।

( १८ ) पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

**तस्योत्तरं**:—द्वितीयप्रश्नस्योत्तरे समावेशः । पञ्चीकरणवेदान्तादिग्रन्थेष्वपि भिन्नभिन्नमतानि सन्ति । तथाऽपि वैद्यकशास्त्रे यत्कथितं तत् द्वितीयप्रश्नस्योत्तरे समागतं ।

( १९ ) ईथराख्यस्याऽस्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे, तेजसि, वायौ वा ? कथं च सः ? ।

**तस्योत्तरं**:—पाश्चात्यपंडितास्तस्य निर्णयं करिष्यन्ति । यावत्पर्यन्तं " ईथराख्यस्याऽस्तित्वं "एतत्प्रश्नस्य निर्णयो न जातस्तावत्पर्यन्तं मौनमेववरं ।

( २० ) मनुष्यादिशरीरेषु चैतन्यं आत्मजन्यं पञ्चभूतादिसंयोग-विशेषजन्यं वा ? ।

**तस्योत्तरं**:—पूज्यचरकाचार्याणां तु—मनुष्यादिशरीरेषु चैतन्यं आत्म-जन्यं इति सम्मतं । एतद्विषये किमपि कथनीयं न ।

यथामति संक्षेपेण प्रश्नोत्तराणि लिखित्वा प्रेषितानि ।

---

## श्रुतिस्मृतिवेदोपनिषदादिशास्त्रसिद्धान्तानुसारेण प्रश्नोत्तराणि ।

१ प्रथम प्रश्नः—पंचमहाभूतविचारप्रयोजनम् ?

उत्तरम्—निखिलब्रह्माण्डसर्गाद्यकालेऽपरिमितानन्तशक्तिविशेषविशिष्ट-मायासहितः परमेश्वरः " तदैक्षत बहुस्यां प्रजायेय " इति " सोऽकामयत बहुस्यां प्रजायेय " इत्यादि श्रुतेः । "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातःपतिरेक आसीत् " इत्यादि श्रुतेश्च ततईक्षणसंकल्पप्रयत्नानंतरमाकाशादीनि पञ्चमहा-भूतानि प्रादुर्भवन्ति । तथा च श्रुतिः " तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी " इति । अव्या-कृतमेव प्रकृतिरिष्यते, तस्य च सृष्ट्युन्मुखत्वसृष्ट्याद्यकालयोगरूपं तदेव महत्तत्वं तत आकाशादिपंचभूतसूक्ष्माणि क्रमेणोत्पन्नानि पंचतन्मात्राणि ततस्तेभ्य एव स्थूलान्युत्पन्नानि पंचमहाभूतानि । सूक्ष्मस्थूलक्रमेणैव कार्योदयदर्शनात् । परमात्मनः सकाशादेव सृष्ट्युत्पत्तिरुत च महादादिक्रमेण सृष्ट्युत्पत्तिरिति वेदान्तसांख्यमतयोर्न विरोधः अत आह भगवान् मनुरपि " मनःसृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं जायते तस्मात्तस्य शद्बं गुणं विदुः " आका-शात्तु विकुर्वाणात्सर्वगंधवहः शुचिः । बलवान् जायते वायुः स वै स्पर्शगुणो मतः वायोरपिविकुर्वाणाद्विरोचिष्णु तमोनुदम् । ज्योतिरुत्पद्यते भास्वत्तद्रूपगुण-मुच्यते ज्योतिषश्चविकुर्वाणादापो रसगुणाः स्मृताः । अद्भ्यो गंधगुणा भूमि-रित्येषा सृष्टिरादितः । एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य

ब्रह्माभ्येति परं पदम् " इत्यादि श्रुतिस्मृतिसिद्धान्तवाक्यार्थपर्यालोचनया मुमुक्षुभिः सर्वथा तत्वविचारः कर्तव्य एव एतेन प्रयजनं व्याख्यातम् ।

**२ द्वितीय प्रश्नः**—" किन्नामभूतत्वम् " भूतलक्षणम् ? ।

**उत्तरं**:—बहिरिन्द्रियग्राह्यविशेषगुणवत्वम् भूतत्वम् ।

**३ तृतीय प्रश्नः**—" भूतानामेकैकेन्द्रियार्थाश्रयित्वम् अनेकेन्द्रियार्थाश्रयित्वं न वा ? " ।

**उत्तरं**:—प्रागुत्पद्यमाना पृथिवी गन्धमात्रा प्रकृतेरुत्पद्यते । पूर्वमस्या आपो रसमात्राः । ताभ्यः पूर्वं तेजो रूपमात्रम् । ततोऽप्यर्वाग् वायुः स्पर्शमात्रः । पूर्वं चास्मात् शब्दमात्रमाकाशम् । त इमे गंधादयो गुणाः पृथिव्यादिनां नैताः । कारणगुणक्रमात्तु शब्दादयो वाय्वादौ । अथाप्येतदुक्तम् "आद्याद्यस्यगुणं तेषामवाप्नोति परः परः । यो यो यावतिथश्चैवां ससतावद्गुणः स्मृतः " इति । अभिभवानुद्भवौत्वमीषां यथाविषयं वेदितव्यौ " गंधरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः, आप्तेजोवायूनां पूर्वंपूर्वमपोह्याकाशस्योत्तरः" इति तंत्रान्तरे चोद्भवानभिभववतामेवगुणानामुपसंख्यानमित्युभयमपिशास्त्रसम्मतं।

**४ चतुर्थ प्रश्नः**—भूतस्वरूपगुणधर्मादीनां विवेचनमिति ? ।

**उत्तरं**:—गंधसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिः सिध्यति, पृथिवी रूप रस गंध स्पर्श संख्या परिमिति पृथक्त्वसंयोग विभाग परत्वापरत्व गुरुत्व द्रवत्व वेगस्थितिस्थापकगुणवती । तत्र नीलशुक्लपीतरक्तहरितकपिशचित्रात्मकानि सप्त रूपाणि वर्तन्ते । कषाय--मधुर--लवण--कटु--तिक्ताम्लभेदेन षड्विधो रसः पृथिव्याम् । गन्धस्तु सौरभासौरभभेदेन द्विविधः । पाषाणेऽप्यनुत्कटोगन्धोऽस्त्येव, तद्भस्मनि गन्धोपलब्धेस्तदुपादानापादेयत्वेन पाषाणस्य पृथिवीत्वं तेन च गन्धानुमानात् । स्पर्शोप्यनुष्णाशीतः क्वचित्पाकजः क्वचित् कारणगुणजनितश्च । पृथिवी द्विविधा नित्यानित्यभेदात् तत्र परमाणुरूपानित्या, तदन्याऽवयवयोगिन्यनित्या, सापि त्रिविधा शरीरेन्द्रियविषयभेदात् तत्र शरीरं जरायुजांडजस्वेदजोद्भिजभेदाच्चतुर्विधम् जरायुजा मनुष्याद्याः । अंडजाः । पक्षिसर्पाद्याः । स्वेदजादेशमशकाद्याः । उद्भिज्जास्तरुगुल्माद्याः । घ्राणेन्द्रियम्

पार्थिवम् । विषयास्तु द्व्यणुकादिब्रह्माणुपर्यन्ताः । तत्र द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्रसरेणुरित्यादिक्रमेणावयवानामुत्पत्तिः ।

जन्यस्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः । रूपरस-संख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वगुरुत्वद्रवत्वस्नेहवेगाः जलस्य गुणाः । तत्र रूपं शुक्लमेव, रसो मधुरएव, स्पर्शः शीतएव, द्रवत्वं सांसिद्धिकम् । परमाणुरूपं द्व्यणुकादिरूपमिति नित्यानित्यभेदेन द्विविधम् । अथनित्यं वरुणलोके इन्द्रियं रसनम्, हिमकरकादयो विषयाः ।

जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया तेजस्त्वजातिसिद्धिः तेजसि रूपस्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्ववेगा गुणाः सन्ति । तत्र भास्वरे शुक्लरूपमेव तेजसि, द्रवत्वं नैमित्तिकं सुवर्णादौ तेजसि, परमाणुरूपं नित्यं द्व्यणुकादिरूपमनित्यम् अनित्यं त्रिविधम् शरीरेन्द्रियविषय-भेदात् तैजसं शरीरमयोनिजं सूर्यलोकादौ प्रसिद्धम्, तैजसमिन्द्रियं नयनम् विषयो वन्हिसुवर्णादिः ।

जन्यविजातीयस्पर्शसमवायिकारणतावच्छेदकं वायुत्वं जातिविशेषः । स्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगा नव गुणा वायोर्वर्तन्ते । वायोरनुष्णाशीतपाकजस्पर्शेन, विलक्षणशब्देन, तृणतुलादीनां धृत्या, शाखा-दीनां कंपनेन च वायोरनुमानं भवति, उद्भूतरूपस्य चाक्षुषं प्रत्येव हेतुत्वात् वायोः स्पर्शनप्रत्यक्षं भवत्येव तत्रोद्भूतस्पर्शस्य हेतुत्वादित्याहुः । वायुर्द्विविधो नित्योऽनित्यश्च परमाणुरूपोनित्योऽनित्यस्तु तदन्यः । शरीरेन्द्रियभेदादनि-त्यस्त्रिविधः । वायवीयं शरीरमयोनिजं पिशाचादीनाम्, शरीरव्यापकं वायवीय-मिन्द्रियं त्वक्, वायवीयो विषयस्तु प्राणादिमहावायुपर्यन्तः । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभते ।

शब्दाश्रयत्वमाकाशत्वम् । आकाशस्य षड्गुणाः संख्याद्याः पंचशब्दश्रुति, आकाशएकोऽपि उपाधेः कर्णशष्कुल्या भेदाद्भिन्नं श्रोत्रात्मकमिन्द्रियं भवति । प्रथमं तावच्छब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानम् । ततः शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवदित्यनुमानेन

शद्वस्य द्रव्यसमवेतत्वे सिद्धे शद्वो न स्पर्शवद्विशेषगुणः । अपाकजत्वे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्, पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्, पीलुपाकवादिमतेतु सत्यन्तं न देयमेव, पटरूपादौ व्यभिचार-वारणाय कारणगुणपूर्वकेति, जलपरमाणुरूपादौव्यभिचारवारणाय प्रत्य-क्षेति । शद्वः न दिक्कालमनसां गुणः विशेषगुणत्वात्, नात्मविशेषगुणः बहि-रिन्द्रियग्राह्यत्वात् रूपवत् इत्थं च शद्वाधिकरणं द्रव्यं गगननामकं सिध्यति । न च वाय्ववयवेषु सूक्ष्मशद्वक्रमेण वायौ कारणगुणपूर्वकः शद्व उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावासिद्धेः । अयावद् द्रव्यभावित्वं च स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत्तद्भिन्नत्वम्, तच्चाशु विनाशिनि शद्वे निराबाधमेव, अत्र व्यतिरेकेण वायुस्पर्शो दृष्टान्तो ज्ञेयः ।

एतेन भूतसंख्या विमर्शः, भूतानां सादित्वञ्च सिध्यति, भूतानामुत्पत्ति-प्रकारोऽपि " तस्माद्वा एतस्मा " दित्यादि श्रुतिसिद्धान्तेन प्रकाशितः । एवं भूतानामितरेतरव्यवकीर्णत्वं भूतानां सृष्टिकारणत्वं च प्रदर्शितया दिशा विज्ञा-यत एव । इति नवानां प्रश्नानामुत्तराणि ।

१० परिणामारंभाक्रिययोर्विशेषः ।

पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संगेनसचिवै-स्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि । तत्सामान्येन यावत्किंचित् सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते । सचायमवय-वविभागो यतो निवर्तते सोऽपकर्षः पर्यन्तः परमाणुः । सर्वंचेदं जगद् गिरि-समुद्रादिकं सावयवं, सावयवं चाद्यन्तवत् । न चाकारणेन कार्येण भवितव्यमि-त्यतः परमाणवो जगत्कारणमिति कणभुगभिप्रायः । तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिक-ल्प्यन्ते तेषां चापकर्षपर्यन्तगतत्वेन परतो विभागाः संभवाद्विनश्यतां पृथि-व्यादीनां परमाणुपर्यन्तो विभागो भवति स प्रलयकालः । ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते । तत्कर्म स्वाश्रयमण्वन्तरेण संयुनक्ति । ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते । एवमग्निरेवमापः, एवं पृथिवी, एवमेव शरीरं,

सेंद्रियमिति । एवं सर्वमिदं जगदणुभ्यः संभवति । अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति, तन्तुपटन्यायेनेति काणादा मन्यन्ते । इत्यारंभः । परिणामः सांख्यानाम् ते चेत्थं मन्यन्ते यथा घटशरावादयो भेदा- मृदात्मनान्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयान्वीयमानाः सुखदुःखमोहात्मक- सामान्यपूर्वका भवितुमर्हन्ति । यत्तत्सुखदुःखमोहात्मकं सामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं, चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तत इति । तथा परिणामादिभिरपि लिङ्गैस्तदेव प्रधानमनु- मीयते । इतिपरिणामवादः ।

११ दृश्यानां पृथिव्यादीनां भूतत्वं न वा इति प्रश्नः ।
तत्रोत्तरम्–गुणवत्वेन क्रियावत्वेन च तेषां भूतत्वमेव ।
१२–१३ प्रश्नौ उपेक्षितौ उक्तेरेवकार्यनिर्वाहात् तेष्वन्तर्भावाच्च ।
१४ परमाणुतन्मात्रयोर्विवेचनम् तयोर्भेदो वाऽभेदो वा ।
उत्तरम्—अभेद एव ।

१५ द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदोवा गुणसमुदायत्वेन तदभेदो वा ।
उत्तरम्–ब्रह्मसूत्र अ. २ पाद २ अपरिग्रहाच्चात्यन्तमनपेक्षा १७ ।
प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोप- जीवनाभिप्रायेणोपनिबद्धः । अयंतु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः ।

अपिच वैशेषिकास्तन्त्रार्थभूतान् षट्पदार्थान्द्रव्यगुणकर्मसामान्य- विशेषसमवायाख्यानत्यन्तभिन्नान्भिन्नलक्षणानभ्युपगच्छन्ति । यथा मनुष्योऽश्वः शश इति । तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युप- गच्छन्ति । तन्नोपपद्यते । कथम् । यथाहि लोके शशकुशपलाशप्रभृतीना- मत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वा- न्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति । अथ भवति द्रव्याधीनत्वं गुणादीनां ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावाद्द्रव्यमेव संस्थानादिभेदादनेकशब्द-

प्रत्ययभाग् भवति । यथा देवदत्त एकएव सन्नवस्थान्तरयोगादनेकशब्दप्रत्यय-भाग् भवति तद्वत् । द्रव्यगुणयोस्तादात्म्यमेव । विस्तरस्तु तत्र भगवत्-पूज्यपादैर्निरूपितः ।

१६ तेजसो द्रव्यत्वं न वा ?

**उत्तरं**:—द्रव्यत्वमेवेति—उपरिष्ठात्प्रतिपादितमेव ।

१७ आकाशस्वरूपविमिर्श इत्यादिप्रश्ने—

**उत्तरं**:—आत्मन आकाशः संभूतः ( तै० रा० १ ) इत्यादिश्रुतिभ्य आकाशस्य च वस्तुत्वप्रसिद्धिः । विप्रतिपन्नान्प्रति तु शब्दगुणानुमेयत्वं वक्तव्यं, गंधादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात । अपि चावरणा-भावमात्रमाकाशमिच्छतामेकास्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात् सुपर्णा-न्तरस्योत्पित्सतोरनवकाशत्वप्रसंगः, यत्रावरणाभावस्तत्र पतिष्यतीति चेत्, येना-वरणाभावो विशेष्यते तत्तर्हि वस्तुभूतमेवाकाशं स्यान्नावरणाभावमात्रम् । अपिचावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रस-ज्येत । सौगतेहि समये " पृथिवीभगवः किं संनिश्रयः " इत्यस्मिन्प्रतिवचन-प्रवाहे पृथिव्यादीनामन्ते " वायुः किं संनिश्रयः " इत्यस्य प्रश्नस्य प्रतिवचनं भवति " वायुराकाशसंनिश्रयः " इति । तदाकाशस्य वस्तुत्वेन समञ्जसं स्यात् । तस्मादप्युक्तमाकाशस्य वस्तुत्वम् । शब्दलिङ्गकमाकाशं निरवयवञ्चेति सर्वसिद्धान्तसम्मतम् ।

१८ प्रश्नस्योत्तरं दत्तप्रायमेवं ।

१९ पदार्थवाद्येव प्रष्टव्यः ।

२० मनुष्यादिशरीरेष्विति प्रश्ने ।

**उत्तरं—न** केनापिजन्यं, किन्तु स्वाभाविकमेवात्मनि संबद्धम् ।

---

# श्री काश्यां त्रिदोषादि चर्चापरिषदि विचारार्हा विषयाः तेषामुत्तराणि ।

१ **प्रश्नः**–त्रिदोषविचारप्रयोजनम् ? ।

**तस्योत्तरं**:–आयुर्वेदशास्त्रे पञ्चभूतस्य त्रिदोषस्यच "अन्योन्याश्रयित्वं"। उक्तश्च दोषत्रयविषये सुश्रुताचार्येण सूत्रस्थानाध्याये २१ तमे " वातपित्तश्लेष्माण एव देहसम्भवहेतवः " । तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यते, आगारमिवस्थूणाभिस्तिसृभिस्तश्च त्रिस्थूणमाहुरेके । भवतिचात्र । " नर्तेदेहः कफादस्ति न पित्तान्नच मारुतात् । नित्यं देहएतैस्तुधार्यते " । तथैव वाग्भटेन सूत्रस्थाने प्रथमाध्याये कथितं " वायुः पित्तंकफश्चेति त्रयोदोषाः समासतः । विकृताऽविकृता देहं घ्नंति ते वर्तयन्ति च " ।

२ **प्रश्नः**–वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधं चेत्तद् विरुद्धमविरुद्धं वा ? ।

**तस्योत्तरं**:–वातपित्तकफास्तु त्रयो धातवः । तैरेव सकलानि लघुतमानि वा गुरुतमानि वा शरीरावयवानि निर्मितानि सन्ति। अतएव ते धातवाः शरीराणामाधारभूतामन्यन्ते । एतेषां त्रयाणामभावः शरीरस्यैवाभावेन समः । तेषां वैषम्यं दोषो भवति व्याधिं चोत्पादयति । केचिद्धातुं दोषं कथयन्ति केचिच्च दोषं धातुं कथयन्ति । एतौ द्वौ शब्दावितरेतरपर्यायावेव । आरोग्यमनारोग्यं वा धातूनां बलाऽबल एवावलम्बेते । इत्यायुर्वेदस्य स्वयं सिद्धप्रमाणं स्वीक्रियते । अतएव धातुदोषयोः पर्यायवाचित्वमुपर्यङ्गीकृतमेव । यदा धातवो नियमिताऽवस्थायां वर्तन्ते तदा तेषां प्रसादस्थितिरित्युच्यते । यदा तेषां स्थितिरनियमितता वर्तते तदा तेषां मलस्थितिरित्युच्यते । कार्यकारणसम्बंधेन वयं धातून्विविधस्वरूपैः प्रत्यभिजानीमः । धातुर्वा दोषोवा प्रसादभूतधातोरर्थं, उपयुज्यते कीटभूतो वा मलस्यार्थे । विज्ञानदृष्ट्या शरीराणां क्रिया वातपित्तकफाख्यं धातुत्रयमेवावलम्बते । अत एवोक्तं । " धातवश्च

मलाश्चाऽपिदूष्यन्त्येभिर्यतस्ततः। वातपित्तकफा एते त्रयो दोषा इति स्मृताः। शरीरदूषणाद्दोषा धातवो मलधारणात्। वातपित्तकफा ज्ञेया मलीनीकरणान्मलाः। अष्टाङ्गसंग्रह० सू. अ. २० वेदादिमन्त्रेषु—त्रिधातुरितिशब्दः त्रिदोषस्यार्थे प्रचलति। नासिक सम्मेलनेऽपि "त्रिधातु सर्वस्वं" एतन्निबंधस्य योजना प्रकटीकृता। आयुर्वेदशास्त्रे "वायुः पित्तंकफश्चेतित्रयो दोषास्समासतः। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। मलाः-मूत्रशकृत्स्वेदादयोऽपिच।

३ **प्रश्नः**—दोषसंज्ञायां हेतुः?।

**तस्योत्तरः**—द्वितीयप्रश्नस्योत्तरे समागतं तथाऽपि सुश्रुतसूत्रस्थाने अ. २४-८-" सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलं" इत्यादि।

४ **प्रश्नः**--कथं त्रय एव दोषाः?।

**तस्योत्तरः**-सुश्रुताचार्येण कथितं।"यथा कृत्स्नं विकारजातं विश्वरूपेण, अवस्थितं सत्वरजस्तमांसि न व्यतिरिच्यते एवमेव कृत्स्नं विकारजातं विश्वरूपेण अवस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते। तथैव सु. सू. अ. २१ श्लो. ८—विसर्गादानविक्षेपैः सोमसूर्यानिला यथा। धारयन्ति जगद्देहं कफपित्तानिलास्तथा इति"।

५ **प्रश्नः**—वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा?।

**तस्योत्तरः**—द्रव्यरूपत्वमस्ति। शक्तिस्वरूपे भिन्नमतानि सन्ति। द्रव्यरूपे विवरणं। द्रव्यस्वरूपा वातादिदोषाः। लोके तावच्छरीरं पार्थिवमिति व्यवह्रियते। श्रुतितः पञ्चीकरणजन्यमिति प्रतीयते। पञ्चीकरणं तु पृथिवीजलतेजोवाय्वाकाशादीनामेव। तेन पञ्चानामपि द्रव्यस्वरूपत्वं निश्चितं। एतेन शरीरं द्रव्यस्वरूपमिति सिद्धं दोषधातुमलमूलमिदं शरीरं इत्यायुर्वेदीयवचनेन त्रिदोषाणां कायस्योपादानकारणत्वं ज्ञायते द्रव्यमेव ह्युपादानकारणं भवितुमर्हति। समवायिकारणं द्रव्यमिति लक्षणात्। अत्र शक्तिशब्दः किमुद्दिश्य लिखित इति न ज्ञायते। आयुर्वेदेषु ओषधिद्रव्याणां प्रभाव इति कथितं। शरीरे त्रिदोषाः (वायुपित्तकफाः) कार्यं कुर्वन्ति। शक्तिमन्तरा कार्यं कथं जायते। अतः "आयुर्वेदशास्त्रे शक्तिशद्वस्य पृथक् व्यवहारो न कृतः

कथमितिचेत् " द्रव्यस्यैव गुणत्वात् " । तथाच शक्तिपदार्थस्तु पृथक्त्वेन आयुर्वेदानुकूलेषु न्यायसांख्यादिशास्त्रेष्वपि न परिगणितः । यतः " **अस्मात्पदाद् अयमर्थोबोद्धव्यः** " इति ईश्वरसंकेतः शक्तिः इति । काणादीयेन वचसा, इच्छायामेवशक्तेरन्तर्भावः । तथा क्वचित् गुणे, क्वचिद्द्रव्ये शक्तेरन्तर्भावः । यथा अग्नौ दाहानुकूला शक्तिः दृश्यते । पनवेलत्रिदोषचर्चापरिषदि एतत्प्रश्नविषये भिन्नभिन्नमतानि जातानि । इतिवृत्तपुस्तके सर्वं मुद्रितमेव ।

६ **प्रश्नः**--वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

**तस्योत्तरः**—स्थूलत्वं सूक्ष्मत्वं च महर्षिभिः प्रतिपादितं । प्रसादभूतस्थितौ सूक्ष्मत्वं, मलभूतस्थितौ च तेषां स्थूलत्वं । सिद्धान्तनिदानग्रंथे श्रीमहामहोपाध्याय श्री गणनाथसेनमहाशयैश्चापि प्रतिपादितं । सुश्रुताचार्येण सूत्रस्थानेपि प्रतिपादितं । [ अ. १५ श्लो. ४४--४५ ] ।

७ **प्रश्नः**--किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

**तस्योत्तरः**–रसरक्तादिधातवः पंचभूतविकार एव । एवं वातादिदोषा अपि पंचभूतविकार एव । अतएवोक्तं सुश्रुते सू. अ. ४२-५-" तत्र मधुराम्ललवणा वातघ्नाः । मधुरतिक्तकषायाः पित्तघ्नाः । कटुतिक्तकषायाः श्लेष्मघ्नाः । वायुरात्मनैवात्मा, पित्तमाग्नेयं, श्लेष्मा सौम्यइति " । विशेषश्च । चरकाचार्येण सूत्रस्थाने अध्याये २८ तमे सुन्दरतया प्रतिपादितं ।

८ **प्रश्नः**--वातादीनां गुणाः कर्माणि च ? ।

**तस्योत्तरः**–तेषां प्राणोदानसमानव्यानापानानीति पंचनामानि । तेषां कार्यं हृदयकण्ठोदरत्वग्गुह्यादिस्थानेषु स्पष्टं दृश्यते । लघुनां गुरूणां वा सर्वासां क्रियाणां प्रवर्तको वायुरस्ति । समानसीनां प्रवृत्तीनां नियन्ता चालकश्च । स सर्वेषामिन्द्रियाणां चैतन्यदाताऽस्ति । स शब्दस्पर्शरूपरसगन्धान् वहति । वायुर्दोषं शोषयति मलं बहिर्निष्कासयति च ।

**गुणाः** । वातो रूक्षः शीतो लघुः सूक्ष्मश्चलोविशदः खरश्चेति । विपरीतगुणैर्द्रव्यैर्वायुः प्रशाम्यति । कुपितावस्थायां वायुः शरीरे नानाविधान् विका-

रानुत्पादयति बलवर्णसुखायूंषि कुपितो वायुरुपहन्ति। मनोविकृतिं विदधाति। सर्वेन्द्रियशक्तिनाशश्च करोति।

**पित्तम्**—तापस्य मूलभूतमतीन्द्रियं शरीरे वर्तमानं सूक्ष्मं वस्तु पित्तं। शरीरे तेजसः कार्यं पित्तेन क्रियते। शरीरस्य समानोष्णत्वात्त्वचः शोषणशक्तिर्मनसस्तेजस्विता रुधिरस्यारुणवर्णतेति। **तेजोगुणस्य प्रधानकार्याणि**। अनेनैव हेतुना पित्तं भ्राजकं, पाचकं, साधकमालोचकं, रंजकं चोच्यते। **अग्नेः** प्रभावेण शरीरस्य सर्वधातूनां क्षयो भवति। इमं क्षयं प्रतिकर्तुं निरन्तरमाहाररूपेन्धनानि तस्मै वन्हये दातव्यानि। अतएवोक्तं।

" पित्तमुष्णं द्रवं पीतं नीलं सत्वगुणोत्तरम्।
सरं कटुलघुस्निग्धं तीक्ष्णमम्लं तु पाकतः॥ "

विपरीतगुणैर्द्रव्यैः पित्तमुपशाम्यति। पित्तस्य कुपितावस्थायां विस्फोटकोष्मादयो रोगा आविर्भवन्ति।

**कफः**-कफः सौम्यगुणात्मकोऽस्ति। पित्तवत् कफोऽप्यतीन्द्रियः। पित्तमग्निरूपमस्ति। कफस्तु जलरूपोऽस्ति। श्लेष्मणा शरीरसन्धयः स्नेहसदृशेन पदार्थेन स्निग्धा भवन्ति। श्लेष्मा कण्ठजिव्हादीनि स्थानानि क्लेदयति। अन्नस्यक्लेदने धातूनां पोषणे च कफो जलस्य कार्यं करोति। श्लेष्मणोऽभावे शरीरं स्वल्पैरेवाहोभिर्भस्मीभूतं भूयात्। " कफस्यैतानि नामानि क्लेदनश्चावलम्बनः। रसनः स्नेहनश्चाऽपि श्लेष्मणः स्थानभेदतः " अन्यच्च

" श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छलः शीतलस्तथा।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत्॥ "

इत्यादि। **एवं वातादीनां गुणाः कर्माणि संक्षेपेण दर्शितानि**॥ विशेषश्च। सु. सू. अ. २१ ( १५ ) चरक सू. अ. १८- सु. सू. अ. १५--पंचधाप्रभक्तेषु सु. नि. अ. १ ( २१ ) वृद्धवाग्भट सू. अ. २०। विकृतवातादिकर्माणि च सू. अ. २०-[ २१-३६ ] इत्यादिस्थलेषु दृष्टव्यं।

९ **प्रश्नः**--वातादीनां स्वरूपं, तेषां प्रत्येकशः पंचविधत्वं वास्तविकं काल्पनिकं वा ?। तथा तत् स्थानकार्यभेदोत्पन्नं वा। तत्स्वरूपभेदोत्पन्नं वा?

**तस्योत्तरं**:--अष्टमप्रश्नस्योत्तरे नवमप्रश्नस्योत्तरमागतं। तत्र वातादीनां

स्वरूपं, पंचविधत्वं च दर्शितं। अष्टमप्रश्नस्योत्तरे यानि यानि ग्रन्थस्थप्रमाणानि निदर्शितानि तेभ्यो ज्ञातव्यानि। तत्र चरकसुश्रुतवाग्भटादीनां स्थानाध्याया दर्शिता। तेभ्यश्चावलोकनीयमेव।

**१० प्रश्नः**-वातादीनां रोगकारणत्वं कीदृशम्? तेषामेवरोगकारणत्व-मुतान्येषामपि कीटादीनाम्?।

**तस्योत्तरं**:--( १ ) कालबुद्धिन्द्रियार्थानां यथोचितकार्याच्छरीरादि क्रिया यथायोग्यकार्यं क्रियते। तदवस्थायाः स्वस्थताऽरुग्णतेति नाम। उक्तञ्च चरकाचार्येण सूत्रस्थाने प्रथमाऽध्याये १:–"कालबुद्धीन्द्रियार्थानां योगोमिथ्या (१) न (२) चातिच (३)। द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः। शरीरं सत्त्वसंज्ञं च व्याधीनामाश्रयो मतः। तथा त्रयाणां योगस्तु सुखानां कारणं समः"।

भावमिश्रेणाप्युक्तं। "समदोषस्समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मे-न्द्रियमनाः स्वस्थ इत्यभिधीयते"। यावत्पर्यन्तं भूतपञ्चकशरीरेऽस्वाभाविका ज्वरादयो विकारा न प्रविशन्ति तावत्पर्यन्तं स्वस्थ इति संज्ञा। यदा भूतपंचक शरीरस्वरूपे गुणे क्रियायां च परिवर्तनं भवति तदा पृथक्पृथग् व्याधयः प्रविशन्ति। उक्तंच चरकाचार्येण सूत्रस्थानाऽध्याये २५।

"येषामेवहि भावानां संपत्संजनयेन्नरं। तेषामेव विपद् व्याधीन् विविधान् समुदीरयेत्।

पंचभूतानां न्यूनाधिकमिश्रणतया सृष्टौ सर्वपदार्थसंभवः। पार्थिवं शरीरं। ऐतेनाऽन्येषां तत्वानां शरीरेंऽशो नास्तीति न। अन्येषां तत्वानामप्यं-शो भवति। शरीरपार्थिवांशत्वमप्तेजोवाय्वादित्रयाणामाधिष्ठानरूपत्वं। अप्तेजो-वाय्वादितत्वत्रयाणां समविषमस्थितियोगेन शरीरस्य स्वस्थताऽस्वस्थतयोः। प्रधानत्वम्।

तद्यथा। यावत्पर्यन्तमप्तत्वं, तेजस्तत्वं, वायुतत्वं चेति तत्वत्रयाणां सुव्य-वस्था जायते तावत्पर्यन्तं स्वस्था इति कथ्यन्ते। यदा तेषु तत्वेषु अव्यवस्थायाः

प्रवेशो भवति तदा रोगोद्भूतिर्जायते। संदर्भस्त्वेवम् तत्वत्रयाणां यावत्पर्यन्तं समस्थितित्वं तावत्पर्यन्तं शरीरस्य सुस्थितित्वात् " त्रिधातु " रिति कथ्यते। तथा च यदा तत्वत्रयाणां विषमस्थितित्वं जायते तदा शरीरदूषितत्वात्तत्व-त्रयाणां दोष इति संज्ञा। एवंरीत्या आयुर्वेदशास्त्रे वातादीनां रोगकारणत्वं सुप्रसिद्ध-मेव। कृम्यादीनां रोगोत्पत्तिकारणत्वे वातादय एव कारणं। यद्यपि प्रतिरोगं भिन्नाकाराः कृमयः कारणमिति प्रत्यक्षमुपलभ्यत इत्यतः कृमीणामेव कारणत्वं स्यादिति विचार्यते, तथाऽपि तत्तदाकारकृमिव्यक्तीनां केषुचिदेव कुष्ठादिषु रोगविशेषेषु उत्पादकत्वं तदन्यत्र तु संक्रामकत्वमेव; उत्पादकत्वं तु तत्तत्कृमि-विशेषशरीरारम्भकाणामभिवर्धकानां पोषकाणां वायुजलदेशकालानामेव। यतो वायुविशेषो जलविशेषश्च आहारत्वेन, देशविशेषश्च विहारत्वेन। इत्यतस्तदनु-कूलवायुजलादय एव कारणानि, ते च तत्वतो विविच्यमाना लोके **सोमाग्नि-वायवः**, शरीरान्तश्च विविच्यमाना वातपित्तकफाः। आगन्तुकरोगाः " आयु-र्वेदशास्त्रसंमताः " अतश्च कीटाणूजन्यरोगा अपि भवन्ति।

(१) नवाविर्भूतानां रोगाणामायुर्वेदे संग्रहप्रजोनविचारः ?।

**तस्योत्तरं**:— आयुर्वेदशास्त्रे त्रिदोषसिद्धान्तानुसारेण तथाच ' नास्ति रोगो विनादोषैर्यस्मात्तस्माद्विचक्षणः। अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्' इति वचनानुसारेण दोषानुसारिणी चिकित्साऽस्ति। तथाच चरकाचार्येण जनपदोध्वंसनीयाऽध्याये विमानस्थाने कथितं तद्यथा " वायुरुदकं देशः काल " इति। " वाताज्जलं जलाद्देशं देशात्कालं स्वभावतः। विद्यादुष्परिहार्यत्वाद्गरी-यस्तरमर्थवित्। वाय्वादिषु यथोक्तानां दोषाणान्तु विशेषवित्। प्रतीकारस्तु सौकर्ये विद्याल्लाघवलक्षणम्। चतुर्ष्वपि हि दुष्टेषु कालान्तेषु यदा नराः। भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा " इति आयुर्वेदीयशास्त्रेषु रोगानीकविषये-सम्यक्रीत्या प्रतिपादितं। अत एतद्विषये किमपि कथनीयं करणीयञ्च नास्ति।

( २ ) नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे संग्रहप्रयोजन-विचारः ?।

**तस्योत्तरं**:—निघन्टु [ वनस्पति ] शास्त्रे "आयुर्वेदीयभेषजद्रव्याणि बहूनि सन्ति। तेषां संशोधने प्रयासस्स्याच्चेत्समीचीनं, पूर्वं तु एतद्द्रव्याणां संशोधने प्रयोजने च विचारः कर्तव्यः, पश्चान्नवाविष्कृतानां भेषजद्रव्याणां संग्रहप्रयोजने विचारः। यत्सारभूतं तदुपासनीयमिति न्यायेन, तथा च पूज्यमहर्षिचरकाचार्याणामाज्ञां शिरसि कृत्वा तेषां वचनं पालनीयमेव

"तदेव युक्तं भैषज्यं यदाऽरोग्याय कल्पते । स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् " । तथाच चरकविमानस्थाने ८ अध्याये कथितं । " विविधानि-शास्त्राणि भिषजां प्रचरन्ति लोके तत्र यन्मन्येत सुमहद्यशस्वि धीरपुरुषसेवितमर्थ-बहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीत-सूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमाग-तार्थतत्वानिश्चयप्रधानं संगतार्थमसंकुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाह-रणवच्चतदभिप्रपद्येत शास्त्रम् " ॥ इत्यादि ।

(३) आयुर्वेदीयशारीरानिदानादिप्रतिसंस्कारप्रयोजनविचारः ? ।

**तस्योत्तरं**:—शारीरनिदानादिप्रकरणे यत्र यत्र संस्कारप्रयोजन-स्यावश्यकता चेत् कर्तव्यमेव ।

(४) सभापतीनां यथाऽज्ञा स्यात्तथैव कर्तव्यमितिप्रार्थना तथाऽपि शास्त्रसूत्राण्यभिलक्ष्य निर्णयः कर्तव्य इति विज्ञप्तिः ।

मण्डनपक्षमधिकृत्य सर्वं लिखितं । लेखनविषये मुद्रापणविषये च प्रमादो जातश्चेत् " प्रमादो मानुषोभावः " इति न्यायेन क्षन्तव्य इति शम् ।

---

## पं. हरिप्रसाद सी. भट्ट, (बडोदा) इत्येषां मतम् ।

### [ आयुर्वेदाऽध्यापक, राजकीय संस्कृत महाविद्यालय ]

**विषय १०**:—वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगका-रणत्वमुताऽन्येषामपि कीटादीनाम् ? ।

**उत्तरम्**:—माधवकारेण स्पष्टमेव लिखितम्:—

" सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाऽहितसेवनम् ॥ "

प्रकुपिता दोषास्सर्वेषां रोगाणां कारणम् । रोगोत्पत्तौ त एव मुख्यं कारणम् । यावत् न दोषाः प्रकुप्यंति न तावत् रोगोत्पत्तिः ।

दोषास्तावत् प्रतिमानुषशरीरे सततं वर्तंत एव । प्राकृतावस्थायां ते शरीरधारणं कुर्वंति । प्रकुपितास्तु रोगोत्पादका जायंते । सुश्रुते—" सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलम्, तल्लिंगत्वाद्दृष्टफलत्वादागमाच्च । यथा हि कृत्स्नं विकारजातं विश्वरूपेणाऽवस्थितं सत्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणाऽवस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तंते । दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पः । दोषदूषितेषु

अत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं, शोणितजोऽयं, शुक्रजोऽयं, व्याधिरिति" चरकेऽपि–" सर्वे एव विकारा निजा नान्यत्र वातपित्तकफेभ्यो निर्वर्तंते, यथा हि शकुनिः सर्वं दिवसमपि परिपतन् स्वां छायां नातिवर्तते, तथा स्वधातुवैषम्य-निमित्ताः सर्वविकाराः वातपित्तकफान्नातिवर्तंते । " स्वधातुवैषम्यनिमित्तजा ये । विकारसंघा बहवः शरीरे । न ते पृथक् पित्तकफानिलेभ्यः ॥ " केचन रोगा शोणितप्रकोपात्प्रादुर्भवंतीति यद्यपि यत्र कुत्राऽपि भणितं तथापि तत्प्रकोपेऽपि दोषा एव कारणमिति स्पष्टतया गृहीतमेव । यथा–सु.सू.अ.२१ श्लो.२६

" यस्माद्रक्तंविना दोषैर्न कदापि प्रकुप्यति ।
तस्मात्तस्य यथा दोषं कालं विद्यात्प्रकोपणे ॥ "

चरके रोगाणां व्याख्या–" विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ॥ "

एवं कृता वर्तंते । दोषाणां विषमता नाम वृद्धिरूपा वा हीनरूपा अयमेव रोगः । शरीरे पित्तकफवायवस्त्रयो दोषा यथा बाह्ये जगति सूर्यचंद्रवायवः । सु. सू. अ. २१ श्लो. ८–विसर्गादानविक्षेपैस्सोमसूर्यानिला यथा ।
धारयंति जगद्देहं कफपित्तानिलास्तथा ॥

दोषप्रकोपाणां इमानि त्रीणि कारणानि निर्दिष्टानि–"त्रीण्यायतनानि अर्थानां, कर्मणः कालस्य, चातियोगायोगमिथ्यायोगाः । असात्म्येंद्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति त्रयस्त्रिविधविकल्पाः कारणं विकाराणाम् । चरक सूत्र अ. ११ ग. ४२ । सर्वाण्येव कारणानि एतेश्वेवान्तर्भवंति " ।

**रोगोत्पत्तिक्रमस्त्वायुर्वेदे एवमित्र वर्तते—**

१. दोषस्थानेषु पूर्वोक्तसंचयहेतुना **संचीयंते** दोषाः तेषां संचितानां खलु दोषाणां लिङ्गानि दर्शितानि ।
२. दोषप्रकोपणात् **दोषप्रकोपो** भवति । प्रकोपलिंगानि ।
३. अतऊर्ध्वं **प्रसरं** । प्रकुपितानां प्रसरतां लिंगानि ।
४. अतऊर्ध्वं **स्थानसंश्रयं** एवं प्रकुपिता दोषाः तान् तान् शरीर-प्रदेशानागम्य तान्स्तान् व्याधीन् जनयंति ।
५. अतऊर्ध्वं **व्याधेर्दर्शनम्**-ज्वरातीसारप्रभृतीनां प्रव्यक्तलक्षणता ।
६. अतऊर्ध्वं ज्वरातीसारप्रभृतीनां दीर्घकालानुबंधः तत्राऽप्रतिक्रियमाणेऽसाध्यतामुपयान्ति । चरक सूत्र.

" संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् ।—

व्यक्तिं भेदं च यो वेत्ति दोषाणां स भवेद्भिषक्"। सु. सू. अ. २१
एतेषु वातादिदोषा रोगोत्पत्तौ कथं कारणभूता वर्तन्ते तत् स्पष्टतया व्यक्तीभवति।

विभिन्नप्रकारका *टीका भिन्नभिन्नरोगोत्पादका भवंति। शरीरस्य प्राकृतावस्थायां कश्चिदपि कीटाणुर्न हि जीवितुं शक्नोति। अतः कीटाणुरेव मुख्यं केवलमेकमेव कारणं रोगस्येति नैव भवति सिद्धान्तः, परंतु दोषप्रकोपो रोगाणां विप्रकृष्टं कारणं, कीटाणवस्तु सन्निकृष्टं कारणं, भवितुमर्हति। क्षये ग्रांथिकसन्निपाते एवमेवान्येश्वपि सदृशविकारेषु केवलं दोषनाशकचिकित्सा न फलार्हा भवति। एतेभ्य एव कीटाणुभ्यो रोगिशरीरान्निष्कासितेभ्यो निरोगिशरीरे प्रवेशितेभ्यो रोगोत्पत्तिस्सुकरा कर्तुं शक्यते। तथैव 'टेटनस्' रोगस्य पूर्वावस्थायां तत्कीटाणूधृतरसस्य सूचिकाभरणेन "( अँन्टी टेटनस् सीरम् )" रोगोपरोधो भवत्येवेति साक्षात्कार एव। एवमेव ग्रंथिसन्निपातेऽपि तत्कीटाणूधृतरससूचिकाभरणमपि ग्रंथिसन्निपातमुपरोधयतीतिस्पष्टमेव। शस्त्रक्रियायामपि निर्जंतुकरणविधिप्रथापूर्वं ( डिसइन्फेक्शन् तथा अँन्टिसेप्टिक् क्रिया ) बहवो हि रुग्णाः शस्त्रकर्मवेलायां 'टेटनस्, गॅंग्रीन्' इत्यादिरोगप्रादुर्भावात्तदानीमेव विनष्टा बभूवुः। अधुना तु निर्जन्तुकरणविधिना नैव तद्रोगप्रादुर्भावो वा तदुत्पन्ननाशो भवति।

आकाशे अस्थितिमंतोऽपि वर्षाऋतौ वर्षासहचरा भूत्वा कदा, कदा, मत्स्या, उपलादयो विकृतपदार्था वातावरणविकृत्या अधःपतन्ति यथा—
"नीहारनिर्ह्रादपांसुसिकतामत्स्यभेकोरगक्षाररुधिराश्माशनिविसर्गः। प्रकुपितस्य खल्वस्य वातस्यानेकेषु चरतः कर्माणि इमानि भवन्ति॥ चरक सू. अ. ११ ग. ८॥ एवमेव शरीरे दोषप्रकोपणात् प्रादुर्भवन्ति सूक्ष्माः कीटाणवः। निरोगावस्थायां तु न ते किंचिद्विकारकरा भवन्ति अपि तु रोगक्षमताशक्त्या ( इम्युनिटी ) तथा शरीरौजसा ( व्हायटालिटी ) ते कीटाणवो भवन्ति नष्टाः। अतः कीटाणवानां पार्थक्येन प्राधान्येन रोगकारणत्वं संज्ञितुं नैव युक्तं। किन्तु गौणं कारणमवश्यमेव भवतीति प्राक् प्रदर्शितमेव। दोषप्रकोपेण शरीरविकृत्या भवति प्रादुर्भावः कीटाणूनां। ते च दोषप्रकोपात् वृद्धास्सन्तो स्वीयं विषं शरीरेऽभिसारयन्ति, तेन भवति विकारप्रादुर्भावो विकारसौकर्यं। कीटाणूनां शरीरे स्वास्थ्यप्रादुर्भावे वा सत्वे वा न भवति निष्पत्तिर्नैव वा भवति रोगप्रादुर्भावः अतस्ते न मुख्यं कारणं रोगाणां किन्तु गौणं कारणमेव।

* टीका–( व्हॅक्सिनेशन् ).

॥ श्री ॥

# आधुनिकं त्रिदोषविषयकं वाङ्मयम्.

यथावत् परिज्ञातमस्मिन् विषये यत् निबन्धादिकं वा पुस्तकादिकं स्वतंत्रतया मुद्रितम् वाङ्मयम् तस्य संग्रहोऽत्र दीयते । अपरिज्ञातम् वा यदन्यद्भवेदेतद्विषयकं वाङ्मयम् तस्याऽत्र संग्रहोऽशक्य एव ।

| | नाम | कर्ता | कालः |
|---|---|---|---|
| १. | त्रिदोष विचारः | संग्रहकर्ता पं. शं. दा. पदे | १९०२ |
| २. | ,, | ,, ,, | १९०३ |
| ३. | ,, | ,, ,, | १९०४ |
| ४. | त्रिदोषपद्धतिः | ,, ,, | १९०८ |
| ५. | वातपित्तकफानां तत्वम् | पं. दोरास्वामी आयंगार | १९१७ |
| ६. | त्रिदोष विज्ञानम् | कै. पं. दत्तात्रेयशास्त्री गाडगीळ | १९१७ |
| ७. | त्रिदोषतत्वम् | पं. वामनशास्त्री दातार | १९१७ |
| ८. | त्रिदोष | पं. पुरुषोत्तमशास्त्री हेर्लेकर | १९२५ |
| ९. | दोषदर्पणम् | पं. दुर्गादत्तपंत | १९२९ |
| १०. | वातांकः | आयुर्वेद संदेश | १९३१ |
| ११. | पित्तांकः | ,, | १९३२ |
| १२. | श्लेष्मांकः | ,, | १९३३ |
| १३. | पनवेल त्रिदोषचर्चापरिषदितिवृत्तम् | | १९३४ |
| १४. | त्रिधातु मीमांसा | स्वामी हरिशरणानन्द | १९३४ |
| १५. | शास्त्रतत्वमंडनम् | पं. व्रजविहारी चतुर्वेदी | १९३५ |
| १६. | त्रिदोषविमर्शः | पंडित धर्मदत्त | १९३५ |
| १७. | त्रिदोषवादः | पं. भानुशंकरनिर्भयराम त्रिवाडी | १९३५ |

१८. त्रिदोषविमर्शम् (अपूर्ण) पं. वामनशास्त्री दातार १९३५
१९. दोषसिद्धान्तः पं. द्वारकानाथसेन
२०. पंचभूतविज्ञानम् पं. उपेन्द्रनाथदास १९३६
२१. त्रिदोषविज्ञानम् पं. उपेन्द्रनाथदास १९३६
२२. पंचभूत विशेषांकः पं. उपेद्रनाथदास १९३६
२३. त्रिधातुवादः पं. शाळिग्रामशास्त्री
२४. त्रिदोषस्वरूपम् पं. अनंत भास्कर कर्डिले शाके १८५८
२५. प्रिन्सिपल् ऑफ त्रिदोष इन् आयुर्वेद पं. धीरेन्द्रनाथराय १९३७
२६. त्रिधातुसर्वस्व विशेषांकः अनुभूतयोगमाला १९३९
२७. त्रिधातु त्रिदोषचर्चा प्रो. ग. स. दीक्षित १९३९
२८. वातपित्तश्लेष्मा [बंगाली] क. अमृतलाल गुप्त बंगाली शक १३३४
२९. आयुर्वेददर्शनम् पं. महादेव चंद्रशेखर पाठक [ इंदोर ]
३०. वाराणसी पं. त्रि. परिषदितिवृत्तम्. पं. वामनशास्त्री दातार १९४०

॥ श्री ॥

# त्रिदोषचर्चा परिषद् ( रट्टीहळ्ळी ) कर्नाटक.

इयं परिषद् अखिल कर्नाटक प्रान्तीयाऽयुर्वेदमहामण्डलतो ' रट्टीहळ्ळी ' ग्रामे ' डॉ. एम्. आर. स्वामी इत्येतेषां सभापतित्वे ऐशवीय सन ५।९।३६ तमे दिनें संजाता, तस्यां परिषदि—पंडितवरा विद्यावाचस्पतिनः परममान्या नागेशशार्म्मा उप्पिनबेटिगिरी, [ धारवाड ] आयुर्वेदतीर्थ नैकशास्त्रपारंगत अनंताचार्य आद्य, [ विजापूर ] वैद्यवरा न. नी. जोशी, पं. पार्थ नारायण, पं. डी. के. भारद्वाज, पं. एच्. एन्. शास्त्री इत्याद्यनेकवैद्यविद्वांसस्तथा-चान्ये नैकविधा दार्शानिका, नैय्यायिकाः, पौराणिकाः, कार्तान्तिका, वेदान्तिनो, वैय्याकरणाः, साहित्यनिपुणाः समागछन् । तस्यां परिषदि त्रिदोषविषयको यः प्रस्तावस्संमतो दिनांके ६।९।३९ समभवत् स श्रीमद्भिर्मंत्रिवरैर्वैद्यराज दा. अ. हळशीकरमहाभागैस्सत्वरमेव दिनांके ७।९।३६ पत्रद्वारेण सारांशरूपतया मदंतिके प्रेषित आसीत् सभापतिमहोदयानुज्ञया, सोऽप्यत्र दीयते—

" अस्याः परिषदो त्रिदोषविषयके संजाते वादविवादे अत्र समागतानां महनीयानां भावना इयं, त्रिदोषास्तु द्रव्यस्वरूपा वर्तन्ते न तु पाश्चात्यानां मॅटर इतितत्वम् " ।

ता. ७।९।३६. दा. अ. हळशीकर ( रट्टीहळ्ळी )

श्रीमाद्भिः दा. अ. हळशीकरमहाभागैः प्रेषितस्य पत्रस्यैव संस्कृतं रूपांतरमिदम्, पत्रं तु महाराष्ट्रभाषायां लिखितं विद्यते ।

**वामनशास्त्री दातारः**

॥ श्री ॥

**जनस्थाने संजातस्य एकोनविंशतितमस्य नि. भा. आ. वैद्य सम्मेलनस्य स्वागतसमित्या अंगीकृतस्य कार्यभारस्य कृते १९२८ कालतो १९४० पर्यन्तम् द्रव्यनिधेः संजातस्य आयव्ययस्य पत्रकम् ।**

**एप्रील १९२८ कालतो १५ डिसेंबर १९२९ पर्यन्तम् ।**

| आयः | व्ययः |
|---|---|
| रु. आ. पै. | रु. आ. पै. |
| ८७९२--५--९ | ६३०५—३—९ |

यश्च सम्मेलनस्य इतिवृत्ते महाराष्ट्रभाषायां मुद्रिते १५५-१५६ तमे पृष्ठे सविस्तरं प्रकाशितः। तदनन्तरम् उर्वरितरुप्यकाः रु. २४८७--२--० पै.

ता. १६-१२-२९ कालतः ३१-१२-१९३४ पर्यन्तम् संजातो आयव्ययो महाराष्ट्र भाषया प्रसिद्धिम् नीते पत्रके प्रदत्तो यश्च पत्रकं ता. २६-१२-३४ तमे दिने निष्कासितं प्रेषितंच महाराष्ट्रीयवैद्यवरेभ्यः स्वा. स. सभासद्भ्यश्च ।

| आयः | व्ययः |
|---|---|
| २४८७--२--० उर्वरितं द्रव्यम्. | १३३३--१०--६ व्ययः |
| ३८--०--० प्राप्तद्रव्यम् | ११९१—७--६ उर्वरितं द्रव्यम् |
| २५२५--२--० | २५२५—२--० |

११९१- ७--६ उर्वरित द्रव्यम

११९--०--० तस्य वृद्धिः

१३१०--७--६

## तारीख १-१-१९३५ कालतो तारीख ३१-१२-१९३५ पर्यन्तम् संजातो आयव्ययः

१३१०--७--६ उर्वरितं द्रव्यम्
१११--९--० श्री. जादवजी त्रिकमजी आचार्य
१००--०--० श्री. गंगाधर विष्णु पुराणीक
५०--०--० श्री. कृष्णशास्त्री देवधर
२५--०--० श्री. गंगाधरशास्त्री गुणे
२५--०--० श्री. पुरुषोत्तमशास्त्री नानल
२५--०--० श्री. गंगाधरशास्त्री जोशी
२५--०--० श्री. हरीशास्त्री पराडकर
२५--०--० श्री. विष्णुशास्त्री केळकर
२५--०--० श्री. वामनशास्त्री दातार
२०--०--० श्री. गोपाळशास्त्री गोडबोले
५--०--० श्री. विदर्भदेशीयवैद्याः
२--०--० श्री. वैद्य रामकृष्ण ( सोलापूर )

---

१७४९--०--६

८६--६--० पंचभूतपरिषदर्थे कृतः पत्रव्यवहारादिव्ययः
५०--०--० त्रिधातुत्रिदोषमीमांसाग्रंथस्य प्रतिलिपिकरणार्थं लेखकाय वृत्तिदानम् ( वै. पं. गंगाधरशास्त्री गुणेद्वाराः )
२९--९--० श्री.जादवजी आचार्यकृतः परिषदर्थे पत्रव्यवहारः
३२--०--० परिषदः पूर्वम् निष्कासितानाम् पत्रकाणां मुद्रणव्ययः ( श्री. जादवजी आचार्यकृतः )
१३३७--५--१ वाराणस्यां संजातयोः परिषदोः कृते ता. २४-१०-३५ तो १३-११-३५ पर्यन्तं संजातः स्थानिको व्ययः

### तस्यच विभागशो विवरणं दीयते

४४७--१--९, परिषन्निमित्तम् समासदां कार्यकर्तृणां गमनाऽगमनार्थं अग्निरथाऽश्वरथस्वयंगंत्री--( मोटार ) निमित्तो व्ययः

१७४९--०--६

४३०--१०--१ भोजनव्ययः
२२७—७--६ परिचारकेभ्यो वृत्तिदानम्
१००—०--० सांगवेद विद्यालयाय दत्तानि
५०—२--० मुद्रणव्ययः
२६—०--० छायाचित्रग्रहणव्ययः
१४--१०--६ पत्रव्यवहारः
९--१०--९ पत्रालेखनसाहित्यादिव्ययः
९—४--९ स्वयंसेवककृतो व्ययः
७—५--९ सभागृहशोभा
५—३--९ दीपक व्ययः
४—०--० पुष्पाणां मालाः
५--१२--३ सर्वसामान्यव्ययः

१३३७—५--१

१५३५---४--१
२१३--१२--५ उर्वरितं द्रव्यम्

१७४९—०--६

## तारीख १।१।१९३६ कालतो तारीख ३१।७।१९४० पर्यन्तम् आयव्ययपत्रकम्.

| आय | | व्यय | |
|---|---|---|---|
| २१३–१२–५ | उर्वरितं द्रव्यम् | १८—७--० | ता. १।१।१९३६ कालतः ता. ३१।१२-१९३६ पर्यंतम् पत्रव्यवहारव्ययः |
| ५०१---०–० | प्राणाचार्य कृष्णशास्त्री देवधर इत्येतैः प्रदत्तानि १।१।१९३६. | २१—०--० | ता. १।१।३७ कालतः ३१।७।४० पर्यंतम् पत्रव्यवहारव्ययः |
| | | २५—०–० | लेखनसामग्र्यर्थे व्ययः |
| ५००—०–० | प्राणाचार्य कृष्णशास्त्री देवधर इत्येतैः प्रदत्तानि ३०।८।१९३६ | ४०३—४--० | पं. त्रि. इतिवृत्तमुद्रणार्थं दातव्यस्य द्रव्यस्य दत्तोभागः |
| | | ४६७--११--० | |
| | | ७४७—१--५ | उर्वरितं द्रव्यम् |
| १२१४–१२–५ | | १२१४–१२–५ | |

प्राणाचार्य कृष्णशास्त्री देवधरैः प्रदत्तानि एकाधिकरुप्यकसहस्राणि ' त्रिधातुत्रिदोषमीमांसा ' ग्रंथस्य मुद्रणार्थमेव प्रदत्तानि विद्यन्ते । प्राणाचार्याणाम् तच्छिष्यवृंदैः संमील्य कृतस्य सत्कारसमारंभस्य समये शिष्यवृंदैर्गुरुदक्षिणानिमित्तं समर्पितानि एकाधिक-पंचशतरुप्यकाणि श्री गुरुचरणैर्द्विगुणीकृत्य तस्मिन्नेव समारंभे एतत्कार्यार्थमेव समर्पितानीति उद्घोषितं । दत्तानिच तानि रूप्यकाणि केवलं त्रिधातुत्रिदोषमीमांसाग्रंथमुद्रणे व्ययीभवितुमर्हन्ति । सांप्रतं तत्संचयात् संजातः संजायमानश्च व्ययो ऋणमेव वर्तते ।

**अतःपरं संभाव्यो व्ययो अधो दीयते.**

| | |
|---|---|
| ५३२–१२–० | पंचभूतत्रिदोषइतिवृत्तमुद्रणे मुद्रापकाय देयं द्रव्यम् |
| ९१—०–० | पुस्तकनिबंधनव्ययः ( बाइंडिंग ) |
| ५०—०–० | पुस्तकप्रेषणव्ययः |
| ७५—०–० | त्रिधातुत्रिदोषमीमांसाग्रंथलेखनव्ययः |
| १५००—०–० | त्रिधातुत्रिदोषमीमांसाग्रंथमुद्रणव्ययः |
| २००—०–० | ग्रंथनिबन्धनव्ययः ( बाइंडिंग ) |
| ८०––०–० | ग्रंथप्रेषणव्ययः |
| ५०––०–० | अन्यश्च प्रासंगिको संजायमानो व्ययः |
| २५७८--१२--० | इति मिलित्वा अनुमानेन संभाव्यो व्ययः |
| ७४७---१--५ | स्वाधीनं द्रव्यम् |
| १८३१--१०–७ | आवश्यकं द्रव्यम् |

एतावत् सर्वं आयव्ययपत्रकं अद्ययावत्पर्यन्तम् विदुषामग्रे स्थापितम् । तत् सर्वं समालोच्य अस्मिन् कार्ये येषां येषां हृदयमाकृष्येत, तैस्तैः स्वसामर्थ्यतो स्वेच्छया च यत्साहाय्यं दातुमिष्टं भवेत् तन्मदीये मुखविलासे प्रेषणीयमिति प्रार्थ्यते ।

यदा च वाराणसीक्षेत्रे पंचमहाभूतत्रिदोषपरिषत्करणविचारः स्वागतसमित्याऽनुमत्या कृतस्तदा कैर्महानुभावैः कुतोद्यापि स्वागत-समितिर्वर्तते, परिषदर्थे क्रीयमाणस्य द्रव्यव्ययस्यापि कोऽधिकार इत्यादि वृत्तपत्रादिषु मासिकपत्रेषु व्याख्यानेषु च वारंवारं प्रसिद्धितम् ।

तथाच न्यायालयेऽपि [ सिव्हिलकोर्ट, मॅजिस्ट्रेटकोर्ट ] ममोऽपरि अस्मिन्विषये यदि किमपि कार्यजातं स्यान्नवेति विचारोऽपिकृतः। अतस्तेषांकृते इदं सर्वमपि कार्यजातं स्वागतसमितिद्वारैवाऽद्यापि स्वागतसमित्यनुमत्या संचलतीति ज्ञापितुं कानिचित्तत्तत्काले प्रसिद्धिं नीतेभ्यः पत्रकेभ्यो वाक्यजातानि उद्धरामः –एकोनविंशतितमस्य संमेलनस्य इतिवृत्ते ( ३१।१२।२९ दिने महाराष्ट्रभाषायां प्रकटिते ) पृष्ठे १५२-१५३ "आयव्ययस्य स्पष्टीकरणम्" नामके शीर्षके 'त्रिधातुसर्वस्वनिबंधस्य परीक्षणेतिवृत्तं प्रसिद्धिं यास्यति, त्रिधातुसर्वस्वनिबंधस्य परीक्षणं, पारितोषकदानं, निबंधस्य मुद्रणं, सहाय्यकस्वागतसभासदानुमत्या भविष्यति, तावत्कालं संमेलनकार्यालयं कार्यकारिमंडलं च स्वीये अधिकारे स्थास्यतीति संमानितुं योग्यम्' इति वर्तते।

शके १८५५ वैशाखशुक्लपक्षे त्रितीयायां गुरुवासरे 'त्रिधातुसर्वस्वनिबंधपरीक्षणफलम्' नाम्नि पत्रके निबंधपरीक्षकैः स्वीये परीक्षणफलवृत्ते 'वयमिदानीं जनस्थायीयस्वागतमंडलाय सादरमित्थं संसूचयामः–यदयं आयुर्वेदस्य प्राणभूतो विषयः तस्यच निश्चितस्वरूपस्य प्रस्थापनार्थं विचारार्थं च अचिरादेव महाराष्ट्रीयतज्ज्ञवैद्यानां एका परिषद् विधेया तया सोऽयं प्रश्नोऽवश्यमेव तथा विचारणीयो यथा अस्य गंभीरस्य विषयस्य सर्वेभ्यः सम्यक्ज्ञानं भवेत्' इति विज्ञापितम्। (त्रिदोषचर्चापरिषदितिवृत्तम् पृष्ठ २) तदनुसारेण मया पनवेलत्रिदोषचर्चापरिषत्करणार्थं त्रितीयं पत्रकम् संमेलनमंत्रीति अधिकारान्निष्कासितम्, गृहीता च परिषत्करणार्थमनुज्ञा। तस्मिन्पत्रके 'इयं परिषद् यद्यपि पनवेलनगरे भविष्यति तथापि सा वैद्यसंमेलनस्वागतसमित्यधिकृतैव वर्तते' ( त्रिदोषचर्चापरिषदिवृत्तम्–पृष्ठ ४-५ दिनांके १।९।३४ प्रकाशितम् )। पनवेलग्रामे संजातायां त्रिदोषचर्चापरिषदि ग्रंथनिर्माणसमितिः स्थापिताऽभूत्, तस्यामपि द्वितीये प्रस्तावे तस्यां समितौ सभासदत्वे मम नियुक्तिस्तु संमेलनस्वागतमंडलमंत्रीत्यधिकारेणैव संजाता ( पृष्ठ १०५ इतिवृत्तम् ) तदनु मया दिनांके २६।१२।३४ तमे निष्कासिते पत्रके वाराणस्यां पंचमहाभूतत्रिदोषपरिषत्करणार्थं विज्ञापिताः स्वागतसमितिसभासदस्सहाय्यकसभासदश्च याचिता तेषामनुमतिः पत्रकप्रेषणेन, अनुमतिलाभेनैव परिषत्करणोद्योगः प्रारब्धः संपूर्णं पारितश्च अतोमया केवलं स्वीयेनैव मतेन नाद्याऽपि किमप्याचरितमितोपि नैवाचरणं तथाविधं भविष्यति इति संप्रार्थ्यते।

**वामनशास्त्री दातारः**